माश्रितः ॥ सर्वकर्मफलत्यागंततःकुरुयतात्मवान् ॥ ११ ॥ श्रेयोहिज्ञानमभ्या
साज्ज्ञानाद्ध्यानंविशिष्यते ॥ ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥ १२ ॥
अद्वेष्टासर्वभूतानांमैत्रःकरुणएवच ॥ निर्ममोनिरहंकारःसमदुःखसुखःक्षमी
॥ १३ ॥ संतुष्टःसततंयोगीयतात्मादृढनिश्चयः ॥ मय्यर्पितमनोबुद्धिर्योमेभक्तःस
मेप्रियः ॥ १४ ॥ यस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचयः ॥ हर्षामर्षभयोद्वेगै
र्मुक्तोयःसचमेप्रियः ॥ १५ ॥ अनपेक्षःशुचिर्दक्षउदासीनोगतव्यथः ॥ सर्वारंभप
रित्यागीयोमद्भक्तःसमेप्रियः ॥ १६ ॥ योनहृष्यतिनद्वेष्टिनशोचतिनकांक्षति ॥
शुभाशुभपरित्यागीभक्तिमान्यःसमेप्रियः ॥ १७ ॥ समःशत्रौचमित्रेचतथामा
नापमानयोः ॥ शीतोष्णसुखदुःखेषुसमःसंगविवर्जितः ॥ १८ ॥ तुल्यनिंदास्तु
तिर्मौनीसंतुष्टोयेनकेनचित् ॥ अनिकेतःस्थिरमतिर्भक्तिमान्मेप्रियोनरः ॥ १९ ॥
येतुधर्म्यामृतमिदंयथोक्तंपर्युपासते ॥ श्रद्दधानामत्परमाभक्तास्तेऽतीवमेप्रियाः
॥ २० ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्र० भक्तियोगोनामद्वादशोऽध्यायः ॥ १२
अर्जुनउवाच ॥ प्रकृतिंपुरुषंचैवक्षेत्रंक्षेत्रज्ञमेवच ॥ एतद्वेदितुमिच्छामिज्ञानंज्ञेयंच
केशव ॥ १ ॥ श्रीभगवानुवाच ॥ इदंशरीरंकौंतेयक्षेत्रमित्यभिधीयते ॥ एतद्योवे

ज्ञितंप्राहुःक्षेत्रज्ञइतितद्विदः ॥ २ ॥ क्षेत्रज्ञंचापिमांविद्धिसर्वक्षेत्रेषुभारत ॥ क्षेत्र
क्षेत्रज्ञयोर्ज्ञानंयत्तज्ज्ञानंमतंमम ॥ ३ ॥ तत्क्षेत्रंयच्चयादृक्चयद्विकारियतश्चयत्॥
सचयोयत्प्रभावश्चतत्समासेनमेशृणु ॥ ४ ॥ ऋषिभिर्बहुधागीतंछंदोभिर्विवि
धैःपृथक् ॥ ब्रह्मसूत्रपदैश्चैवहेतुमद्भिर्विनिश्चितैः ॥ ५॥ महाभूतान्यहंकारोबुद्धि
रव्यक्तमेवच ॥ इंद्रियाणिदशैकंचपंचचेंद्रियगोचराः ॥ ६ ॥ इच्छाद्वेषःसुखंदुः
खंसंघातश्चेतनाधृतिः ॥ एतत्क्षेत्रंसमासेनसविकारमुदाहृतम् ॥ ७ ॥ अमानि
त्वमदंभित्वमहिंसाक्षांतिरार्जवम् ॥ आचार्योपासनंशौचंस्थैर्यमात्मविनिग्रहः
॥ ८ ॥ इंद्रियार्थेषुवैराग्यमनहंकारएवच ॥ जन्ममृत्युजराव्याधिदुःखदोषानुदर्श
नम् ॥ ९ ॥ असक्तिरनभिष्वंगःपुत्रदारगृहादिषु ॥ नित्यंचसमचित्तत्वमिष्टानि
ष्टोपपत्तिषु ॥१०॥ मयिचानन्ययोगेनभक्तिरव्यभिचारिणी॥विविक्तदेशसेवित्व
मरतिर्जनसंसदि ॥ ११ ॥ अध्यात्मज्ञाननित्यत्वंतत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञा
नमितिप्रोक्तमज्ञानंयदतोऽन्यथा ॥ १२ ॥ ज्ञेयंयत्तत्प्रवक्ष्यामियज्ज्ञात्वाऽमृतम
श्नुते ॥ अनादिमत्परंब्रह्मनसत्तन्नासदुच्यते ॥ १३ ॥ सर्वतःपाणिपादंतत्सर्वतोऽ
क्षिशिरोमुखम् ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति ॥ १४ ॥ सर्वेंद्रियगुणा

भासंसर्वेंद्रियविवर्जितम् ॥ असक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृच ॥ १५ ॥ बहि
रंतश्चभूतानामचरंचरमेवच ॥ सूक्ष्मत्वात्तदविज्ञेयंदूरस्थंचांतिकेचतत् ॥ १६ ॥
अविभक्तंचभूतेषुविभक्तमिवचस्थितम् ॥ भूतभर्तृचतज्ज्ञेयंग्रसिष्णुप्रभविष्णु
च ॥ १७॥ ज्योतिषामपितज्ज्योतिस्तमसःपरमुच्यते ॥ ज्ञानंज्ञेयंज्ञानगम्यंहृदिस
र्वस्यविष्ठितम् ॥ १८॥ इतिक्षेत्रंतथाज्ञानंज्ञेयंचोक्तंसमासतः ॥ मद्भक्तएतद्विज्ञा
यमद्भावायोपपद्यते ॥ १९॥ प्रकृतिंपुरुषंचैवविद्ध्यनादीउभावपि ॥ विकारांश्च
गुणांश्चैवविद्धिप्रकृतिसंभवान् ॥ २० ॥ कार्यकारणकर्तृत्वेहेतुःप्रकृतिरुच्यते ॥ पु
रुषःसुखदुःखानांभोक्तृत्वेहेतुरुच्यते ॥ २१ ॥ पुरुषःप्रकृतिस्थोहिभुंक्तेप्रकृतिजान्
गुणान् ॥ कारणंगुणसंगोऽस्यसदसद्योनिजन्मसु ॥ २२ ॥ उपद्रष्टानुमंताचभ
र्ताभोक्तामहेश्वरः ॥ परमात्मेतिचाप्युक्तोदेहेऽस्मिन्पुरुषःपरः ॥ २३ ॥ यएवंवेत्ति
पुरुषंप्रकृतिंचगुणैःसह ॥ सर्वथावर्तमानोऽपिनसभूयोऽभिजायते ॥ २४ ॥ ध्या
नेनात्मनिपश्यंतिकेचिदात्मानमात्मना ॥ अन्येसांख्येनयोगेनकर्मयोगेनचाप
रे ॥ २५ ॥ अन्येत्वेवमजानंतःश्रुत्वाऽन्येभ्यउपासते ॥ तेऽपिचातितरंत्येवमृत्युंश्रु
तिपरायणाः ॥ २६ ॥ यावत्संजायतेकिंचित्सत्त्वंस्थावरजंगमम् ॥ क्षेत्रक्षेत्रज्ञसं

योगात्तद्विद्धिभरतर्षभ ॥ २७॥ समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरम् ॥ विनश्यत्स्ववि
नश्यंतंयःपश्यतिसपश्यति ॥ २८ ॥ समंपश्यन्हिसर्वत्रसमवस्थितमीश्वरम् ॥ न
हिनस्त्यात्मनात्मानंततोयातिपरांगतिम् ॥ २९ ॥ प्रकृत्यैवचकर्माणिक्रियमाणा
निसर्वशः ॥ यःपश्यतितथात्मानमकर्तारंसपश्यति ॥ ३० ॥ यदाभूतपृथग्भावमे
कस्थमनुपश्यति ॥ ततएवचविस्तारंब्रह्मसंपद्यतेतदा ॥ ३१ ॥ अनादित्वान्निर्गु
णत्वात्परमात्मायमव्ययः ॥ शरीरस्थोऽपिकौंतेयनकरोतिनलिप्यते ॥ ३२ ॥ य
थासर्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते ॥ सर्वत्रावस्थितोदेहेतथात्मानोपलि
प्यते ॥ ३३ ॥ यथाप्रकाशयत्येकःकृत्स्नंलोकमिमंरविः ॥ क्षेत्रंक्षेत्रीतथाकृत्स्नंप्र
काशयतिभारत ॥ ३४ ॥ क्षेत्रक्षेत्रज्ञयोरेवमंतरंज्ञानचक्षुषा ॥ भूतप्रकृतिमोक्षं
चयेविदुर्यांतितेपरम् ॥ ३५ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांश्री
कृष्णार्जुनसंवादेक्षेत्रक्षेत्रज्ञयोगोनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥
श्रीभगवानुवाच ॥ परंभूयःप्रवक्ष्यामिज्ञानानांज्ञानमुत्तमम् ॥ यज्ज्ञात्वामुन
यःसर्वेपरांसिद्धिमितोगताः ॥ १ ॥ इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः ॥ स
र्गेऽपिनोपजायंतेप्रलयेनव्यथंतिच ॥ २ ॥ ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्य

हम् ॥ संभवःसर्वभूतानांततोभवतिभारत ॥ ३ ॥ सर्वयोनिषुकौंतेयमूर्तयःसंभ
वंतियाः ॥ तासांब्रह्ममहद्योनिरहंबीजप्रदःपिता ॥ ४ ॥ सत्वंरजस्तमइतिगुणाः
प्रकृतिसंभवाः ॥ निबध्नंतिमहाबाहोदेहेदेहिनमव्ययम् ॥ ५ ॥ तत्रसत्त्वंनिर्मल
त्वात्प्रकाशकमनामयम् ॥ सुखसंगेनबध्नातिज्ञानसंगेनचानघ ॥ ६ ॥ रजोरा
गात्मकंविद्धितृष्णासंगसमुद्भवम् ॥ तन्निबध्नातिकौंतेयकर्मसंगेनदेहिनम् ॥ ७ ॥
तमस्त्वज्ञानजंविद्धिमोहनंसर्वदेहिनाम् ॥ प्रमादालस्यनिद्राभिस्तन्निबध्नातिभा
रत ॥ ८ ॥ सत्त्वंसुखेसंजयतिरजःकर्मणिभारत ॥ ज्ञानमावृत्यतुतमःप्रमादेसं
जयत्युत ॥ ९ ॥ रजस्तमश्चाभिभूयसत्त्वंभवतिभारत ॥ रजःसत्त्वंतमश्चैवतमः
सत्त्वंरजस्तथा ॥ १० ॥ सर्वद्वारेषुदेहेस्मिन्प्रकाशउपजायते ॥ ज्ञानंयदातदावि
द्याद्विवृद्धंसत्त्वमित्युत ॥ ११ ॥ लोभःप्रवृत्तिरारंभःकर्मणामशमःस्पृहा ॥ रज
स्येतानिजायंतेविवृद्धेभरतर्षभ॥१२॥अप्रकाशोऽप्रवृत्तिश्चप्रमादोमोहएवच ॥
तमस्येतानिजायंतेविवृद्धेकुरुनंदन ॥ १३ ॥ यदासत्त्वेप्रवृद्धेतुप्रलयंयातिदेहभृ
त् ॥ तदोत्तमविदांलोकानमलान्प्रतिपद्यते ॥ १४ ॥ रजसिप्रलयंगत्वाकर्मसं
गिषुजायते ॥ तथाप्रलीनस्तमसिमूढयोनिषुजायते ॥ १५ ॥ कर्मणःसुकृतस्या

ह्नुःसात्त्विकंनिर्मलंफलम् ॥ रजसस्तुफलंदुःखमज्ञानंतमसःफलम् ॥ १६ ॥ सत्त्वा
त्संजायतेज्ञानंरजसोलोभएवच ॥ प्रमादमोहौतमसोभवतोऽज्ञानमेवच ॥ १७ ॥
ऊर्ध्वंगच्छंतिसत्त्वस्थामध्येतिष्ठंतिराजसा ॥ जघन्यगुणवृत्तिस्थाअधोगच्छंति
तामसाः ॥ १८ ॥ नान्यंगुणेभ्यःकर्तारंयदाद्रष्टानुपश्यति ॥ गुणेभ्यश्चपरंवेत्तिम
द्भावंसोऽधिगच्छति ॥ १९ ॥ गुणानेतानतीत्यत्रीन्देहीदेहसमुद्भवान् ॥ जन्म
मृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥ अर्जुनउवाच ॥ कैर्लिंगैस्त्रीन्गुणाने
तानतीतोभवतिप्रभो ॥ किमाचारःकथंचैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥ श्रीभ
गवानुवाच ॥ प्रकाशंचप्रवृत्तिंचमोहमेवचपांडव ॥ नद्वेष्टिसंप्रवृत्तानिननिवृत्ता
निकांक्षति ॥ २२ ॥ उदासीनवदासीनोगुणैर्योनविचाल्यते ॥ गुणावर्तंतइत्येवं
योऽवतिष्ठतिनेंगते ॥ २३ ॥ समदुःखसुखःस्वस्थःसमलोष्टाश्मकांचनः ॥ तुल्यप्रि
याप्रियोधीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २४ ॥ मानापमानयोस्तुल्यस्तुल्योमित्रा
रिपक्षयोः ॥ सर्वारंभपरित्यागीगुणातीतःसउच्यते ॥ २५ ॥ मांचयोऽव्यभिचारे
णभक्तियोगेनसेवते ॥ सगुणान्समतीत्यैतान्ब्रह्मभूयायकल्पते ॥ २६ ॥ ब्रह्मणोहि
प्रतिष्ठाहममृतस्याव्ययस्यच ॥ शाश्वतस्यचधर्मस्यसुखस्यैकांतिकस्यच ॥ २७ ॥ इ

तिश्रीमद्भगवद्गीतासूपनिषत्सुगुणत्रयविभागयोगोनामचतुर्दशोऽध्यायः॥१४॥
श्रीभगवानुवाच ॥ ऊर्ध्वमूलमधःशाखमश्वत्थंप्राहुरव्ययम् ॥ छंदांसियस्यपर्णा
नियस्तंवेदसवेदवित् ॥ १ ॥ अधश्चोर्ध्वंप्रसृतास्तस्यशाखागुणप्रवृद्धाविषयप्र
वालाः ॥ अधश्चमूलान्यनुसंततानिकर्मानुबंधीनिमनुष्यलोके ॥ २ ॥ नरूपम
स्येहतथोपलभ्यतेनांतोनचादिर्नचसंप्रतिष्ठा ॥ अश्वत्थमेनंसुविरूढमूलमसंगश
स्त्रेणदृढेनछित्त्वा ॥ ३ ॥ ततःपदंतत्परिमार्गितव्यंयस्मिन्गतानिवर्तंतिभूयः॥ त
मेवचाद्यंपुरुषंप्रपद्येयतःप्रवृत्तिःप्रसृतापुराणी ॥ ४ ॥ निर्मानमोहाजितसंगदो
षाअध्यात्मनित्याविनिवृत्तकामाः ॥ द्वंद्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाःपद
मव्ययंतत् ॥ ५ ॥ नतद्भासयतेसूर्योनशशांकोनपावकः ॥ यद्गत्वानिवर्तंतेतद्धा
मपरमंमम ॥ ६ ॥ ममैवांशोजीवलोकेजीवभूतःसनातनः ॥ मनःषष्ठानींद्रिया
णिप्रकृतिस्थानिकर्षति ॥ ७ ॥ शरीरंयदवाप्नोतियच्चाप्युत्क्रामतीश्वरः ॥ गृहीत्वै
तानिसंयातिवायुर्गंधानिवाशयात् ॥ ८ ॥ श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच॥
अधिष्ठायमनश्चायंविषयानुपसेवते ॥ ९ ॥ उत्क्रामंतंस्थितंवापिभुंजानंवागु
णान्वितम् ॥ विमूढानानुपश्यंतिपश्यंतिज्ञानचक्षुषः ॥ १० ॥ यतंतोयोगिनश्चैनंप

श्यंत्यात्मन्यवस्थितम् ॥ यतंतोऽप्यकृतात्मानोनैनंपश्यंत्यचेतसः ॥ ११ ॥ यदादि
त्यगतंतेजोजगद्भासयतेऽखिलम् ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकम्
॥ १२ ॥ गामाविश्यचभूतानिधारयाम्यहमोजसा ॥ पुष्णामिचौषधीःसर्वाःसो
मोभूत्वारसात्मकः ॥ १३ ॥ अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितः ॥ प्राणा
पानसमायुक्तःपचाम्यन्नंचतुर्विधम् ॥ १४ ॥ सर्वस्यचाहंहृदिसन्निविष्टोमत्तःस्मृ
तिर्ज्ञानमपोहनंच ॥ वेदैश्चसर्वैरहमेववेद्योवेदांतकृद्वेदविदेवचाहम् ॥ १५ ॥ द्वा
विमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यते
॥ १६ ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्यबिभर्त्यव्य
यईश्वरः ॥ १७ ॥ यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः अतोऽस्मिलोकेवेदेच
प्रथितःपुरुषोत्तमः ॥ १८ ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्ववि
द्भजतिमांसर्वभावेनभारत ॥ १९ ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ ॥ एत
द्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत ॥ २० ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्म
विद्यायांश्रीकृष्णार्जुनसंवादेपुराणपुरुषोत्तमयोगोनामपंचदशोऽध्यायः ॥ १५ ॥
श्रीभगवानुवाच ॥ अभयंसत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥ दानंदमश्चयज्ञ

श्चस्वाध्यायस्तपआर्जवम् ॥ १ ॥ अहिंसासत्यमक्रोधस्त्यागःशांतिरपैशुनम् ॥
दयाभूतेष्वलोलुप्त्वंमार्दवंह्रीरचापलम् ॥ २ ॥ तेजःक्षमाधृतिःशौचमद्रोहोनाति
मानिता ॥ भवंतिसंपदंदैवीमभिजातस्यभारत ॥ ३ ॥ दंभोदर्पोऽभिमानश्चक्रो
धःपारुष्यमेवच ॥ अज्ञानंचाभिजातस्यपार्थसंपदमासुरीम् ॥ ४ ॥ दैवीसंपद्वि
मोक्षायनिबंधायासुरीमता ॥ माशुचःसंपदंदैवीमभिजातोऽसिपांडव ॥ ५ ॥ द्वौ
भूतसर्गौलोकेऽस्मिन्दैवआसुरएवच ॥ दैवोविस्तरशःप्रोक्तआसुरंपार्थमेशृणु
॥ ६ ॥ प्रवृत्तिंचनिवृत्तिंचजनानविदुरासुराः ॥ नशौचंनापिचाचारोनसत्यंतेषु
विद्यते ॥ ७ ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ अपरस्परसंभूतंकिमन्य
त्कामहैतुकम् ॥ ८ ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः ॥ प्रभवंत्युग्रकर्मा
णःक्षयायजगतोऽहिताः ॥ ९ ॥ काममाश्रित्यदुष्पूरंदंभमानमदान्विताः ॥ मो
हाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तंतेऽशुचिव्रताः ॥ १० ॥ चिंतामपरिमेयांचप्रलयांतामुपा
श्रिताः ॥ कामोपभोगपरमाएतावदितिनिश्चिताः ॥ ११ ॥ आशापाशशतैर्बद्धाः
कामक्रोधपरायणाः ॥ ईहंतेकामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥ इदम
द्यमयालब्धमिमंप्राप्स्येमनोरथम् ॥ इदमस्तीदमपिमेभविष्यतिपुनर्धनम् ॥ १३ ॥

असौमयाहतःशत्रुर्हनिष्येचापरानपि ॥ ईश्वरोऽहमहंभोगीसिद्धोऽहंबलवान्सु
खी ॥ १४ ॥ आढ्योऽभिजनवानस्मिकोऽन्योऽस्तिसदृशोमया ॥ यक्ष्येदास्या
मिमोदिष्यइत्यज्ञानविमोहिताः ॥ १५ ॥ अनेकचित्तविभ्रांतामोहजालसमावृ
ताः ॥ प्रसक्ताःकामभोगेषुपतंतिनरकेऽशुचौ ॥ १६ ॥ आत्मसंभाविताःस्तब्धा
धनमानमदान्विताः ॥ यजंतेनामयज्ञैस्तेदंभेनाविधिपूर्वकम् ॥ १७ ॥ अहंकारं
बलंदर्पंकामंक्रोधंचसंश्रिताः ॥ मामात्मपरदेहेषुप्रद्विषंतोऽभ्यसूयकाः ॥ १८ ॥ ता
नहंद्विषतःक्रूरान्संसारेषुनराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु
॥ १९ ॥ आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि ॥ मामप्राप्यैवकौंतेयततो
यांत्यधमांगतिम् ॥ २० ॥ त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः ॥ कामःक्रोधस्त
थालोभस्तस्मादेतत्त्रयंत्यजेत् ॥ २१ ॥ एतैर्विमुक्तःकौंतेयतमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनःश्रेयस्ततोयातिपरांगतिम् ॥ २२ ॥ यःशास्त्रविधिमुत्सृज्यवर्ततेका
मकारतः ॥ नससिद्धिमवाप्नोतिनसुखंनपरांगतिम् ॥ २३ ॥ तस्माच्छास्त्रंप्रमाणंते
कार्याकार्यव्यवस्थितौ ॥ ज्ञात्वाशास्त्रविधानोक्तंकर्मकर्तुमिहार्हसि ॥ २४ ॥ इतिश्री
मद्भगवद्गीतासूपनिषत्सु० दैवासुरसंपद्विभागयोगोनामषोडशोऽध्यायः ॥ १६ ॥

॥ अर्जुनउवाच ॥येशास्त्रविधिमुत्सृज्ययजंतेश्रद्धयान्विताः॥तेषांनिष्ठातुकाकृष्ण
सत्त्वमाहोरजस्तमः॥१॥ श्रीभगवानुवाच ॥त्रिविधाभवतिश्रद्धादेहिनांसास्वभा
वजा॥सात्त्विकीराजसीचैवतामसीचेतितांशृणु॥२॥सत्त्वानुरूपासर्वस्यश्रद्धाभ
वतिभारत ॥ श्रद्धामयोऽयंपुरुषोयोयच्छ्रद्धःसएवसः ॥ ३ ॥ यजंतेसात्त्विकादे
वान्यक्षरक्षांसिराजसाः॥ प्रेतान्भूतगणांश्चान्येयजंतेतामसाजनाः॥ ४ ॥ अशा
स्त्रविहितंघोरंतप्यंतेयेतपोजनाः॥ दंभाहंकारसंयुक्ताःकामरागबलान्विताः॥ ५॥
कर्षयंतःशरीरस्थंभूतग्राममचेतसः॥ मांचैवांतःशरीरस्थंतान्विद्ध्यासुरनिश्चया
न् ॥ ६ ॥ आहारस्त्वपिसर्वस्यत्रिविधोभवतिप्रियः॥ यज्ञस्तपस्तथादानंतेषांभे
दमिमंशृणु ॥ ७ ॥ आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥ रस्याःस्निग्धाः
स्थिराहृद्याआहाराःसात्त्विकप्रियाः ॥ ८ ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षवि
दाहिनः॥ आहाराराजसस्येष्टादुःखशोकामयप्रदाः ॥ ९ ॥ यातयामंगतरसंपू
तिपर्युषितंचयत् ॥ उच्छिष्टमपिचामेध्यंभोजनंतामसप्रियम् ॥ १० ॥ अफला
कांक्षिभिर्यज्ञोविधिदृष्टोयइज्यते॥यष्टव्यमेवेतिमनःसमाधायससात्त्विकः॥११॥
अभिसंधायतुफलंदंभार्थमपिचैवयत् ॥ इज्यतेभरतश्रेष्ठतंयज्ञंविद्धिराजसम्

॥ १२ ॥ विधिहीनमसृष्टान्नंमंत्रहीनमदक्षिणम् ॥ श्रद्धाविरहितंयज्ञंतामसंप
रिचक्षते ॥ १३ ॥ देवद्विजगुरुप्राज्ञपूजनंशौचमार्जवम् ॥ ब्रह्मचर्यमहिंसाच
शारीरंतपउच्यते ॥ १४ ॥ अनुद्वेगकरंवाक्यंसत्यंप्रियहितंचयत् ॥ स्वाध्याया
भ्यसनंचैववाङ्मयंतपउच्यते ॥ १५ ॥ मनःप्रसादःसौम्यत्वंमौनमात्मविनिग्र
हः ॥ भावसंशुद्धिरित्येतत्तपोमानसमुच्यते ॥ १६ ॥ श्रद्धयापरयातप्तंतपस्तत्रि
विधंनरैः ॥ अफलाकांक्षिभिर्युक्तैःसात्त्विकंपरिचक्षते ॥१७॥ सत्कारमानपूजा
र्थंतपोदंभेनचैवयत् ॥ क्रियतेतदिहप्रोक्तंराजसंचलमध्रुवम् ॥ १८ ॥ मूढग्रा
हेणात्मनोयत्पीडयाक्रियतेतपः॥परस्योत्सादनार्थंवातत्तामसमुदाहृतम् ॥१९॥
दातव्यमितियद्दानंदीयतेऽनुपकारिणे॥ देशेकालेचपात्रेचतद्दानंसात्त्विकंस्मृतम्
॥ २० ॥ यत्तुप्रत्युपकारार्थंफलमुद्दिश्यवापुनः ॥ दीयतेचपरिक्लिष्टंतद्राजसमुदा
हृतम् ॥ २१ ॥ अदेशकालेयद्दानमपात्रेभ्यश्चदीयते ॥ असत्कृतमवज्ञातंतत्ता
मसमुदाहृतम् ॥ २२ ॥ ओंतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृतः ॥ ब्राह्मणास्ते
नवेदाश्चयज्ञाश्चविहिताःपुरा ॥२३॥ तस्मादोमित्युदाहृत्ययज्ञदानतपःक्रियाः॥
प्रवर्तंतेविधानोक्ताःसततंब्रह्मवादिनाम् ॥ २४ ॥ तदित्यनभिसंधायफलंयज्ञत

पःक्रियाः ॥ दानक्रियाश्चविविधाःक्रियंतेमोक्षकांक्षिभिः ॥ २५ ॥ सद्भावेसा
धुभावेचसदित्येतत्प्रयुज्यते ॥ प्रशस्तेकर्मणितथासच्छब्दःपार्थयुज्यते ॥ २६ ॥
यज्ञेतपसिदानेचास्थितिःसदितिचोच्यते ॥ कर्मचैवतदर्थीयंसदित्येवाभिधीयते
॥ २७ ॥ अश्रद्धयाहुतंदत्तंतपस्तप्तंकृतंचयत् ॥ असदित्युच्यतेपार्थनचतत्प्रेत्य
नोइह ॥ २८ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांश्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगोनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥
॥ अर्जुनउवाच ॥ संन्यासस्यमहाबाहोतत्त्वमिच्छामिवेदितुम् ॥ त्यागस्यचहृ
षीकेशपृथक्केशिनिषूदन ॥ १ ॥ श्रीभगवानुवाच ॥ काम्यानांकर्मणांन्यासंसंन्या
संकवयोविदुः ॥ सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाः ॥ २ ॥ त्याज्यंदोषवदि
त्येकेकर्मप्राहुर्मनीषिणः ॥ यज्ञदानतपःकर्मनत्याज्यमितिचापरे ॥ ३ ॥ निश्चयं
शृणुमेतत्रत्यागेभरतसत्तम ॥ त्यागोहिपुरुषव्याघ्रत्रिविधःसंप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्मनत्याज्यंकार्यमेवतत् ॥ यज्ञोदानंतपश्चैवपावनानिमनीषिणाम्
॥ ५ ॥ एतान्यपितुकर्माणिसंगंत्यक्त्वाफलानिच ॥ कर्तव्यानीतिमेपार्थनिश्चितंम
तमुत्तमम् ॥ ६ ॥ नियतस्यतुसंन्यासःकर्मणोनोपपद्यते ॥ मोहात्तस्यपरित्याग

स्तामसःपरिकीर्तितः ॥ ७ ॥ दुःखमित्येवयत्कर्मकायक्लेशभयात्त्यजेत् ॥ सकृ
त्वाराजसंत्यागंनैवत्यागफलंलभेत् ॥ ८ ॥ कार्यमित्येवयत्कर्मनियतंक्रियतेऽर्जु
न ॥ संगंत्यक्त्वाफलंचैवसत्यागःसात्त्विकोमतः ॥ ९ ॥ नद्वेष्ट्यकुशलंकर्मकुशले
नानुषज्जते ॥ त्यागीसत्त्वसमाविष्टोमेधावीछिन्नसंशयः ॥ १० ॥ नहिदेहभृता
शक्यंत्यक्तुंकर्माण्यशेषतः ॥ यस्तुकर्मफलत्यागीसत्यागीत्यभिधीयते ॥ ११ ॥
अनिष्टमिष्टंमिश्रंचत्रिविधंकर्मणःफलम् ॥ भवत्यत्यागिनांप्रेत्यनतुसंन्यासिनां
क्वचित्॥१२॥पंचैतानिमहाबाहोकारणानिनिबोधमे ॥सांख्येकृतांतेप्रोक्तानिसि
द्धयेसर्वकर्मणाम् ॥ १३ ॥ अधिष्ठानंतथाकर्ताकरणंचपृथग्विधम् ॥ विविधा
चपृथक्चेष्टादैवंचैवात्रपंचमम् ॥ १४ ॥ शरीरवाङ्मनोभिर्यत्कर्मप्रारभतेनरः ॥
न्याय्यंवाविपरीतंवापंचैतेतस्यहेतवः ॥ १५ ॥ तत्रैवंसतिकर्तारमात्मानंकेवलंतु
यः ॥ पश्यत्यकृतबुद्धित्वान्नसपश्यतिदुर्मतिः ॥ १६ ॥ यस्यनाहंकृतोभावोबुद्धि
र्यस्यनलिप्यते ॥ हत्वापिसइमाँल्लोकान्नहंतिननिबध्यते ॥ १७ ॥ ज्ञानंज्ञेयपरि
ज्ञातात्रिविधाकर्मचोदना ॥ करणंकर्मकर्तेतित्रिविधःकर्मसंग्रहः ॥ १८ ॥ ज्ञा
नंकर्मचकर्ताचत्रिधैवगुणभेदतः ॥ प्रोच्यतेगुणसंख्यानेयथावच्छृणुतान्यपि

॥ १९ ॥ सर्वभूतेषुयेनैकंभावमव्ययमीक्षते ॥ अविभक्तंविभक्तेषुतज्ज्ञानंविद्धि
सात्त्विकम् ॥ २० ॥ पृथक्त्वेनतुयज्ज्ञानंनानाभावान्पृथग्विधान् ॥ वेत्तिस
र्वेषुभूतेषुतज्ज्ञानंविद्धिराजसम् ॥ २१ ॥ यत्तुकृत्स्नवदेकस्मिन्कार्येसक्तमहैतुक
म् ॥ अतत्त्वार्थवदल्पंचतत्तामसमुदाहृतम् ॥ २२ ॥ नियतंसंगरहितमरागद्वेष
तःकृतम् ॥ अफलप्रेप्सुनाकर्मयत्तत्सात्त्विकमुच्यते ॥ २३ ॥ यत्तुकामेप्सुनाक
र्मसाहंकारेणवापुनः ॥ क्रियतेबहुलायासंतद्राजसमुदाहृतम् ॥ २४ ॥ अनुबंधं
क्षयंहिंसामनपेक्ष्यचपौरुषम् ॥ मोहादारभ्यतेकर्मतत्तामसमुदाहृतम् ॥ २५ ॥
मुक्तसंगोऽनहंवादीधृत्युत्साहसमन्वितः ॥ सिद्ध्यसिद्ध्योर्निर्विकारःकर्तासात्त्वि
कउच्यते ॥ २६ ॥ रागीकर्मफलप्रेप्सुर्लुब्धोहिंसात्मकोऽशुचिः ॥ हर्षशोकान्वि
तःकर्ताराजसःपरिकीर्तितः ॥ २७ ॥ अयुक्तःप्राकृतःस्तब्धःशठोनैकृतिकोऽलसः॥
विषादीदीर्घसूत्रीचकर्तातामसउच्यते ॥ २८ ॥ बुद्धेर्भेदंधृतेश्चैवगुणतस्त्रिविधं
शृणु ॥ प्रोच्यमानमशेषेणपृथक्त्वेनधनंजय ॥ २९ ॥ प्रवृत्तिंचनिवृत्तिंचका
र्याकार्येभयाभये ॥ बंधंमोक्षंचयावेत्तिबुद्धिःसापार्थसात्त्विकी ॥ ३० ॥ यया
धर्ममधर्मंचकार्यंचाकार्यमेवच ॥ अयथावत्प्रजानातिबुद्धिःसापार्थराजसी ३१

अधर्मंधर्ममितियामन्यतेतमसावृता॥सर्वार्थान्विपरीतांश्चबुद्धिःसापार्थतामसि
॥३२॥धृत्यायया धारयतेमनःप्राणेंद्रियक्रियाः॥योगेनाव्यभिचारिण्याधृतिःसा
पार्थसात्त्विकी॥ ३३॥ययातुधर्मकामार्थान्धृत्याधारयतेऽर्जुन ॥प्रसंगेनफलाकां
क्षीधृतिःसापार्थराजसी ॥ ३४ ॥ ययास्वप्नंभयंशोकंविषादंमदमेवच ॥ नविमुं
चतिदुर्मेधाधृतिःसापार्थतामसी॥ ३५ ॥सुखंत्विदानींत्रिविधंशृणुमेभरतर्षभ ॥
अभ्यासाद्रमतेयत्रदुःखांतंचनिगच्छति ॥ ३६ ॥ यत्तदग्रेविषमिवपरिणामेऽ
मृतोपमम् ॥ तत्सुखंसात्त्विकंप्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥ विषयेंद्रियसं
योगाद्यत्तदग्रेऽमृतोपमम् ॥ परिणामेविषमिवतत्सुखंराजसंस्मृतम् ॥ ३८ ॥ य
दग्रेचानुबंधेचसुखंमोहनमात्मनः ॥ निद्रालस्यप्रमादोत्थंतत्तामसमुदाहृतम्
॥ ३९ ॥ नतदस्तिपृथिव्यांवादिविदेवेषुवापुनः ॥ सत्त्वंप्रकृतिजैर्मुक्तंयदेभिःस्या
त्त्रिभिर्गुणैः ॥ ४० ॥ ब्राह्मणक्षत्रियविशांशूद्राणांचपरंतप ॥ कर्माणिप्रविभक्ता
निस्वभावप्रभवैर्गुणैः ॥ ४१ ॥ शमोदमस्तपःशौचंक्षांतिरार्जवमेवच ॥ ज्ञानंवि
ज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम् ॥ ४२ ॥ शौर्यंतेजोधृतिर्दाक्ष्यंयुद्धेचाप्यपला
यनम् ॥ दानमीश्वरभावश्चक्षात्रंकर्मस्वभावजम् ॥ ४३ ॥ कृषिगोरक्ष्यवाणिज्यं

वैश्यकर्मस्वभावजम् ॥ परिचर्यात्मकंकर्मशूद्रस्यापिस्वभावजम् ॥ ४४ ॥ स्वेस्वे
कर्मण्यभिरतःसंसिद्धिंलभतेनरः ॥ स्वकर्मनिरतःसिद्धिंयथाविंदतितच्छृणु॥४५॥
यतःप्रवृत्तिर्भूतानांयेनसर्वमिदंततम् ॥ स्वकर्मणातमभ्यर्च्यसिद्धिंविंदतिमान
वः ॥ ४६ ॥ श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात् ॥ स्वभावनियतंकर्मकुर्व
न्नाप्नोतिकिल्बिषम् ॥ ४७ ॥ सहजंकर्मकौंतेयसदोषमपिनत्यजेत् ॥ सर्वारंभा
हिदोषेणधूमेनाग्निरिवावृताः ॥ ४८ ॥ असक्तबुद्धिःसर्वत्रजितात्माविगतस्पृहः ॥
नैष्कर्म्यसिद्धिंपरमांसंन्यासेनाधिगच्छति ॥ ४९ ॥ सिद्धिंप्राप्तोयथाब्रह्मतथाप्नो
तिनिबोधमे ॥ समासेनैवकौंतेयनिष्ठाज्ञानस्ययापरा ॥ ५० ॥ बुद्ध्याविशुद्धया
युक्तोधृत्यात्मानंनियम्यच ॥ शब्दादीन्विषयांस्त्यक्त्वारागद्वेषौव्युदस्यच ॥५१॥
विविक्तसेवीलघ्वाशीयतवाक्कायमानसः ॥ ध्यानयोगपरोनित्यंवैराग्यंसमुपा
श्रितः ॥ ५२ ॥ अहंकारंबलंदर्पंकामंक्रोधंपरिग्रहम् ॥ विमुच्यनिर्ममःशांतोब्रह्म
भूयायकल्पते ॥ ५३ ॥ ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति ॥ समःसर्वेषुभूते
षुमद्भक्तिंलभतेपराम् ॥ ५४ ॥ भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतः ॥
ततोमांतत्त्वतोज्ञात्वाविशतेतदनंतरम् ॥ ५५ ॥ सर्वकर्माण्यपिसदाकुर्वाणोम

द्व्यपाश्रयः ॥ मत्प्रसादादवाप्नोतिशाश्वतंपदमव्ययम् ॥ ५६ ॥ चेतसासर्वकर्मा
णिमयिसंन्यस्यमत्परः ॥ बुद्धियोगमुपाश्रित्यमच्चित्तःसततंभव ॥ ५७॥ मच्चित्तः
सर्वदुर्गाणिमत्प्रसादात्तरिष्यसि ॥ अथचेत्त्वमहंकारान्नश्रोष्यसिविनंक्ष्यसि
॥ ५८ ॥ यदहंकारमाश्रित्यनयोत्स्यइतिमन्यसे ॥ मिथ्यैषव्यवसायस्तेप्रकृति
स्त्वानियोक्ष्यति ॥ ५९ ॥ स्वभावजेनकौंतेयनिबद्धःस्वेनकर्मणा ॥ कर्तुंनेच्छसिय
न्मोहात्करिष्यस्यवशोऽपितत् ॥ ६० ॥ ईश्वरःसर्वभूतानांहृद्देशेऽर्जुनतिष्ठति ॥ भ्रा
मयन्सर्वभूतानियंत्रारूढानिमायया ॥६१॥ तमेवशरणंगच्छसर्वभावेनभारत ॥
तत्प्रसादात्परांशांतिंस्थानंप्राप्स्यसिशाश्वतम्॥६२॥इतितेज्ञानमाख्यातंगुह्याद्गु
ह्यतरंमया ॥ विमृश्यैतदशेषेणयथेच्छसितथाकुरु ॥ ६३॥ सर्वगुह्यतमंभूयःशृ
णुमेपरमंवचः ॥ इष्टोऽसिमेदृढमितिततोवक्ष्यामितेहितम् ॥ ६४ ॥ मन्मनाभव
मद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवैष्यसिसत्यंतेप्रतिजानेप्रियोऽसिमे ॥ ६५॥
सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमा
शुचः ॥ ६६ ॥ इदंतेनातपस्कायनाभक्तायकदाचन ॥ नचाशुश्रूषवेवाच्यंनचमां
योऽभ्यसूयति ॥ ६७॥ यइदंपरमंगुह्यंमद्भक्तेष्वभिधास्यति ॥ भक्तिंमयिपरांकृ

त्वामामेवैष्यत्यसंशयः ॥ ६८ ॥ नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः ॥ भवि
तानचमेतस्मादन्यःप्रियतरोभुवि ॥६९॥ अध्येष्यतेचयइमंधर्म्यंसंवादमावयोः॥
ज्ञानयज्ञेनतेनाहमिष्टःस्यामितिमेमतिः ॥ ७० ॥ श्रद्धावाननसूयश्चशृणुयादपि
योनरः ॥ सोऽपिमुक्तःशुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥ कच्चिदेतच्छ्रु
तंपार्थत्वयैकाग्रेणचेतसा ॥ कच्चिदज्ञानसंमोहःप्रणष्टस्तेधनंजय ॥ ७२ ॥ अर्जु
नउवाच ॥ नष्टोमोहःस्मृतिर्लब्धात्वत्प्रसादान्मयाच्युत ॥ स्थितोऽस्मिगतसंदेहः
करिष्येवचनंतव ॥ ७३ ॥ संजयउवाच ॥ इत्यहंवासुदेवस्यपार्थस्यचमहात्मनः ॥
संवादमिममश्रौषमद्भुतंरोमहर्षणम् ॥ ७४ ॥ व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं
परम् ॥ योगंयोगेश्वरात्कृष्णात्साक्षात्कथयतःस्वयम् ॥ ७५ ॥ राजन्संस्मृत्यसं
स्मृत्यसंवादमिममद्भुतम् ॥ केशवार्जुनयोःपुण्यंहृष्यामिचमुहुर्मुहुः ॥ ७६ ॥ तच्च
संस्मृत्यसंस्मृत्यरूपमत्यद्भुतंहरेः ॥ विस्मयोमेमहान्राजन्हृष्यामिचपुनःपुन
॥ ७७ ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिः
र्मतिर्मम ॥ ७८ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृ
ष्णार्जुनसंवादेसंन्यासयोगोनामाष्टादशोऽध्यायः ॥ १८ ॥श्रीकृष्णार्पणमस्तु ॥

श्रीपंचजनपंचास्यायनमः ॥ ॥ देवंनारायणंनत्वासर्वदोषविवर्जितम् ॥ परिपू
र्णंगुरूंश्चानूगीतार्थंवक्ष्यामिलेशतः ॥१॥ नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेंद्रा
दिभिरर्थितोज्ञानप्रदर्शनायभगवान्व्यासोऽवततार ॥ ततश्चेष्टानिष्टप्राप्तिपरि
हारसाधनादर्शनाद्वेदार्थाज्ञानाच्चसंसारेक्लिश्यमानानांवेदानधिकारिणांस्त्रीशू-
द्रादीनांचधर्मज्ञानद्वारामोक्षोभवेदितिकृपालुःसर्ववेदाद्यर्थोपबृंहितांतदनुक्तके-
वलेश्वरज्ञानदृष्टार्थयुक्तांसर्वप्राणिनामवगाह्यानवगाह्यरूपांकेवलभगवत्स्वरू
पपरांपरोक्षार्थांमहाभारतसंहितामचीकॢपत् ॥ तच्चोक्तं ॥ लोकेशाब्रह्मरुद्राद्याः
संसारेक्लेशिनंजनम् ॥ वेदार्थाज्ञमधीकारवर्जितंचस्त्रियादिकम् ॥ अवेक्ष्यप्रार्थ
यामासुर्देवेशंपुरुषोत्तमम् ॥ ततःप्रसन्नोभगवान्व्यासोभूत्वाचतेनच ॥ अन्या
वताररूपैश्चवेदानुक्तार्थभूषितम् ॥ केवलेनात्मबोधेनदृष्टंवेदार्थसंयुतम् ॥ वेदाद
पिपरंचक्रेपंचमंवेदमुत्तमम् ॥भारतंपंचरात्रंचमूलरामायणंतथा ॥पुराणंभागव
तंचेतिसंभिन्नःशास्त्रपुंगवइतिनारायणाष्टाक्षरकल्पे ॥ ब्रह्मापितन्नजानातिईषत्स
र्वोऽपिजानति ॥ बह्वर्थमृषयस्तत्तुभारतंप्रवदंतिहीत्युपनारदीये ॥ ब्रह्माद्यैःप्रार्थि
तोविष्णुर्भारतंसचकारह ॥ यस्मिन्दशार्थाःसर्वत्रनज्ञेयाःसर्वजंतुभिरितिनारदी

ये ॥ भारतंचापिकृतवान्पंचमंवेदमुत्तमम् ॥ दशावरार्थंसर्वत्रकेवलंविष्णुबोधकम् ॥ परोक्षार्थंतुसर्वत्रवेदादप्युत्तमंतुयदितिस्कांदे ॥ यदिविद्याच्चतुर्वेदान्सांगोपनिषदान्द्विजः ॥ नचेत्पुराणंसंविद्यान्नैवसस्याद्विचक्षणः ॥ इतिहासपुराणाभ्यां वेदंसमुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वेदोमामयंप्रचलिष्यति ॥ मन्वादिकेचिद्ब्रुवते त्यास्तीकादितथापरे ॥ तथोपरिचराद्यन्येभारतंपरिचक्षते ॥ भारतंसर्ववेदाश्चतुलामारोपिताःपुरा ॥ देवैर्ब्रह्मादिभिःसर्वैर्ऋषिभिश्चसमन्वितैः ॥ व्यासस्यैवाज्ञया तत्रत्वत्यरिच्यतभारतम् ॥ महत्त्वाद्भारवत्त्वाच्चमहाभारतमुच्यते ॥ निरुक्तमस्य योवेदसर्वपापैःप्रमुच्यते ॥ यदिहास्तितदन्यत्रयन्नेहास्तिनतत्क्वचित् ॥ विराटोद्योगसारवानित्यादितद्वाक्यपर्यालोचनयाऋषिसंप्रदायात्कोत्वन्यःपुंडरीकाक्षान्महाभारतकृद्भवेदित्यादिपुराणग्रंथांतरगतवाक्यान्यथानुपपत्त्यानारदाध्ययनादि-लिंगैश्चावसीयते ॥ कथमन्यथाभारतनिरुक्तिज्ञानमात्रेणसर्वपापक्षयः ॥ प्रसिद्धश्चसोर्थः ॥ कथंचान्यस्यकर्तुंनशक्यते ॥ ग्रंथांतरगतत्वाच्चनाविद्यमानस्तुतिः ॥ नचकर्तुरेव ॥ इतरत्रापिसाम्यात् ॥ तत्रचसर्वभारतार्थसंग्रहांवासुदेवार्जुनसंवादरूपांभारतपारिजातमधुभूतांगीतामुपनिबबंध ॥ तच्चोक्तम् ॥ भारतंसर्व

शास्त्रेषुभारतेगीतिकावरा ॥ विष्णोःसहस्रनामापिज्ञेयंपाठ्यंचतद्द्वयमितिमहा
कौर्मे ॥ सहिधर्मःसुपर्याप्तोब्रह्मणःपदवेदनइति ॥ [11] तंत्रसेनयोर्मध्येबांधवादिमो
हजालसंवृतंविषीदंतमर्जुनंभगवानुवाच ॥ प्रज्ञावादान् स्वमनीषोत्थवचना
नि ॥ कथमशोच्याः ॥ गतासून ॥ [12] किंमिति नत्वेवाहम् ॥ ईश्वरानित्य
त्वस्याप्रस्तुतत्वाद्दृष्टांतत्वेनाह ॥ नत्वेवेति ॥ यथाहंनित्यःसर्ववेदांतेषुप्रसिद्धः ।
एवंत्वमेतेजनाधिपाश्चनित्याः । [13] देहिनोभावएतद्भवति तदेवासिद्धमितिचेन्न
देहिनोस्मिन् ॥ यथाकौमारादिशरीरभेदेपिदेहीतदीक्षितासिद्धः ॥ एवंदेहांतर
प्राप्तावपिईक्षितत्वात् ॥ नहिजडस्यशरीरस्यकौमाराद्यनुभवःसंभवति ॥ मृत
स्यादर्शनात् ॥ मृतस्यवाग्वाद्यपगमात्तदनुभवाभावः॥अहंमनुष्यइत्याद्यनुभवा
च्चैतत्सिद्धमितिचेन्न ॥ सत्येवाविशेषेदेहेसुप्त्यादौज्ञानादिविशेषादर्शनात् ॥ स
मश्चाभिमानोमनसि ॥ काष्ठादिवच्च ॥ श्रुतेश्च ॥ प्रामाण्यंचप्रत्यक्षादिवत् ॥
नचबौद्धादिवत् ॥ अपौरुषेयत्वात् ॥ नह्यपौरुषेयेपौरुषेयाज्ञानादयःकल्पयितुं
शक्याः॥ विनाचकस्यचिद्वाक्यस्यापौरुषेयत्वंसर्वसमयाभिमतधर्माद्यसिद्धिः॥
यश्चतौनांगीकुरुतेनासौसमयी ॥ अप्रयोजकत्वात् ॥ मास्तुधर्मोऽनिरूप्यत्वा

दितिचेन्न ॥ सर्वाभिमतस्यप्रमाणंविनानिषेद्धुमशक्यत्वात् ॥ नचसिद्धिरप्रमा
णकस्येतिचेन्न ॥ सर्वाभिमतेरेवप्रमाणत्वात् ॥ अन्यथासर्ववाचनिकव्यवहा
रासिद्धेश्च ॥ नचमयाश्रुतमितिनवज्ञातुंशक्यम् ॥ अन्यथावाप्रत्युत्तरंस्यात् ॥ भ्रां
तिर्वांतवस्यात् ॥ सर्वदुःखकारणत्वंवास्यात् ॥ एकोवाअन्यथास्यात् ॥ रचितत्वे
चधर्मप्रमाणस्यकर्तुरज्ञानादिदोषशंकास्यात् ॥ नचादोषत्वंस्ववाक्येनैवसिध्यति ॥
नचयेनकेनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमम् ॥ अनादिकालपरिग्रहसिद्ध
त्वात् ॥ अतःप्रामाण्यंश्रुतेः ॥ अतःकुतर्कैर्धीरस्तत्रनमुह्यति ॥ अथवाजीवनाशं
देहनाशंवापेक्ष्यशोकः ॥ नतावज्जीवनाशम् ॥ नित्यत्वादित्याह ॥ नत्वेवेति ॥ नापि
देहनाशमित्याह ॥ देहिनइति ॥ यथाकौमारादिदेहहानेनजरादिप्राप्तावशोकः ॥
एवंजीर्णादिदेहहानेनदेहांतरप्राप्तावपि ॥ तथापितद्दर्शनाभावादिनाशोकइतिचे
त् ॥ नेत्याह ॥ मात्रास्पर्शाइति ॥ मीयंतइतिमात्राविषयाः ॥ तेषांस्पर्शाःसंबं
धाः ॥ तएवशीतोष्णसुखदुःखदाः ॥ देहेशीतोष्णादिसंबंधाद्धिशीतोष्णाद्यनुभव
आत्मनः ॥ ततःसुखदुःखे ॥ नत्यात्मनःस्वतोदुःखादिःसंभवति ॥ कुतः ॥ आगमापायि
त्वात् ॥ यद्यात्मनःस्वतःस्युःसुप्तावपिस्युः ॥ अतोयतोमात्रास्पर्शाजाग्रदादावेवते

संतिनान्यदेतितदन्वयव्यतिरेकित्वात्तन्निमित्ताएवनात्मनःस्वतः ॥ आत्मनश्चतै
र्विषयविषयिभावसंबंधादन्यःसंबंधोनास्ति ॥ नचागमापायित्वेपिप्रवाहरूपेण
नित्यत्वमस्ति ॥ सुप्तिप्रलयादावभावादित्याह ॥ अनित्याइति ॥ अतआत्मनो
देहाद्यात्मभ्रमएवदुःखकारणम् ॥ अतस्तद्विमुक्तस्यबंधुमरणादिदुःखंनभवति ॥
अतोभिमानंपरित्यज्यताञ्छीतोष्णादींस्तितिक्षस्व ॥ १५ अतःप्रयोजनमाह ॥ यं
हीति ॥ यमेतेमात्रास्पर्शानव्यथयंति ॥ पुरिशयमेवसंतम् ॥ शरीरसंबंधाभावेस
र्वेषामपिव्यथाभावात्पुरुषमितिविशेषणम् ॥ कथंनव्यथयंति ॥ समदुःखसुख
त्वात् ॥ तत्कथम् ॥ धैर्येण ॥ १६ नित्यआत्मेत्युक्तम् ॥ किमात्मैवनित्यआहोस्विद
न्यदपि ॥ अन्यदपि ॥ तत्किमिति आह ॥ नासतइति ॥ असतःकारणस्यस
तोब्रह्मणश्चाभावोनविद्यते ॥ प्रकृतिःपुरुषश्चैवनित्यौकालश्चसत्तमेतिवचनाच्छ्री
विष्णुपुराणे ॥ पृथग्विद्यतइत्यादरार्थम् ॥ असतःकारणत्वंच सदसद्रूपयाचासौ
गुणमय्याऽगुणोविभुरितिचभागवते ॥ असतःसदजायतेतिच ॥ अव्यक्तेश्च ॥
संप्रदायतश्चैतत्सिद्धमित्याह ॥ उभयोरपीति ॥ अंतोनिर्णयः ॥ १७ किंबहुनायद्देश
तोनंतंतन्नित्यमेववेदाद्यन्यदपीत्याह ॥ अविनाशीति ॥ नापिशापादिनावि

नाशइत्याह ॥ विनाशमिति ॥ अव्ययंचतत् ॥ भवैतुदेहस्यापिकस्यचिन्नित्य
त्वमितिनेत्याह ॥ अंतवंतइति ॥ अस्तुतर्हिदर्पणनाशात्प्रतिबिंबनाशवदात्म
नाशइत्यतआह ॥ नित्यस्येति ॥ शरीरिणइतीश्वरव्यावृत्तये ॥ नचनैमित्ति
कनाशइत्याह ॥ अनाशिनइति ॥ कुतःअप्रमेयेश्वरसरूपत्वात् ॥ नह्युपाधि
बिंबसांनिध्यनाशेप्रतिबिंबनाशः ॥सतिचप्रदर्शके ॥ स्वयमेवात्रप्रदर्शकः ॥
चित्त्वात् ॥ नित्यश्चोपाधिःकश्चिदस्ति ॥ प्रतिपत्तौविमोक्षस्यनित्योपाध्या
स्वरूपया ॥ चिद्रूपयायुतोजीवःकेशवप्रतिबिंबकइतिभगवद्वचनात् ॥ व्यवहा
रस्तुभ्रांत्येत्याह ॥यएनमिति॥ कुतः ॥ उक्तहेतुभ्योनायंहंतिनहन्यते॥ नहिप्रति
बिंबस्यक्रिया ॥ सहिबिंबक्रिययैवक्रियावान् ॥ ध्यायतीवेतिश्रुतेश्च ॥ अं
त्रमंत्रवर्णोऽप्यस्तीत्याह ॥ नजायतइति ॥ नचेश्वरज्ञानवद्भूत्वाभविता ॥ त
द्धितदैक्षत ॥ देशतःकालतोयोसाववस्थातःस्वतोन्यतः ॥ अविलुप्तावबोधा
त्मेत्यादिश्रुतिस्मृतिसिद्धम् ॥ कुतःअजादिलक्षणेश्वरसरूपत्वात् ॥ शाश्वतः
सदैकरूपः ॥ पुरंदेहमणतीतिपुराणः ॥ तथापिनहन्यतेहन्यमानेपिदेहे ॥ अं
तोयएवंवेदसकथंकंघातयतिहंतिवा ॥ अविनाशिनंनैमित्तिकनाशरहितं । नि

त्यंस्वाभाविकविनाशरहितं ॥ अथवाऽविनाशिनं दोषयोगरहितं ॥ नित्यंस
दाभाविनमितिसर्वत्रविवेकः ॥ दोषयुक्तपुरुषादिषुनष्टशब्दप्रयोगात् ॥ [22]देहात्म
विवेकानुभवार्थंदृष्टांतमाह ॥ वासांसीति ॥ [23]स्वतःप्रायोनिमित्तैश्चाविनाशि
नोपिकेनचिन्निमित्तविशेषेणस्यात्कच्छेदवदित्यतोविशेषनिमित्तानिनिषेध-
ति ॥ नैनमिति ॥ [24]वर्तमाननिषेधात्स्यादुत्तरत्रेत्यतआह ॥ अच्छेद्यइति ॥ वर्तमा
नादर्शनाद्युक्तमयोग्यत्वमितिसूचयति । वर्तमानापदेशेन॥कुतोऽयोग्यता॥नित्य
सर्वगतादिविशेषणेश्वरसरूपत्वात् ॥ शाश्वतइत्येकरूपत्वमात्रमुक्तम्॥ स्थाणुश
ब्देननैमित्तिकमन्यथात्वंनिवारयति ॥ नित्यत्वंसर्वगतत्वविशेषणम् ॥ अन्यथापु
नरुक्तेः॥ ऐक्योक्तावप्यनुक्तविशेषणोपादानान्नेश्वरैक्येपुनरुक्तिः॥ युक्ताश्चबिं
बधर्माःप्रतिबिंबेऽविरोधे॥ तत्ताच॥ रूपंरूपंप्रतिरूपोबभूव॥ आभासएवचेत्या
दिश्रुतिस्मृतिसिद्धा॥ नचांशत्वविरोधः॥ तस्यैवांशत्वात्॥ नचैकरूपतैवांशता॥
प्रमाणंचोभयविधवचनमेव ॥ नचांशस्यप्रतिबिंबत्वंकल्प्यम् ॥ गाध्यादि
ष्वंशबाहुरूप्यदृष्टेरितरत्रादृष्टेः॥ स्थाणुत्वेप्यैक्षतेत्याद्यविरुद्धमेवेश्वरस्य॥ उभ
यविधवाक्यात् ॥ अचिंत्यशक्तेश्च ॥ नचमाययैकम् ॥ त्वयीश्वरेब्रह्मणिनोवि

रुध्यते ॥ नयोगित्वादीश्वरत्वात् ॥ चित्रंनचैतत्त्वयिकार्यकारणइत्याद्यैश्वर्येणै
वविरुद्धधर्माविरोधोक्तेश्च ॥ महातात्पर्याच्च ॥ मोक्षोहिमहापुरुषार्थः ॥ तत्रापि
मोक्षएवार्थः ॥ अंतेषुरेमिरेधीरानतेमध्येषुरेमिरे ॥ अंतप्राप्तिंसुखंप्राहुर्दुःखमंत
रमंतयोः ॥ पुण्यचितोलोकःक्षीयतेइत्यादिश्रुतिस्मृतिभ्यः ॥ सचविष्णुप्रसादादेव
सिध्यति ॥ वासुदेवमनाराध्यकोमोक्षंसमवाप्नुयात् ॥ तुष्टेतुतत्रकिमलभ्यमनं
तईशे ॥ तत्प्रसादादवाप्नोतिपरांसिद्धिंनसंशयः ॥ येषांसएवभगवान्दययेदनंतः
सर्वात्मनाश्रितपदोयदिनिर्व्यलीकम् ॥ तेवैविदंत्यतितरंतिचदेवमायांनैषांममा
हमितिधीःश्वसृगालभक्ष्ये ॥ तस्मिन्प्रसन्नेकिमिहास्त्यलभ्यंधर्मार्थकामैरलम
ल्पकास्ते ॥ ऋतेयदस्मिन्भवईशजीवास्तापत्रयेणोपहतानशर्म ॥ आत्मँल्लभंते ॥
ऋतेभवत्प्रसादाद्धिकस्यमोक्षोभवेदिह ॥ तमेवंविद्वानमृतइत्यादिश्रुतिस्मृतिभ्यः ॥
सचोत्कर्षज्ञानादेवभवति ॥ लोकप्रसिद्धेः ॥ लोकप्रसिद्धमविरुद्धमत्राप्यंगीकार्य
म् ॥ अहल्याजारत्वाद्यपिदोषकृतोपिते नवहुतरोलेपआसीदित्युत्कर्षमेववक्ति ॥
वहुनरकफलोप्यसौ ॥ तस्यनलोमचमीयतइतिश्रुत्यंतराच्च ॥ योमामेवमसंमूढो
जानातिपुरुषोत्तममितितदुक्तेश्च ॥ सत्यंसत्यंपुनःसत्यंशपथैश्चापिकोटिभिः ॥

विष्णुमाहात्म्यलेशस्यविभक्तस्यचकोटिधा ॥ पुनश्चानंतधातस्यपुनश्चापित्थनं
तधा ॥ नैकांशसममाहात्म्याःश्रीशेषब्रह्मशंकराइतिनारदीये ॥ अन्योत्कर्षऐक्यं
च॥तथैवसर्वशास्त्रेषुमहाभारतमुत्तमम्॥ कोह्यन्यःपुंडरीकाक्षान्महाभारतकृद्भव
दित्यादिग्रंथांतरसिद्धोत्कर्षमहाभारतविरुद्धम् ॥तत्रहि॥ नास्तिनारायणसमंनभू
तंनभविष्यति ॥ एतेनसत्यवाक्येनसर्वार्थान्साधयाम्यहम् ॥ यस्यप्रसादजोब्र
ह्मारुद्रश्चक्रोधसंभवः ॥ नत्वत्समोस्तीत्यादिषुसाधारणप्रश्नावसरएवमहांतमु
त्कर्षंविष्णोर्वक्ति ॥ अन्यत्रयत्किंचिदुक्तावपिअसाधारणएवावसरे ॥ तद्ध्य
ग्न्यादेरपिवेदादावस्ति ॥ त्वमग्नइंद्रोवृषभःसतामसित्वंविष्णुरुरुगायोनमस्यः ॥
विश्वस्मादिंद्रउत्तरइत्यादिषु॥ तद्ग्रंथविरोधाच्च ॥ तथाहिस्कांदेशैवे ॥ यदंतरंव्या
घ्रहरींद्रयोर्वनेयदंतरंमेरुगिरींद्रविंध्ययोः ॥ यदंतरंसूर्यसुरेज्यबिंबयोस्तदंतरंरु
द्रमहेंद्रयोरपि ॥ यदंतरंसिंहगजेंद्रयोर्वनेयदंतरंसूर्यशशांकयोर्दिवि ॥ यदंतरं
जाह्नविसूर्यकन्ययोस्तदंतरंब्रह्मगिरीशयोरपि ॥ यदंतरंप्रलयजवारिविप्रुषो
र्यदंतरंस्तंबहिरण्यगर्भयोः ॥ स्फुलिंगसंवर्तयोर्यदंतरंतदंतरंविष्णुहिरण्यगर्भ
योः ॥ अनंतत्वान्महाविष्णोस्तदंतरमनंतकम् ॥ माहात्म्यसूचनार्थायत्बुदा

हरणमीरितम् ॥ तत्समोप्यधिकोवापिनास्तिकश्चित्कदाचन ॥ एतेनसत्यवा
क्येनतमेवप्रविशाम्यहमित्याद्याह ॥ तत्रैवशिवंप्रतिमार्कंडेयवचनम् ॥ संसा
रार्णवनिर्मग्नइदानींमुक्तिमेष्यसीत्यादि ॥ पाद्मेशैवेमार्कंडेयकथाप्रबंधेशिवा
न्निषिध्यविष्णोरेवमुक्तिमाह ॥ अहंभोगप्रदोवत्समोक्षदस्तुजनार्दनइत्यादि ॥
समब्राह्मविरोधाच्च ॥ वेदश्चेतिहासाद्यनुरोधेनयोज्यः ॥ यदिविद्यादित्यादिवच
नात् ॥ अनिर्णयाच्चेंद्रादिशंकयान्यथा ॥ तत्रापीष्टसिद्धिः ॥ नामवैशेष्यात् ॥
अतोभगवदुत्कर्षएवसर्वागमानांमहातात्पर्यम् ॥ तथापिस्वतःप्रामाण्यात्सन्ने
वोच्यते ॥ अविरोधात् ॥ नचप्रमाणसिद्धस्यान्यत्राद्दष्ट्यापह्नवोयुक्तः ॥ धर्मवै
चित्र्यादर्थानाम् ॥ स्वतःप्रामाण्यानंगीकारेचमानोक्तावप्यदोषत्वंसाधयेदित्य
तिप्रसंगः ॥ अनन्यापेक्षयाचतत्परत्वंसिद्धमागमानाम् ॥ नारायणपरावेदाः ॥
सर्वेवेदायत्पदमामनंति ॥ वासुदेवपरावेदाइति ॥ नचैतद्विरुद्धम् ॥ ईश्वरनिय
मात् ॥ अनादौचतत्सिद्धम् ॥ द्रव्यंकर्मचकालश्चेत्यादौ ॥ प्रयोजकत्वंतुपूर्वोक्त
न्यायेन ॥ अतःसिद्धमेतत् ॥ तच्चानन्यापेक्षाचिंत्यशक्तित्वएवयुक्तम् ॥ अतोनमा
[illegible] इत्यादिवत ॥

क्रियादृष्टेः ॥ तपोमेहृदयंसाक्षात्तनुर्विद्याक्रियाकृतिरित्याद्युक्तेः ॥ अतश्चनमा
यामयंसर्वम् ॥ ऐश्वर्यादिवाचिभगशब्देनैवसंबोधनाच्चतत्वाभगेत्यादौ ॥ स्व
रूपत्वान्नमायामयत्वंयुक्तम् ॥ विज्ञानशक्तिरहमासमनंतशक्तेः ॥ मय्यनंतगु
णेनंतेगुणतोऽनंतविग्रहे ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रि
याचेत्यादिवचनात् ॥ [२५]अंतएवाव्यक्तादिरूपः ॥ [२६]अस्त्वेवमात्मनोनित्यत्वम् ॥
तथापिदेहसंयोगवियोगात्मकजनिमृतीस्तएवेत्यतआह ॥ अथेति ॥ [२७]कुंतोऽशो-
कः ॥ नियतत्वादित्याह ॥ जातस्येति ॥ [२८]तदेवस्पष्टयति ॥ अव्यक्तादी
नीति ॥ [२९]देहयोगवियोगस्यनियतत्वादात्मनश्चेश्वरसरूपत्वात्सर्वथाअनाशा-
न्नशोकःकार्यइत्युपसंहर्तुमैश्वरंसामर्थ्यंपुनर्दर्शयति ॥ आश्चर्यवदिति ॥ दुर्ल
भत्वेनेत्यर्थः ॥ तद्ध्याश्चर्यंलोके ॥ दुर्लभोऽपीश्वरसरूपत्वात्सूक्ष्मत्वाच्चात्म
नस्तद्द्रष्टा ॥ [३०]सांख्यंज्ञानम् ॥ शुद्धात्मतत्त्वविज्ञानंसांख्यमित्यभिधीयतइतिभ
गवद्वचनाद्व्यासस्मृतौ ॥ योगउपायः ॥ दृष्टायोगाःप्रयुक्ताश्चपुंसांश्रेयःप्रसिद्ध
यइतिप्रयोगाद्भागवते ॥ नेतरौसांख्ययोगावुपादेयत्वेनविवक्षितौकुत्रचित्साम
स्त्येन ॥ कर्मयोगइत्यादिप्रयोगाच्च ॥ निंदितत्वाच्चेतरयोर्मोक्षधर्मेषुभिन्नमत

ख्यमुक्तापंचरात्रस्तुल्यावेदानांत्वेकार्थत्वान्नविरोधः ॥ पार्थक्यंतुसांख्याद्यपेक्ष
यायुक्तं।तत्रैवचित्रशिखंडिशास्त्रेपंचरात्रमूलेवेदैक्योक्तेश्च । एवमेवसर्वत्रसां
ख्ययोगशब्दउपादेयवाचकोवर्णनीयः॥ युक्तेश्च॥ ज्ञानंहिपूर्वंजैवमुक्तम् ॥ उ
पायश्चवक्ष्यते ॥ बुध्यतेऽनयेतिबुद्धिः ॥ सांख्यविषयोययावाचाबुध्यतेसावाग
भिहितेत्यर्थः॥ [41]योगइमांबुद्धिंशृणिवत्युक्तम्॥ बह्व्योहिबुद्धयोमतभेदात्तत्कथमे
कत्रनिष्ठांकरोमीत्यतआह॥ व्यवसायात्मिकाबुद्धिरिति॥सम्यग्युक्तिनिर्णीतानां
मतानामैक्यमेवेत्यर्थः॥[42]स्युरवैदिकानिमतान्यव्यवसायात्मिकानि॥नतुवैदिका
नीति॥ तेपिहिकेचित्कर्माणिस्वर्गादिफलान्येवाहुरित्यतआह॥ यामिमामिति ॥
यामाहुस्तयेत्यन्वयः॥ मोक्षफलमपेक्ष्यस्वर्गादिपुष्पयुक्तांवाचंप्रवदंति॥ वेदवाद
रताः। कर्मादिवाचकवेदरताः॥ वेदैर्यन्मुखतउच्यतेतत्रैवरताः॥ नान्यदस्तीतिवा
दिनः॥ परोक्षविषयावेदाः॥ परोक्षप्रियाइवहिदेवाः॥मांविधत्तेऽभिधत्तेमामित्या
दिभिःपारोक्ष्येणहिप्रायोभगवतंतंवदंति ॥ [43]भोगैश्वर्यगतिंतस्मात्संप्रतितस्मान्निफ
लाएववेदाइतिवदंतीत्यर्थः ॥ [44]तेषांसम्यग्युक्तिनिर्णयात्मिकाबुद्धिःसमाधौसमा
ध्यर्थेनविधीयते॥ सम्यङ्निर्णीतार्थानांहीश्वरेमनःसमाधानंसम्यग्भवति॥तद्धि

मोक्षसाधनम्॥ उक्तंचैतदन्यत्र ॥ नतस्यतत्त्वग्रहणायसाक्षाद्वरीयसीरपिवाचःस
मासन्॥ स्वप्नेनिरुक्त्यागृहमेधसौख्यंनयस्यहेयानुमितंस्वयंस्यादिति॥ ४५ तांयोगबु
द्धिमाह ॥ त्रैगुण्यविषयाइत्यादिनाइतरदपोह्य॥ वेदानांपरोक्षार्थत्वात्त्रिगुणसंबं
धिस्वर्गादिप्रतीतितोर्थइवभाति ॥ परोक्षवादीवेदोयमितिह्युक्तम् ॥ अतःप्राती
तिकेर्थेभ्रांतिंमाकुर्वित्यर्थः ॥ वादोविषयकृत्वंचमुखतोवचनंस्मृतमित्यभिधाना
त् ॥ नतुवेदपक्षोनिषिध्यते ॥ वेदेरामायणेचैवपुराणेभारतेतथा॥ आदावंतेचम
ध्येचविष्णुःसर्वत्रगीयते॥ सर्वेवेदायत्पदमामनंति ॥ वेदोखिलोधर्ममूलंस्मृति
शीलेचतद्विदाम्॥ आचारश्चैवसाधूनामात्मनोरुचिरेवच॥ वेदप्रणिहितोधर्मोह्य
धर्मस्तद्विपर्ययइतिवेदानांसर्वात्मनाविष्णुपरत्वोक्तेः ॥ तद्विहितस्यतद्विरुद्धस्यधर्मा
धर्मत्वोक्तेश्च ॥ ४६ तथापिकाम्यकर्मिणांफलंज्ञानिनांनभवतीतिसाम्यमेवेत्यतआ
ह॥ यावानर्थइति॥ यथायावानर्थःप्रयोजनंउदपानेकूपेभवतितावान्सर्वतःसंप्लु
तोदकेऽतर्भवत्येव॥ एवंसर्वेषुवेदेषुयत्फलंतद्विजानतोपिज्ञानिनोब्राह्मणस्यफलें
तर्भवति॥ ब्रह्माणतीतिब्राह्मणोऽअपरोक्षज्ञानी॥ सहिब्रह्मगच्छति ॥ विजानतइ
तिज्ञानफलत्वंतस्यदर्शयति ॥ ४७ कांमात्मनांनिंदाकृता ॥ कथमेषां॥ स्वर्गका

मोयजेतेत्यादौकामस्यापिविहितत्वादित्यतआह ॥ कर्मण्येवेति ॥ तइत्युलक्षणा
र्थं । तवज्ञानिनोपिनफलकामकर्तव्यता ॥ किम्वन्येषां ॥ नत्वस्तिकेषांचिन्मतेऽ
स्तीति ॥ सहिज्ञानी ॥ नरांशइंद्रश्च ॥ मोहादिस्त्वभिभवादेः ॥ यदितेषांशुद्धस
त्वानांनस्यादानंक्वान्येषां ॥ उपदेशादेश्चसिद्धंज्ञानंतेषां ॥ पार्थार्ष्टिषेणेत्यादिज्ञा
निगणनाच्च ॥ कामनिषेधएवात्र ॥ फलानित्वस्वातंत्र्येणभवंति ॥ नहिकर्म
फलानिकर्माभावेयत्नतोपिभवंति ॥ भवंतिचकाम्यकर्मिणोविपर्ययाप्रयत्नेऽप्य
विरोधे॥ अतःकर्माकरणएवप्रत्यवायः॥ नतुज्ञानादिनावाअकामनयाफलाप्रा
प्तौ ॥ अतःकर्मण्येवाधिकारः ॥ अतस्तदेवकार्यं ॥ नतुकामेनज्ञानादिनिषेधेन
वाफलप्राप्तिः ॥ कामवचनानांतुतात्पर्यंभगवतैवोक्तं ॥ रोचनार्थंफलश्रुतिः ॥
यथाभैषज्यरोचनमित्यादौभागवते ॥ अतएवकामीयजेतेत्यर्थः ॥ नतुकामीभू
त्वेत्यर्थः ॥ निष्कामंज्ञानपूर्वंचेतिवचनात् ॥ वक्ष्यमाणेभ्यश्च ॥ वसंतेवसंते
ज्योतिषायजेतेत्यादिभ्यश्च ॥ अतोमाकर्मफलहेतुर्भूः ॥ कर्मफलंतत्कृतोहेतुर्य
स्यसकर्मफलहेतुः ॥ समाभूः ॥ तर्हिनकरोमीत्यतआह ॥ मातइति ॥ कर्मा
करणेस्नेहोमास्त्वित्यर्थः॥ अन्यफलाभावेपिमत्प्रसादाख्यफलभावात्॥ इच्छाच

तस्ययुक्ता ॥ वृणीमहेतेपरितोषणायेत्यादिमहदाचारात् ॥ अनिंदनाद्विशेषतइ
तरनिंदनाच्च ॥ सामान्यंविशेषोबाधतइतिचप्रसिद्धम् ॥ सर्वानानयनैकंमैत्रमि
त्यादौ ॥ अतोनैकात्मतांमेस्पृहयंतिकेचित् ॥ भक्तिमन्विच्छंतःब्रह्मजिज्ञासा ॥
विज्ञायप्रज्ञाम्॥ द्रष्टव्यइत्यादिवचनेभ्यः॥ स्वार्थसेवकंप्रतिनतथास्नेहः ॥ किंददा
मीत्युक्तेसेवादियाचकंप्रतिबहुतरःस्नेहइतिलोकसिद्धन्यायाच्चभक्तिज्ञानादिप्रा-
र्थनाकार्येतिसिद्धम् ॥ पूर्वश्लोकोक्तंस्पष्टयति॥ योगस्थइतियोगस्थउपायस्थः ॥
संगंफलस्नेहंत्यक्त्वा॥ ततएवसिद्ध्यसिद्ध्योःसमोभूत्वा ॥ सएवचमयोक्तोयोगः ॥
इतश्चयोगाययुज्यस्वेत्याह॥ दूरेणेति॥ बुद्धियोगात् ॥ ज्ञानलक्षणादुपायात् ॥ दूरे
णातीव॥ अतोबुद्धौशरणंज्ञानेस्थितिम्॥ फलंकर्मकृतौहेतुर्येषांतेफलहेतवः ॥ ज्ञा
नफलमाह ॥ बुद्धियुक्तइति ॥ सुकृतमप्यप्रियंमानुष्यादिफलंजहाति ॥ नबृहत्फ
लमुपासनादिनिमित्तम् ॥ नहास्यकर्मक्षीयते ॥ अविदित्वास्मिन्लोकेजु
होतियजतेतपस्तप्यतेबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवतीत्यादिश्रुतिभ्यः ॥
अतःकर्मक्षयश्रुतिरज्ञानिविषयासर्वत्र ॥ उभयक्षयश्रुतिरप्यनिष्टविषया ॥
नहीष्टपुण्यक्षयेकिंचित्प्रयोजनम् ॥ नचेष्टनाशोज्ञानिनोयुक्तः ॥ इष्टा

श्चकेचिद्विषयाः ॥ सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठं
ति ॥ प्रजापतेःसभांवेश्मप्रपद्यते ॥ यशोहंभवानिब्राह्मणानाम् ॥ स्त्रीभिर्वायानै
र्वा ॥ अस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते ॥ कामान्नीकामरूप्यनुसंचर
न् ॥ सएकधाभवतीत्यादिश्रुतिभ्यः ॥ बहुत्वेप्यात्मसुखस्यपुनरिष्टत्वात्कर्मसु
खेनविरोधः ॥ अनुभवशक्तिश्चेश्वरप्रसादात् ॥ श्रुतेश्च ॥ नचशरीरपातात्पूर्व
मेवतत् ॥ सतत्रपर्यैति॥ एतमानंदमयमात्मानमुपसंक्रम्येत्याद्युत्तरत्रश्रवणात्॥
नचैकीभूतएवब्रह्मणासः ॥ मग्नस्यहिपरेऽज्ञानेकिंनदुःखतरंभवेदित्यादिनिंदना
न्मोक्षधर्मे ॥ परिहारेपृथग्भोगाभिधानाच्च ॥ शुकादीनांपृथग्दृष्टेश्च ॥ जगद्व्या
पारवर्जमित्यैश्वर्यमर्यादोक्तेश्च इदंज्ञानमपाश्रित्यममसाधर्म्यमागताइतिच ॥
उपाधिनाशेनाशाच्चप्रतिबिंबस्य ॥ नचैकीभूतस्यपृथग्ज्ञानेमानंपश्यामः ॥
आसंदुःखीनासमितिज्ञानविरोधाच्चेश्वरस्य ॥ अनेनरूपेणेतिच । भेदाभावा
त् ॥ नचप्रतिबिंबस्यबिंबैक्यंलोकेपश्यामः ॥ उपाधिनाशेमानंवा ॥ मग्नस्यहि
परेऽज्ञानइतिदुःखात्मत्वोक्तेश्च ॥ यावदात्मभावित्वादित्युपाधिनित्यताभिधाना
च्च ॥ अतोऽनन्यवचनंप्रतीयमानमप्यौपचारिकम् ॥ दृष्टाश्चतेभगवतोभिन्नानार

देन ॥ प्रतिशाखंचसएकधेत्यादिषुभेदेनप्रतीयंते ॥ विरोधेतुयुक्तिमतामेवबलव
त्वम् ॥ युक्तयश्चात्रोक्तामग्नस्यहीत्यादयः॥ अतोजलेजलैकीभाववदेकीभावः॥
उक्तंच ॥ यथोदकंशुद्धेशुद्धम् ॥ यथानद्यइत्यादौ ॥ तत्राप्यन्योन्यात्मकत्वेदृष्टासं
भवः ॥ अस्तिचेषत्समुद्रेपि ॥ द्वारि ॥ महत्वादन्यत्रादृष्टिः॥ ताएवापोदद्दौतस्य
सक्रूषिःशंसितव्रतइतिमहाकौर्मे॥ समर्थानांभेदज्ञानाच्च ॥ नैवतत्प्राप्नुवंत्येतेब्रह्मे
शानादयःसुराः ॥ यत्तेपदंहिकैवल्यमितिनिषेधाच्चनारदीये ॥ सविचारश्चनिर्ण
यःकृतोमोक्षधर्मे ॥ बलवांश्चसविचारोनिर्णयोवाक्यमात्रात् ॥ अतोयत्रनान्यत्प
श्यतीत्याद्यपितदधीनसत्तादिवाचि॥अन्यथाकथमैश्वर्यादिस्यात्॥नचतन्माया
मयमित्युक्तम् ॥ अन्यथाकथंतत्रैवसएकधेत्यादिब्रूयात् ॥ नचनहवैसशरीरस्ये
त्यादिविरोधः ॥ वैलक्षण्यात्तच्छरीराणाम् ॥ अभौतिकानिहितानि ॥ नित्योपा
धिनिर्मितानीश्वरशक्त्या ॥ तथाचोक्तम् ॥ शरीरंजायतेतेषांषोडश्याकलयैवही
तिनारायणरामकल्पे॥ वदंतिचलौकिकाद्वैलक्षण्येऽभावशब्दम् ॥ अप्रहर्षमनानं
दं॥सुखदुःखबाह्यइत्यादिषु ॥निरुक्त्यभावाच्च । नतानिशरीराणि॥तथाहिश्रुतिः॥
अशारीतीङ्तच्छरीरमभवदितिनहितानिशीर्णानिभवंति ॥ सर्गेपिनोपजायंते

प्रलयेनव्यथंतिचेत्यादिवचनात् ॥ साम्यात्प्रयोगः ॥ प्रयोगाच्च ॥ अनिंद्रियाअना
हाराअनिष्पंदासुगंधिनः ॥ देहेंद्रियासुहीनानांवैकुंठपुरवासिनामित्यादिदृष्टदेहे
ष्वेव ॥ नचैषान्यागौणीमुक्तिः ॥ बहुनात्रकिमुक्तेनयावच्छ्वेतंनगच्छति ॥ योगी
तावन्नमुक्तःस्यादेषशास्त्रस्यनिर्णयइत्यादित्यपुराणेतदन्यमुक्तिनिषेधात् ॥ ये
त्वत्रैवभवंतंप्रविशंतितेपिपश्चात्तत्रयांति ॥ योग्यत्वंचात्रविवक्षितं ॥ युधि
ष्ठिरप्रश्नइतरनिंदनाच्चसायुज्यंचग्रहवत् ॥ तदुक्तंच ॥ भुंजतेपुरुषंप्राप्ययथादे
वग्रहादयः ॥ तथामुक्तावुत्तमायांवाह्यान्भोगांस्तुभुंजतइतिनारायणाष्टाक्षरक
ल्पे ॥ अतोऽनिष्टस्यैववियोगः ॥ सोस्त्येवसर्वात्मना ॥ अदुःखं ॥ सर्वदुःखविव
र्जिताः ॥ अशोकमहिमम् ॥ यत्रगत्वानशोचतीत्यादिश्रुतिभ्यः ॥ विशेषवचना
भावाच्च ॥ येषांत्वीषद्दृश्यतेतेनसायुज्यंप्राप्ताः ॥ सामीप्यादेवतेषाम् ॥ अतःप्रार
ब्धकर्मशेषभावात्तद्भुक्त्वासायुज्यंगच्छंति ॥नचोक्तम्॥ संकर्षणादयःसर्वेस्वाधि
कारादनंतरम् ॥ प्रविशंतिपरंदेवंविष्णुंनास्यत्रसंशयइतिव्यासयोगे ॥ अतोऽनि
ष्टस्यसर्वात्मनावियोगः ॥ परब्रह्मत्वमिच्छामिपरब्रह्मन्जनार्दनेत्यादिनाब्रह्मादि
भिरपिप्रार्थितत्वात् ॥ नमोक्षसदृशंकिंचिदधिकंवासुखंक्वचित् ॥ ऋतेवैष्णवमानं

दंवाङ्मनोगोचरंमहदित्यादेश्च ॥ ब्रह्मादिपदादप्यधिकतमंसुखंमोक्षइतिसिद्ध
म् ॥ अतोयोगाययुज्यस्व ॥ ज्ञानोपायाय ॥ तद्धिकर्मकौशलम् ॥ तँदुपायमा
ह ॥ कर्मजमिति ॥ कर्मजंफलंत्यक्त्वा ॥ अकामनयेश्वरायसमर्प्य ॥ बुद्धियुक्ताः
सम्यग्ज्ञानिनोभूत्वापदंगच्छंति॥सयोगकर्मज्ञानसाधनम्॥ तन्मोक्षसाधनमिति
भावः॥ कियँत्पर्यंतमवश्यकर्तव्यानिमुमुक्षुणैवंकर्माणीत्यतआह॥ यदेति ॥ निर्वें
दंनितरांलाभंप्रयोगात्तस्माद्ब्रह्मणःपांडित्यंनिर्विद्येत्यादि ॥ नहितत्रवैराग्यमुप
पद्यते ॥ तथासतिपांडित्यादितिस्यात् ॥ नचज्ञानिनांभगवन्महिमादिश्रवणेवि
रक्तिर्भवति ॥ आत्मारामाहिमुनयोनिर्ग्रंथ्याअप्युरुक्रमे ॥ कुर्वंत्यहैतुकींभक्ति
मित्थंभूतगुणोहरिरितिवचनात् ॥ अनुष्ठानाच्चशुकादीनाम् ॥ नचतेषांफलंसुखं
नास्ति ॥ तस्यैवमहत्सुखत्वात्तेषां ॥ यानिर्वृत्तिस्तनुभृतांतवपादपद्मध्यानाद्भवज्ज
नकथाश्रवणेनवास्यात् ॥ साब्रह्मणिस्वमहिमन्यपिनाथमाभूत्किम्वंतकासिलु
लितात्पततांविमानादित्यादिवचनात् ॥ तेषामप्युपासनादिफलस्यसाधितत्वा
त् ॥ तारतम्याधिगतेश्च ॥ तथाहि ॥ यदितारतम्यंनस्यात् ॥ नात्यंतिकंविगणयं
त्यपितेप्रसादम् ॥ नैकात्मतांमेस्पृहयंतिकेचित् । एकत्वमप्युत॥दीयमानंनगृह्णंती

तिमुक्तिमप्यनिच्छतामपिमोक्षएवफलंतमिच्छतामपिसभवतिसुप्रतीकादीना-
मितिकथमनिच्छतांस्तुतिरुपपन्नास्यात्॥वचनाच्च॥ यथाभक्तिविशेषोत्रदृश्यतेपु
रुषोत्तमे ॥ तथामुक्तिविशेषोपिज्ञानिनांलिंगभेदने ॥ योगिनांभिन्नलिंगानामा
विर्भूतस्वरूपिणाम् ॥ प्राप्तानांपरमानंदंतारतम्यंसदैवहीति ॥ नत्वामतिशयिष्यं
तिमुक्तावपिकथंचन ॥ मद्भक्तियोगाद्दानाच्चसर्वानतिशयिष्यसीतिच ॥ साम्य
वचनंतुप्राचुर्यविषयंदुःखाभावविषयंच ॥ तथाचोक्तम्॥ दुःखाभावःपरानंदो
लिंगभेदःसमोमतः ॥ तथापिपरमानंदोज्ञानभेदात्तुभिद्यतइतिनारायणाष्टाक्ष
रकल्पे ॥ अतोनवैराग्यंश्रुतादावत्रविवक्षितम् ॥ नचसंकोचेमानं ॥ किंचित्
विद्यमानइतरत्रप्रयोगे ॥ महद्भिःश्रवणीयस्यश्रुतस्यचवेदादेःफलंप्राप्स्यसीत्य
र्थः॥ [53]तदेवस्पष्टयति॥श्रुतिविप्रतिपन्नेति॥पूर्वंश्रुतिभिर्वेदैर्विप्रतिपन्नाविरुद्धास
तीयदावेदार्थानुकूलेनतत्त्वनिश्चयेनविपरीतवाग्भिरपिनिश्चलाभवति ॥ ततश्च
समाधावचलाब्रह्मप्रत्यक्षदर्शनेनभेरीताडनादावपिपरमानंदमग्नत्वात्तदायोग
मवाप्स्यसि ॥ उपायसिद्धोभवसीत्यर्थः ॥ [54]स्थितप्रज्ञाज्ञानंयस्यसास्थितप्र
ज्ञः ॥ भाष्यतेऽनयेतिभाषा ॥ लक्षणमित्यर्थः ॥ उक्तलक्षणमनुवदतिलक्षणांत

रंपृच्छामीतिज्ञापयितुंसमाधिस्थस्येति ॥ कंब्रह्माणमीशंरुद्रंवर्तयतीतिकेशवः॥
तथाहिनिरुक्तिःकृताहरिवंशेषुरुद्रेणकैलासयात्रायाम्॥हिरण्यगर्भःकःप्रोक्तईशः
शंकरएवच ॥ सृष्ट्यादिनावर्तयतितौयतःकेशवोभवानितिवचनांतराच्च ॥
किमासीत ॥ किंप्रत्यासीत ॥ नचार्जुनोनजानातितल्लक्षणादिकम्॥जानंतिपू
र्वराजानोदेवर्षयस्तथैवच॥तथापिधर्मान्पृच्छंतिवार्तायैगुह्यवित्तये॥नतेगुह्याः
प्रतीयंतेपुराणेष्वल्पबुद्धिनामितिवचनात् ॥ गमनादिप्रवृत्तिर्नात्यभिसंधिपूर्वि
का॥मतादिप्रवृत्तिवदितियानिशेत्यादिनादर्शयिष्यन्लक्षणंप्रथमतआह॥एवं
परमानंदतृप्तःकिमर्थमेवंप्रवृत्तिंकरोतीतिप्रश्नाभिप्रायः॥प्रारब्धकर्मणेषत्तिरोहि
तब्रह्मणोवासनयाप्रायोल्पाभिसंधिप्रवृत्तिःसंभवतीत्याशवान्परिहरति ॥ प्रायः
सर्वान्कामान्प्रजहाति॥शुकादीनामपीषद्दर्शनात्॥स्वल्पादभक्तिमिच्छंतिज्ञानि
नस्तत्त्वदर्शिनइत्युक्तेस्तामिच्छंति॥ यदाविद्रादीनामाग्रहोदृश्यतेतदाभिभूतंतेषां
ज्ञानम्॥तच्चोक्तम्॥अधिकारिकपुंसांतुबृहत्कर्मत्वकारणात्॥उद्भवाभिभवौज्ञा
नेततोऽन्येभ्योविलक्षणाइति ॥अतएववैलक्षण्यादनधिकारिणामाग्रहादितिचे
दस्तिनतेज्ञानिनइत्यवगंतव्यम्॥नचात्रसमाधिंकुर्वतोलक्षणमुच्यते॥यःसर्वत्रा

नभिस्नेहस्तत्तत्प्राप्यशुभाशुभमितिस्नेहनिषेधात् ॥ नहिसमाधिंकुर्वतस्तस्यशुभा
शुभप्राप्तिरस्ति॥असंप्रज्ञातसमाधेः॥ संप्रज्ञातेत्वविरोधः॥तथापिनतत्रैवेतिनिय
मः ॥ कामादयोनजायंतेह्यपिविक्षिप्तचेतसाम् ॥ ज्ञानिनांज्ञाननिर्धूतमलानांदे
वसंश्रयादितिस्मृतेः ॥ मनोगताहिकामाः॥ अतस्तत्रैवतद्विरुद्धज्ञानोत्पत्तौयुक्तंहा
नंतेषामितिदर्शयति॥ मनोगतानिति॥ विरोधश्चोच्यतेरसोप्यस्यपरंदृष्ट्वानिवर्तत
इति ॥ नचैतददृष्ट्यापलपनीयम् ॥ पुरुषवैशेष्यात् ॥ आत्मनापरमात्मना ॥ परमा
त्मन्येवस्थितःसन् ॥ आत्माख्येतस्मिन्स्थितस्यतत्प्रसादादेवतुष्टिर्भवति॥विषयां
स्तुपरित्यज्यरामेस्थितिमतस्ततः ॥ दैवाद्भवतिवैतुष्टिर्नान्यथातुकथंचनेत्युक्तंहि
नारायणरामकल्पे ॥ अतोनात्माजीवः ॥ [५६]तंदेवस्पष्टयत्युत्तरैस्त्रिभिःश्लोकैः ॥ ए
तान्येवज्ञानोपायानि॥तच्चोक्तं॥तद्वैजिज्ञासुभिःसाध्यंज्ञानिनांयत्तुलक्षणमिति ॥
शोभनाध्यासोरागः ॥ रसोरागस्तथारक्तिःशोभनाध्यासउच्यतइत्यभिधानम् ॥
[५७]सर्वत्रानभिस्नेहत्वाच्छुभाशुभंप्राप्यनाभिनंदतिनद्वेष्टि ॥ [५८]नचैतल्लक्षणंज्ञानयत्न
तोऽपिभवतीत्याहोत्तरैःश्लोकैः ॥ निराहारत्वेनविषयभोगसामर्थ्याभावएवभ
वति॥इतरविषयाकांक्षाभावोवा॥रसाकांक्षादिर्ननिवर्तते॥ सत्वपरोक्षज्ञानादेव

निवर्त्ततइत्याह ॥ विषयाइति ॥ इंद्रियाणिजयंत्याशुनिराहारमनीषिणः ॥
वर्जयित्वातुरसनामसौरस्येहिवर्धतइतिवचनाद्भागवते ॥ रसशब्दस्यरागवा-
चित्वाच्च ॥ [६०] अपरोक्षज्ञानरहितज्ञानिनोपिसाधारणयत्नवतोपिमनोहरंतींद्रिया
णि॥पुरुषस्यशरीराभिमानिनः ॥ कोदोषस्ततः ॥ प्रमाथीनिप्रमथनशीलानिपुरु
षस्य ॥ [६१] तर्ह्यशक्यानेवेत्यतआह ॥ तानीति ॥ बहुयत्नवतःशक्यान्यतोयत्नंकु
र्यादित्याशयः ॥ युक्तः मयिमनोयोगयुक्तः॥ अहमेवपरःसर्वस्मादुत्कृष्टोयस्यस
मत्परः ॥ फलमाह ॥ वशेहीति ॥ [६२] रागादिदोषकारणमाहपरिहारायश्लोकद्वये
न ॥ संमोहोऽकार्येच्छा ॥ तथाहि॥ मोहशब्दार्थउक्तउपगीतासु॥ मोहसंज्ञितं ॥
अधर्मलक्षणंचैवनियतंपापकर्मस्विति ॥ तथाचान्यत्र ॥ संमोहोऽधर्मकामिते
ति ॥ स्मृतिविभ्रमः ॥ प्रतिषेधादिस्मृतिनाशः ॥ बुद्धिनाशः ॥ सर्वात्मनादोष
बुद्धिनाशः ॥ विनश्यति ॥ नरकाद्यनर्थंप्राप्नोति ॥ तथाह्युक्तं ॥ अधर्मका
मिनःशास्त्रेविस्मृतिर्जायतेयदा ॥ दोषादृष्टेस्तत्कृतेश्चनरकंप्रतिपद्यतइति ॥ [६४] इंद्रि
यजयफलमाहोत्तराभ्यांश्लोकाभ्यां ॥ विषयाननुभवन्नपि ॥ विधेयआत्मा
मनोयस्यसजितात्मेत्यर्थः ॥ प्रसादंमनःप्रसादं ॥ [६५] कथंप्रसादमात्रेणसर्वदुः

खहानिः ॥ प्रसन्नचेतसोहिबुद्धिःपर्यवतिष्ठति ॥ ब्रह्मापरोक्ष्येणसम्यक्स्थितिंक
रोति ॥ प्रसादोनामस्वतोपिप्रायोविषयैगतिः ॥ प्रसादाभावेदोषमाहोत्तरा
भ्यांश्लोकाभ्यां ॥ नहिप्रसादाभावेयुक्तश्चित्तनिरोधः ॥ अयुक्तस्यचबुद्धिःसम्य
ग्ज्ञानंनास्ति ॥ तदेवोपपादयति ॥ नचायुक्तस्येपि ॥ शांतिर्मुक्तिः ॥ शांतिर्मो
क्षोऽथनिर्वाणमित्यभिधानात् ॥ [६६]कथमयुक्तस्यभावनानभवति ॥ आह ॥
इंद्रियाणामिति ॥ अनुविधीयतेक्रियते ॥ [६७]नन्वीश्वरेंद्रियाणामनुबुद्धिर्ज्ञानमि
त्यादिवक्ष्यमाणत्वात् ॥ प्रज्ञांप्रज्ञानं ॥ उत्पत्स्यदपिनिवारयतीत्यर्थः ॥ उत्प
न्नस्याप्यभिभवोभवति ॥ [६८]तस्मात्सर्वात्मनानिगृहीतेंद्रियएवज्ञानीतिनिगमय
ति ॥ तस्मादिति ॥ [६९]उक्तंलक्षणंपिंडीकृत्याह ॥ यानिशेति ॥ यासर्वभूतानां
निशापरमेश्वरस्वरूपलक्षणा ॥ यस्यांसुप्तानीवनकिंचिज्जानंति ॥ तस्यामिंद्रि
यसंयमयुक्तोज्ञानीजागर्ति ॥ सम्यगापरोक्ष्येणपश्यतिपरमात्मानमित्यर्थः ॥
यस्यांविषयलक्षणायांभूतानिजाग्रतितस्यांनिशायामिवसुप्तःप्रायोनजानाति॥
मत्तादिवद्गमनादिप्रवृत्तिः ॥ तदुक्तंदेहेतुतन्नचरमं ॥ देहोपिदैववशगइति
श्लोकाभ्यां ॥ मननयुक्तोमुनिः ॥ पश्यतइत्यस्यसाधनमाह ॥ [७०]तेनविषया

नुभवप्रकारमाह ॥ आपूर्यमाणमिति ॥ योविषयैरापूर्यमाणोप्यचलप्रतिष्ठोभव
तिनोत्सेकंप्राप्नोति॥नचप्रयत्नंकरोति ॥ नचाभावेशुष्यति॥नहिसमुद्रःसरित्प्रवेशा
प्रवेशनिमित्तौवृद्धिशोषौबहुतरौप्राप्नोति ॥ प्रयत्नंवाकरोति ॥ समुक्तिमाप्नोतीत्य
र्थः॥एतदेवप्रपंचयति ७१ ॥ विहायेति॥कामान्विषयान्निस्पृहतयाविहाय ॥ यश्चर
तिभक्षयति॥भक्षयामीत्याद्यहंकारममकारवर्जितश्चसहिपुमान् ॥ सएवचमुक्ति
मधिगच्छतीत्यर्थः॥उपसंहरति ॥ एषेति ॥ ब्राह्मीस्थितिःब्रह्मविषयास्थितिर्लक्षण
म्॥अंतकालेप्यस्यांस्थित्वैवब्रह्मगच्छति॥अन्यथाजन्मांतरंप्राप्नोति ॥ यंयंवापी
तिवक्ष्यमाणत्वात्॥ज्ञानिनामपिसतिप्रारब्धकर्मणिशरीरांतरंयुक्तम् ॥ भोगेनत्वि
तरइतिह्युक्तं॥संतिहिबहुशरीरफलानिकर्माणिकानिचित् ॥ सप्तजन्मनिविप्रःस्या
दित्यादेः॥दृष्टेश्चज्ञानिनामपिबहुशरीरप्राप्तेः॥तथाह्युक्तम् । स्थितप्रज्ञोपियस्तूर्ध्वः
प्राप्यरुद्रपदंगतः॥सांकर्षणंततोमुक्तिमगाद्विष्णुप्रसादतइतिगारुडे॥महादेवपरेज
न्मंस्तवमुक्तिर्निरूप्यतइतिचनारदीये॥निश्चितफलंचज्ञानं ॥ तस्यतावदेवचिरं॥य
दुचनार्चिषमेवाभिसंभवतीत्यादिश्रुतिभ्यः॥नचकायव्यूहापेक्षा॥तद्यथैषीकातूल
म्॥तद्यथापुष्करपलाशे ॥ ज्ञानाग्निःसर्वकर्माणीत्यादिवचनेभ्यः ॥ प्रारब्धेत्वविरो

धः ॥ प्रमाणाभावाच्च ॥ नचतच्छास्त्रंप्रमाणं ॥ अक्षपादकणादानांसांख्ययोग
जटाभृतां॥ मतमालंब्ययेवेदंदूषयंत्यल्पचेतसइतिनिंदनात् ॥ यत्रतुस्तुतिस्तत्रशि
वभक्तानांस्तुतिपरत्वमेवनसत्यत्वं ॥ नहितेषामपीतरग्रंथविरुद्धार्थेप्रामाण्यं ॥
तथाह्युक्तं ॥ एषमोहंसृजाम्याशुयोजनान्मोहयिष्यति ॥ त्वंचरुद्रमहाबाहोमोह
शास्त्राणिकारय ॥ अतथ्यानिवितथ्यानिदर्शयस्वमहाभुज ॥ प्रकाशंकुरुचात्मान
मप्रकाशंचमांकुर्वितिवाराहे ॥ कुत्सितानिचमिश्राणिरुद्रोविष्णुप्रचोदितः॥चका
रशास्त्राणिविभुर्ऋषयस्तत्प्रचोदिताः॥दधीच्याद्याःपुराणानितच्छास्त्रसमयेनतु ॥
चक्रुर्वैदैश्वब्राह्माणिवैष्णवान्विष्णुवेदतः॥ पंचरात्रंभारतंचमूलरामायणंतथा ॥
तथापुराणंभागवतंविष्णुवेदइतीरितः ॥ अतःशैवपुराणानियोज्यान्यन्याविरोध
तइतिनारदीये॥अतोज्ञानिनांभवत्येवमुक्तिः॥भीष्मादीनांतुतत्क्षणेयुक्त्यभावः॥
स्मरंस्त्यजतीतिवर्तमानापदेशोह्निकृतः ॥ तच्चोक्तं ॥ ज्ञानिनांकर्मयुक्तानांकाय
त्यागक्षणोयदा॥ विष्णुमायातदातेषांमनोबाध्यंकरोतिहीतिगारुडे ॥ नचान्येषां
तदास्मृतिर्भवति॥बहुजन्मविपाकेनभक्तिज्ञानेनयेहरिंम् ॥भजंतितत्स्मृतिंह्यंतेदे
वोयातिनचान्यथेत्युक्तेर्ब्रह्मवैवर्ते॥निर्वाणमशरीरं ॥ कायोवाणंशरीरंचेत्यभिधा

नात्॥एतद्धाणमवष्टभ्येतिप्रयोगाच्च ॥ निर्वाणशब्दप्रतिपादनमानिंद्रियाइत्यादिव
त्॥ कथमन्यथासर्वपुराणादिप्रसिद्धाकृतिर्भगवतउपपद्यते॥ नचान्यद्भगवतउत्त
मंब्रह्म ॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यतइतिभागवते ॥ भगवंतंपरंब्रह्म ॥
परंब्रह्मजनार्दनः ॥ परमंयोमहद्ब्रह्म ॥ यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः ॥
योसावतींद्रियग्राह्यः ॥ नास्तिनारायणसमंनभूतंनभविष्यति ॥ नत्वत्समोऽस्त्य
प्यधिकःकुतोन्यइत्यादिभ्यः ॥ नचैतस्यब्रह्मणोऽशरीरत्वादेतत्कल्प्यम्॥तस्यापि
शरीरश्रवणात्॥ आनंदरूपममृतं ॥ सुवर्णज्योतिः ॥ दहरोस्मिन्नंतराकाशइत्या
दिषु ॥ यदिरूपंनस्यात्आनंदमित्येवस्यात् ॥ नत्वानंदरूपमिति ॥ कथंचसुवर्ण
रूपत्वंस्यादरूपस्य ॥ कथंचदहरत्वं ॥ दहरस्थश्चकेचित्स्वदेहेत्यादौरूपवानुच्य
ते॥सहस्रशीर्षापुरुषः॥ रुक्मवर्णंकर्तारं॥ आदित्यवर्णंतमसःपरस्तात्॥ सर्वतःपा
णिपादंतत् ॥ विश्वतश्चक्षुरित्यादिवचनात् ॥ विश्वरूपाध्यायादेश्च ॥ रूपवान
वसीयते॥ अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानंदयशःश्रीशक्त्यादिमांश्चभगवान्॥
परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच ॥ यःसर्वज्ञः ॥ आनं
दंब्रह्मणः ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति ॥ अनादिमध्यां

तमनंतवीर्यंसहस्रलक्षामितकांतिकांतम् ॥ मय्यनंतगुणेनंतेगुणतोनंतविग्रहे ॥
विज्ञानशक्तिरहमासमनंतशक्तेः ॥ तुर्यंतत्सर्वदृक्सदा ॥ आत्मानमन्यंचसवेद
विद्वान् ॥ अन्यतमोमुकुंदात्कोनामलोकेभगवत्पदार्थः ॥ ऐश्वर्यस्यसमग्रस्य ॥
अतीवपरिपूर्णंतेसुखंज्ञानंचसौभगं ॥ यच्चात्ययुक्तंस्मर्तुंवाशक्तःकर्तुमतःपरमि
त्यादिभ्यः ॥ तानिसर्वाण्यन्योन्यानन्यस्वरूपाणि ॥ विज्ञानमानंदंब्रह्म ॥ आनं
दोब्रह्मेतिव्यजानात् ॥ सत्यंज्ञानमनंतंब्रह्म॥ यस्यज्ञानमयंतपः ॥ समाभगप्रवि
शस्वाहा ॥ नतस्यप्राकृतामूर्तिर्मांसमेदोस्थिसंभवा ॥ नयोगित्वादीश्वरत्वा
त्सत्यरूपाच्च्युतोविभुः ॥ सदेहःसुखगंधश्चज्ञानभाःसत्पराक्रमः ॥ ज्ञानज्ञानः
सुखसुखःसविष्णुःपरमोक्षरइतिपैङ्गिखिलेषु ॥ देहोयंमेसदानंदोनायंप्रकृतिनि
र्मितः ॥ परिपूर्णश्चसर्वत्रतेननारायणोस्म्यहमित्यादिब्रह्मवैवर्ते ॥ तदेवलीलया
चासौपरिच्छिन्नादिरूपेणदर्शयतिमायया ॥ नचगर्भेवसद्देव्यानचापिवसुदेव
तः ॥ नचापिराघवाज्जातोनवापिजमदग्नितः ॥ नित्यानंदोद्वयोप्येवंक्रीडतेऽमोघ
दर्शनइतिपाद्मे ॥ नवैसआत्मात्मवतामधीश्वरोभुङ्क्तेहिदुःखंभगवान्वासुदेवः ॥
सर्गादेरीशिताजःपरमसुखनिधिर्बोधरूपोप्यबोधंलोकानांदर्शयन्योमुनिसुतह

तात्मप्रियार्थंजगाम ॥ सब्रह्मवंद्यचरणोजनमोहनायस्त्रीसंगिनामितिरतिंप्र
थयंश्चचार ॥ पूर्तैरचिंत्यवीर्यौयोयश्चदाशरथिःस्वयम् ॥ रुद्रवाक्यमृतंकर्तुंअ
जितोजितवत्स्थितः ॥ योजितोविजितोभक्त्यागांगेयंनजघानह ॥ नचांबां
ग्राहयामासकरुणःकोपरस्ततइत्यादिभ्यश्चस्कांदे॥नतत्रसंसारधर्मानिरूप्याः ॥
यत्रचपरावरभेदोवगम्यतेतत्राज्ञबुद्धिमपेक्ष्यावरत्वंविश्वरूपमपेक्ष्यान्यत्र ॥ त
च्चोक्तं ॥ परिपूर्णानिरूपाणिसमान्यखिलरूपतः ॥ तथाप्यपेक्ष्यमंदानांदृष्टिंत्वा
मृषयोपिहि॥ परावरंवदंत्येवंत्वभक्तानांविमोहनमितिगारुडे ॥ नचात्रकिंचिदुप
चारादिवाच्यं ॥ अचिंत्यशक्तेः ॥ पदार्थवैचित्र्याच्चेत्युक्तं ॥ कृष्णरामादिरूपा
णिपरिपूर्णानिसर्वदा ॥ नचाणुमात्रंभिन्नानितथाप्यस्मान्विमोहसीत्यादेश्चना
रदीये ॥ तस्मात्सर्वदासर्वरूपेष्वपरिगणितानंतगुणगणंनित्यनिरस्ताशेषदोषंच
नारायणाख्यंपरंब्रह्मापरोक्षज्ञान्यृच्छतीतिसिद्धम् ॥ ७ ॥ ॥ ७ ॥ इतिश्रीमदा
नंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीताभाष्येद्वितीयोध्यायः ॥ ॥ श्री
मद्धनुमद्भीममध्वांतर्गतश्रीवेदव्यासार्पणमस्तु ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
श्रीगुरुभ्योनमः ॥ ॥ आत्मस्वरूपंज्ञानसाधनंचोक्तंपूर्वत्र॥ ज्ञानसाधनत्वेना

कर्मविनिंद्यकर्मविधीयतउत्तराध्याये ॥ कर्मणोज्ञानमत्युत्तममित्यभिहितंभ
गवतादूरेणह्यवरंकर्मेत्यादौ ॥ एवंचेत्किमितिकर्मणिघोरेयुद्धाख्येनियोजय
सि ॥ निवृत्तधर्मान्विनेत्याह ॥ ज्यायसीति ॥ कर्मणःसकाशाद्बुद्धिर्ज्यायसी
चेत्तवमतातर्हि ॥ ज्यायस्त्वेपिबुद्धेरधिकारिकत्वात्त्वकर्मण्यप्यधिकृतइतितत्र
नियोक्ष्यामीत्याशयवान्भगवानाह ॥ लोकइति ॥ द्विविधाअपिजनाःसंति ॥
गृहस्थादिकर्मत्यागेनज्ञाननिष्ठाःसनकादिवत् ॥ तत्स्थाएवज्ञाननिष्ठाश्चजनका
दिवत् ॥ मद्धर्मस्थाएवेत्यर्थः ॥ सांख्यानांज्ञानिनांसनकादीनां ॥ योगिना
मुपायिनांजनकादीनां ॥ ज्ञाननिष्ठाअप्याधिकारिकत्वादीश्वरेच्छयालोकसंग्र
हार्थत्वाच्चयेकर्मयोग्याभवंतितेपियोगिनः॥निष्ठास्थितिः॥ त्वंतुजनकादिवत्क
र्मैवज्ञानयोग्यः ॥ नतुसनकादिवत्त्यागेनेत्यर्थः ॥ संतिहीश्वरेच्छयैवकर्मकृतः
प्रियव्रतादयोपिज्ञानिनएव ॥ तथाह्युक्तं॥ ईश्वरेच्छयाविनिवेशितकर्माधिका
रइति ॥ इतश्चनियोक्ष्यामीत्याह ॥ नकर्मणामिति ॥ कर्मणांयुद्धादीनांअनारं
भेण ॥ नैष्कर्म्यंनिष्कर्मतांकाम्यकर्मपरित्यागेनप्राप्यतइतिमोक्षंनाश्नुते ॥ ज्ञा
नमेवतत्साधनंनतुकर्माकरणमित्यर्थः ॥ कुतः ॥ पुरुषत्वात् ॥ सर्वदास्थूलेनसू

क्ष्मेणवापूरेणयुक्तोनुजीवः ॥ यदिकर्माकरणेनमुक्तिःस्यात्स्थावराणां ॥ नचा
करणेकर्माभावान्मुक्तिर्भवति ॥ प्रतिजन्मकृतानामनंतकर्मणांभावात् ॥ नच
सर्वाणिकर्माणिभुक्तानि ॥ एकस्मिन्शरीरेबहूनिहिकर्माणिकरोति ॥ तानिचै
कैकानिबहुजन्मफलानिकानिचित् ॥ तत्रचैकेकानिकर्माणिभुंजन्प्राप्नोत्येवशे
षेणमानुष्यं ॥ ततश्चबहुशरीरफलानिकर्माणीत्यसमाप्तिः ॥ तच्चोक्तं। जीवंश्चतु
र्दशाद्धूर्ध्वंपुरुषोनियमेनतु ॥ स्त्रीवाप्यनूनदशकंदेहंमानुषमार्जते ॥ चतुर्दशो
र्ध्वंजीविनीसंसारश्चादिवर्जितः ॥ अतोऽज्ञात्वापरंदेवंमोक्षशाकामहामुनेइति
ब्राह्मे ॥ यदिचसादिःस्यात्संसारःपूर्वकर्माभावादतत्प्राप्तिः ॥ अबंधत्वंत्वका
मेनैवभवति ॥ तच्चवक्ष्यते ॥ अनिष्टमिष्टमिति ॥ ननुनिष्कामकर्मणःफला
भावान्मोक्षःस्मृतः ॥ निष्कामंज्ञानपूर्वंतुनिवृत्तमिहचोच्यते ॥ निवृत्तंसेवमान
स्तुब्रह्माभ्येतिसनातननितिमानवे ॥ अतस्तत्साम्यादकरणेपिभवतीत्यतआह ॥
नचेति ॥ संन्यासः काम्यकर्मपरित्यागः ॥ काम्यानांकर्मणामितिवक्ष्यमाण
त्वात् ॥ अकामकर्मणामंतःकरणशुद्ध्याज्ञानान्मोक्षोभवति ॥ तच्चोक्तं ॥ कर्म
भिःशुद्धसत्वस्यवैराग्यंजायतेहृदीतिभागवते ॥ विरक्तानामेवचज्ञानमुक्तं ॥ न

तस्यतत्त्वग्रहणायसाक्षाद्वरीयसीरपिवाचःसमासन् ॥ स्वप्नेनिरुक्त्यागृहमेधसौ
ख्यंनयस्यहेयानुमितंस्वयंस्यादिति ॥ नतुफलाभावात् ॥ कर्माभावात् ॥ अतो
नकर्मत्यागएवमोक्षसाधनं ॥ यत्याश्रमस्तुप्रायत्यार्थोभगवत्तोषणार्थश्च ॥ अप्र
यतत्वमेवहिप्रायोगृहस्थादीनां ॥ इतरकर्मोद्योगात् ॥ अप्रयतानांचनज्ञानं ॥
तथाहिश्रुतिः ॥ नाशांतोनासमाहितइति ॥ महांश्चयत्याश्रमेभगवतस्तो
षः ॥ तथाह्याह ॥ यत्याश्रमंतुरीयंतुदीक्षांममसुतोषणीमितिचनारायणाष्टा
क्षरकल्पे ॥ आधिकारिकास्तुतस्थाएवप्रायत्येसमर्थाः ॥ सएवचमहा
न्भगवतस्तोषः ॥ तच्चोक्तं देवादीनामादिराज्ञांमहोद्योगेपिनोमनः ॥ विष्णो
श्चलतितद्योगोत्यतीवहरितोषणमितिपाद्मे ॥ नैतुकर्माणिसर्वात्मनात्यक्तुंश
क्यानीत्याह ॥ नहीति ॥ तथापिशक्तितस्त्यागःकार्यइत्याह ॥ कर्मेन्द्रियाणीति ॥
मनएवप्रयोजकमितिदर्शयितुमन्वयव्यतिरेकावाह ॥ मनसास्मरन्मनसानि
यम्येति कर्मयोगंस्ववर्णाश्रमोचितं ॥ नतुगृहस्थकर्मैवेतिनियमः ॥ संन्यासादि
विधानात् ॥ सामान्यवचनाच्च ॥ अतोनियतंस्ववर्णाश्रमोचितंकर्मकुरु ॥
कर्मणाबध्यतेजंतुरितिकर्मबंधकंस्मृतमित्यतआह ॥ यज्ञार्थादिति ॥ कर्मबंध

नंयस्यलोकस्यसकर्मबंधनः ॥ यज्ञोविष्णुः ॥ यज्ञार्थसंगरहितंकर्मनबंधकमि
त्यर्थः ॥ मुक्तसंगइतिविशेषणात्कामान्यःकामयतइतिश्रुतेश्च ॥ अनिष्टमिष्टमि
तिवक्ष्यमाणत्वाच्चएतान्यपितुकर्माणीतिच ॥ तस्मान्नेष्टियाजुकःस्यादितिचवि
शेषवचनत्वेसमेपिविशेषणंपरिशिष्यते ॥ अत्रार्थवादमाह। सहयज्ञाइति ॥ हे १४
त्वंतरमाह॥अन्नादिति॥ यज्ञःपर्जन्यान्नत्वात्तत्कारणमुच्यते॥पूर्वंयज्ञइतिविवक्षा
यांचक्रप्रवेशोनसंभवतितद्व्यापाद्यंकर्मविधयेत नतुसाम्यमात्रेणेदानींकार्यं ॥
मेघचक्राभिमानीपर्जन्यः ॥ सचयज्ञाद्भवति ॥ अग्नौप्रास्ताहुतिःसम्यगादि
त्यमुपतिष्ठति ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिस्मृतेश्च ॥ उभयव
चनादादित्यात्समुद्राच्चाविरोधः ॥ अतश्चयज्ञात्पर्जन्योद्भवःसंभवति ॥ यज्ञो
देवतामुद्दिश्यद्रव्यपरित्यागःकर्मेतरक्रिया ॥ १५ कर्मब्रह्मणोजायते ॥ एषह्येवसा
धुकर्मकारयति ॥ बुद्धिर्ज्ञानमित्यादिभ्यः॥ नचमुख्येसंभाव्यमानेपारंपर्येणौपचा
रिकंकल्प्यं ॥ नचजडानांस्वतःप्रवृत्तिःसंभवति ॥ एतस्यैवाक्षरस्येतिसर्वनिय
मनश्रुतेश्च ॥ द्रव्यंकर्मचकालश्चेत्यादेश्च ॥ अचिंत्यशक्तिश्चोक्ता ॥ जीवस्य
चप्रतिबिंबस्यबिंबपूर्वैवचेष्टा ॥ नकर्तृत्वमित्यादिनिषेधाच्च ॥ अक्षराणिप्र

सिद्धानितेभ्योऽभिव्यज्यतेपरंब्रह्म ॥ अन्यथाअनादिनिधनमचिंत्यंपरिपूर्णम
पिब्रह्मकोजानाति ॥ नचर्हांदिंविनायोगांगीकारोयुक्तः ॥ परामर्शाच्च ॥ तस्मा
त्सर्वगतंब्रह्मेति ॥ नह्येकशब्देनद्विरुक्तेनभेदश्रुतिंविनावस्तुद्वयंकुत्रचिदुच्यते ॥
तानिचाक्षराणिनित्यानि॥ वाचाविरूपनित्यया। वृष्णेचोदस्वसुष्टुतिं॥ अनादि
निधनानित्यावागुत्सृष्टास्वयंभुवा॥अतएवचनित्यत्वमित्यादिश्रुतिस्मृतिभगवद्व
चनेभ्यः ॥ दोषश्चोक्तःसकर्तृत्वे ॥ नचाबुद्धिपूर्वमुत्पन्नानि ॥ तत्प्रमाणाभा
वात् ॥ निश्वसितशब्दःक्लेशाभिप्रायोनाबुद्धिपूर्वाभिप्रायः ॥ सोकामयतेत्या
देश्च ॥ इष्टंहुतमित्यादिरूपप्रपंचेनसहाभिधानाच्च ॥ महातात्पर्यविरोधाच्च ॥
तच्चोक्तंपुरस्तात् ॥ नह्यस्वातंत्र्येणचोत्पत्तिकर्तुःप्राधान्यं ॥ अस्वातंत्र्यंचतदमति
पूर्वकत्वेभवति ॥ यथारोगादीनांपुरुषस्यतज्जत्वेपि ॥ उत्पत्तिवचनान्यभिव्यक्त्य
र्थानि ॥ अभिमानिदेवताविषयाणिच ॥ नित्येत्युक्त्वोत्सृष्टेतिवचनात् ॥ अभि
व्यंजकेकर्तृवचनंचास्ति ॥ कृत्स्नंशतपथंचक्रेइति ॥ कथमादित्यस्थादेवास्तेनै
वक्रियंते ॥ वचनमात्राच्चनिर्णयात्मकशारीरकोक्तंबलवत् ॥ शास्त्रंयोनिर्यस्ये
तितुशास्त्रयोनित्वं॥ जन्माद्यस्येत्युक्तेप्रमाणंहितत्रापेक्षितं ॥ नतुतस्यजातत्वं

वेदकारणत्वंवा ॥ नहिवेदकारणत्वंजगत्कारणत्वेहेतुः ॥ नहिविचित्रजगत्सृष्टे
र्वेदसृष्टिःशक्यासृज्यत्वे ॥ नचसर्वज्ञत्वेयदिवेदस्रष्टासर्वज्ञःकिमितिनजगत्स्र
ष्टासर्वज्ञः ॥ तस्माद्वेदप्रमाणकत्वमेवात्रविवक्षितं ॥ अतोनित्यान्यक्षराणि ॥
यतएवंपरंपरयायज्ञाभिव्यंग्यंब्रह्मतस्मात्तन्नित्यंयज्ञेप्रतिष्ठितं ॥ १६ तानिचाक्षराणि
भूताभिव्यंग्यानीतिचक्रं ॥ तदेतज्जगच्चक्रंयोनानुवर्तयति ॥ सतद्विनाशकत्वा
दघायुः ॥ पापनिमित्तमेवायुर्यस्यसोघायुः ॥ १७ तर्ह्यंतीव्रमनःसमाधानमपिन
कार्यमित्यतआह ॥ यस्त्विति॥रमणंपरदर्शनादिनिमित्तंसुखं॥ तृप्तिरन्यत्रालंबु
द्धिः ॥ संतोषस्तज्जनकंसुखं ॥ संतोषस्तृप्तिकारणमित्यभिधानात् ॥ परमा
त्मदर्शनादिनिमित्तंसुखंप्राप्तः ॥ अन्यत्रसर्वात्मनालंबुद्धिः ॥ महच्चतत्सुखं ॥
तेनैवान्यत्रालंबुद्धिरितिदर्शयति ॥ आत्मन्येवचसंतुष्टइति ॥ तत्स्थएवसन्संतुष्टइ
त्यर्थः। नान्यत्किमपिसंतोषकारणमित्यवधारणम्॥आत्मनातृप्तः नत्वात्मन्यलं
बुद्धिर्युक्ता ॥ तद्वाचित्वंच वयंतुनवितृप्यामउत्तमश्लोकविक्रमैरितिप्रयोगात्सि
द्धम् ॥ अध्याहारस्तुअगतिकागतिः ॥ आत्मरतिरेवेत्यवधारणादसंप्रज्ञात
तसमाधिस्थस्यैवकार्यंनविद्यते ॥ स्थितप्रज्ञस्यापिकार्यंदेहादिदृश्यतेयदा ॥

स्वधर्मोममतुष्ट्यर्थःसाहिसर्वैरपेक्षितेतिवचनाच्चेतिपंचरात्रे ॥ अन्यदान्यरतिर
पीषत्सर्वस्यभवति ॥ नचतत्रालंबुद्धिमात्रमुक्तं ॥ आत्मतृप्तइतिपृथगभिधाना
त् ॥ कर्तृशब्दःकालावच्छेदेपिचायंप्रसिद्धोयोभुंक्तेसतुनब्रूयादित्यादौ ॥ अ
तोऽसंप्रज्ञातसमाधावेवैतत् ॥ मानवइतिज्ञानिनएवासंप्रज्ञातसमाधिर्भवती
तिदर्शयति मनुअवबोधनइतिधातोः ॥ परमात्मरतिश्चात्रविवक्षिता ॥ वि
ष्णवावेवरतिर्यस्यक्रियातस्यैवनास्तिहीतिवचनात् ॥ तस्यकर्मकालेवक्तव्योहमि
तिकंचित्प्रत्युक्त्वातत्कृतावात्मरतिरित्यधिकःसमोवार्थोनास्ति ॥ नचसंध्याद्यकृ
तौकश्चिद्दोषोस्ति॥ नचैतदपहायसर्वभूतेषुकश्चित्प्रयोजनाश्रयः॥ अर्थोयेनदर्श
नादिनाभवति ॥ सोर्थव्यपाश्रयः॥ ज्ञानमात्रेणयद्यपिप्रत्यवायोनभवति ॥ त
दर्जुनस्यापिसममितिनतस्यकर्मोपदेशोपयोग्येतद्भवतिईषत्प्रारब्धानर्थसूचकं
चतद्भवतिमहच्चेद्वृत्रहत्यादिवत् ॥ यतोसंप्रज्ञातसमाधेरेवकार्यंभवतितस्मात्सर्वं
कर्मसमाचार ॥ आचारोप्यस्तीत्याह ॥ कर्मणैवेति ॥ कर्मणासह ॥ कर्मकुर्वंत
एवेत्यर्थः ॥ कर्मकृत्वैवततोज्ञानंप्राप्यवा ॥ नतुज्ञानंविना ॥ प्रसिद्धंहितेषांज्ञा
नित्वंभारतादिषु॥तमेवंविद्वानमृतइहभवतीत्यादिश्रुतिभ्यश्च ॥ अत्रापिकर्मणां

ज्ञानसाधनत्वोक्तेश्चबुद्धियुक्ताइति॥ गत्यंतरंचनान्यःपंथाइत्यस्यनास्ति॥इतरेषां ज्ञानद्वाराप्यविरोधः॥ यत्रचतीर्थाद्येवमुक्तिसाधनमुच्यते। ब्रह्मज्ञानेनवामुक्तिः प्रयागमरणेनवा॥ अथवास्नानमात्रेणगोमत्यांकृष्णसन्निधावित्यादौतत्रपापा दिमुक्तिस्तुतिपरताच॥ तत्रापिहिकुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोच्यते ॥ अन्यथा मुक्तिंनिषिध्य ब्रह्मज्ञानंविनामुक्तिर्नकथंचिदपीष्यते ॥ प्रयागादेस्तुयामुक्तिर्ज्ञा नोपायत्वमेवहीत्यादौ ॥ नचतीर्थस्तुतिवाक्यानितत्प्रस्तावेप्युक्तंज्ञाननियमंघ्नं ति ॥ तथाःकंचिद्दक्षंभृत्यंप्रत्युक्तान्ययमेवराजाकिंराज्ञेत्यादीनि॥ यथाहभगवा न्॥ यानितीर्थादिवाक्यानिकर्मादिविषयाणिच ॥ स्तावकान्येवतानिस्युरज्ञानां मोहकानिवा ॥ भवेन्मोक्षस्तुमद्दृष्टेर्नान्यतस्तुकथंचनेतिनारदीये ॥ अतोपरोक्ष ज्ञानादेवमोक्षःकर्मतुतत्साधनमेव॥ [२१]सयद्वाक्यादिकंप्रमाणंकुरुते॥ यदुक्तप्रकारे णतिष्ठतीत्यर्थः॥ विद्वदविदुषोःकर्मभेदमाह॥ प्रकृतेरिति॥ प्रकृतेर्गुणैःरिंद्रियादि भिः॥ प्रकृतिमपेक्ष्यगुणभूतानिहितानि॥ तत्संबंधीनिच॥ नहिप्रतिबिंबस्यक्रिया [२८]कर्मभेदस्यगुणभेदस्यचतत्ववित्॥ गुणा इंद्रियादीनि॥ गुणेषुविषयेषु ॥ [२९]प्रकृते र्गुणेषुइंद्रियादिषुसंमूढाःइंद्रियाद्यभिमानाद्विविषयादिषुसंगः ॥ गुणकर्मसुवि

षयेषुकर्मसुच शब्दाद्याइंद्रियाद्याश्चसत्वाद्याश्च शुभानिच । अप्रधानानिचगु
णानिगद्यंतेनिरुक्तिगैरित्यभिधानात्। सत्वाद्यङ्गीकारेगुणागुणेष्वित्ययुक्तंस्यात्॥
[३०]अंतःसर्वाणिकर्माणिमय्येवसंन्यस्यभ्रांत्याजीवेऽध्यारोपितानिमय्येवविसृज्य-
भगवानेवसर्वाणिकर्माणिकरोतीतिमत्पूजेतिच आत्मानंमामधिकृत्ययच्चेतस्तद
ध्यात्मचेतःसंन्यासस्तुभगवान्करोतीतिनिर्ममत्वंनाहंकरोमीति [३१]फलमाह येमइ
ति। येतुएवंनिवृत्तकर्मिणस्तेपिमुच्यंतेज्ञानद्वाराकिम्वपरोक्षज्ञानिनः नतुसाधनां
तरमुच्यते निवृत्तादीनिकर्माणित्वपरोक्ष्येशदृष्टये ॥ अपरोक्षेशदृष्टिस्तुमुक्तौकिं
चिन्नमार्गते ॥ सर्वंतदंतराधायमुक्तयेसाधनंभवेत् ॥ नकिंचिदंतराधायनिर्वा
णायापरोक्षदृक् इतित्युक्तंनारायणाष्टाक्षरकल्पे ॥ अतएवसमुच्चयनियमोनिरा
कृतः॥[३३]एवंचेत्किमितितेमतंनानुतिष्ठंतिलोकाइत्यतआह। सदृशमिति। प्रकृतिः पूर्व
संस्कारः ॥ [३४]तथापिशक्तितोनिग्रहःकार्यः॥ निग्रहात्सद्यःप्रयोजनाभावेपिभवत्ये
वातिप्रयत्नतइत्याशयवानाह इंद्रियस्येतितथाह्युक्तम्॥ संस्कारोभगवानेषब्रह्मा
द्याअपितद्वशाः ॥ तथापिसोन्यथाकर्तुंशक्यतेतातिप्रयत्नतइति ॥ [३५]तथाप्युग्रंयुद्धंक
मैत्यतआह। श्रेयानिति । [३६]बहवःकर्मकारिणःसंति॥ क्रोधादयःकामश्च ॥ तत्रको

बलवानितिपृच्छति। अथेति। अथेत्यर्थान्तरं॥ तयोर्नवशमागच्छेदितिप्रश्नप्रापक
म्॥ ३७ यस्तुबलवान्प्रवर्तकःसएषकामः॥ क्रोधोप्येषएव॥ तज्जन्यत्वात्॥ कामात्क्रो
धोभिजायतइतिह्युक्तं॥ यत्रापिगुरुर्निंदादिनिमित्तःक्रोधस्तत्रापिभक्तिनिमित्ताऽ
निंदाकामनिमित्तएव येत्वन्यथावदंतितेसंकरान्नसूक्ष्मंजानंति उक्तंच ऋतेकामं
नुकोपाद्याजायंतेहिकथंचनेति महाशनः महद्भिकामभोग्यंमहाब्रह्महत्यादिकार
णत्वान्महापाप्मा॥ सर्वपुरुषार्थविरोधित्वाद्वैरी॥ ३८ कथंविरोधीसः॥ इदमनेनावृ
तं॥ यथाधूमेनाग्निरावृतःप्रकाशरूपोप्यन्येषांसम्यगदर्शनाय॥ तथापरमात्माय
थाआदर्शोमलेनावृतोन्याभिव्यक्तिहेतुर्नभवति॥ तथांतःकरणंपरमात्मादेर्व्य
क्तिहेतुर्नभवतिकामेनावृतं॥ यथोल्बेनावृत्यबद्धोभवतिगर्भस्तथाकामेनावृतो
जीवः॥ शाश्वतोजातमपिज्ञानंपरमात्मापरोक्ष्यायनप्रकाशतेकामेनावृतं॥
ज्ञानिनोपिकिम्वल्पज्ञानिनः कामरूपेणकामाख्येननित्यवैरिणा॥ दुष्पूरेण॥ दुः
खेनहिकामः पूर्यते॥ नहींद्रादिपदंसुखेनलभ्यते॥ यद्यपींद्रादिपदंप्राप्तंपुनर्ब्र
ह्मादिपदमिच्छतीत्यलंबुद्धिर्नास्तीत्यनलः॥ उक्तंचज्ञानस्यब्रह्मणश्चाग्नेर्बुधुमो
द्भेर्मलंतथा॥ आदर्शस्याथजीवस्यगर्भस्योल्बोहिकामकइति॥ ४० वंधार्थंशत्रोर

धिष्ठानमाह इंद्रियाणीति। एतैर्ज्ञानमावृत्य ॥ बुद्ध्यादिभिर्हिविषयगैर्ज्ञानमावृतं
भवतिहृताधिष्ठानोहिशत्रुर्नश्यति ॥ ४२ शत्रुहननेआयुधरूपंज्ञानंवक्तुंज्ञेयमाह।
इंद्रियाणीति। असंगज्ञानासिमादायतरतिपारमितिह्युक्तम् ॥ शरीरादिंद्रियाणि
पराणिउत्कृष्टानि ॥ नकेवलंबुद्धेः परश्रुत्युक्तप्रकारेणाव्यक्तादपि ॥ अव्यक्तात्पु
रुषःपरइतिहिश्रुतिः ॥ नच तत्रतत्रोक्तैकदेशज्ञानमात्रेणभवतिमुक्तिः ॥ सार्व
त्रिकगुणोपसंहारोहिभगवतागुणोपसंहारपादे अभिहितः आनंदादयः प्रधान
स्येत्यादिनातथाचान्यत्र अपौरुषेयेवेदेषुविष्णुवेदेषुचैवहि ॥ सर्वत्रयेगुणाःसं
तिसंप्रदायागताश्चये ॥ सर्वैस्तैःसहविज्ञाययेपश्यंतिपरंहरिं ॥ तेषामेवभवेन्मु
क्तिर्नान्यथातुकथंचन इतिगारुडे ॥ तस्माद्व्यक्तादपिपरत्वेनज्ञेयः ॥ नचात्रजी
वउच्यते ॥ रसोप्यस्यपरंदृष्ट्वानिवर्ततइत्युक्तत्वात् ॥ अविज्ञायपरंमत्तोजयःका
मस्यवैकुत इतिच ॥ अतःपरमात्मज्ञानमेवात्रविवक्षितंआत्मानं मनःआत्म
ना बुद्ध्या ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येतृती
योध्यायः ॥ ३ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ॥

श्रीहयग्रीवायनमः ॥ ॥ बुद्धेःपरस्यमाहात्म्यंकर्मभेदोज्ञानमाहात्म्यंचोच्यतेऽ
स्मिन्नध्याये ॥ पूर्वानुष्ठितश्चायंधर्मइत्याह। इममिति। मयिसर्वाणीत्युक्तम्॥
तन्माहात्म्यमादितोज्ञातुंपृच्छति॥अपरमिति। नतत्वंनादिर्भवानित्यतआह। अ
जोपीति। अव्ययआत्मादेहोपीत्यव्ययात्मा॥ अनंतंविश्वतोमुखमितिरूपविशेष
णमुत्तरत्र ॥ एतन्नानावताराणांनिधानंबीजमव्ययमितिच॥ जगृहइतितुव्य
क्तिः ॥ युक्तयस्तूक्ताः ॥ आत्मानादित्वंतुसर्वसमंकथमनादिनित्यस्यजनिः॥
प्रकृतिंस्वामधिष्ठाय॥ प्रकृत्याजातेषुवसुदेवादिषु ॥ तयैवतेषांजातइवप्रती
यतइत्यर्थः ॥ नतुस्वतंत्रामधिष्ठायेत्याह। स्वामिति ॥ द्रव्यंकर्मचेतिह्युक्तंसा
हितत्रोक्ता॥ ततःसर्वसृष्टेः ॥ आत्ममायया॥ आत्मज्ञानेन ॥ प्रकृतेःपृथगभि
धानात् ॥ केतुःकेतश्चितिश्चित्तंक्रतुर्मतिर्मनीषामायेतिह्यभिधानं ॥ सृष्टिकार
णयातेषांशरीरादिसृष्ट्वाविमोहिकयाऽजातएवजातइवप्रतीयतेवा उक्तंच॥ मह
दादेस्तुमातायाश्रीर्भूमिरितिकल्पिता॥ विमोहिकाचदुर्गाख्याताभिर्विष्णुरजोपि
हि॥ जातवत्प्रथतेह्यात्मचिद्बलान्मूढचेतसामिति॥ईश्वरःईशेभ्योपिवरः॥ तच्चोक्तं
ईशेभ्योब्रह्मरुद्रश्रीशेषादिभ्योयतोभवान् ॥ वरोतईश्वराख्यातेमुख्यानान्यस्य

कस्यचित् इतिब्रह्मवैवर्ते ॥ समर्थईशाइत्युक्तस्तद्वरत्वात्त्वमीश्वर इतिच ॥ नैजन्मनै
वपरित्राणादिकार्यमितिनियमः ॥ तथापिलीलयास्वभावेनचयथेष्टचारी ॥ तथा
ह्युक्तम् ॥ देवस्यैषस्वभावोयंलोकवत्तुलीलाकैवल्यम्॥ क्रीडतोबालकस्येवचे
ष्टांतस्यनिशामय॥ अरिभयादिवस्वयंपुरादिष्ववात्सीद्यदनंतवीर्यः॥पूर्णोयमस्या
त्रनकिंचिदाप्यंतथापिसर्वाःकुरुतेप्रवृत्तीः॥ अतोविरुद्धेषुमिमंवदंतिपरावरज्ञामु
नयःप्रशांताइत्यादिऋग्वेदखिलेषु॥ पृथङ्मुक्त्युक्तिःसर्वज्ञाननियमदर्शनार्थं॥ न
तुतावन्मात्रेणमुक्तिरित्युक्तम् ॥ वेदाद्युक्तंतुसर्वंयोज्ञात्वोपास्तेसदाहिमां॥ तस्यै
वदर्शनपथंयामिनान्यस्यकस्यचिदित्युक्तेश्चमहाकौर्मे॥ अत्रोक्तस्यैवतज्ज्ञात्वैव
जन्मनैतीतिगतिः॥ इतरवाक्यानांनान्यागतिः॥ नान्यस्यकस्यचिदितिविशेषणा
त्॥ तत्वतइतिविशेषणाच्चसर्वज्ञानमापतति॥ यत्रैवंभवति॥ तत्रतत्वतइतिविशे
षणेनविरोधः॥उक्तंच॥ एकंचतत्त्वतोज्ञातुंविनासर्वज्ञतांनरः॥ नसमर्थोमहेंद्रोपि
तस्मात्सर्वत्रजिज्ञसेदितिस्कांदे॥ १० संतिचतथामुक्ताइत्याह।वीतरागेति॥ मन्मया
मत्प्रचुराः ॥ सर्वत्रमांविनानकिंचित्पश्यंतीत्यर्थः ॥ ११ नैचमद्भजनमात्रेणमुक्ति
र्भवत्यन्यदेवतादिरूपेण ॥ तथापिसर्वेषामानुरूप्येणफलंददामीत्याह ॥ येयथे

। ॥ सेवयामिफलदानेननतुगुणभावेन ॥ कथमयंविशेषइत्यतआह ॥ ममव
र्त्मेति ॥ अन्यदेवतायजंतोपिममवर्त्मैवानुवर्तंते ॥ सर्वकर्मकर्तृत्वाद्गोक्तृत्वाच्च
मम ॥ येप्यन्यदेवताभक्ताइतिहिवक्ष्यति ॥ योदेवानांनामधाएकएवेतिहिश्रु
तिः ॥ भगवानेवचतत्राभिधीयते ॥ अजस्यनाभावध्येकमर्पितमितितल्लिंगात् ॥
[११] कुतोममवर्त्मानुवर्तंते ॥ क्षिप्रंहीति ॥ अतएवहिफलप्राप्तिः ॥ तस्मात्तेधनस
नयइतिश्रुतिः ॥ अहमेवहिकर्तेत्याह ॥ चातुर्वर्ण्यमिति ॥ चतुर्वर्णसमुदायः ॥
सात्विकोब्राह्मणः ॥ सात्विकराजसःक्षत्रियः ॥ राजसतामसोवैश्यः ॥ तामसः
शूद्रइतिगुणविभागः ॥ कर्मविभागस्तु शमोदमइत्यादिनावक्ष्यते ॥ क्रियायां
वैलक्षण्यात्कर्ताप्यकर्ता ॥ तथाहिश्रुतिः ॥ विश्वकर्माविमनाइत्यादि ॥ तनु
र्विद्याक्रियाकृतिरितिच ॥ साधितंचैतत्पुरस्तात् ॥ [१५] अतएवनमांकर्माणिलिंपं
ति ॥ इतश्चनलिंपंतीत्याह ॥ नमेकर्मफलेस्पृहा ॥ इच्छामात्रंत्वस्ति ॥ नतु
तत्राभिनिवेशः ॥ तच्चोक्तम् ॥ अकांक्षन्नपिदेवोसौनेच्छतेलोकवत्परः ॥ नत्वा
ग्रहस्तस्यविष्णोर्ज्ञानंकामोहितस्यत्विति ॥ नचकेचिन्मुक्ताभवंतीतिक्रमेणसर्व
मुक्तिः तथाहिश्रुतिः ॥ ज्ञात्वातमेवंमनसाहृदाचभूयोनमृत्युमुपयातिविद्वानिति

कथंवाइत्यनंताइतिअनंतवदितिहोवाचेति ॥ [१५]ऍवंज्ञात्वाकर्मकरणेआचारोध्य
स्तीत्याह ॥ एवमिति ॥ पूर्वतरंकर्मपूर्वभावीत्यर्थः ॥ [१६]कर्मकुर्वित्युक्तं ॥ तस्यकर्म
णोदुर्विज्ञेयत्वमाह । किंकर्मकिमकर्मेति । [१७]नकेवलंतज्ज्ञात्वामोक्ष्यसेज्ञात्वैवेत्या
शयवानाह। कर्मणइति । तच्चोक्तम् । अज्ञात्वाभगवान्कस्यकर्माकर्मविकर्मकम्॥
दर्शनंयातिहिमुनेकुतोमुक्तिश्चतद्विनेति ॥ अकर्मकर्माकरणं ॥ कर्माकर्मान्यद्विक
र्म ॥ निषिद्धंकर्मबंधकत्वात् ॥ ततोविविच्यकर्मादिबोद्धव्यमित्यादि ॥ नचशा
पादिनाकवयोप्यत्रमोहिताः ॥ अशक्यंचैतज्ज्ञातुमित्याह । गहनेति [१८]कर्मा
दिस्वरूपमाह । कर्मणीति ॥ कर्मणिक्रियमाणेसत्यकर्मयःपश्येत् ॥ विष्णोरेवक
र्मनाहंचित्प्रतिबिंबःकिंचित्करोमीति ॥ अकर्मणिसुप्त्यादावकरणावस्थायांपरमे
श्वरस्यकर्मपश्यति ॥ अयमेवपरमेश्वरःसर्वदासर्वस्रष्ट्यादिकरोतीति ॥ सबु
द्धिमान्ज्ञानी ॥ सएवचयुक्तोयोगयुक्तः ॥ सर्वाकरणात्सएवचकृत्स्नकर्मकृत् ॥
कृत्स्नफलवत्वात् ॥ [१९]एतदेवप्रपंचयति ॥ यस्येत्यादिनाश्लोकपंचकेन ॥ उक्तप्र
कारेणज्ञानाग्निदग्धकर्माणं ॥ [२०]नचकामसंकल्पाभावेनालं ॥ आसंगंस्नेहंच
त्यक्त्वा ॥ पुनर्ज्ञानस्वरूपमाह । नित्यतृप्तइति नित्यतृप्तनिराश्रयेश्वरसरूपोस्मी

तितथाविधः॥ [21]कामादित्यागोपायमाह॥ निराशीरिति॥ यतचित्तात्माभूत्वानिरा
शीरित्यर्थः॥ आत्मामनः॥ परिग्रहत्यागोऽनभिमानत्वं ॥ नैवकिंचित्करोतीत्य
स्याभिप्रायमाह॥नाप्नोतिकिल्बिषमिति॥ [22]यतचित्तात्मनोलक्षणमाह॥ यदृच्छा
लाभेति ॥ कथंद्वंद्वातीतत्वमित्याह॥ समःसिद्धाविति॥ [23]उपसंहरति॥ गतसंगस्ये
ति ॥ गतसंगस्यफलस्नेहरहितस्यमुक्तस्य ॥ शरीराद्यनभिमानिनः ॥ ज्ञानाव
स्थितचेतसः॥ परमेश्वरज्ञानिनः॥ [24]ज्ञानावस्थितचेतस्त्वंस्पष्टयति॥ ब्रह्मार्पणमि
ति॥ सर्वमेतद्ब्रह्मेत्युच्यते॥ तदधीनसत्तादिप्रतीतित्वात्॥ नतुतत्स्वरूपत्वात्॥ उक्तं
हि।त्वदधीनंयतःसर्वमतःसर्वोभवानिति ॥ वदंतिमुनयःसर्वेनतुसर्वस्वरूपइतिपा
द्मे ॥ सर्वंतत्प्रज्ञानेत्रमितिच ॥ एतंह्येवबह्वृचाइत्यादिच ॥ समाधिनासहब्रह्मैव
कर्म ॥ [25]यज्ञभेदानाह ॥ दैवमित्यादिना॥ दैवंभगवंतं॥ सएवतेषांयज्ञः ॥ भ
गवदुपासनं ॥ यज्ञमितिक्रियाविशेषणं ॥ नान्यत्तेषामस्तियतीनांकेषांचित्॥
यज्ञंभगवंतं ॥ यज्ञेनयज्ञं ॥ यज्ञोविष्णुर्देवतेत्यादिश्रुतिः ॥ यज्ञेनप्रसिद्धेनै
व ॥ यज्ञंप्रतिजुह्वति ॥ इतिसर्वत्रसंमतंयज्ञमित्यादौ ॥ उक्तंच ॥ विष्णुं
रुद्रेणपशुनाब्रह्माज्येष्ठेनसूनुना ॥ अयजन्मानसेयज्ञेपितरंप्रपितामह इति ॥

[२७] आत्मसंयमाख्योपायाग्नौ ॥ [२८] द्रव्यंजुह्वतीतिद्रव्ययज्ञाःतपःपरमेश्वरार्पणबुद्ध्यात्
त्रजुह्वतीतितपोयज्ञाइत्यादि ॥ इदंतपोहविः ॥ ब्रह्माग्नौजुहोमि ॥ तत्पूजार्थमिति
होमः॥तदर्पणएवचहोमबुद्धिः॥ [२९] अपरेप्राणायामपरायणाः॥प्राणमपानेजुह्वति॥
अपानंचप्राणे ॥ कुंभकस्थाएवभवंतीत्यर्थः ॥ [३०] नियताहारत्वेनैवप्राणशेषात्प्रा
णान्प्राणेषुजुह्वति ॥ यच्छेद्वाङ्मनसीप्राज्ञइत्यादिश्रुत्युक्तप्रकारेणवा ॥ अन्यद
पिग्रंथांतरसिद्धं ॥ यदस्याल्पाशनंतेनप्राणाःप्राणेषुवैहुताइति ॥ [३२] ब्रह्मणःपरमा
त्मनोमुखे ॥ अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवचेतिवक्ष्यति ॥ मानसवाचि
ककायिककर्मजाएवहितेसर्वे ॥ एवंज्ञात्वातानिकर्माणिकृत्वामोक्ष्यसे ॥ युद्धं
परित्यज्ययन्मोक्षार्थंकरिष्यसितदपिकर्म ॥ अतोविहितंनत्याज्यमितिभावः ॥
[३३] अखिलमुपासनाद्यंगयुक्तं ॥ ज्ञानफलमेवेत्यर्थः ॥ [३४] इदानीमपिज्ञान्येव ॥ तथा
प्यभिभवान्मोहः ॥ मातूक्ता ॥ [३५] येनज्ञानेनमय्यात्मभूतेसर्वभूतान्यथोतस्मादेव
मोहनाशात्पश्यसि ॥ [३६] करणभूतंज्ञानंस्तौतिपुनःश्लोकत्रयेण ॥ [३९] तत्साधनंविरो
धिफलंचतदुक्तैरुक्त्वोपसंहरति ॥ इतिश्रीमदानन्दतीर्थभगवत्पादाचार्यविरचि
ते श्रीमद्भगवद्गीताभाष्येचतुर्थोऽध्यायः॥ ४ ॥ ॥ ६ ॥ ॥ ६ ॥

श्रीकेशवायनमः ॥ ॥ तृतीयाध्यायोक्तमेवकर्मयोगंप्रपंचयत्यनेनाध्यायेन ॥
[1] यदृच्छालाभसंतुष्टइत्यादिसंन्यासं ॥ कुरुकर्मेत्यादिकर्मयोगंच ॥ नियमनादि
नासकललोककर्षणात्कृष्णः ॥ तच्चोक्तम् ॥ यतःकर्षसिदेवेशनियम्यसकलंजग
त् ॥ अतोवदंतिमुनयःकृष्णंत्वांब्रह्मवादिनइतिमहाकौर्मे ॥ संन्यासशब्दार्थं
भगवानेववक्ष्यति ॥ अयंप्रश्नाशयः ॥ यदिसंन्यासःश्रेयोधिकःस्यात्तर्हिसं
न्यासस्यैषद्विरोधियुद्धमिति ॥ नायंसंन्यासोयत्याश्रमः ॥ द्वंद्वत्यागात्तुसंन्या
सान्मत्पूजैवगरीयसीत्यादिवचनात् ॥ तानिवाएतान्यवराणितपांसिन्यासएवात्यरेचयदितिच ॥ संन्यासस्तुतुरीयोयोनिष्क्रियाख्यःसधर्मकः ॥ नतस्मादु
त्तमोधर्मोलोकेकश्चनविद्यते॥तद्भक्तोपिहियद्धच्छेत्तद्बृहंनचधार्मिकः॥ मद्भक्तिश्च
विरक्तिस्तदधिकारोनिगद्यते ॥ यदाधिकारोभवति ब्रह्मचार्यपिप्रव्रजेदितिनार
दीये ॥ ब्रह्मचर्यादेवप्रव्रजेत् ॥ यदहरेवविरजेदितिच ॥ संन्यासेतुतुरीयेवैप्री
तिर्ममगरीयसी ॥ एषामत्राधिकारोनतेषांकर्मेतिनिश्चयइत्यादेश्चब्राह्मे ॥ अ
तोनात्राश्रमःसंन्यासउक्तः ॥ [3] संन्यासशब्दार्थमाह ॥ ज्ञेयइति ॥ संन्यासस्यनि
श्रेयसकरत्वंज्ञापयितुंतच्छब्दार्थंस्मारयति॥ ज्ञेयइति॥ [4] संन्यासोहिज्ञानांतरंगत्वे

नोक्तोनतस्यतत्त्वग्रहणायेत्यादौ ॥ अतःकथंसोवमइत्यतआह ॥ सांख्ययोगा
विति॥ उभयोरप्यंतरंगत्वेनाविरोधः॥ अग्निमुग्धोहवैधूमतांतःस्वंलोकंनप्रत्यभि
जानाति ॥ मावःपदव्यःपितरस्मदास्थितायायज्ञशालासनधूमवर्त्मनामित्या
दितुकाम्यकर्मविषयमितिभावः॥ येत्वन्यथावदंतितेबालाः॥ एकमपीत्यस्याभि
प्रायमाह॥ यत्सांख्यैरिति ॥ योगिभिरपिज्ञानद्वाराज्ञानफलंप्राप्यतइत्यर्थः ॥ ई
तश्वसंन्यासाद्योगोवरइत्याह ॥ संन्यासस्त्विति ॥ योगाभावेमोक्षादिफलंनभ
वति ॥ अतःकामजयादिदुःखमेवतस्य ॥ मोक्षाद्येवहिफलम्॥ अन्यत्तत्फलम
ल्पत्वादफलमेवेत्याशयः॥ तच्चोक्तम्॥ विनामोक्षफलंयत्तुनतत्फलमुदीर्यतइति
पाद्मे ॥ यत्तुमहाफलयोग्यंतस्याल्पंफलमेवनभवति ॥ यथापद्मरागस्यतंडुलमु
ष्टिः ॥ महाफलश्चयोगयुक्तश्चेत्संन्यासइत्याह॥ योगयुक्तइति॥ मुनिःसंन्यासी ॥
तच्चोक्तम् ॥ सहिलोकेमुनिर्नामयःकामक्रोधवर्जितइति ॥ एतदेवप्रपंचयति ॥
योगयुक्तइति॥ सर्वभूतात्मभूतःपरमेश्वरः ॥ यच्चाप्नोतीत्यादेः॥ सआत्मभूतःस्व
समीपंप्रत्यादानादिकर्तायस्यससर्वभूतात्मभूतात्मा। संन्यासंस्पष्टयतिपुनःश्लो
कद्वयेन॥ संन्यासयोगयुक्तएवचकर्मणानलिप्यतइत्याह॥ ब्रह्मणीति॥ साधननि

यमस्योपचारत्वव्यावृत्त्यर्थंपुनःपुनःफलकथनम् ॥ [११]एवंचाचारइत्याह ॥ कायेने
ति ॥ [१२]पुनर्युक्त्यादिनियमार्थंयुक्तायुक्तफलमाह ॥ युक्तइति ॥ युक्तोयोगयु
क्तः॥[१३]पुनःसंन्यासशब्दार्थंस्पष्टयति॥ सर्वकर्माणीति॥ मनसेतिविशेषणादभिमा
नत्यागः ॥ [१४]नचकरोतिवस्तुतइत्याह॥ नकर्तृत्वमिति ॥ प्रभुर्हिजीवोजडमपे
क्ष्य ॥ [१६]ज्ञानमेवाज्ञाननाशकमित्याह ॥ ज्ञानेनेति॥ प्रथमज्ञानंपरोक्षम् ॥ [१७]अ
परोक्षज्ञानाव्यवहितंसाधनमाह॥ तद्बुद्धयइति॥ [१८]परमेश्वरस्वरूपाणांसर्वत्रसा
म्यदर्शनंचापरोक्षज्ञानसाधनमित्याशयवानाह ॥ विद्येति॥ [१९]तंदेवस्तौति॥ इ
हैवेति॥ [२०]संन्यासयोगज्ञानानिमिलित्वाप्रपंचयत्यध्यायशेषेण॥ [२१]पुनर्योगस्या
धिक्यंस्पष्टयति॥ बाह्यस्पर्शेष्विति ॥ कामरहितआत्मनियत्सुखंविंदतिसएव
ब्रह्मयोगयुक्तात्माचेत्तदेवाक्षयंसुखंविंदति ॥ ब्रह्मविषयोयोगोब्रह्मयोगः ॥
ध्यानादियुक्तस्यैवात्मसुखमक्षयम् ॥ अन्यथानेत्यर्थः ॥ [२२]संन्यासार्थं
कामभोगंनिंदयति॥ येहीति॥ [२३]तत्परित्यागंप्रशंसति॥ शक्नोतीति॥ कामक्रो
धोद्भवंवेगंसोढुंशक्नोति॥ शरीरविमोक्षणात्प्रागप्ययथामनुष्यशरीरेसोढुंसुशकः।
तथानान्यत्रेतिभावः॥ ब्रह्मलोकादिस्तुजितकामानामेवभवति॥ ज्ञानिलक्षणंप्र

पंचयत्युत्तरैःश्लोकैः ॥ आरामःपरदर्शनादिनिमित्तंसुखं ॥ अत्रतुपरमात्म
दर्शनादिनिमित्तंतत् ॥ सुखंतूपद्रवक्षयेव्यक्तं ॥ अत्रतुकामादिक्षयेव्यक्तमा
त्मनःसुखंस्वयंज्योतिष्ट्वाद्भगवतः ॥ तद्व्यक्तेरंतर्ज्योतिः ॥ सर्वेषामंतर्ज्योति
ष्ट्वेपिव्यक्तेर्विशेषः ॥ असंप्रज्ञातसमाधीनांबाह्यादर्शनात् ॥ दर्शनेऽप्यकिं
चित्करादेवशब्दः ॥ उक्तंचैतत् ॥ दर्शनस्पर्शसंभाषाद्यत्सुखंजायतेनृणाम् ॥
आरामःसतुविज्ञेयःसुखंकामक्षयोदितमितिनारदीये ॥ स्वज्योतिष्ट्वान्महावि
ष्णोरंतर्ज्योतिस्तुतत्स्थितइतिच ॥ अंतःसुखत्वादेःकारणमाह ॥ ब्रह्मभूतइ
ति ॥ पापक्षयाच्चैतद्भवतीत्याह ॥ लभंत इति ॥ क्षीणकल्मषाभूत्वाछिन्नद्वैधा
यतात्मानः ॥ द्वैधाभावोद्वैधं ॥ संशयोविपर्ययोवा ॥ तच्चोक्तम् ॥ विपर्ययःसं
शयोवायद्वैधंत्वकृतात्मनाम् ॥ ज्ञानासिनातुतच्छित्त्वामुक्तसंगःपरंव्रजेदितिच ॥
छिन्नद्वैधास्तएवायतात्मानः ॥ दीर्घमनसःसर्वज्ञाइत्यर्थः ॥ ततएवच्छिन्नद्वै
धाः ॥ तच्चोक्तम् ॥ क्षीणपापामहाज्ञानाजायंतेगतसंशयाइति ॥ छिन्नद्वैधाः ॥
यतात्मानइतिवा ॥ [२६]सुलभंचतेषांब्रह्मेत्याह ॥ कामक्रोधेति ॥ अभितःसर्व
तः ॥ [२७]ध्यानप्रकारमाह ॥ स्पर्शानित्यादिना ॥ बाह्यान्स्पर्शान्बहिःकृत्वाश्रो

त्रादीनियोगेननियम्येत्यर्थः ॥ चक्षुर्भ्रुवोरंतरेकृत्वा ॥ भ्रुवोर्मध्यमवलोकय
न्नित्यर्थः ॥ उक्तंच ॥ नासाग्रेवाभ्रुवोर्मध्ये ध्यानीचक्षुर्निधारयेदिति ॥ प्राणा
पानौसमौकृत्वा ॥ कुंभकेस्थित्वेत्यर्थः ॥ ध्येयमाह ओंकारमिति ॥ ॥ इति
श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीताभाष्येपंचमोऽध्यायः॥
श्रीपंचजनपंचास्यायनमः॥ ॐज्ञानांतरंगंसमाधियोगमाहानेनाऽध्यायेन॥ विं
वक्षितंसंन्यासमाह ॥ योगेनसह ॥ अनाश्रितइति ॥ चतुर्थाश्रमिणोप्यग्निः
क्रियाचोक्तादैवमेवेत्यादौ ॥ अग्निर्ब्रह्मचतत्पूजाक्रियान्यासाश्रमेस्मृतेतिच ॥
तस्मान्निरग्निरक्रियःसंन्यासीयोगीचनभवत्येव ॥ संन्यासोपियोगांतर्भूतइत्या
ह ॥ यंसंन्यासमिति॥ कामसंकल्पाद्यपरित्यागेकथमुपायवान्स्यादित्याशयः॥
किंयत्कालंकर्मकर्तव्यमित्यतआह ॥ आरुरुक्षोर्मुनेरिति ॥ योगमारुरुक्षोरु
पायसंपूर्तिमिच्छोः॥ योगारूढस्यसंपूर्णोपायस्य ॥ अपरोक्षज्ञानिनइत्यर्थः॥
कारणंपरमसुखकारणं ॥ अपरोक्षज्ञानिनोपिसमाध्यादिफलमुक्तं ॥ तस्यस
र्वोपशमेनसमाधिरेवकारणंप्राधान्येनेत्यर्थः ॥ तथापियदाभोक्तव्योपरमस्तदै
वसम्यगसंप्रज्ञातसमाधिर्जायते ॥ अन्यदातुभगवच्चरितादौस्थितिः॥ तच्चो

क्रम् ॥ येत्वांपश्यंतिभगवंस्तएवसुखिनःपरम् ॥ तेषामेवतुसंक्रम्यसमाधिर्जा
यतेनृणाम् भोक्तव्यकर्मण्यक्षीणेजपेनकथयापिवा॥वर्तयंतिमहात्मानस्त्वद्भक्ता
स्त्वत्परायणाइति ॥ योगारूढस्यलक्षणमाह ॥ यदेति ॥ सम्यगननुषंगस्त
स्यैवभवति ॥ उक्तंच ॥ स्वतोदोषलयोदृष्ट्वात्वितरेषांप्रयत्नतइति ॥ सचयोगा
रोहःप्रयत्नेनकर्तव्यइत्याह ॥ उद्धरेदित्यादिना ॥ कस्यबंधुरात्मेत्याह ॥ बंधुरा
त्मेति ॥ आत्मामनः ॥ आत्मनोजीवस्य ॥ आत्मनामनसा ॥ आत्मानंजीवं ॥
आत्मैवमनः ॥ आत्मनाबुद्ध्या ॥ जीवेनैववा ॥ सहिबुद्ध्याविजयति ॥ उक्तंच
मनःपरंकारणमामनंति ॥ मनएवमनुष्याणांकारणंबंधमोक्षयोः ॥ उद्धरेन्म
नसाजीवंनजीवमवसादयेत् ॥ जीवस्यबंधुःशत्रुश्चमनएवनसंशयः ॥ जीवे
नबुद्ध्याहियदामनोजितंतदाबंधुःशत्रुरन्यस्यचास्य ॥ ततोजयेद्बुद्धिबलोनरस्त
द्देवेचभक्त्यामधुकैटभाराविन्यादिब्रह्मवैवर्ते ॥ अनात्मनः ॥ अजितात्मनः
पुरुषस्य ॥ अजितमनस्कस्य ॥ सदपिमनोनुपकारीत्यनात्मा ॥ सन्नपिभृ
त्योयस्यनभृत्यपदेवर्ततेसत्वभृत्यः ॥ तस्यात्मामनएवशत्रुवच्छत्रुत्वेवर्तंते ॥
जितात्मनःफलमाह जितात्मनइति ॥ जितात्माहिप्रशांतोभवति ॥ नत

स्यमनःप्रायोविषयेषुगच्छति ॥ तदाचपरमात्मासम्यगाहितःहृदिसंनिहितो
भवति ॥ अपरोक्षज्ञानीभवतीत्यर्थः ॥ अपरोक्षज्ञानिनोलक्षणंस्पष्टयति ॥ शी
तोष्णेत्यादिना ॥ शीतोष्णादिषुकूटस्थः ॥ ज्ञानविज्ञानतृप्तात्माविजितेंद्रियइ
तिकूटस्थत्वेहेतुः ॥ विज्ञानंविशेषज्ञानं ॥ अपरोक्षज्ञानंवा ॥ तच्चोक्तं ॥ सामान्यै
र्यैस्त्वविज्ञेयाविशेषाममगोचराः ॥ देवादीनांतुतज्ज्ञानंविज्ञानमितिकीर्तितमि
ति ॥ श्रवणान्मननाच्चैवयज्ज्ञानमुपजायते ॥ तज्ज्ञानंदर्शनंविष्णोर्विज्ञानंशं
भुरब्रवीत् ॥ विज्ञानंज्ञानमंगादेर्विशिष्टंदर्शनंतथेत्यादि ॥ कूटस्थोनिर्विकारः ॥
कूटवत्स्थितइतिव्युत्पतेःकूटमाकाशः ॥ कूटंखंविदलंव्योमसंधिराकाशउच्यत
इत्यभिधानात् ॥ योगीयोगंकुर्वन् ॥ युक्तोयोगसंपूर्णः ॥ एवंभूतोयोगानुष्ठा
तायोगसंपूर्णउच्यतइत्यर्थः ॥ सएवचसर्वस्माद्विशिष्यते ॥ साधुपापादिषुसम
बुद्धिः ॥ जीवचित्तःपरमात्मनःसर्वस्यतन्निमित्तत्वस्यचसर्वत्रैकरूप्येण ॥ चिद्रू
पाएवहिजीवाः ॥ विशेषस्त्वंतःकरणकृतः ॥ सर्वेषांचसाधुत्वादिकंसर्वमीश्वरकृ
तमेव ॥ स्वतोनकिंचिदपि ॥ उक्तंचैतत्सर्वं ॥ स्वतःसर्वेपिचिद्रूपाःसर्वदोषविवर्जि
ताः ॥ जीवास्तेषांतुयेदोषास्तउपाधिकृतामताः ॥ सर्वंचेश्वरतस्तेषांनकिंचि

त्स्वतएवतु॥ समाएवत्वतःसर्वैवैषम्यंभ्रांतिसंभवम्॥ एवंसमानजीवास्तुविशेषो
देवतादिषु॥ स्वाभाविकस्तुनियमादतएवसनातनाः॥ असुरादेस्तथादोषानित्याः
स्वाभाविकाअपि॥ गुणदोषौमनुष्याणांनित्यौस्वभाविकौमतौ॥गुणैकमात्ररूपा
स्तुदेवाएवसदामताइतिब्राह्मे॥ नतुसाधुपापादीनांपूजादिसाम्यम्॥ तत्रदोषस्मृ
तेः ॥ समानांविषमापूजाविषमानांसमातथा ॥ क्रियतेयेनदेवोपिस्वपदाद्भ्र
श्यतेपुमानितिब्राह्मे ॥ वित्तंबंधुर्वयःकर्मविद्याचैवतुपंचमी ॥ एतानिमान्य
स्थानानिगरीयोह्युत्तरोत्तरमितिमानवे ॥ गुणानुसारणींपूजांसमांदृष्टिंचयो
नरः ॥ सर्वभूतेषुकुरुतेतस्यविष्णुःप्रसीदति ॥ वैषम्यमुत्तमत्वंतुददातिनरसंच
यात्॥ पूजायाविषमादृष्टिःसमासाम्यंविदुःखजमितिब्रह्मवैवर्ते ॥ सुहृदादिषु
शास्त्रोक्तपूजादिकृतिरन्यूनानधिकायासापिसंमता॥ तदप्याहुः॥ यथासुहृत्सु
कर्तव्यंपितृशत्रुसुतेषुच ॥ तथाकरोतिपूजादिसमबुद्धिःसउच्यतइतिगारुडे ॥
प्रत्युपकारनिरपेक्षयोपकारकृत्सुहृत्क्लेशस्थानंनिरूप्ययोरक्षांकरोतिसमित्रम्॥
अरिर्वधादिकर्ता॥ कर्तव्यउपकारेअपकारेचय्यउदास्तेसउदासीनः॥ कर्तव्यमु
भयमपियःकरोतिसमध्यमः॥ अवासितकृद्द्वेष्यः॥ आहचैतत् द्वेष्योवासितकृ

त्कार्यमात्रकारीतुमध्यमः ॥ प्रियकृत्प्रियोनिरूप्यापिक्लेशंयःपरिरक्षति ॥ समि
त्रमुपकारंतुअनपेक्ष्योपकारकृत् ॥ यस्ततःससुहृत्प्रोक्तःशत्रुश्चापिवधादिकृदि
ति॥समाधियोगप्रकारमाह॥ योगीयुंजीतेत्यादिना॥युंजीतसमाधियोगयुक्तंकु
र्यात् ॥ आत्मानंमनः ॥ [१२]योगंसमाधियोगंयुंज्यात् ॥ [१५]निर्वाणपरमाम् ॥ शरी
रत्यागोत्तरकालीनां ॥ [१६]अनशनादिनिषेधोऽशक्तस्य ॥ उक्तंहि ॥ निद्राश
नभयश्वासचेष्टातंद्रादिवर्जनं ॥ कृत्वानिमीलिताक्षस्तुशक्तोध्यायन्प्रसीद
तीतिनारदीये ॥ [१७]युक्ताहारविहारस्य ॥ सोपायाहारादेः ॥ यावताश्रमाद्य
भावोभवतितावदाहारादेरित्यर्थः ॥ [१८]आत्मनिभगवति ॥ [१९]आत्मनःभगवद्विष
यंयोगं ॥ आत्मनामनसा ॥ आत्मनिदेहे ॥ आत्मानंभगवंतंपश्यन् ॥ [२१]तं
त्वतोभगवद्रूपात् ॥ [२३]दुःखसंयोगोयेनवियुज्यतेसदुःखसंयोगवियोगः ॥ नकेव
लमुत्पन्नंदुःखंविनाशयति ॥ उत्पत्तिमेवनिवारयतीतिदर्शयतिसंयोगशब्दे
न ॥ निश्चयेनयोक्तव्यः ॥ योक्तव्यएवबुभूषुणेत्यर्थः ॥ [२४]सर्वान्सर्वविषया
न् ॥ अशेषतएकैकविषयोपिकामःस्वल्पःकादाचित्कोपिनकर्तव्यइत्यर्थः ॥ म
नसैवनियंतुंशक्यतेनान्येनेत्येवशब्दः ॥ [२५]बुद्धेः कारणत्वंमनोनिग्रहे ॥ आत्मर

मणेच ॥ [२६]यतोयतोयत्रयत्र ॥ यतोयतोधावतीत्यादिप्रयोगात् ॥ आत्म
न्येववशंनयेत् ॥ आत्मविषयएववशीकुर्यादित्यर्थः ॥ पूर्वश्लोकोक्तंप्रपंचयति॥
एवंयुंजन्निति ॥ [२७]ध्येयमाह ॥ सर्वभूतस्थमिति सर्वभूतस्थमात्मानंपरमेश्वरम् ॥
सर्वभूतात्मनिचात्मनिपरमेश्वरे ॥ तंचपरमेश्वरंब्रह्मतृणादावैश्वर्यादिनासाम्येन
पश्यति ॥ तच्चोक्तं ॥ आत्मानंसर्वभूतेषुभगवंतमवस्थितम् ॥ अपश्यत्सर्वभूतानि
भगवत्यपिचात्मनीति॥समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरमितिच॥[३०]फलमाह ॥ योमा
मिति॥तस्याहंनप्रणश्यामीतिसर्वदायोगक्षेमवहःस्यामित्यर्थः॥ सचमेनप्रणश्य
ति॥सर्वदामद्भक्तोभवति॥सत्यपिस्वामिन्यरक्षत्यनाथः॥ एवंभृत्येप्यभजत्यभृत्य
इतिहिप्रसिद्धिरिति ॥ उक्तंच ॥ सर्वदासर्वभूतेषुसमंमांयःप्रपश्यति ॥ अचलात
स्यभक्तिःस्यात्योगक्षेमवहोस्म्यहमितिगारुडे ॥ [३१]तदेवस्पष्टयति ॥ सवभूतस्थि
तमिति ॥ एकत्वमास्थितः॥ सर्वत्रैकएवेश्वरइतिस्थितः ॥ सर्वप्रकारेणवर्तमानोऽ
पिमय्येववर्तते ॥ एवमपरोक्षंपश्यतोज्ञानफलंनियतमित्यर्थः ॥ तथापिप्रायो
नाधर्मंकरोति ॥ कुर्वतस्तुमहच्चेद्दुःखसूचकंभवतीत्युक्तंपुरस्तात् ॥ आहच ॥
कदाचिदपिनाधर्मेबुद्धिर्विष्णुदृशांभवेत् ॥ प्रमादात्तुकृतंपापमल्पंभस्मीभविष्य

ति ॥ आदिराजैस्तथादेवैर्ऋषिभिःक्रियतेकियत् ॥ बाहुल्यात्कर्मणस्तेषांदुःख
सूचकमेवतदिति ॥ [३२]सौम्यंप्रकारांतरेणव्याचष्टे ॥ आत्मौपम्येनेति ॥ [३३]एतस्ययो
गस्यस्थिरांस्थितिंनपश्यामि ॥ मनसश्चंचलत्वात् ॥ उक्तंच ॥ मनसश्चंचल
त्वाद्धिस्थितिर्योगस्यवैस्थिरा ॥ विनाभ्यासान्नशक्यास्याद्वैराग्याद्वानसंशयइ
तिव्यासयोगे ॥ [३६]नचकदाचित्स्वयमेवमनोनियम्यते ॥ शुभेच्छारहितानांचद्वेषि
णांचरमापत्तौ ॥ नास्तिकानांतुवैपुंसांसदामुक्तिर्नजायतइतिनिषेधाद्ब्राह्मे ॥ [३७]अ
यतिरप्रयत्नः ॥ [४४]योगस्यजिज्ञासुरपि॥ ज्ञातव्योमयायोगइतियस्यातीवेच्छासोऽ
पि ॥ शब्दब्रह्मातिवर्तते॥परंब्रह्मप्राप्नोतीत्यर्थः॥ [४५]नैकेजन्मनीत्याह॥प्रयत्नादिति॥
जिज्ञासुर्ज्ञात्वाप्रयत्नंकरोति ॥ एवमनेकजन्मभिःसंसिद्धोअपरोक्षज्ञानीभू
त्वापरांगतिंयाति ॥ आहच ॥ अतीवश्रद्धयायुक्तोजिज्ञासुर्विष्णुतत्परः ॥ ज्ञा
त्वाध्यात्वातथादृष्ट्वाजन्मभिर्बहुभिःपुमान् ॥ विशेन्नारायणंदेवंनान्यथातुकथं
चनेतिनारदीये ॥ [४६]ज्ञानिभ्यःयोगज्ञानिभ्यः ॥ तपस्विभ्यःकृच्छ्रादिचारिभ्यः ॥
उक्तंच ॥ कृच्छ्रादेरपियज्ञादेर्ध्यानयोगोविशिष्यते ॥ तत्रापिशेषश्रीब्रह्मशिवादि
ध्यानतोहरेः ॥ ध्यानंकोटिगुणंप्रोक्तमधिकंवामुमुक्षुणामितिगारुडे ॥ अज्ञात्वा

ध्यायिनाध्यानाज्ज्ञानमेवविशिष्यते ॥ ज्ञात्वाध्यानंज्ञानमात्राद्ध्यानादपिचदर्श
नम् ॥ दर्शनाच्चैवभक्तेश्चनकिंचित्साधनाधिकमितिचनारदीये ॥ ४७ ॥ ॥ इति
श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्येषष्ठोऽध्यायः६॥
श्रीहरयेनमः ॥ ॐसाधनंप्राधान्येनोक्तमतीतैरध्यायैः॥ उत्तरैस्तुषड्भिर्भगवन्मा
हात्म्यंप्राधान्येनाह ॥ १आसक्तमनाः ॥ अतीवस्नेहयुक्तमनाः ॥ मदाश्र
यः ॥ भगवानेवसर्वंमयाकारयति ॥ सएवमेशरणं ॥ तस्मिन्नेवाहंस्थितइति
स्थितः ॥ असंशयंसमग्रमितिक्रियाविशेषणं ॥ २इदंमद्विषयंज्ञानं ॥ विज्ञानं
विशेषज्ञानं ॥ ३दौर्लभ्यंज्ञानस्याह ॥ मनुष्याणामिति ॥ ४प्रतिज्ञातंज्ञानमाह ॥
महतोऽहंकारएवांतर्भावः ॥ ५अपराऽअनुत्तमा ॥ वक्ष्यमाणामपेक्ष्य ॥ जी
वभूताश्रीः ॥ जीवानांप्राणधारिणी ॥ चिद्रूपभूता ॥ सर्वदासती ॥ ए
तन्महद्भूतमितिश्रुतेः॥ जगादच ॥ प्रकृतीद्वितुदेवस्यजडाचैवाजडातथा ॥ अ
व्यक्ताख्याजडासाचसृष्ट्याभिन्नाष्टधापुनः ॥ महान्बुद्धिर्मनश्चैवपंचभूतानिचे
तिह ॥ अवरासाजडाश्रीश्चपरेयंधार्यतेतथा ॥ चिद्रूपायात्वनंताचअनादिनिध
नापरा ॥ यत्समंतुप्रियंकिंचिन्नास्तिविष्णोर्महात्मनः ॥ नारायणस्यमहिषीमा

तासाब्रह्मणोपिहि ॥ ताभ्यामिदंजगत्सर्वंहरिःसृजतिभूतराडितिनारदीये ॥ नं
केवलंतेजगत्प्रकृतीमद्वशेइत्येतावन्मदैश्वर्यमित्याह ॥ अहमिति ॥ प्रभवादेःस
त्ताप्रतीत्यादेःकारणत्वात्तद्भोक्तृत्वाच्चप्रभवइत्यादि ॥ तथाचश्रुतिः ॥ सर्वकामः
सर्वकर्मासर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोवाक्यनादरइति॥आहच॥स्रष्टापाता
चसंहर्तानियंताचप्रकाशिता ॥ यतःसर्वस्यतेनाहंसर्वोस्मीत्यृषिभिःस्मृतः ॥ सु
खरूपस्यभोक्तृत्वान्नतुसर्वस्वरूपतः ॥ आगमिष्यत्सुखंवापितच्चास्त्येवसदापितु ॥
तथाप्यचिंत्यशक्तित्वाज्जातंसुखमतीवचेतिनारदीये॥ अहमेवपरतरः॥मत्तोन्यत्प
रतरंनकिंचिदपि॥ईदंज्ञानंरसोहमित्यादिविज्ञानंअबादयोपितत्तएव॥तथापिरसा
दिस्वभावानांसाराणांचस्वभावत्वेसारत्वेचविशेषतोपिसएवनियामकः॥ नत्वबा
दिनियमानुबद्धोरसादिस्तत्सारत्वादिश्चेतिदर्शयति॥अप्सुरसादित्यादिविशेषश
ब्दैः॥ भोगश्चविशेषतोरसादेरितिच ॥ उपासनार्थंच ॥ उक्तंचगीताकल्पे ॥ रसा
दीनांरसादित्वेस्वभावत्वेतथैवच ॥ सारत्वेसर्वधर्मेषुविशेषेणापिकारणम् ॥
सारभोक्ताचसर्वत्रयतोऽतोजगदीश्वरः ॥ रसादिमानिनांदेहेससर्वत्रव्यवस्थि
तः ॥ अबादयःपार्षदाश्चध्येयःसज्ञानिनांहरिः ॥ रसादिसंपत्याअन्येषांवासुदेवो

जगत्पतिरिति ॥ स्वभावोजीवएवच ॥ सर्वस्वभावोनियतस्तेनैवकिंमुतापरं ॥ न
तदस्तिविनायत्स्यान्मयाभूतंचराचरमितिच ॥ धर्माविरुद्धःकामरागविवर्जित
मित्याद्युपासनार्थं ॥ उक्तंचगीताकल्पे ॥ धर्माविरुद्धकामेऽसावुपास्यःकाममभि
च्छता ॥ विहीनेकामरागादेर्बलेचबलमिच्छता॥ध्यातस्तत्रत्वनिच्छद्भिर्ज्ञानमेव
ददातिसइत्यादि ॥ पुण्योगंधइतिभोगापेक्षयाच ॥ तथाचश्रुतिः ॥ पुण्यमेवा
मुंगच्छति ॥ नहवैदेवान्पापंगच्छति ॥ ऋतंपिबंतौसुकृतस्यलोकइत्यादिका ॥
ऋतंचपुण्यं ॥ ऋतंसत्यंतथाधर्मःसुकृतंचाभिधीयतइत्यभिधानात् ॥ ऋतंतुमान
सोधर्मःसत्यंःस्यात्संप्रयोगगइतिच ॥ नचानश्नन्नन्योअभिचाकशीति ॥ अन्यो
निरन्नोपिबलेनभूयानित्यादिविरोधि ॥ स्थूलानशनोक्तेः॥आहचसूक्ष्माशनम् ॥
प्रविविक्ताहारतरइववैभवत्यस्माच्छारीरादात्मनः॥ नचात्रजीवउच्यते॥ शारीरा
दात्मनइतिभेदाभिधानात्॥स्वप्नादिश्चशारीरएव ॥ शारीरस्तुत्रिधाभिन्नोजाग्र
दादिष्ववस्थितेरितिवचनाद्धारुडे॥अस्मादितित्वीश्वरव्यावृत्त्यर्थम्॥शारीरौताउ
भौज्ञेयौजीवश्चेश्वरसंज्ञितः ॥ अनादिबंधनस्त्वेकोनित्यमुक्तस्तथापरइतिवच
नान्नारदीये॥ भेदश्रुतेश्च ॥ सतिगत्यंनरेपुरुषभेदएवकल्पोनत्ववस्थाभेदः॥ आह

च ॥ प्रविविक्तभुग्यतोह्यस्माच्छारीरात्पुरुषोत्तमः ॥ अतोऽभोक्ताचभोक्ताचस्थू
लाभोगात्सएवत्विितिगीताकल्पे ॥ नत्वहंतेष्विितितदनाधारत्वमुच्यते ॥ उक्तंच ॥ त
दाश्रितंजगत्सर्वंनासौकुत्रचिदाश्रितइतिगीताकल्पे ॥ १३ तर्हिकथमेवंनज्ञायसइत्यत
आह ॥ त्रिभिरिति ॥ तादात्म्यार्थेमयट् ॥ तच्चोक्तम् ॥ तादात्म्यार्थेविकारार्थेप्राचुर्या
र्थेमयट्त्रिधेति ॥ नहिगुणकार्यभूतामाया ॥ गुणमयीतिचवक्ष्यति ॥ सिद्धंच ॥
कार्यस्यापितादात्म्यम् ॥ तादात्म्यंकार्यधर्मादेः ॥ संयोगोभिन्नवस्तुनेत्यादि
व्यासयोगे ॥ भावैःपदार्थैः ॥ सर्वेभावादृश्यमानागुणमयाएतएवेतिदर्शयति ॥ ए
भिरिति ॥ ज्ञानिव्यावृत्त्यर्थमिति ॥ गुणमयदेहादिकंदृष्ट्वेश्वरदेहेपितादृशइतिमाया
मोहितइत्यर्थः ॥ जगादचव्यासयोगे ॥ गौणान्ब्रह्मादिदेहादीन्दृष्ट्वाविष्णोर
पीदृशः ॥ देहादिरितिमन्वानामोहितोऽज्ञजनोभृशमिति ॥ एभ्योगुणमयेभ्यः ॥
गुणेभ्यश्चपरमितिवक्ष्यमाणत्वात् ॥ केवलोनिर्गुणश्चेत्यादिश्रुतिभ्यश्च ॥ त्रै
गुण्यवर्जितमितिचोक्तम् ॥ १४ कथमनादिकालेमोहानत्ययोबहूनामित्यतआह ॥
दैवीति ॥ अयमाशयः ॥ मायाह्येषामोहिका ॥ साचसृष्ट्यादिक्रीडादिमद्देवसंबं
धित्वादतिशक्तेर्दुरत्यया ॥ तथाहिदेवशब्दार्थंपठंति ॥ दिवुक्रीडाविजिगीषाव्यव

हारद्युतिस्तुतिमोदमदकांतिगतिष्विति ॥ कथंदैवी ॥ मदीयत्वात् ॥ अहंहिदेवइ
ति ॥ अब्रवीच्च ॥ श्रीभूदुर्गेतियाभिन्नामहामायातुवैष्णवी ॥ तच्छक्त्यनंतांशही
नाथापितस्याश्रयात्प्रभोः ॥ अनंतब्रह्मरुद्रादेर्नास्याःशक्तिकलापिहि॥ तेषांदुरत्य
याप्येषाविनाविष्णुप्रसादतइतिचव्यासयोगे॥ तर्हिनकथंचिदत्येतुंशक्येत्यतआ
ह ॥ मामेवेति ॥ अन्यत्सर्वंपरित्यज्यमामेवयेप्रपद्यंते ॥ गुर्वादिवंदनंमय्येवसम
र्पयंति ॥ सएवचतत्रस्थित्वागुर्वादिर्भवतीत्यादिपश्यंति॥ आहचनारदीये ॥ मत्सं
पत्त्यातुगुर्वादीन्भजंतेमध्यमानराः॥मदुपाधितयातांश्चसर्वभूतानिचोत्तमाइति।
आचार्यचैत्यवपुषास्वगतिंव्यनक्षीतिच ॥ १५तर्हिकिमितिसर्वेपिनात्याययन्नित्य
तआह॥नमामिति॥दुष्कृतित्वान्मूढाः॥ अतएवनराधमाः॥ अपहृतज्ञानत्वाच्चमू
ढाः॥अतएवासुरंभावमाश्रिताः॥ सचवक्ष्यते॥प्रवृत्तिंचनिवृत्तिंचेत्यादिना ॥ अप
हारोऽभिभवः॥उक्तंचैतद्व्यासयोगे॥ ज्ञानंस्वभावोजीवानांमाययाचाभिभूयतइ
ति ॥ असुषुरताःअसुराः ॥ तच्चोक्तंनारदीये ॥ ज्ञानप्रधानादेवास्तुअसुरास्तु
रताअसावीति॥१७एकस्मिन्नेवभक्तिरित्येकभक्तिः॥ तच्चोक्तंगारुडे ॥ मय्येवभक्ति
र्नान्यत्रएकभक्तिःसउच्यतइति ॥ १९बहूनांजन्मनामंतेज्ञानवान्भवति॥ तच्चोक्तंब्रा

ह्ये ॥ जन्मभिर्बहुभिर्ज्ञात्वाततोमांप्रतिपद्यतइति ॥ [२२]प्रकृत्यास्वभावेन ॥ स्वभावः
प्रकृतिश्चैवसंस्कारोवासनेतिचेत्यभिधानात् ॥ [२३]येयांब्रह्मादिरूपांतनुं॥उक्तंचना
रदीये॥ अंतोब्रह्मादिभक्तानांमद्भक्तानामनंततेति॥ मुक्तश्चकांगतिंगच्छेत्मोक्ष
श्चैवकिमात्मकइत्यादेःपरिहारसंदर्भाच्चमोक्षधर्मेषु॥ अवतारेमहाविष्णोर्भक्तःकु
त्रचमुच्यतइत्यादेश्चब्रह्मवैवर्ते ॥ [२४]कोविशेषस्तवान्येभ्यइत्यतआह ॥ अव्यक्तमि
ति ॥ कार्यदेहादिवर्जितम्॥ तद्वानिवप्रतीयसइत्यतआह॥ व्यक्तिमापन्नमिति ॥
कार्यदेहाद्यापन्नम् ॥ तच्चोक्तम्॥ सदसतःपरं॥ नतस्यकार्यम्॥ अपाणिपादः ॥
आनंददेहंपुरुषंमन्यंतेगौणदैहिकमित्यादौ॥भावंयाथार्थ्यं॥तथाब्रवीच्च॥ याथात
थ्यमजानंतःपरंतस्यविमोहिताइत्यादि॥ [२५]अज्ञानंचमदिच्छयेत्याह॥ नाहमिति ॥
योगेनसामर्थ्योपायेन॥मायया च॥ मयैवमूढोनाभिजानाति॥तथाहपाद्मे ॥ आ
त्मनःप्रावृतिंचैवलोकचित्तस्यबंधनम् ॥ स्वसामर्थ्येनदेव्याचकुरुतेसमहेश्वरइ
ति॥[२६]नेमांमायाबध्नातीत्याह॥ वेदेति॥नकश्चनातिसमर्थोपिस्वसामर्थ्यात् ॥ [२७]दैवं
मोहेनसुखदुःखादिविषयमोहेन॥इच्छाद्वेषयोःप्रवृद्धयोर्नहिकिंचिज्ज्ञातुंशक्यम्॥
कारणांतरमेतत् ॥ सर्गेसर्गकाले ॥ आरभ्यैव ॥ शरीरेहिसतीच्छादयः॥ पूर्वंत्व

ज्ञानमात्रम् ॥ विपरीताश्चकेचित्संतीत्याह ॥ येषामिति ॥ जरामरणमोक्षाये
त्यन्यकामनिवृत्त्यर्थम् ॥ मोक्षेसक्तिस्तुत्यर्थंवा ॥ नविधिः ॥ मुमुक्षोरमुमुक्षुस्तु
वरोह्येकांतभक्तिभागितीतरस्तुतेनारदीये ॥ नात्यंतिकमितिच ॥ देवानांगुण
लिंगानामानुश्रविककर्मणाम् ॥ सत्वएवैकमनसोवृत्तिःस्वाभाविकीतुया ॥ अ
निमित्ताभगवतिभक्तिःसिद्धेर्गरीयसी ॥ जरयत्याशुयाकोशंनिगीर्णमनलोयथे
तिभागवतेलक्षणाच्च॥आहच॥सर्वेवेदास्तुदेवार्था देवानारायणार्थकाः॥ नाराय
णस्तुमोक्षार्थोमोक्षोनान्यार्थइष्यते॥एवंमध्यमभक्तानामेकांतानांनकस्यचित्॥
अर्थोनारायणोदेवःसर्वमन्यत्तदर्थकमितिगीताकल्पे ॥ तएवचविदुः॥ यमेवैषवृ
णुतइतिश्रुतेः ॥ ७ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भ
गवद्गीताभाष्येसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥
श्रीगुरुभ्योनमः॥ ॐ मरणकालकर्तव्यगत्याद्यस्मिन्नध्यायउपदिशति ॥ परमम
क्षरंब्रह्म ॥ वेदादिशंकाव्यावृत्त्यर्थमेतत्॥आत्मन्यधियत्तदध्यात्मं॥ आत्माधिका
रेयत्तदितिवा॥ तथाहि॥ जैवःस्वभावः॥ स्वाख्योभावःस्वभावइतिव्युत्पत्त्याजीवो
वास्वभावः॥ सर्वदास्यैवैकप्रकारेणेतिभावः॥ अंतःकरणादिव्यावृत्त्यर्थोभावश

ब्दः ॥ नन्वेकप्रकारेणस्थितिरंतःकरणादेः ॥ विकारित्वात् ॥ स्वशब्दईश्वरव्यावृत्त्य
र्थः ॥ भूतानांजीवानांभावानांजडानांपदार्थानांचोद्भवकरीश्वरक्रियाविसर्गः ॥
विशेषेणसर्जनंविसर्गइत्यर्थः ॥ भूतानिशरीरान्जीवानधिकृत्ययत्तदधिभूतम् ॥
क्षरोभावोविनाशिकार्यपदार्थः ॥ अव्यक्तांतर्भावेपितस्याप्यन्यथाभावाख्यो
विनाशोस्त्येव ॥ तच्चोक्तं ॥ अव्यक्तंपरमेव्योम्निनिष्क्रियेसंप्रलीयतइति ॥ त
स्मादव्यक्तमुत्पन्नंत्रिगुणद्विजसत्तमेतिच ॥ विकारोव्यक्तजन्महीतिस्कांदे ॥ पुरि
शयनात्पुरुषोजीवः ॥ सचसंकर्षणोब्रह्मावा ॥ ससर्वं देवानधिकृत्यतत्पतिरित्यधि
दैवतम् ॥ देवाधिकारस्थइतिवा ॥ सर्वयज्ञभोक्तृत्वादेरधियज्ञः ॥ अन्योधिय
ज्ञोग्न्यादिःप्रसिद्धइतिदेहइतिविशेषणम् ॥ भोक्तारंयज्ञतपसां ॥ त्रैविद्यामांये ऽ
प्यन्यदेवताभक्ता ॥ एतस्यवाक्षरस्यप्रशासनेगार्गिददतोमनुष्याःप्रशंसंतियज
मानंदेवाइत्यादेः ॥ कुतोत्यस्यध्रुवःस्वर्गः ॥ कुतोनैश्रेयसंपदमित्यादिपरिहाराश्च
मोक्षधर्मे ॥ भगवांश्चेत्तद्भोक्तृत्वादेरधियज्ञत्वंसिद्धमितिकथमित्यस्यपरिहारः
पृथङ्नोक्तः ॥ सर्वप्राणिदेहस्थरूपेणसाधियज्ञः ॥ अत्रेतिस्वदेहनिवृत्त्यर्थम् ॥
नहितत्रेश्वरस्यनियंतृत्वंपृथगस्ति ॥ नात्रोक्तंब्रह्मभगवतोन्यत् ॥ तेब्रह्मेत्युक्त्वा

साधिभूताधिदैवंमांसाधियज्ञंचयेविदुरितिपरामर्शात् ॥ तस्यैवप्रश्नात् ॥ सा
धियज्ञमितिभेदप्रतीतेस्तन्निवृत्त्यर्थमधियज्ञोहमित्युक्तम् ॥ मामित्यभेदप्रसिद्धे
रक्षरमित्येवोक्तम् ॥ आहचगीताकल्पे॥ देहस्थविष्णुरूपाणि अधियज्ञइतीरितः॥
कर्मेश्वरस्यसृष्ट्यर्थंतच्चापीच्छाद्यमुच्यते ॥ अधिभूतंजडंप्रोक्तमध्यात्मंजीवउ
च्यते ॥ हिरण्यगर्भोधिदैवंदेवःसंकर्षणोपिवा ॥ ब्रह्मनारायणोदेवःसर्वदेवेश्व
रेश्वरइति॥ यथाप्रतीतंवासर्वमत्रनैवविरुध्यतइतिच ॥ स्कांदेच ॥ आत्माभिमा
नाधिकारस्थितमध्यात्ममुच्यते ॥ देहाद्बाह्यंविनातीवबाह्यत्वादधिदैवतम् ॥ दे
वाधिकारगंसर्वंमहाभूताधिकारगम् ॥ तत्कारणंतथाकार्यमधिभूतंतदंतिका
दिति ॥ महाकौर्मेच ॥ अध्यात्मंदेहपर्यंतंकेवलात्मोपकारकम् ॥ सदेहजीवाभू
तानियत्तेषामुपकारकृत् ॥ अधिभूतंतुमायांतंदेवानामधिदैवतमिति ॥ मद्भावं॥
मयिसत्ताम् ॥ निर्दुःखनिरतिशयानंदात्मिकाम् ॥ तच्चोक्तं ॥ मुक्तानांचगतिर्ब्र
ह्मन्क्षेत्रज्ञइतिकल्पितइतिमोक्षधर्मे ॥ स्मरन्पुरुषस्त्यजतीतिभिन्नकालीनत्वे
प्यविरोधइतिमंदमतेःशंकामाभूदित्यंतइतिविशेषणम् ॥ सुमतेर्नैवशंकावका

विष्यतिशंका॥ त्यजन्देहंनकश्चित्तुमोहमाप्नोत्यसंशयमितिचस्कांदे ॥ तस्यहैत
स्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैषआत्मानिष्क्रामतीतिश्रुतिः ॥ सदातद्भाव
भावितइत्यंतकालस्मरणोपायमाहभावोंतर्गतंमनः ॥ तथाभिधानात् ॥ भावि
तत्वमतिवासितत्वम् ॥ भावनात्वतिवासनेत्यभिधानात् ॥ सदातद्भाविभावित
त्वंस्पष्टयति ॥ अभ्यासेति ॥ अभ्यासएवयोगोभ्यासयोगः ॥ दिव्यंपुरुषंपुरिश
यंपूर्णंच ॥ सवाअयंपुरुषःसर्वासुपूर्षुपुरिशयोनैनेनकिंचनानावृतंनैनेनाकिंचना
संवृतंमितिश्रुतेः ॥ दिव्यंस्तष्ट्यादिक्रीडायुक्तम् ॥ दिवुक्रीडेतिधातोः ॥ ध्येयमा
ह ॥ कविमिति ॥ कविसर्वज्ञम् ॥ यःसर्वज्ञइतिश्रुतेः ॥ त्वंकविःसर्ववेदनादितिच
ब्राह्मे॥ धातारंधारणपोषणकर्तारं॥डुधाञ्धारणपोषणयोरितिधातोः ॥ धातावि
धातापरमोतसंदृगितिचश्रुतिः ॥ ब्रह्मास्थाणुरित्यारभ्यतस्यप्रसादादिच्छंतितदा
दिष्टफलांगतिमित्यादिचमोक्षधर्मे ॥ तमसोव्यक्तात्परतास्थितम्॥तमसःपरस्ता
दित्यव्यक्तंवैतमसःपरस्ताद्धिसततइतिपिप्पलादशाखायाम् ॥ मृत्युर्वावतमो
मृत्युर्वैतमोज्योतिरमृतमितिश्रुतेः ॥ वायुजयादियोगयुक्तानांमृतिकालेकर्तव्य
माहविशेषतः ॥ प्रयाणकालइति ॥ वायुजयादियोगरहितानामपिज्ञानभ

साधिभूताधिदैवंमांसाधियज्ञंचयेविदुरितिपरामर्शात् ॥ तस्यैवप्रश्नात् ॥ सा
धियज्ञमितिभेदप्रतीतेस्तन्निवृत्त्यर्थमधियज्ञोहमित्युक्तम् ॥ मामित्यभेदप्रसिद्धे
रक्षरमित्येवोक्तम् ॥ आहचगीताकल्पे॥ देहस्थविष्णुरूपाणिअधियज्ञइतीरितः ॥
कर्मैश्वरस्यसृष्ट्यर्थंतच्चापीच्छाद्यमुच्यते ॥ अधिभूतंजडंप्रोक्तमध्यात्मंजीवउ
च्यते ॥ हिरण्यगर्भोधिदैवंदेवःसंकर्षणोपिवा ॥ ब्रह्मनारायणोदेवःसर्वदेवेश्व
रेश्वरइति॥ यथाप्रतीतंवासर्वमत्रनैवविरुध्यतइतिच ॥ स्कांदेच ॥ आत्माभिमा
नाधिकारस्थितमध्यात्ममुच्यते ॥ देहाद्बाह्यंविनातीवबाह्यत्वादधिदैवतम् ॥ दे
वाधिकारगंसर्वंमहाभूताधिकारगम् ॥ तत्कारणंतथाकार्यमधिभूतंतदंतिका
दिति ॥ महाकौर्मेच ॥ अध्यात्मंदेहपर्यंतंकेवलात्मोपकारकम् ॥ सदेहजीवाभू
तानियत्तेषामुपकारकृत् ॥ अधिभूतंतुमायांतंदेवानामधिदैवतमिति ॥ मंद्रावं॥
मयिसत्ताम् ॥ निर्दुःखनिरतिशयानंदात्मिकाम् ॥ तच्चोक्तं ॥ मुक्तानांचगतिर्ब्र
ह्मन्क्षेत्रज्ञइतिकल्पितइतिमोक्षधर्मे ॥ स्मरन्पुरुषस्त्यजतीतिभिन्नकालीनत्वे
प्यविरोधइतिमंदमतेःशंकामाभूदित्यंतइतिविशेषणम् ॥ सुमतेनैवशंकावका
शः ॥ स्मरंस्त्यजतीत्येककालीनत्वप्रतीतेः ॥ दुर्मतेर्दुःखान्नस्मरंस्त्यजतीतिभ

विष्यतिशंका॥ त्यजन्देहंनकश्चित्तुमोहमाप्नोत्यसंशयमितिचस्कांदे ॥ तस्यहैत
स्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैषआत्मानिष्क्रामतीतिश्रुतिः ॥ सदातद्भाव
भावितइत्यंतकालस्मरणोपायमाहभावोंतर्गतंमनः ॥ तथाभिधानात् ॥ भावि
तत्वमतिवासितत्वम् ॥ भावनात्वतिवासनेत्यभिधानात् ॥ सदातद्भाविभावित
त्वंस्पष्टयति ॥ अभ्यासेति ॥ अभ्यासएवयोगोभ्यासयोगः ॥ दिव्यंपुरुषंपुरिश
यंपूर्णंच ॥ सवाअयंपुरुषःसर्वासुपूर्षुपुरिशयोनैनेनकिंचनानावृतंनैनेनकिंचना
संवृतंमितिश्रुतेः ॥ दिव्यंस्सृष्ट्यादिक्रीडायुक्तम् ॥ दिवुक्रीडेतिधातोः ॥ ध्येयमा
ह ॥ कविमिति ॥ कविसर्वज्ञम् ॥ यःसर्वज्ञइतिश्रुतेः ॥ त्वंकविःसर्ववेदनादितिच
ब्राह्मे॥ धातारंधारणपोषणकर्तारं॥डुधाञ्धारणपोषणयोरितिधातोः ॥ धातावि
धातापरमोतसंदृगितिचश्रुतिः ॥ ब्रह्मास्थाणुरित्यारभ्यतस्यप्रसादादिच्छंतितदा
दिष्टफलांगतिमित्यादिचमोक्षधर्मे ॥ तमसोव्यक्तात्परतास्थितम्॥तमसःपरस्ता
दित्यव्यक्तंवैतमसःपरस्ताद्भिसततइतिपिप्पलादशाखायाम् ॥ मृत्युर्वावतमो
मृत्युर्वैतमोज्योतिरमृतमितिश्रुतेः ॥ वायुजयादियोगयुक्तानांमृतिकालेकर्तव्य
माहविशेषतः ॥ प्रयाणकालइति ॥ वायुजयादियोगरहितानामपिज्ञानभ

क्तिवैराग्यादिसंपूर्णानांभवत्येवमुक्तिः ॥ तद्वतांत्वीषज्ज्ञानाद्यसंपूर्णानामपिनि
पुणानांतद्बलात्कथंचिद्भवतीतिविशेषः॥ उक्तंचभागवते॥ पानेनतेदेवकथासुधा
याःप्रवृद्धभक्त्याविशदाशयाये ॥ वैराग्यसारंप्रतिलभ्यबोधंयथांजसात्वापुरकुं
ठधिष्ण्यम् ॥ तथापरेत्वात्मसमाधियोगबलेनजित्वाप्रकृतिंबलिष्ठाम् ॥ त्वा
मेवधीराःपुरुषंविशंतितेषांश्रमःस्यान्नतुसेवयातइति ॥ येतुतद्भाविताःलोकाए
कांतित्वंसमाश्रिताः॥ एतदभ्यधिकंतेषांतत्तेजःप्रविशंत्युतेतिचमोक्षधर्मे॥संपूर्णा
नांभवेन्मोक्षोविरक्तिज्ञानभक्तिभिः ॥ नियमेनतथापीरजयादियुतयोगिनाम् ॥
वश्यत्वान्मनसस्त्वीषत्पूर्वमप्याप्यतेध्रुवमितिचव्यासयोगे ॥ ११तंदेवध्येयंप्रपंचय
ति।यदक्षरमित्यादिना॥ प्राप्यतेमुमुक्षुभिरितिपदम्॥ पदगताविति धातोः॥ तद्वि
ष्णोःपरमंपदमितिश्रुतेश्च॥ गीयसेपदमित्येवमुनिभिःपद्यसेयतइतिवचनान्नाना
रदीये॥ १२ब्रह्मनाडींविनायद्यन्यत्रगच्छतितर्हिविनामोक्षंस्थानांतरंप्राप्नोतीतिसर्व
द्वाराणिसंयम्यनिर्गच्छंश्चक्षुषासूर्यंदिशःश्रोत्रेणचैवहीत्यादिवचनाद्व्यासयोगे ॥
मोक्षधर्मेचहृदिनारायणे॥ह्रियतेत्वयाजगद्यस्मात्हृदित्येवंप्रभाष्यसइतिपाद्मे॥
नहिमूर्ध्निप्राणेस्थितेहृदिमनसःस्थितिःसंभवति ॥ यत्रप्राणोमनस्तत्रतत्रजीवः

परस्तथेतिव्यासयोगे ॥ योगधारणामास्थितः ॥ योगभरणएवातियुक्तइत्यर्थः ॥ नित्य[14]युक्तस्य ॥ नित्योपायवतः ॥ योगिनःपरिपूर्णयोगस्य ॥ [15]तस्मानिंस्तौति ॥ मामिति ॥ परमांसंसिद्धिंगताइतिहितत्रहेतुः ॥ [16]महामेरुस्थब्रह्मसदनमारभ्यनपुनरावृत्तिः ॥ तच्चोक्तंनारायणगोपालकल्पे ॥ आमेरुब्रह्मसदनादाजनान्नजनिर्भुवि ॥ तथाप्यभावःसर्वत्रप्राप्यैववसुदेवजमिति ॥ [17]मांप्राप्यनपुनरावृत्तिरितिस्थापयितुंअव्यक्ताख्यात्मसामर्थ्यंदर्शयितुंप्रलयादिदर्शयति ॥ सहस्रयुगेत्यादिना ॥ सहस्रशब्दोत्रानेकवाची ॥ ब्रह्मपरं ॥ साविश्वरूपस्यरजनीतिहिश्रुतिः ॥ द्विपरार्धप्रलयएवात्रविवक्षितः ॥ अव्यक्ताद्व्यक्तयःसर्वाइत्युक्तेः ॥ उक्तंचमहाकौर्मे ॥ अनेकयुगपर्यंतमहर्विष्णोस्तथानिशा ॥ रात्र्यादौलीयतेसर्वमहरादौचजायतइतिच ॥ यःससर्वेषुभूतेष्वितिवाक्यशेषाच्च ॥ [21]अव्यक्तोभगवान् ॥ यंप्राप्यननिवर्ततइतिमामुपेत्येत्युक्तस्यपरामर्शात् ॥ अव्यक्तंपरमंविष्णुमितिप्रयोगाच्चगारुडे ॥ धामस्वरूपं ॥ तेजःस्वरूपंचगृहंप्राज्ञैर्धामेतिगीयतइत्यभिधानात् ॥ [22]परमसाधनमाह ॥ पुरुषइति ॥ [23]यत्कालाद्यभिमानिदेवतागताआवृत्त्यनावृत्तीगच्छंतिताआह ॥ यत्रेत्यादिना ॥ कालइ

त्युपलक्षणअग्न्यादेरपिवक्ष्यमाणत्वात् ॥ ज्योतिरर्चिः ॥ तेऽर्चिषमभिसंभवंती
तिश्रुतिः ॥ तथाचनारदीये ॥ अग्निंप्राप्यततश्चार्चिस्ततश्चाप्यहरादिकमिति ॥
अभिमानिदेवताश्चाग्न्यादयः ॥ कथमन्यथाअह्नआपूर्यमाणपक्षमितियुज्य
ते ॥ दिवादिदेवताभिस्तुपूजितोब्रह्मयातिहीतिचब्राह्मे ॥ मासाभिमानिभ्योऽ
यनाभिमानीचपृथक् ॥ तच्चोक्तंगारुडे ॥ पूजितस्त्वयनेनासौमासैःपरिवृतेनही
ति ॥ अहरभिजिताशुक्लंपूर्णमास्याअयनंविषुवासह ॥ तच्चोक्तंब्रह्मवैवर्ते ॥ सा
ह्नामध्यंदिनेनाथशुक्लेनचसपूर्णिमा ॥ सविष्वाचायनेनासौपूजितःकेशवंव्रजेदि
ति ॥ एतेसृतीसोपायेज्ञात्वाअनुष्ठायनमुह्यति ॥ तच्चाहस्कांदे ॥ सृतीज्ञात्वातु
सोपायेअनुष्ठायचसाधनम् ॥ नकश्चिन्मोहमाप्नोतिनचान्यातत्रवैगतिरिति ॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येऽष्टमोध्यायः॥८॥
श्रीरंगनाथायनमः॥ ॥ सप्तमाध्यायोक्तंस्पष्टयत्यस्मिन्नध्याये ॥ राजविद्या
प्रधानविद्या ॥ प्रत्यक्षंब्रह्मावगम्यतेयेनतत्प्रत्यक्षावगमम् ॥ अक्षेष्विंद्रियेषुप्रतिप्र
तिस्थितइतिप्रत्यक्षः ॥ तथाचश्रुतिः ॥ यःप्राणेतिष्ठन्प्राणादंतरोयंप्राणोनवेदय
स्यप्राणःशरीरंयःप्राणमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ योवाचितिष्ठन्य

श्चक्षुषितिष्ठन्नित्यादेः ॥ यएषोंतरक्षिणिपुरुषोदृश्यतइतिच ॥ अंगुष्ठमात्रःपुरुषोंगु
ष्ठंचसमाश्रितइतिच॥ त्वंमनस्त्वंचंद्रमास्त्वंचक्षुरित्यादेश्चमोक्षधर्मे॥सप्रत्यक्षःप्र
तिप्रतिहिसोक्षेष्वक्षवान्भवतियएवंविद्वान्प्रत्यक्षंवेदेतिसामवेदेबाभ्रव्यशाखा
याम्॥धर्मोभगवान्तद्विषयंधर्म्यं॥सर्वंजगद्धत्तइतिधर्मः॥पृथिवीधर्ममूर्धनीति
प्रयोगान्मोक्षधर्मे ॥ भारभृत्कथितोयोगीतिच ॥ भर्तासन्भ्रियमाणोबिभर्तीति
चश्रुतिः ॥ धर्मोवाइदमग्रआसीन्नपृथिवीनवायुर्नाकाशोनब्रह्मानरुद्रोनदेवान
ऋषयः ॥ सोध्यायदितिचसामवेदेबाभ्रव्यशाखायां ॥ प्रत्यक्षावगमशब्देनाप
रोक्षज्ञानसाधनत्वमुक्तम्॥तज्ज्ञानाद्याह ॥ मयेति ॥ तर्हिकिमितिनदृश्यतइत्यत
आह ॥ अव्यक्तमूर्तिनेति ॥ मत्स्थत्वेपियथापृथिव्यांस्पृष्टास्थितानिनतथाम
यीत्याह ॥ नचेति ॥ नदृश्यश्चक्षुषाचासौनस्पृश्यःस्पर्शनेनचेतिचमोक्षधर्मे ॥
संज्ञासंज्ञेतिच ॥ ममात्मादेहएवभूतभावनः ॥ महाविभूतेमाहात्म्यशरीरेतिहि
मोक्षधर्मे ॥ मत्स्थानिनचमत्स्थानीत्यत्रदृष्टांतमाह ॥ यथाकाशइति ॥ नत्वा
काशस्थितोवायुःस्पर्शाद्याप्नोति ॥ ज्ञानप्रदर्शनार्थंप्रलयादिप्रपंचयति ॥
सर्वभूतानीत्यादिना ॥ प्रकृत्यवष्टंभस्तुयथाकश्चित्समर्थोपिपादेनगंतुंलीलय

दंडमवष्टभ्यगच्छति ॥ सर्वभूतगुणैर्युक्तंनैवंमांज्ञातुमर्हसीति ॥ सर्वभूतगुणै
र्युक्तंदैवंमांज्ञातुमर्हसीतिचमोक्षधर्मे ॥ विदित्वासप्तसूक्ष्माणिषडंगंचमहेश्वर
म् ॥ प्रधानविनियोगस्थःपरंब्रह्माधिगच्छतीतिच ॥ नकुत्रचिच्छक्तिरनं
तरूपाविहन्यतेतस्यमहेश्वरस्य ॥ तथापिमायामधिरुह्यदेवःप्रवर्ततेसृष्टिविला
पनेष्वित्यृग्वेदखिलेषु ॥ मय्यनंतगुणेनंतेगुणतोनंतविग्रहइतिभागवते ॥ अथ
कस्मादुच्यतेपरंब्रह्मेति॥बृंहतिबृंहयतिचेत्याथर्वणे॥ परास्यशक्तिर्विविधैवश्रूय
तेइतिच ॥ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ नतेवि
ष्णोजायमानोनजातोदेवमहिम्नःपरमंतमापेत्यादेश्च ॥ प्रकृतेर्वशादवशंवमेवैत
त्सर्जनेसर्वकर्मण्यनंतशक्तोपिस्वमाययैव ॥ मायावशंचावशंलोकमेतत्तस्मा
त्तस्यस्यात्सिपासीशविष्णोइतिगौतमखिलेषु॥ उदासीनवत् ॥ नतूदासीनः॥
तदर्थमाह ॥ असक्तमितिअवाक्यनादरइतिश्रुतिः ॥ द्रव्यंकर्मचकालश्चस्वभा
वोजीवएवच ॥ यदनुग्रहतःसंतिनसंतियदुपेक्षयेतिभागवते ॥ यस्यासक्त्यैव
सर्वकर्मशक्तिःकुतस्तस्यसर्वकर्मबंधइतिभावः ॥ नकर्मणावर्धतेनोकनीयानिति
श्रुतिः॥यःकर्माणिनियामयतिकथंचतेकर्मबध्नाति॥ उदासीनवदितिचेत्स्वयमेव

प्रकृतिःसूयतइत्यत आह ॥ मयेति ॥ प्रकृतिसूतिद्रष्टाकर्ताऽहमेवेत्यर्थः ॥ तथाचश्रु
तिः ॥ यतःप्रसूताजगतःप्रसूतीतोयेनजीवान्व्यससर्जभूम्यामिति ॥ तर्हिकथंके
चित्त्वामवजानंतिकाचतेषांगतिरित्यतआह ॥ अवजानंतीत्यादिना ॥ मानु
षींतनुं ॥ मूढानांमानुषवत्प्रतीतां ॥ नतुमनुष्यरूपाम् ॥ उक्तंचमोक्षधर्मे ॥ यत्किं
चिदिहलोकेवैदेहबद्धंविशांपते ॥ सर्वंपंचभिराविष्टंभूतैरीश्वरबुद्धिजैः ॥ ईश्वरो
हिजगत्स्रष्टाप्रभुर्नारायणोविराट् ॥ भूतांतरात्मावरदःसगुणोनिर्गुणोपिच ॥ भूत
प्रलयमव्यक्तंशुश्रूषुर्नृपसत्तमेतिच ॥ अवतारप्रसंगेचैतदुक्तं ॥ अतोनाव
ताराश्चपृथक्छंक्याः ॥ रूपाण्यनेकान्यसृजत्प्रादुर्भावभवायसः ॥ वराहंनार
सिंहंचवामनंमानुषंतथेति ॥ तत्रैवप्रथमसर्गकालएवावताररूपविभक्त्युक्तेः ॥ अ
तोनतेषांमानुषत्वादिर्विनाभ्रांतिम् ॥ भूतंमहदीश्वरंचेतिभूतमहेश्वरं ॥ तथाहिबा
भ्रव्यशाखायाम् ॥ अनाद्यनंतंपरिपूर्णरूपमीशंवराणामपिदेववीर्यमिति ॥ अस्य
महतोभूतस्यनिश्वसितमितिच ॥ ब्रह्मपुरोहितब्रह्मकायिकमहाराजिकेतिमोक्षध
र्मे ॥ तेषांफलमाह ॥ मोघाशाइति ॥ वृथाशाः ॥ भगवद्द्वेषिभिराशासितमामु
ष्मिकंनकिंचिदाप्यते ॥ यज्ञादिकर्माणिचतेषांवृथैव ॥ ज्ञानंचकेनापिब्रह्मरुद्रा

दिभक्त्याद्युपायेननकश्चित्पुरुषार्थआमुष्मिकस्तराप्यतइत्यर्थः॥ वक्ष्यतिच॥तान
हंद्विषतःक्रूरानित्यादि ॥ मोक्षधर्मेच ॥ कर्मणामनसावाचायोद्विष्याद्विष्णुम
व्ययम् ॥ मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाः ॥ योद्विष्याद्विबुधश्रेष्ठंदेवं
नारायणंहरिम् ॥ कथंसनभवेद्द्वेष्यआलोकांतस्यकस्यचिदिति॥ सर्वोत्कृष्टेज्ञा
नभक्तीहियस्यनारायणेपुष्करविष्टराद्ये ॥ सर्वावमेद्वेषयुतश्चतस्मिन्भ्रूणानंत
घ्नोप्यस्यसमोनचैवेतिचसामवेदशांडिल्यशाखायाम्॥ द्वेषाच्चैद्यादयोनृपाः॥ वै
रेणयंनृपतयःशिशुपालपौंड्रसाल्वादयोगतिविलासविलोकनाद्यैः ॥ ध्यायंत
आकृतधियःशयनासनादौतत्साम्यमीयुरनुरक्तधियःपुनःकिमित्यादितुभागवते
भक्तप्रियत्वज्ञापनार्थंनित्यध्यानस्तुत्यर्थंच। स्वभक्तस्यकदाचिच्छापबलाद्द्वेषिणो
ऽपिभक्तिफलमेवभगवान्ददातीति ॥ भक्ताएवहितेपूर्वंशिशुपालादयः॥ शापब
लादेवद्वेषिणः॥ तत्प्रश्नेपूर्वंपार्षदत्वशापादिकथनाच्चैतज्ज्ञायते ॥ अन्यथाकिमि
तितदप्रस्तुतमुच्यते॥ भगवतःसाम्यकथनंतुद्वेषिणामपिद्वेषमनिरूप्यपूर्वतनभक्ति
फलमेवददातीतिज्ञापयितुं ॥ नमेभक्तःप्रणश्यतीतिवक्ष्यति ॥ नचभावोहिभव
कारणमित्यादिविरोधः॥ द्वेषभाविनांद्वेषएवहिभवतीतियुक्तम्॥ अन्यथागुरुद्वेषि

णोऽपिगुरुत्वंभवतीत्याद्यनिष्टमापद्येत ॥ नचाकृतधीत्वेऽविशेषः ॥ तेषामेवहि
रण्यकशप्वादीनांपापप्रतीतेः ॥ हिरण्यकशिपुश्चापिभगवन्निंदयातमः ॥ वि
विक्षुरत्यगात्सूनोःप्रह्लादस्यानुभावतइति ॥ यदनिंदत्पितामह्यमित्यारभ्यत
स्मात्पितामेपूयेतदुरंताद्दुस्तरादघादितिप्रह्लादेनभगवतोवरयाचनाच्च ॥ बह्वग्रं
थेषुचनिषेधः ॥ कुत्रचिदेवतदुक्तिरितिविशेषः ॥ यस्मिंस्तदुच्यतेतत्रैवचनिषे
धउक्तः ॥ महातात्पर्यविरोधश्चोक्तःपुरस्तात् ॥ अयुक्तिमद्भ्योयुक्तिमंत्येवबल
वंतिवाक्यानि ॥ ययुक्तयश्चोक्ताअन्येषां ॥ नचैषांकाचिद्गतिः ॥ साम्येपिवाक्य
योर्लोकानुकूलाननुकूलयोर्लोकानुकूलमेवबलवत् ॥ लोकानुकूलंचभक्तप्रियत्वं
नेतरत् ॥ उक्तंचतेषांपूर्वभक्तत्वं ॥ मन्येऽसुरान्भागवतांस्त्र्यधीशेसंरंभमार्गाभि
निविष्टचित्तानित्यादि ॥ अतोनभगवद्द्वेषिणांकाचिद्गतिरितिसिद्धम् ॥ [१३]द्वेषंकारण
माह ॥ राक्षसीमिति ॥ नेतरेद्विषंतीतिदर्शयितुंदेवानाह ॥ महात्मानइत्यादिना ॥
सर्वत्रैकएवनारायणःस्थितइत्येकत्वेन ॥ पृथक्त्वेनसर्वतोवैलक्ष्येणनबहुधाहित
स्यरूपमाभाति ॥ शुक्लमिवरोहितमिवाथोनीलमथार्जुनमितिसनत्सुजाते ॥ दै
वमेवापरइत्युक्तप्रकारेणबहवोबहुधा ॥ [१६]प्रतिज्ञातंविज्ञानमाह ॥ अहंक्रतुरित्यादि

ना ॥ क्रतवोग्निष्टोमादयः ॥ यज्ञोदेवतामुद्दिश्यद्रव्यपरित्यागः ॥ उद्दिश्यदेवान्
द्रव्याणांत्यागोयज्ञइतीरितइत्यभिधानात् ॥ गम्यतेमुमुक्षुभिरितिगतिः॥ तथा
हिसामवेदेवासिष्टशाखायाम् ॥ अथकस्माढुच्यतेगतिरितिब्रह्मैवगतिस्तद्धिगम्य
तेपापविमुक्तैरिति ॥ साक्षादीक्षतइतिसाक्षी ॥ तथाहिबाष्कलशाखायाम् ॥
ससाक्षादिदमद्राक्षीद्यदद्राक्षीत्तत्साक्षिणःसाक्षित्वमितिच ॥ शरणमाश्रयः
संसारभीतस्य ॥ परमंयःपरायणमित्याद्युक्तम् ॥ नारायणंमहाज्ञेयंविश्वा
त्मानंपरायणमितिच ॥ संहारकालेप्रकृत्याजगदत्रनिधीयतइतिनिधानं ॥ तथा
त्यृग्वेदखिलेषु। अपश्यमप्ययेमाययाविश्वकर्मण्यदोजगन्निहितंशुभ्रचक्षुरिति॥
सत्कार्यं ॥ असत्कारणम् ॥ सदभिव्यक्तरूपत्वात्कार्यमित्युच्यतेबुधैः ॥ असद
व्यक्तरूपत्वात्कारणंचापिशब्दितमितित्यभिधानात् ॥ असच्चसच्चैवचयद्विश्वंस
दसतःपरमितिभारते ॥ तथापिमद्भजनमेवान्यदेवताभजनाद्वरमितिदर्शयति ॥
त्रैविद्याइत्यादिना॥ अनन्याः॥ अन्यदचिंतयित्वा॥ तथाहिगौतमखिलेषु॥सर्वंप
रित्यज्यमनोगतंयद्विनादेवंकेवलंशुद्धमाद्यम् ॥ येचिंतयंतीहतमेवधीराअनन्या
स्तेदेवमेवाविशंतीतिच॥ कामंकालेनमहताएकांतित्वात्समाहितैः ॥शक्योद्रष्टुंस

भगवान्प्रभासंदृश्यमंडलइतिमोक्षधर्मे ॥ नित्यमभितःसर्वतोयुक्तानां ॥ [23]तेंद्यंहं
क्रतुरित्याद्यसत्यमित्यतआह ॥ येपीति॥[24]कारणमाह ॥ विधिपूर्वकत्वे ॥ अहंहीति॥
[25]फलंविविच्याह ॥ यांतीति ॥ [26]दुर्बलैस्त्वंपूजयितुमशक्योमहत्त्वादित्याशंक्याह ॥
पत्रमिति ॥ नत्वविहितपत्रादि ॥ तस्यापराधत्वोक्तेर्वाराहादौ ॥ भक्त्यैवाहंतुष्यइ
तिभावः॥ भक्तप्रियंसकललोकनमस्कृतंचेतिभारते॥ एतावानेवलोकेस्मिन्पुंसां
स्वार्थःपरःस्मृतः॥ एकांतभक्तिर्गोविंदेयत्सर्वत्रात्मदर्शनं ॥ [27]अंतोयत्करोषि॥ [28]तर्हि
स्नेहादिमत्त्वादल्पभक्तस्यापिकस्यचिद्बहुफलंददासि ॥ विपरीतस्यापिकस्यचि
द्विपरीतमित्यतआह ॥ समोहमिति ॥ तर्हिनभक्तिःप्रयोजनमित्यतआह ॥ येभजं
तीति ॥ मयितेतेषुचाप्यहमिति ॥ ममतेवशास्तेषांचाहंवशइति॥उक्तंचपैङ्गिखिले
षु ॥ येवैभजंतेपरमंपुमांसंतेषांवशःसतुतेमद्वशाश्चेति ॥ तद्वशाएवतेसर्वदा ॥ त
थापिबुद्धिपूर्वाबुद्धिपूर्वकत्वेनभेदः॥ उद्धवादिवच्छिशुपालादिवच्च ॥ तच्चोक्तंतत्रै
व ॥ अबुद्धिपूर्वाद्योवशस्तस्यध्यानात्पुनर्वशोभवतेबुद्धिपूर्वमिति ॥ [30]नंभवत्येवप्रा
यस्तद्भक्तस्सुदुराचारस्तथापिबहुपुण्येनयदिकथंचिद्भवतितर्हिसाधुरेवसमंतव्यः
[31]कुतः॥क्षिप्रंभवतिधर्मात्मा॥ देवदेवांशादिष्वेवचैतद्भवति॥ उक्तंचशांडिल्यशाखा

यां ॥ ॥ नाविरतोदुश्चरितान्नाभक्तोनासमाहितः ॥ सम्यग्भक्तोभवेत्कश्चिद्दासुदे
वेऽमलाशयः ॥ देवर्षयस्तदंशाश्चभवंतिक्कचज्ञानतइति ॥ अतोन्यःकश्चिद्भवति
चेत्दांभिकत्वेनसोनुमेयः॥ साधारणपापानांतुसत्संगमान्महत्यपिकथंचिद्भक्ति
र्भवति ॥ साधारणभक्तिर्वेतरेषां ॥ सशठमतिरुपयातियोर्थतृष्णांतमधमचेष्टम
वैहिनास्यभक्तिरितिश्रीविष्णुपुराणे ॥ साश्रद्दधानस्यविवर्धमानाविरक्तिमन्यत्र
करोतिपुंसःइतिच॥ वेदाःस्वधीताममलोकनाथतप्तंतपोनानृतमुक्तपूर्वम्॥ पूजांगु
रूणांसततंकरोमिपरस्यगुल्यंनचभिन्नपूर्वम् ॥ गुप्तानिचत्वारियथागमंमेशत्रौच
मित्रेचसमोस्मिनित्यम्॥तंचापिदेवंशरणंप्रपन्नएकांतभावेनभजाम्यजस्रम्॥ ए
तैरुपायैःपरिशुद्धसत्वःकस्मान्नपश्येयमनंतमेनमितिमोक्षधर्मे॥ आचारस्यज्ञान
साधनत्वोक्तेश्च ॥ ज्ञानाभावेसम्यग्भक्त्यभावात् ॥ तथाहिगौतमखिलेषु ॥ वि
नाज्ञानंकुतोभक्तिःकुतोभक्तिंविनाचतदिति ॥ भक्तिःपरेस्वेऽनुभवोविरक्तिरन्यत्र
चैतत्त्रिकमेककालइतिभागवते ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्गीताभाष्येनवमोऽध्यायः ॥ ९ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीजगन्नाथायनमः ॥ ॥ उपासनार्थंविभूतीर्विशेषकारणत्वंचकेषांचिदनेना
ध्यायेनाह॥प्रीयमाणाय॥श्रुत्वासंतोषंप्राप्नुवते॥ प्रभवंप्रभावं॥मदीयांजगदुत्प
त्तिंवा ॥ तद्दुरशत्वात्तस्येत्युच्यते ॥ यद्यस्तितर्हिदेवादयोपिजानंति॥सर्वज्ञत्वात्॥
अतोनास्तीतिभावः॥अहमादिर्हीतितूत्पत्तिरपियस्यवशाकुतस्तस्यजनिरितिज्ञा
पनार्थम्॥अहंसर्वस्यजगतःप्रभवःप्रलयइतिचोक्तं॥उक्तंचैतत्सर्वमन्यत्रापि॥को
अद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविस्तृष्टिः॥अर्वाग्देवाअस्यविसर्जनेना
थाकोवेदयतआबभूवेति॥नतत्प्रभावमृषयश्चदेवाविदुःकुतोन्येल्पधृतिप्रमाणा
इतिचऋग्वेदखिलेषु॥अन्यस्त्वर्थोयोमामजमितिवाक्यशेषादेवज्ञायते॥[3]अन
श्चेष्टयिता॥ आदिश्चसर्वस्येत्यनादिः॥अजत्वेनसिद्धेरितरस्य॥[4]तत्प्रथयति॥
बुद्धिरित्यादिना ॥ कार्याकार्यविनिश्चयोबुद्धिः ॥ ज्ञानंप्रतीतिः॥ ज्ञानंप्रती
तिर्बुद्धिस्तुकार्याकार्यविनिश्चयइतिह्यभिधानं॥दमइंद्रियनिग्रहः॥शमःपरमा
त्मनिनिष्ठा॥शमोमन्निष्ठताबुद्धेर्दमइंद्रियनिग्रहइतिभागवते॥तुष्टिरलंबुद्धिः॥
अलंबुद्धिस्तथातुष्टिरित्यभिधानात् ॥ [6]पूर्वेसप्तऋषयः॥मरीचिरत्र्यंगिरसौपुल
स्त्यःपुलहःक्रतुः॥वसिष्ठश्चमहातेजाइतिमोक्षधर्मोक्ताः॥तेहिसर्वपुराणेषूच्यंते॥

चत्वारःप्रथमाःस्वायंभुवाद्याः॥ तेषांहीमाःप्रजाः ॥ नहिभविष्यतामिमाःप्रजाइ
तियुक्तं ॥ विभागःप्राधान्यंचप्राथमिकत्वादेवभवति ॥ गौतमखिलेषुचोक्तम् ॥
स्वायंभुवंरोचिषंरैवतंचतथोत्तमंवेदयःसप्रजावानिति ॥ पूर्वेभ्योह्युत्तराजायंत
इतित्येषांप्राधान्यम् ॥ अजातेषुचजैष्ठ्यम् ॥ तापसस्यभगवदवतारत्वादनुक्तिः ॥
तच्चभागवतेप्रसिद्धम् ॥ मानसत्वंचसर्वेषांमनूनामुक्तंभागवते ॥ ततोमनून्
ससर्जांतेमनसालोकभावनानिति ॥ अन्यपुत्रत्वंत्वपरित्यज्यापिशरीरंतद्भ
वति ॥ प्रमाणंचोभयविधवाक्यान्यथानुपपत्तिरेव ॥ पूर्वइतिविशेषणाच्चैत
त्सिद्धिः ॥ मत्तोभावोयेषांतेमद्भावाः ॥ येतेब्रह्मणोमानसाजातास्तेमत्त
एवजाताइतिभावः ॥ संतिंचभजंतःकेचिदित्याह ॥ अहमित्यादिना ॥ [12] ब्रं
ह्मपरिपूर्णं ॥ अथकस्मादुच्यतेपरंब्रह्मबृहतिबृंहयतिचेतिश्रुतिः ॥ बृहबृहिवृद्धावि
तिपठंति ॥ परमंयोमहद्ब्रह्मेतिच ॥ विविधमासीदितिविभुः ॥ तथाहिवारुणशाखा
यां ॥ विभुप्रभुप्रथमंमेहनावृतइतिसह्येवप्रभावाद्विविधोभवदिति ॥ सोकामय
त ॥ बहुस्यांप्रजायेयेत्यादेश्च ॥ [16] विभूतयोविविधाभूतयः ॥ [18] नंजायतेऽर्दयतिच
संसारमितिजनार्दनः ॥ तथाचबाभ्रव्यशाखायम् ॥ सभूतःसजनार्दनइति ॥

सत्यासीत्सनासीत्सोऽर्दयदितिच ॥ विष्णुःसर्वव्यापित्वप्रवेशित्वादेः ॥ विष्ट्व्या
त्यौविशप्रवेशइतिचपठंति॥गतिश्चसर्वभूतानांप्रजानांचापिभारत॥व्यामौमेरो
दसीपार्थकांतिश्चाभ्यधिकाममम ॥ अधिभूतनिविष्टश्चतद्दिच्छुश्चास्मिभारत ॥
क्रमणाच्चाप्यहंपार्थविष्णुरित्यभिसंज्ञितइतिमोक्षधर्मे॥[२९]सुखरूपःपाल्यतेलीयते
चजगदनेनेतिकपिलः॥प्रीतिःसुखंकमानंदइत्यभिधानात्॥प्राणोब्रह्मकंब्रह्मखं
ब्रह्मेतिच॥ऋषिंप्रसूतंकपिलंयस्तमग्रेज्ञानैर्बिभर्तिजायमानंचपश्येत्॥सुखादनं
तात्पालनाल्लापनाच्चयंवैदेवंकपिलमुदाहरंतीतिबाभ्रव्यशाखायाम्॥[३१]आनंदरू
पत्वात्पूर्णत्वाल्लोकरमणाच्चरामः ॥ आनंदरूपोनिष्परीमाणएषलोकश्चैतस्माद्र
मतेतेनरामइतिशांडिल्यशाखायाम्॥रश्चअमश्चेतिव्युत्पत्तिः॥[३०]वाँसयतिआच्छा
दयतिसर्वंवसतिचेतिसर्वत्रवावासुः॥देवशब्दार्थउक्तःपुरस्तात्॥छादयामिजगद्वि
श्वंभूत्वासूर्यइवांशुभिः॥सर्वभूताधिवासश्चवासुदेवस्ततोऽह्यहमितिमोक्षधर्मेषु॥
विशिष्टःसर्वस्मादासमंतात्सएवेतिव्यासः॥ तथाचाग्नेयशाखायाम्॥ सव्यासो
वीतितमपूर्वैविःसोऽधस्तात्सउत्तरतःसपश्चात्सपूर्वस्मात्सदक्षिणतःसउत्तरतइती-
ति ॥ यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा ॥ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणः

स्थितइतिच ॥ [४०]यद्यद्विभूतिमत्सत्त्वं । मयाविनायद्भूतंस्यात्तन्नास्ति ॥ विश्वरूपअनंतगतिरनंतभागअनं
तगअनंतेत्यादिमोक्षधर्मे॥ [४१]यद्यद्विभूतिमदितिविस्तरः ॥ विष्ण्वादीनितत्स्वरूपाण्ये
व॥अन्यानितुतेजोयुक्तानि ॥ तथाचपैङ्गिखिलेषु ॥ विशेषकारुद्रवैन्येंद्रदेवाराज
न्याद्याअंशयुताअन्यजीवाः ॥ कृष्णव्यासौरामकृष्णौचरामकपिलयज्ञप्रमुखा
स्स्वयंसइति ॥ सएवैकोभार्गवदाशरथिकृष्णाद्यास्त्वंशयुताअन्यजीवाइतिगौतम
खिलेषु॥ऋषयोमनवोदेवामनुपुत्रामहौजसः॥ कलाःसर्वेहरेरेवसप्रजापतयःस्मृ
ताः॥एतेस्वांशकलाःपुंसःकृष्णस्तुभगवान्स्वयमितिभागवते॥ ऋष्यादीनंशयुक्त
त्वेनोक्त्वावराहादीन्स्वरूपत्वेनाह ॥ तुशब्दएवार्थे ॥ अन्यस्तुविशेषोनकुत्राप्यव
गतः ॥ अंशत्वंतत्राप्यवगतं ॥ उद्धवर्हात्मनःकेशाविति ॥ मृडयंतीतिबहुवचनं
चायुक्तं ॥ नत्वंतरान्यदुक्त्वापूर्वमपरामृश्यताक्रियोच्यमानादृष्टाकुत्रचित् ॥ [४२]कि
मितिवक्ष्यमाणप्राधान्यज्ञापनार्थंनतूक्तनिष्फलत्वज्ञापनायतथासतिनोच्येत ॥
अज्ञात्वैनंसर्वविशेषयुक्तंदेवंवरंकोविमुच्येतबंधात्इतिचऋग्वेदखिलेषु ॥ त्वंतु
बहुफलप्राप्तियोग्यइतितवेतिविशेषणम् ॥ अन्यस्तुत्यर्थत्वेनप्रसिद्धश्चैकत्रकिंश
ब्दः ॥ रागद्वेषौयदिस्यातांतपसाकिंप्रयोजनम् ॥ तावुभौयदिनस्यातांतपसाकिं
प्रयोजनमित्यादौ ॥ प्राधान्यंचसिद्धमेकत्रदर्शनात्सर्वत्रभगवद्दर्शनस्ययोमांप

श्यतिसर्वत्रेत्यादौ ॥ ५ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्गीताष्येदशमोध्यायः ॥ १० ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥
श्रीहयग्रीवायनमः ॥ ॥ ॐ यथाश्रुतेध्यानंशक्यंतथास्वरूपस्थितिरनेनाध्यायेना
च्यते ॥ [४] प्रभुःसमर्थः ॥ नास्तितस्मात्परंभूतंपुरुषाद्वैसनातनादितिमोक्षधर्मे ॥ प्रभु
रीश्वरःसमर्थश्चेत्यादिचाभिधानम् ॥ हरिःसर्वयज्ञभागहारित्वात् ॥ इडोपहूतंगे
हेषुहरेभार्गंक्रतुष्वहम् ॥ वर्णोमेहरितश्रेष्ठस्तस्माद्धरिरितिस्मृतइतिमोक्षधर्मे ॥
[११] सर्वाश्चर्यमयं ॥ सर्वाश्चर्यात्मकम् ॥ [१२] सहस्रशब्दोनंतवाची ॥ तदपिपाकशा
सनविक्रमइत्यादिवत्सत्यायनार्थमेव ॥ तथाहिऋग्वेदखिलेषु ॥ अनंतशक्तिः
परमोऽनंतवीर्यःसोऽनंततेजाश्चततस्ततोपीति ॥ महातात्पर्याच्चप्राबल्यं ॥ नचप
रिमाणोक्त्याकिंचित्प्रयोजनम् ॥ [१६] अनेकशब्दोनंतवाची ॥ अनंतबाहुरितिव
क्ष्यति ॥ सर्वतःपाणिपादंतदित्यादिच ॥ विश्वतश्चक्षुरुतविश्वतोमुखोविश्व
तोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवए
कइतिचर्ग्वेदे ॥ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुउतविश्वतस्पात् ॥ सं
बाहुभ्यांनमतिसंपतत्रैर्द्यावाभूमीजनयन्देवएकइतियजुर्वेदेच ॥ विश्वशब्दश्चा

नंतवाची ॥ सर्वंसमस्तंविश्वंचअनंतंपूर्णमेवचेत्यभिधानात् ॥ अनंतबाहुमनं
तपादमनंतरूपंपुरुवक्रमेकमितिचबाभ्रव्यशाखायाम् ॥ महत्त्वाद्युक्तिस्तुतदात्म
कत्वेनापिभवति ॥ अन्यथाअनादिमत्परंब्रह्मेत्याद्ययुक्तंस्यात् ॥ एकत्रत्वनंतान्य
स्यरूपाणीत्यनंतरूपः ॥ अन्यत्रत्वपरिमाणइति ॥ उक्तंत्युभयमपि ॥ परात्परंय
न्महतोमहांतम् ॥ यदेकमव्यक्तमनंतरूपमितियजुर्वेदे ॥ अव्यक्तस्यानंतत्वादेवम
हतोमहत्त्वेऽपरिमेयत्वंसिध्यति ॥ महांतंचसमावृत्यप्रधानंसमवस्थितम् ॥ अनंत
स्यनतस्यांतःसंख्यानंचापिविद्यतइत्यादित्यपुराणे ॥ तानिचैकैकानिरूपाणिअ
नंतानीतिचैकत्रभवति ॥ असंख्याताज्ञानकास्तस्यदेहाःसर्वैपरिमाणविवर्जि
ताश्चेतित्वृग्वेदखिलेषु ॥ यावान्वायमाकाशस्तावानेषोंतर्हृदयआकाशउभेअ
स्मिन्द्यावापृथिवीअंतरेवसमाहितेउभावग्निश्चवायुश्चसूर्याचंद्रमसावुभाविति
च ॥कृष्णस्यगर्भजगतोतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रमितिचभा
गवते ॥ नचैतदयुक्तं ॥ अचिंत्यशक्तित्वादीश्वरस्य ॥ अचिंत्याःखलुयेभावान
तांस्तर्केणयोजयेदितिश्रीविष्णुपुराणे ॥ नैषातर्केणमतिरापनेयेतिचश्रुतिः ॥ अ
तिप्रसंगस्तुमहातात्पर्यवशाद्वाक्यबलाच्चापनेयः ॥ नहिघटवत्कश्चित्पदार्थोनदृष्ट

इत्येतावताप्रमाणदृष्टःसन्निराक्रियते ॥ केषुचित्पदार्थेषुवाक्यव्यवस्थाअचिंत्य
शक्तित्वाभावादंगीक्रियते ॥ गुणाश्रुतासुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशं
का ॥ चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्चनाज्ञैर्हितथाप्रतीताः ॥ एवंपरेन्यत्र
श्रुताश्रुतानांगुणागुणानांचक्रमाद्व्यवस्थेतिजाबालखिलश्रुतेश्च ॥ उपचारत्वप
रिहारायनमध्यमिति॥अन्यथाआद्यंताभावेनैवतात्सिद्धेः ॥ विश्वरूपःपरिपूर्णरूप
सविश्वरूपोऽनूनरूपोऽतोयंसोनंतरूपोनहिनाशोस्तितस्येतिशांडिल्यशाखायाम्
अँनलार्कद्युतिमित्युक्तेमितत्वशंकामपाकरोति ॥ अप्रमेयमिति॥ शंशिसूर्यनेत्र
मित्यप्यहंक्रतुरित्यादिवत् ॥ तदंगजाःसर्वसुरादयोपितस्मात्तदंगेत्यृषिभिस्तुता
स्तइत्यृग्वेदखिलेषु ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायतेत्यादि्च ॥ बहुरू
पत्वाद्बह्वाश्रयत्वंचतेषांयुक्तम् ॥ मातापित्रोरंतरंगःसएकरूपेणचान्यैःसर्वगतःस
एकइतिवारुणश्रूतेरेकेनैवरूपेणद्यावापृथिव्योरंतरंव्याप्तोभवति ॥ पश्यमेपार्थ
रूपाणीतिबहूनीहरूपाणिप्रतिज्ञातानि ॥ मातापितरौचपृथिवीद्यावौ॥ मानो
मातापृथिवीदुर्मतौधात् ॥ मधुद्यौरस्तुनःपितेत्यादिप्रयोगात् ॥ नतुर्नियमतो-
भयप्रदंतत्स्वरूपम् ॥ नारदस्यतदभावात् ॥ केषांचित्तथादर्शयतिभगवान् ॥

प्रियंतिकेचित्तस्यरूपस्यदृष्टौबिभेतिकश्चिद्भ्यसेसर्वतृमिरितिवारुणशाखाया-
म् ॥ नतुतंसर्वेंपश्यंति ॥ अदृष्ट्वापितन्निरूप्यभयेद्रष्टुस्तथाप्रतिभाति ॥ त
थाचगौतमखिलेषु ॥ दृष्ट्वादेवंमोदमानाअदृष्ट्वाप्येतद्भयाद्बिभ्यतोदृष्टवत्ते ॥ प
श्यंतितेन्यस्तचक्षुर्मुखांस्तुतस्मिन्नेवैतेमनसोगतत्वादिति ॥ [३१]धर्मांतरज्ञानार्थ
मेवकोभवानितिपृच्छति ॥ यथाकश्चित्कंचिन्नामादिकंजानन्नपिजातिज्ञाना
र्थंपृच्छतिकस्त्वमिति ॥ यदितमेवनजानातितर्हिविष्णावित्येवसंबोधनंनस्या
त् ॥ त्वमक्षरमितिच ॥ [३२]कौलशब्दोजगद्बंधनछेदनज्ञानादिसर्वभगवद्धर्म
वाची ॥ कलबंधनेकलछेदनेकलज्ञानेकलकामधेनावितिपठंति ॥ प्रसिद्धश्च
सशब्दोभगवति ॥ नियतंकालपाशेनबद्धंशक्रविकत्थसे ॥ अयंसपुरुषःश्या
मोलोकस्यहरतिप्रजाः ॥ बद्धातिष्ठतिमांरौद्रःपशुंरशनयायथेतिमोक्षधर्मे ॥
विष्णुनाबद्धोबलिर्वक्ति॥विष्णोचाधीश्वरेचित्तंधारयन्कालविग्रहइतिभागवते॥
प्रवृद्धःपरिपूर्णोऽनादिर्वाक्रतंचसत्यंचाभीद्धादितिहिश्रुतिः ॥ एतन्महद्भूतमिति
च ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनामेतिचनतुवर्धनम् ॥ ना
सौजजाननमरिष्यतिनैधतेसावितिहिभागवते ॥ यस्यदिव्यंहितद्रूपंह्नीयतेव

र्धतेनचेतिमोक्षधर्मे ॥ नकर्मणेतितुकर्मणापिन ॥ किमुस्वयमिति ॥ लोकां
न्समाहर्तुमिहविशेषेणप्रवृत्तः ॥ भात्रादींश्चर्तइत्यपिशब्दः ॥ प्रत्यनीकत्वंतुप
स्परतया ॥ सर्वेपिनभविष्यंति ॥ अक्षौहिण्यादिभेदेनबहुवचनंयुक्तम् ॥ [३४]यो
स्यशिरश्छिन्नभूमौपातयतितच्छिरोभेत्स्यतीतितत्पितुर्वराज्जयद्रथोपिविशेष-
णोक्तः ॥ त्व्यवरावासवीशक्तिरितिकर्णः ॥ [३६]यदेतद्वक्ष्यमाणंतत्स्थानेयुक्तमेवे
त्यर्थः ॥ अग्नीषोमाद्यंतर्यामितयाजगद्धर्षणाद्धृषीकेशः ॥ केशत्वंत्वंशूनांत
न्नियतत्वादेः ॥ प्रमाणंतुशशिसूर्यनेत्रमित्यत्रोक्तम् ॥ हृषीकाणामिंद्रियाणामी
शत्वाद्धृषीकेशः ॥ तेषांविशेषतईशत्वंचयःप्राणेतिष्ठन्नित्यादौप्रसिद्धम् ॥ नमेहृ
षीकाणिपतंत्यसत्पथइत्यादिप्रयोगाच्च ॥ इतरोर्थोमोक्षधर्मेसिद्धः ॥ सूर्याचंद्र
मसौशश्वत्केशैर्मेअंशुसंज्ञितैः ॥ बोधयन्स्थापयंश्चैवजगदुत्पद्यतेपृथक् ॥ बोधना
त्स्थापनाच्चैवजगतोहर्षसंभवात् ॥ अग्नीषोमकृतैरेभिःकर्मभिःपांडुनंदन ॥ हृषी
केशोमहेशानोवरदोलोकभावनइतिच ॥ [३७]कथंस्थानइतितदाह ॥ कस्मादित्या
दिना ॥ पूर्णश्चासावात्मेतिमहात्मा ॥ आत्मशब्दश्चोक्तोभारते ॥ यच्चाप्नोतिय
दादत्तेयच्चात्तिविषयानिह ॥ यच्चास्यसंततोभावस्तस्मादात्मेतिभण्यतइति ॥ त

त्परंसदसतोःपरं ॥ असच्चसच्चैवचयद्विश्वंसदसतःपरमितिभागवते ॥ ऐंकस्त्वमे
वकारयिता ॥ नान्योऽस्त्यथापि ॥ स्वैकंरूपमितिभ्रांतप्रतीत्यातु॥ अन्यथातदपिस्व
कमेव ॥ प्रमाणानितूक्तानिपुरस्तात् ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचा
र्यविरचितेश्रीमद्गीताभाष्येएकादशोध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ छ ॥
श्रीहनुमतेनमः ॥ ॥ अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वंप्रदर्श्यतदुपायं
दर्शयत्यस्मिन्नध्याये ॥ तदुपासनमपिमोक्षसाधनंप्रतीयते ॥ श्रियंवसाना
अमृतत्वमायन्भवंतिसत्यासमिथामितद्राविति ॥ अनाद्यनंतंमहतःपरंध्रुवंनि
चाय्यतंमृत्युमुखात्प्रमुच्यतइतिच ॥ अव्यक्तंचमहतःपरम् ॥ महतःपरमव्यक्त
मित्युक्तपरामर्शोपपत्तेः ॥ उपास्यतांश्रियमव्यक्तसंज्ञांभक्त्यामर्त्योमुच्यतेसर्व
बंधैरितिसामवेदेआग्निवेश्यशाखायाम् ॥ महत्त्वमाहात्म्यंतस्यावेदेषूच्यते ॥ च
तुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ॥ तस्यांसुपर्णावृषणानिषेदतुर्य
त्रदेवादधिरेभागधेयं ॥ चतुःशिखंडायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्तइति
च ॥ अंहरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैरित्यारभ्यअहंराष्ट्रीसंगम
नीवसूनांचिकितुषीप्रथमायज्ञियानाम् ॥ तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभू

र्यावेशयंतीम् ॥ मयासोअन्नमत्तियोविपश्यतियःप्राणितियईंशृणोत्युक्तम् ॥
अमंतवोमांतउपक्षियंतिश्रुधिश्रुतश्रद्धिवंतेवदामि ॥ यंकामयेतंतमुग्रंकृणोमितं
ब्रह्माणंतमृषिंतंसुमेधाम् ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाउ ॥ अहं
सुवेपितरमस्यमूर्धन्ममयोनिरप्स्वंतःसमुद्रे ॥ परोदिवापरएनापृथिव्यैतावती
महिनासंबभूवेत्यादिच ॥ त्वयाजुष्टऋषिर्भवतिदेवित्वयाब्रह्मागतश्रीरुतत्वये
तिच ॥ इतिशंकाकस्यचिद्भवति ॥ अतोजानन्नपिसूक्ष्मयुक्तिज्ञापनार्थंपृच्छ
ति ॥ एवमिति ॥ एवंशब्देनदृष्टश्रुतरूपंमत्कर्मकृदित्यादिप्रकारश्चपरामृश्य
ते ॥ अव्यक्तंप्रकृतिः ॥ महतःपरमव्यक्तमितिप्रयोगात् ॥ यतस्त्रिगुणमव्यक्तं
नित्यंसदसदात्मकम् ॥ प्रधानंप्रकृतिंप्राहुरविशेषंविशेषवदितिचभागवते ॥ अ
क्षरंचतत् ॥ अक्षरात्परतःपरइतिश्रुतेः ॥ परंतुब्रह्मनहिभगवतोऽन्यत् ॥ आनंदमा
नंदमयोवसानेसर्वात्मकेब्रह्मणिवासुदेवइतिभागवते ॥ रूपंचेदृशंसाधितंपुर
स्तात् ॥ उपासनंचतथैवकार्यम् ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपादित्या
रभ्यतमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतइतिहिसाभ्यासा ॥ आ
दित्यवर्णत्वादिश्चनतथोपचारत्वेनांगीकार्यः ॥ तथाचसामवेदेसौकरायणश्रु

ति: ॥ स्थाणुर्हवैप्राजापत्यःसप्रजापतिंपितरमेत्योवाच ॥ मुमुक्षुभिःसाधुभिः
पूतपापैःकिमुहवैतारकंतारवाच्यम् ॥ ध्यानंचतस्यामरुचेःकथंस्याद्धेयश्चकःपु
रुषोऽलोमपादइति ॥ तंहोवाचैषवैविष्णुस्तारकोऽलोमपादोध्यानंचतस्यामरु
चेर्वदामि ॥ सोनंतशीर्षोबहुवर्णःसुवर्णोध्येयःसवैलोहितादित्यवर्णः ॥ श्यामोथ
वाहृदयेसोष्टबाहुरनंतवीर्योनंतबलःपुराणइति ॥ अरूपत्वादेस्तुगतिरुक्ता ॥ पु
रुषभेदस्तुप्रश्नादौप्रतीयते ॥ त्वांपर्युपासते ॥ येचाप्यक्षरमव्यक्तमित्यादौ ॥ भवं
तुत्वदुपासकाएवोत्तमाः ॥ इतरेषांतुकिंफलमित्यतआह ॥ येत्वित्यादिना ॥ अ
निर्देश्यत्वंचोक्तंभागवतेमायायाः ॥ अप्रतर्क्यादनिर्देश्यादितिकेष्वपिनिश्चय
इति ॥ ईश्वरस्तुदैवशब्देनोक्तोदैवमन्येपरइत्यत्र ॥ उक्तंचसामवेदेकाषायण
श्रुतौ ॥ नासदासीन्नोसदासीत्तदानीमिति ॥ नमहाभूतंनोपभूतंतदासीदित्या
रभ्यतमआसीत्तमसागूढमग्रेइति ॥ तमोह्यव्यक्तमजरमनिर्देश्यमेषाह्येवप्रकृति
रिति ॥ सर्वगाचिंत्यादिलक्षणाचसा ॥ तथाहिमोक्षधर्मे ॥ नारायणगुणाश्रया
दजरादतींद्रियादग्राह्यादसंभवतः ॥ असत्यादहिंस्राल्ललामाद्द्वितीयप्रवृत्तिविशे
षादवैरादक्षयादमरादक्षरादमूर्तितःसर्वस्याःसर्वकर्तुःशाश्वततमसइति ॥ आसी

दिदंतमोभूतमप्रज्ञातमलक्षणम् ॥ अप्रतर्क्यमविज्ञेयंप्रसुप्तमिवसर्वतइतिमान
वे ॥ कूटस्थोऽक्षरउच्यतइतिवक्ष्यति ॥ कूटआकाशेस्थिताकूटस्था ॥ आका
शेसंस्थितात्वेषाततःकूटस्थितामतेतित्यृग्वेदखिलेषु ॥ सासवर्गानिश्चलालोक
योनिःसाचाक्षराविश्वगाविरजस्केतिचसामवेदेगौपवनशाखायाम् ॥ कथंतर्हि
त्वदुपासकानामुत्तमत्वमित्यतआह ॥ क्लेशइति ॥ अव्यक्तागतिर्दुःखंव्यवाप्य
ते ॥ गतिर्मार्गः ॥ अव्यक्तोपासनद्वारकोमत्प्राप्तिमार्गोदुःखमवाप्यतइत्यर्थः ॥ अ
तिशयेनोपासनंसर्वेंद्रियातिनियमनंसर्वसमबुद्धिसर्वभूतहितेरतत्वातिसुष्ठ्वाचा
रसम्यग्विष्णुभक्त्यादिसाधनसंदर्भमृतेनाव्यक्तापरोक्ष्यम् ॥ तदृतेचनविष्णुप्र
सादः ॥ सत्यपितस्मिन्नसम्यग्भवदुपासनमृते ॥ नर्तेचतंमोक्षः ॥ विनाव्यक्तोपा
सनंभवत्येवभगवदुपासकानांमोक्षइतिक्लेशिष्ठोयंमार्गइतिभावः ॥ तथाप्यपरो
क्षीकृताव्यक्तानांसुकरंभगवदुपासनमित्येवत्प्रयोजनम् ॥ तत्रापियोऽव्यक्ता
परोक्ष्येप्रयासस्तावताप्रयासेनयदिभगवंतमुपास्तेऊनेनवातदाभगवदापरोक्ष्य
मेवभवतीतिद्वितीयमधिकंइंद्रियसंयमनाद्यूनभावेऽप्युपासकस्यापिदेवीनातिप्र
सादमेति ॥ देवस्तुतानिसाधनानिभक्तिमतःस्वयमेवप्रयत्नेनददातीतिचातिसौ

कथमितिभक्तानांभगवदुपासनेइतरत्रक्लेशोधिकतरः ॥ तदेतत्सर्वंपर्युपास
ते ॥ संनियम्याधिकतरइतिपरिसंतरपूशब्दैःप्रतीयते ॥ सामवेदेमाधुच्छंदस
शाखायांचोक्तम् ॥ भक्ताश्चयेतीवविष्णावतीवजितेंद्रियाःसम्यगाचारयुक्ताः ॥
उपासतेतांसमबुद्धयश्चतेषांदेवीदृश्यतेनेतरेषाम् ॥ दृष्टाचसाभक्तिमतीवविष्णौद
त्वोपास्तौसर्वविघ्नांश्छिनत्ति ॥ उपास्यतंवासुदेवंविदित्वाततस्ततःशांतिमत्यंतमे
तीति ॥ उक्तंचसामवेदेअयास्यशाखायाम् ॥ प्रसन्नोभवितादेवःसोऽव्यक्तेनसहै
वतु ॥ यावतातत्प्रसादोहितावतैवनसंशयः ॥ नतत्प्रसादमात्रेणप्रीयतेसमहेश्वरः
तस्मिन्प्रीतेतुसर्वस्यप्रीतिस्तुभवतिध्रुवम् ॥ यद्यप्युपासनाधिक्यंतथापिगुणदोहि
सः ॥ मुक्तिदस्तुसएवैकोनाव्यक्तादिस्तुकश्चनेति ॥ ममात्मभावमिच्छंतोयतंतेप
रमात्मनइतिमोक्षधर्मेश्रीवचनम् ॥ धर्मेनित्येमहाबुद्धौब्रह्मण्येसत्यवादिनि ॥ प्र
श्रितेदानशीलेचसदैवनिवसाम्यहमितिच ॥ महतःपरंतुब्रह्मैव ॥ तथाहिभगव
तासयुक्तिकमभिहितम् ॥ ॐ वदतीतिचेन्नप्राज्ञोहि ॐ ॥ त्रयाणामेवचैवमुपन्या
सःप्रश्नश्चेत्यादि ॥ तमितिपुल्लिंगाच्चैतत्सिद्धिः ॥ महतःपरत्वंत्वव्यक्तपरस्यभवत्ये ॥४६॥
व ॥ तथाचाग्निवेश्यशाखायाम् ॥ अनाद्यनंतंमहतःपरंध्रुवमिति ॥ परोहिदेवःपुरुहू

तोमहत्तइतीति ॥ नचाव्यक्तस्वरूपंभगवतानिषिद्धम् ॥ भारतादौसाधितत्वा
त्॥शरीररूपकविन्यस्तगृहीतेरित्यादौतुसांख्यप्रसिद्धंप्रधानंनिषिध्यवैदिकमव्यक्त
मेवोक्तम् ॥ तथाचसौकरायणश्रुतिः ॥ शरीररूपिकासाऽशरीरस्यविष्णोर्यतःप्रि
यासाजगतःप्रसूतिरिति ॥ सुव्रतानांक्षिप्रंमहदैश्वर्यंदेवीददातिनदेवइतिचविशे
षः ॥ सुवर्णवर्णांपद्मकरांचदेवींसर्वेश्वरींव्याप्तजडांचबुद्ध्वा ॥ सैवेतिवैसुव्रता
नांतुमासान्महाविभूतिंश्रीस्तुदद्यान्नदेवइत्यृग्वेदखिलेषु ॥ [६] मद्रुपासकानांभक्ता
नांनकश्चित्क्लेशइतिदर्शयति॥येत्वित्यादिना॥ उक्तंचसौकरायणश्रुतौ ॥ उपास
तेयेपुरुषंवासुदेवमव्यक्तादेरीप्सितंकिंनुतेषामिति ॥ तेषांएकांतिनःश्रेष्ठास्तेचै
वानन्यदेवताः ॥ अहमेवगतिस्तेषांनिराशीःकर्मकारिणामितिमोक्षधर्मे ॥ [१२] अ
ज्ञानपूर्वादभ्यासाज्ज्ञानमेवविशिष्यते ॥ ज्ञानमात्रात्सज्ञानंध्यानम् ॥ तथाच
सामवेदेअनभिम्लानशाखायाम्॥अधिकंकेवलाभ्यासाज्ज्ञानंतत्सहितंततः ॥
ध्यानंततश्चापरोक्ष्यंततःशांतिर्भविष्यतीतिध्यानात्कर्मफलत्यागइतितुस्तुतिः ॥
अन्यथाकथमसमर्थोसीत्युच्येत ॥ तयोस्तुकर्मसंन्यासात्कर्मयोगोविशिष्यतइ
तिचोक्तम्॥ सर्वाधिकंध्यानमुदाहरंतिध्यानाधिकेज्ञानभक्तीपरात्मन्॥ कर्माफ

लाकांक्षमथोविरागस्त्यागश्चनध्यानकलाफलाहाँइतिचकाषायणशाखायाम् ॥
वाक्यसाम्येप्यसमर्थविषयत्वोक्तेस्तात्पर्याभावइतरत्रप्रतीयते ॥ ध्यानादिप्रा
प्तिकारणत्वाच्चत्यागस्तुतिर्युक्ता ॥ केवलध्यानात्फलत्यागयुक्तंध्यानमधिकम् ॥
ध्यानयुक्तस्त्यागएवात्रोक्तः ॥ अन्यथाकथंत्यागाच्छांतिरनंतरमित्युच्येत ॥ कथं
चिद्ध्यानादाधिक्यम् ॥ तथाचगौपवनशाखायाम् ॥ ध्यानात्तुकेवलात्त्यागयुक्तं
तदधिकंभवेदिति ॥ नहित्यागमात्रानंतरमेवमुक्तिर्भवति ॥ भवतिचध्यानयुक्ता
त् ॥ केवलात्यागस्तुतिरेवमपिभवति ॥ यथानेनयुक्तोजेतानान्यथेत्युक्तेः ॥ सं
र्वारंभपरित्यागी ॥ शुभाशुभपरित्यागीत्यादेः ॥ सामान्यविशेषव्याख्यानव्या
ख्येयभावेनापुनरुक्तिः ॥ हर्षादिभिर्मुक्तइत्युक्तेकादाचित्कमपिभवतीतियोनहृ
ष्यतीत्युक्तम्उपचारपरिहारार्थंपूर्वं ॥ आधिक्यज्ञापनायभक्त्यभ्यासः ॥ येतु
सर्वाणिकर्माणीत्यादेःप्रपंचएषः ॥ पिंडीकृत्योपसंहरति ॥ येतुधर्म्यामृतमिति ॥
धर्मोविष्णुस्तद्विषयंधर्म्यं ॥ धर्म्यंमृत्यादिसंसारनाशकंचेतिधर्म्यामृतं ॥ श्रद्धा
स्तिक्यंश्रन्नामास्तिक्यमुच्यतइतित्यभिधानं ॥ तद्दधानाः ॥ श्रद्दधानाः ॥ ॥ इ
तिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येद्वादशोध्यायः ॥१२॥

श्रीगुरुभ्योनमः ॥ ॥ पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान्पिंडीकृत्यविविच्यदर्शयत्यने
नाऽध्यायेन ॥ यद्विकारियेनविकारेणयुक्तम् ॥ यतश्चयत् ॥ यतोयातिप्रवर्त
ते ॥ सचप्रवर्तकः ॥ यतश्चयदित्यस्मात्प्रवर्ततेक्षेत्रमितिवचनम् ॥ सचयइति
स्वरूपमात्रम् ॥ ब्रह्मसूत्राणिशारीरकम् ॥ इच्छादयोविकाराः ॥ सचयोयत्प्रभा
वश्चेतिवक्तुंतज्ज्ञानसाधनान्याह ॥ अमानित्वमित्यादिना ॥ आत्माल्पत्वंज्ञात्वा
पिमहत्त्वप्रदर्शनंदंभः ॥ ज्ञात्वापिस्वात्मनोल्पत्वंदंभोमाहात्म्यभावनमितिव्यभि
धानम् ॥ आर्जवंमनोवाक्कायकर्मणामवैपरीत्यम ॥ सक्तिःस्नेहः ॥ सएवातिप
क्वोभिष्वंगः॥स्नेहःसक्तिःसएवातिपक्वोभिष्वंगउच्यतइतित्व्यभिधानम्॥तत्त्वज्ञाना
र्थदर्शनम्॥अपरोक्षज्ञानार्थंशास्त्रदर्शनम्॥परंब्रह्मेति॥ सचयइतिप्रज्ञातमुच्य
ते ॥ अन्यद्यत्प्रभावइति ॥ आदिमद्देहादिवर्जितमनादिमत् ॥ अन्यथाऽनादी
त्येवस्यात् ॥ सर्वेंद्रियाणिगुणांश्चाभासयतीतिसर्वेंद्रियगुणाभासम् ॥ इंद्रियव
र्जितत्वाद्यर्थउक्तःपुरस्तात् ॥ विकारांतर्भावाज्ज्ञानसाधनंप्रथमतउक्तम् ॥ बहु
त्वात्साधनात्युपयोगात्प्रभावः ॥ यंतश्चयदितिवक्तुंप्रकृतिविकारपुरुषान्संक्षि
प्याह॥गुणाःसत्त्वादयः॥ तेषामत्यल्पोविशेषोलयात्सर्गइतिविकाराःपृथगुक्ताः॥

कार्याकार्यागुणास्तिस्रोयतःस्वल्पोद्भवोजनाविति माधुच्छंदसशाखायाम् ॥ [21] का
र्यंशरीरम् ॥ शरीरंकार्यमुच्यतइतिह्यभिधानम् ॥ कारणानींद्रियाणि ॥ भोगोऽनुभ
वः ॥ सहिचिद्रूपत्वादनुभवति ॥ प्रकृतिश्चजडत्वात्परिणामिनी ॥ कार्यकारण
कर्तृत्वेकारणंप्रकृतिंविदुः ॥ भोक्तृत्वेसुखदुःखानांपुरुषंप्रकृतेःपरमितिभागव
ते ॥ [23] यैतश्चयदित्याह ॥ उपद्रष्टेति ॥ अनुमंताअन्वनुविशेषितोनिरूपकःपुरुषः
सुखदुःखानामितिजीवउक्तः ॥ प्रकृतिंपुरुषंचेतिजीवेश्वरौसहैवोच्यते ॥ अन्य
त्रमहातात्पर्यविरोधः ॥ उत्कर्षेहिमहातात्पर्यं ॥ तथाहिसौकरायणश्रुतिः ॥ अ
वाच्योत्कर्षेमहत्वात्सर्ववाचांसर्वन्यायानांचमहत्तत्परत्वम् ॥ विष्णोरनंतस्यप
रात्परस्यतच्चापित्वस्येवनचात्रशंका ॥ अतोविरुद्धंतुयदत्रमानंतदक्षजादावथ
वापियुक्तिः ॥ नतत्प्रमाणंकवयोवदंतिनचापियुक्तिर्ध्रुवमतिर्हिदृष्टेरिति ॥ अतो
युक्तिभिरप्येतदपलापोनयुक्तः ॥ अतोययायुक्त्याऽविद्यमानत्वादिकल्पयति
साप्याभासरूपेतिसदेवमाहात्म्यंवेदैरुच्यतइतिसिध्यति ॥ अवांतरंचतात्पर्यंतत्रा
स्ति ॥ उक्तंचतत्रैव ॥ अवांतरंतत्परत्वंचसत्त्वमहद्वाप्येकत्वात्तयोरनंतइतिश्वा
मत्वाद्यभिधानाच्च ॥ युक्तंचपुरुषमितिविकल्पितयुक्त्यादेराभासत्वम् ॥ अज्ञा

नसंभवात् ॥ नतुस्वतःप्रमाणस्यवेदस्याभासत्वम् ॥ अदर्शनंचसंभवत्येवपुंसा
म् ॥ बहूनामप्यज्ञानात् ॥ तर्ह्यस्मदनधीतश्रुत्यादौविपर्ययोऽपिस्यादितिनवाच्य
म् ॥ यतस्तत्रैवाह ॥ नैतद्विरुद्धावाचोनैतद्विरुद्धायुक्तयइतिहप्रजापतिरुवाचप्र
जापतिरुवाचेतितद्विरुद्धंचजीवसात्म्यम् ॥ आभासएवेतिचोक्तम् ॥ जनमेजय
उवाच ॥ बहवःपुरुषाब्रह्मन्नुताहोएकएवतु ॥ कोह्यत्रपुरुषश्रेष्ठस्तंभवान्वक्तुम
र्हति ॥ श्रीवैशंपायनउवाच ॥ नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्भव ॥ बहूनांपु
रुषाणांहियथैकायोनिरुच्यते ॥ तथातंपुरुषंविश्वमाख्यास्यामिगुणाधिकमिति
मोक्षधर्मे ॥ नचैतत्सर्वंस्वप्नेंद्रजालवत् ॥ वैधर्म्याच्चनस्वप्नादिवदितिचभगवद्व
चनम् ॥ नचस्वप्नवदेकजीवकल्पितत्वेमानंपश्यामः ॥ विपर्ययेमाश्वोक्ताद्विती
ये ॥ उक्तंचायास्यशाखायाम् ॥ स्वप्नोहवाअयंचंचलत्वान्नचस्वप्नोनहिविच्छे
दएतदितीति ॥ नायंदोषः ॥ नहीश्वरस्यजीवैक्यमुच्यते ॥ जीवस्यहीश्वरैक्यमि
तिध्येयम् ॥ तदपिननिरुपाधिकं ॥ अतोनप्रतिबिंबत्वविरोध्यैक्यम् ॥ तथाचमाधु
छंदसश्रुतिः ॥ ऐक्यंचापिप्रातिबिंब्येनविष्णोर्जीवस्यवैतदृषयोवदंतीति ॥ अ
हंग्रहोपासनेचफलाधिक्यमाग्निवेश्यश्रुतिसिद्धम् ॥ अहंग्रहोपासकस्तस्यसाम्यम

भ्याशोहवाअश्रुतेनात्रशंकेति ॥ तदीयोहमितिज्ञानमहंग्रहइतीरितइतिवाम
ने ॥ तद्वशत्वात्तुसोऽस्मीतिभृत्यैरेवनतुस्वतइतिच ॥ प्रातिबिंब्येनसोऽस्मिभृत्यश्चे
तिभावना ॥ तथाल्वायास्यशाखायाम् ॥ भृत्यश्चाहंप्रातिबिंब्येनसोस्मीत्येवंल्वु
पास्यःपरमःपुमान्सइति ॥ प्रातिबिंब्यंचतत्साम्यमेव ॥ [२६]सांख्येनवेदोक्तभगव
त्स्वरूपज्ञानेन ॥ कर्मिणामपिश्रुत्वाज्ञात्वाध्यात्वादृष्टिः ॥ श्रावकाणांचज्ञात्वाध्या
त्वा ॥ साख्यानांचध्यात्वा ॥ तथाचगौपवनश्रुतिः ॥ कर्मकृच्चापितच्छ्रुत्वाज्ञात्वा
ध्यात्वानुपश्यति ॥ श्रावकोपितथाज्ञात्वाध्यात्वाज्ञान्यपिपश्यति ॥ अन्यथात
स्यदृष्टिर्हिकथंचिन्नोपजायतइति ॥ अन्यइत्यतःशक्तानामप्युपायदर्शनार्थं ॥ [२७]पुन
श्चप्रकृतिपुरुषेश्वरस्वरूपंसाम्यादिधर्मयुतमाह ॥ यावदित्यादिना ॥ [३०]आत्मानंचाक
र्तारंपश्यति ॥ सपश्यति ॥ [३१]एकस्थमेकास्मिन्नेवविष्णौस्थितम् ॥ ततएवचविष्णोर्वि
स्तारं ॥ [३२]नैंचव्ययादिस्तस्येत्याह ॥ अनादित्वादिति ॥ सादिर्हिप्रायोव्ययिगुणा
त्मकंच ॥ नकरोतीत्यादेरर्थउक्तःपुरस्तात् ॥ नलौकिकःक्रियादिस्तस्य ॥ अतोन
प्रज्ञमित्यादिवदिति ॥ [३५]भूतेभ्यःप्रकृतेश्च ॥ मोक्षसाधनममानित्वादिकम् ॥ इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येत्रयोदशोऽध्यायः ॥१३॥

ॐज्ञानदत्तेनमः साधनंप्राधान्येनोत्तरैरध्यायैर्वक्ति॥ [३]महद्ब्रह्मप्रकृतिः ॥ साचश्री
र्भूर्दुर्गेतिभिन्ना ॥ उमासरस्वत्याद्यास्तुतदंशयुताअन्यजीवाः ॥ तथाचकाषाय
णश्रुतिः॥ श्रीर्भूर्दुर्गामहतीतुमायासालोकसूतिर्जगतोबंधिकाच ॥ उमावागाद्या
अन्यजीवास्तदंशास्तदात्मनासर्ववेदेषुगीताइति ॥ ममयोनिरिति॥गर्भाधानार्था
योनिः ॥ नतुमाता॥ वाक्यशेषात् ॥ तथाचसामवेदेशार्कराक्ष्यश्रुतौ ॥ विष्णुर्यो
निर्गर्भसंधारणार्थामहामायासर्वदुःखैर्विहीना ॥ तथाप्यात्मानंदुःखिवन्मोहना
र्थंप्रदर्शयंतीसहविष्णुनासेति ॥ अतःसीतादुःखादिकंसर्वंमृषाप्रदर्शनमेव ॥ त
थाचकूर्मपुराणे॥ नचेयंभूः॥ तथाचसौकरायणश्रुतिः॥ अन्याभूर्भूरियंतस्यच्छा
याभूतावमासाहिभूतैकयोनिरिति ॥ अवापस्वेच्छयादास्यंजगतांप्रपितामही
त्यानभिम्लानश्रुतिः॥ मत्स्यपुराणोक्तमपिस्वेच्छयैव॥ महद्ब्रह्मशब्दवाच्यापिप्रकृ
तिरेव ॥ महतीब्रह्मणीहेतुप्रकृतिश्चमहेश्वरइतिहितत्रैव ॥ बंधप्रकारंदर्शयतिसा
धनानुष्ठानायसत्वमित्यादिना ॥ तृष्णासंगयोःसमुद्भवं ॥ तयोःकारणं अज्ञानं
जायतेयतस्तदज्ञानजं ॥ प्रमादमोहौतमसइतिवाक्यशेषात् ॥ [१६]रजसस्तुफलं
दुःखमित्यल्पसुखंदुःखम् ॥ तथाहिशार्कराक्ष्यशाखायाम् ॥ रजसोह्येवजायते

माज्ञयासुखंदुःखंतस्मात्तान्सुखिनोदुःखिनइत्याचक्षतइति ॥ अन्यथादुःख
स्यातिकष्टत्वात्तमोधिकत्वंरजसोनस्यात् ॥ [१९]परिणामिकर्तारंगुणेभ्योऽन्यंनपश्य
ति ॥ अन्यथायदापश्यःपश्यतेरुग्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिमितिश्रुति
विरोधः ॥ नाहंकर्तानकर्तात्वंकर्तायस्तुसदाप्रभुरितिमोक्षधर्मे ॥ [२२]प्रायोनद्वेष्टि
नकांक्षति ॥ तथाहिसामवेदेभाल्लवेयशाखायाम् ॥ रजस्तमःसत्वगुणान्प्र
वृत्तान्प्राप्तोनचद्वेष्टिनचापिकांक्षति ॥ तथापिसूक्ष्मंसत्वगुणंचकांक्षेद्यदिप्रविष्टं
सुतमश्चजह्यादिति ॥ नहिदेवाऋषयश्चसत्वस्थान्नृपसत्तम ॥ हीनाःसत्वेनसू
क्ष्मेणततोवैकारिकामताः ॥ कथंवैकारिकोगच्छेत्पुरुषःपुरुषोत्तममितिमोक्ष
धर्मे ॥ सात्विकःपुरुषव्याघ्रभवेन्मोक्षार्थनिश्चितइतिच ॥ [२५]तुल्यत्वार्थउक्तःपुर
स्तात् ॥ [२६]ब्रह्मवत्प्रकृतिवत् ॥ भगत्प्रियत्वंब्रह्मभूयम् ॥ ननुतावत्प्रियत्वम् ॥ किंतु
प्रियत्वमात्रं ॥ बद्धोवापितुमुक्तोवानरमावत्प्रियोहरेरितिपाद्मे ॥ भूयायभावा
य [२७]ब्रह्मणःमायायाः ॥ ॥ इतिश्रीमदानंद तीर्थभगवत्पादाचार्य विरचितेश्रीमद्गी
ताभाष्येचतुर्दशोध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रीहयग्रीवायनमः ॥ ॥ संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्यायेदर्श
यति॥ ऊर्ध्वौविष्णुः। ऊर्ध्वंपवित्रोवाजिनीवस्वमृतमस्मिद्रविणःसवर्चसमितिहि
श्रुतिः॥ ऊर्ध्वउत्तमः ॥ सर्वतःअधोनिकृष्टंशाखाभूतानि॥ श्वोप्येकप्रकारेणनति
ष्ठतीत्यश्वत्थः॥ तथापिनप्रवाहव्ययः ॥ पूर्वब्रह्मकालेयथास्थितिस्तथासर्वत्रापी
त्यव्ययता॥ फलकारणत्वाच्छंदसांपर्णत्वम्॥ नहिकदाचिदप्यजातेपर्णेफलोत्प
त्तिः ॥ अव्यक्तेऽपिसूक्ष्मरूपेणसतिशरीरादौचभूतानीत्यधश्चोर्ध्वंचप्रसृताः ॥
गुणैःसत्वादिभिः ॥ प्रतीतिमात्रसुखत्वात्प्रवालाविषयाः ॥ मूलानिभगद्रू-
पादीनि ॥ भगवानपिकर्मानुबंधेनहिफलंददाति ॥ तथाचभाल्लवेयशाखा
याम् ॥ ब्रह्मवाअस्यपृथक्मूलंप्रकृतिःसमूलंसत्वादयोर्वाचीनमूलंभूतानिशा
खाश्छंदांसिपत्राणिदेवनृतिर्यञ्चश्चशाखाःपत्रेभ्योहिफलंजायतेमात्राःशिफाः
मुक्तिःफलममुक्तिःफलमोक्षोरसोऽमोक्षोरसःअव्यक्तेचशाखाव्यक्तेशाखाअ--
व्यक्तेचमूलंव्यक्तेचमूलएषोश्वत्थोगुणालोलपत्रोनस्थीयतेननस्थीयतेनह्येषक
दाचनान्यथाजायतेनान्यथाजायतइति ॥ यथास्थितस्तथानोपलभ्यते ॥
अंतादिर्विष्णुः ॥ त्वमादिरंतोजगतोस्यमध्यमितिभागवते ॥ अनाद्यंतंपरं

ब्रह्मनदेवाऋषयोविदुरितिचमोक्षधर्मे ॥ असंगशस्त्रेणसंगराहित्यसहितेनज्ञाने
न ॥ ज्ञानासिनोपासनयासितेनेतिहिभागवते ॥ छेदश्चविमर्शएव ॥ त
तश्चतस्यैवाबंधकंभवति ॥ तथाहिमूलस्थंब्रह्मप्रतीयते ॥ तच्चोक्तंतच्छ्रुतावे
व ॥ विमर्शोस्यच्छेदस्सतंनबध्नातिबध्नातिचान्यानिति ॥ तदर्थंचतमेवप्रपद्ये
प्रपद्येत ॥ तच्चोक्तंतत्रैव॥ तंवैप्रपद्येतयंवैप्रपद्यनशोचतिनहृष्यति॥नजायतेनम्रि
यतेतद्ब्रह्ममूलंतच्छित्सुरिति ॥ नारायणेनदृष्टश्चप्रतिबुद्धोभवेत्पुमानितिचमोक्ष
धर्मे॥ छेदनोपायोत्यत्राऽऽकांक्षितः॥ नचभगवतोन्यःशरण्योऽस्ति॥ साधनांतर
माह ॥ निर्मानेति ॥ स्वरूपंकथयति ॥ नतदित्यादिना ॥ कर्षतीत्युक्तेजीवस्य
स्वातंत्र्यंप्रतीतंतन्निवारयति ॥ शरीरमित्यादिना॥ यत्शरीरमाप्नोत्युत्क्रामतिच
जीवः॥ तदेश्वरएवतानिगृहीत्वासंयाति ॥ यत्रयत्रैवसंयुक्तोधातागर्भेपुनःपुनः॥
तत्रतत्रैववसतिनयत्रस्वयमिच्छतीतिहिमोक्षधर्मे ॥ भावाभावावपिजानन्गरी
योजानामिश्रेयोनतुतत्करोमि ॥ आशासुहर्म्यासुहृदासुकुर्वन्यथानियुक्तोऽ
स्मितथावहामीतिच ॥ हत्वाजित्वापिमघवन्यःकश्चित्पुरुषायते ॥ अकर्तात्वेव
भवतिकर्तात्वेवकरोतितदितिच ॥ तद्यथाऽनःसुसमाहितमुत्सर्जद्यायादेवमेवा

यंशारीरआत्माप्राज्ञेनात्मनान्वारूढउत्सर्जंद्यातीतिचश्रुतिः ॥ वाङ्मनसिसंपद्य
ते मनःप्राणे प्राणस्तेजसि तेजःपरस्यांदेवतायामितिच॥ गंधानिवसूक्ष्माणि ॥ भो
गोस्यापिसाधितःपुरस्तात् ॥ इंद्रियद्वाराहिसोपिभुंक्ते ॥ तद्यइमेवीणायांगायंत्येतं
तेगायंतीतिश्रुतिः ॥ गुणान्वितमेवभुङ्क्ते ॥ नहवैदेवान्पापंगच्छतीतिश्रुतेः ॥ [१०]तं
हिंकिमितिनदृश्यतइत्यतआह ॥ उत्क्रामंतमित्यादिना ॥ [११]यंतंतोज्ञानंप्राप्यअ
कृतात्मानोऽशुद्धबुद्धयः ॥ [१२]पूर्वोक्तमेवज्ञानंप्रपंचयति ॥ यदादित्यगतमित्यादि
ना ॥ [१५]गांभूमिं ॥ वेदनिर्णयात्मिकामीमांसावेदांतः ॥ तथाचसामवेदेप्राचीन
शालाश्रुतिः ॥ सवेदांतकृत्सकालकइतिसत्येवयुक्तिसूत्रकृत्सकालकइतीति ॥
[१६]क्षरभूतानिब्रह्मादीनि ॥ कूटस्थाप्रकृतिः ॥ तथाचशार्कराक्ष्यश्रुतिः ॥ प्रजापति
प्रमुखाःसर्वजीवाःक्षरोक्षरःपुरुषोवैप्रधानम् ॥ तदुक्तमंचान्यमुदाहरंतिजालाजा
लंमातरिश्वानमेकमिति ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्गीताभाष्येपंचदशोध्यायः ॥ १५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥
श्रीवेदव्यासायनमः॥ ॐपुमर्थसाधनविरोधीन्यनेनाध्यायेनदर्शयति॥[१]तपोब्रह्मच
र्यादिब्रह्मचर्यादिकंतपइत्यभिधानम्॥ पैशुनंपरोपद्रवनिमित्तदोषाणांराजादेःक

थनम्॥ परोपद्रवहेतूनांदोषाणांपैशुनंवचः॥राजादेस्तुमदाद्धीतेरदृष्टिर्दर्पउच्यतइ
त्यभिधानात्॥ लौल्यंरागः॥ रागोलौल्यंतथारक्तिरित्यभिधानात्॥ अचापलंस्थै
र्यम् ॥ चपलश्चंचलोऽस्थिरइत्यभिधानात् ॥ क्षमातुक्रोधाभावेनसहापकर्तुरन
पकृतिः ॥ अक्रोधदोषकृच्छत्रोःक्षमावान्सनिगद्यतइत्यभिधानात् ॥ दैवींसंप
दमभिजातःप्रतिजातः ॥ जगतःसत्यंप्रतिष्ठाईश्वरश्चविष्णुस्तद्वैपरीत्येनाऽऽहुः ॥
तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमितिहिश्रुतिः ॥ द्वेवा
वब्रह्मणोरूपेमूर्त्तंचामूर्तंचास्थितंयच्चसच्चत्यच्चेति ॥ तस्योपनिषत्सत्यस्यसत्य
मिति ॥ एषह्येवैतत्सादयतियामयतिचेतीतिप्राचीनशालश्रुतिः ॥ परस्परसंभ
वोह्युक्तोऽन्नाद्भवंतिभूतानीत्यादिना ॥ दुष्पूरोहिकामः ॥ पातालइवदुष्पूरोमा
हिक्लेशयतेसदेदिमोक्षधर्मे ॥ मामात्मपरदेहेष्वितिनकस्यचिद्द्विष्णुःकारयिता ॥
यदिस्यान्मामपीदानींकारयत्वित्यादि ॥ ईश्वरोयदिसर्वस्यकारकःकारयीतमा
म् ॥ अद्येतिवादिनंब्रूयात्सदाधोयास्यसीतिहिसामवेदेयास्कश्रुतिः॥ ॥इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येषोडशोऽध्यायः ॥ १६ ॥

श्रीहयग्रीवोविजयते ॥ ॥ गुणभेदान्प्रपंचयत्यनेनाध्यायेन ॥ [१]शास्त्रविधिमुत्सृ
ज्यअज्ञात्वैव ॥ वेदःकृत्स्नोऽधिगंतव्यःसरहस्योद्विजन्मनेतिविधिरुत्सृष्टोहितैः ॥
येवैवेदंनपठंतेनचार्थंवेदोज्ञांस्तान्विद्धिसानूनबुद्धीनितिमाधुच्छंदसश्रुतिः॥ अ
न्यथातुतामसाइत्येवोच्येत ॥ नतुविभज्य ॥ यदिसात्विकास्तर्हिनोत्सृष्टशास्त्राः॥
नहिवेदविरुद्धोधर्मः ॥ वेदोखिलोधर्ममूलंस्मृतिशीलेचतद्विदामितिहिस्मृतिः ॥
वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययइतिचभागवते॥ [२]अतोविभज्याह ॥ त्रिविधे
त्यादिना ॥ [३]सत्वानुरूपाचित्तानुरूपा ॥ योयच्छ्रद्धःसएवसः ॥ सात्विकश्रद्धः
सात्विकइत्यादि ॥ [४]कःसात्विकश्रद्धइत्यादिविभज्याह ॥ यजंतइत्यादिना ॥ [६]भ
गवत्कर्शनंनामाल्पत्वदृष्टिरेव॥ योवैमहांतंपरमंपुमांसंनैवंद्रष्टाकर्शकःसोतिपापी
तित्यनभिम्लानश्रुतिः॥ आसुरोनिश्चयोयेषांतआसुरनिश्चयाः ॥ देवास्तुसा
त्विकाःप्रोक्तादैत्याराजसतामसाइतित्याग्निवेश्यश्रुतिः ॥ प्रीतिरानंतरिका ॥ हृ
द्यत्वंदर्शने ॥ स्थिराश्चनतदैवपक्वाभवंति ॥ तथाद्याज्यादयः ॥ [१६]सौम्यत्वम
क्रौर्यम् ॥ अक्रूरःसौम्यउच्यतइत्यभिधानम्॥ मौनंमननशीलत्वम् ॥ बाल्यं
चपांडित्यंचनिर्विद्याथमुनिरितिहिश्रुतिः॥ एतेनहीदंसर्वंमतंयदनेनहीदंसर्वंमतं

तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षतइतिभाल्लवेयश्रुतिः ॥ कथंचान्यथामानसं
तपःस्यात् ॥ [23]पुनश्चकर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह ॥ ॐतत्सदित्या
दिना ॥ परस्यब्रह्मणोह्येतानिनामानि ॥ ओतंजगद्यत्रस्वयंचपूर्णोवेदोक्तरूपोऽ
नुपचारतश्च ॥ सर्वैःशुभैश्चाभियुतोनचान्यैरोंतत्सदित्येनमथोवदंतीतिहिऋग्वेद
खिलेषु ॥ द्वितीयपादस्तच्छब्दार्थः ॥ सदेवसोम्येदमग्रआसीदितिच ॥ ओमि
तिब्रह्मेतिच ॥ तेनब्रह्मणा ॥ आत्मपूजार्थम् ॥ वेदविधिर्व्यंजनंमातूक्तापुरस्ता
त् ॥ [25]तत्फलंमेस्यादित्यनभिसंधाय ॥ [26]सद्भावशब्देनप्रजननंसूचितम् ॥ ओमि
त्युक्त्वानभिसंधायफलंयज्ञदानतपआदिकृतामतिप्रीतेर्नामसाम्याद्ब्रह्मैवनिष्पा
दितंभवतीत्याशयः ॥ तथाचऋग्वेदखिलेषु ॥ ॐयज्ञाद्यानिष्फलंकर्मतत्स्या
त्सदैतदर्थंकर्मवदंतिदेवाः ॥ तच्छब्दानांसन्निधेर्बलप्रीतेस्तद्रूपत्वाज्जनितब्रह्मत
स्येति ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्ये
सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
श्रीमध्वराजगुरुभ्योनमः ॥ ॥ पूर्वोक्तंसाधनंसर्वंसंक्षिप्योपसंहरत्यनेनाध्या
येन ॥ फलानिच्छयाऽकरणेनवाकाम्यकर्मणोन्यासःसंन्यासः ॥ त्यागस्तुफलत्या

गएव॥ तथाहिप्राचीनशालश्रुतिः ॥ अनिच्छयाऽकर्मणावापिकाम्यन्यासोन्या
सःफलत्यागस्तुत्यागइति ॥ [३]मनीषिणइतिविशेषणात्पूर्वपक्षोपिग्राह्यएव ॥
फलत्यागेनत्यागोविविक्षितोयज्ञादेस्तत्पक्षे ॥ यस्तुकर्मफलत्यागीतिचवक्ष्य
ति ॥ अतएकएवायंपक्षः ॥ [४]तत्प्रकारंचाह ॥ निश्चयमित्यादिना ॥ यज्ञभेदउक्तो
द्रव्ययज्ञाइत्यादिना ॥ दानेत्वभयदानमंतर्भवति ॥ एतेषांमध्येयत्किंचिज्ज्ञा
दिकंकर्तव्यमेवेत्यर्थः ॥ अन्यथा ब्रह्मचारीगृहस्थोवावानप्रस्थोयतिस्तथा ॥
यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेदितिव्यासस्मृतिविरोधः ॥ ज्ञान-
यज्ञविद्याभयदानंब्रह्मचर्यादितपसोहिते ॥ अतोयद्वचोऽन्यथाप्रतीयतेऽधि-
कारभेदेनतद्योज्यम् ॥ अन्यथेतरेषांगत्यभावात् ॥ [११]अन्यस्यागार्थोनयुक्तइ
त्याह ॥ नहीति ॥ [१२]त्यागंस्तौति । अनिष्टमिति ॥ [१३]पुनःसंन्यासंप्रपंचयितुंकर्म
कारणान्याह ॥ पंचेत्यादिना । सांख्येकृतांतेज्ञानसिद्धांते ॥ [१४]अधिष्ठानंदेहा
दिः ॥ कर्ताविष्णुः । सहिसर्वकर्तेत्युक्तम् ॥ जीवस्यचाकर्तृत्वेप्रमाणमुक्तम् ॥
करणमिंद्रियादि ॥ चेष्टाःक्रियाःहस्तादिक्रियाभिर्होमादिकर्माणिजायंते ॥
ध्यानादेरपिमानसीचेष्टाकारणं ॥ पूर्वतनीचेष्टापिसंस्कारकारणत्वेनभवति ॥ दै

वमदृष्टम् ॥ तथाचायास्यश्रुतिः । देहोब्रह्मार्थेंद्रियाद्याःक्रियाश्चतथादृष्टंपंचमं
कर्महेतुरिति ॥ [16]केवलंनिष्क्रियम् ॥ एनंकेवलमात्मानंनिष्क्रियत्वाद्दृदंतिहीति
तत्रैव ॥ [17]तंज्ज्ञानंस्तौति॥यस्येति॥ यस्त्वीषद्बध्यतेसईषदहंकारीच॥ [18]एवंतर्हिनपुरु
षमपेक्ष्यविधिःअकर्तृत्वादित्यतआह॥ज्ञानमिति ॥ त्रिविधाकर्मचोदना ॥ एत
त्रिविधमपेक्ष्यकर्मविधिरितित्रिविधेत्युच्यते ॥ कारणानिसंक्षिप्याह ॥ करणमि
ति॥कर्मसंग्रहः॥ कर्मकारणसंग्रहः॥ अधिष्ठानादिकरणएवांतर्भूतम्॥तथाह्यृग्वे
दखिलेषु॥ ज्ञानंज्ञेयंज्ञानिनंचाप्यपेक्ष्यविधिरुत्थितः॥ करणंचैवकर्ताचकर्मकार
णसंग्रहइति ॥ अकर्तृत्वेपिविधिद्वाराईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैःकर्मद्वा
रापुरुषार्थोभवतीति ॥ ईश्वराधीनत्वेपिविधिद्वारानियतस्तेनैव ॥ यदिचेच्छा
दिर्जायतेतर्हिकारितमेवेश्वरेण ॥ फलंचनियतम् ॥ वस्तुतोऽकर्तृत्वेप्याभिमा
निकंकर्तृत्वंतस्यैव ॥ स्वातंत्र्यंचजडमपेक्ष्यैवेतिनप्रवृत्तिविधिवैय्यर्थ्यं॥ सर्वंचैत
दनुभवोक्तप्रमाणसिद्धमिति॥नपृथक्प्रमाणमुच्यते॥ [19]पुनःसाधनप्रथनायगुणभे
दानाह॥ ज्ञानमित्यादिना ॥ गुणसंख्यानेगुणगणनप्रकरणे॥[20]एकंभावंविष्णुम् ॥
[21]परकृतंदोषंदीर्घकालकृतमप्यनुचिंतयःसूचयतिसदीर्घसूत्री ॥ परेणयःकृतोदोषो

दीर्घकालकृतोपिवा॥ यस्तस्यसूचकोदोषाद्दीर्घसूत्रीसउच्यतइत्यभिधानात् ॥ [३९] य-
थार्थत्वनियमाभावेराजस्याः ॥ अन्यथातामस्याभेदाभावात्॥ [४९] नैष्कर्म्यसिद्धिं॥
नैष्कर्म्यफलांयोगसिद्धिम्॥ [५०] यथायेनोपायेनसिद्धिंप्राप्तोब्रह्माप्नोतितथानिबोध॥
यासिद्धिर्ज्ञानस्यपरानिष्ठा॥ [५३] ब्रह्मभूयायकल्पते ॥ ब्रह्मणिभावोब्रह्मभूयम् ॥ ब्रह्म
णिस्थितिःसर्वदातन्मनस्कतेत्यर्थः॥ [५६] पुनरंतरंगःसाधनान्युक्त्वोपसंहरति॥ सर्वक
र्माणीत्यादिना ॥ [६३] परोक्षवचनंतुद्रोणंप्रतिभीमवचनवत् ॥ धर्मत्यागःफलत्या-
गः ॥ कथमन्यथायुद्धविधिः॥ यस्तुकर्मफलत्यागीसत्यागीत्यभिधीयतइतिचोक्त
म्॥ ७ ॥ पूर्णादोषमहाविष्णोर्गीतामाश्रित्यलेशतः ॥ निरूपणंकृतंतेनप्रीयतांमे
सदाविभुः॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्गीताभाष्येऽ
ष्टादशोऽध्यायः ॥ १८ ॥ इतिश्रीमद्गीताभाष्यम् ॥ ७ ॥ ॥ ७ ॥

---

संकराख्यस्य दुर्योनेर्निःसृतेन रजस्वला। गीतानारी समीरेण शोधिता हंसरूपि
णा ॥ मायिनःशलभायन्ते भास्करस्तस्करायते। यस्य तस्मिन्प्राणनाथे यतीन्द्रे
भक्तिरस्तु मे ॥

नार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठम् ॥ यमेवैषवृणुतेतेनलभ्यस्तस्यैषआ
त्माविवृणुतेतनूंस्वाम् ॥ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेम
हात्मनइत्यादिश्रुतिभ्यश्च ॥ व्योमसंहितायांच ॥ अंत्यजाअपियेभक्तानामज्ञानाधिकारिणः॥
स्त्रीशूद्रब्रह्मबंधूनांतंत्रज्ञानेधिकारिता ॥ एकदेशेपरोक्तेतुनतुग्रंथपुरःसरे ॥ त्रैवर्णिकानांवेदोक्ते
सम्यग्भक्तिमतांहरौ ॥ आहुरप्युत्तमस्त्रीणामधिकारंतुवैदिके ॥ यथोर्वशीयमीचैवशच्याद्याश्च
तथापराइति ॥ यतोनारायणप्रसादमृतेनमोक्षः ॥ नचज्ञानंविनात्यर्थंप्रसादः ॥ अतोब्रह्मजि
ज्ञासाकर्तव्या ॥ यत्रानवसरोऽन्यत्रपदंतत्रप्रतिष्ठितम् ॥ वाक्यंवेतिसतांनीतिःसावकाशेनतद्भवे
दितिबृहत्संहितायाम् ॥ तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यते ॥ प्रियोहिज्ञा
निनोऽत्यर्थमहंसचममप्रियः ॥ यमेवैषवृणुतेतेनलभ्यः ॥ आत्मावाऽरेद्रष्टव्यःश्रोतव्योमंतव्योनि
दिध्यासितव्यइत्यादिश्रुतिस्मृतिभ्यः ॥ कर्मणात्वधमःप्रोक्तःप्रसादश्श्रवणादिभिः ॥ मध्य
मोज्ञानसंपत्त्याप्रसादस्तूत्तमोमतः ॥ प्रसादात्त्वधमाद्विष्णोःस्वर्गलोकःप्रकीर्तितः ॥ मध्य
माज्जनलोकादिरुत्तमस्त्वेवमुक्तिदः ॥ श्रवणंमननंचैवध्यानंभक्तिस्तथैवच ॥ साधनंज्ञानसं
पत्तौप्रधानंनान्यदिष्यते ॥ नचैतानिविनाकश्चिज्ज्ञानमापकुतश्चनेतिनारदीये ॥ ब्रह्मश
ब्दश्चविष्णवावेव ॥ यमंतःसमुद्रेकवयोवयंतियदक्षरेपरमेप्रजाः ॥ यतःप्रसूताजगतःप्रसूतीतोये
नजीवान्व्यससर्जभूम्यामित्युक्त्वा तदेवनैतदुसत्यमाहुस्तदेवब्रह्मपरमंकवीनामितिहिश्रुतिः ॥ ॥ २ ॥
तन्नोविष्णुरितिवचनाद्विष्णुरेवहितत्रोच्यते ॥ नचेतरशब्दात्तत्प्राप्तिः ॥ नामानिविश्वा

न्निनसंतिलोकेयदाविरासीदनृतस्यसर्वम् ॥ नामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाह रंतीतिभाल्लवेयश्रुतिः ॥ योदेवानांनामधाएकएवतंसंप्रश्नंभुवनायंत्यन्येत्येवशब्दान्नान्येषांस र्वनामता ॥ अजस्यनाभावध्येकमर्पितंयास्मिन्विश्वानिभुवनानितस्थुरितिविष्णोर्हिलिंगम् ॥ नचप्रसिद्धार्थंविनाऽन्योऽर्थोयुज्यते ॥ अजस्यनाभावितियस्यनाभेरभूत्श्रुतेःपुष्करंलोकसार म्॥तस्मैनमोव्यस्तसमस्तविश्वविभूतयेविष्णवेलोककर्त्रेइतिस्कांदे॥परोदिवापरएनापृथिव्येतिस माख्याश्रुतौ॥यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधामित्युक्त्वाममयोनिरप्स्वंतःसमुद्र इत्याह ॥ उग्रोरुद्रः ॥ समुद्रेतनारायणः॥ प्रसिद्धत्वात्सूत्रितत्वाच्चास्यार्थस्यनचाविरोधेप्रसिद्धः परित्यज्यते॥ उक्तन्यायेनचश्रुतयएतमेववदंति ॥ वेदेरामायणेचैवपुराणेभारतेतथा ॥आदावंते चमध्येचविष्णुःसर्वत्रगीयतइतिहरिवंशेषु ॥ नचेतरग्रंथविरोधः ॥ एषमोहंसृजाम्याशुयो जनान्मोहयिष्यति ॥ त्वंचरुद्रमहाबाहोमोहशास्त्राणिकारय ॥ अतथ्यानिवितथ्यानिदर्शयस्वम हाभुज॥ प्रकाशंकुरुचात्मानमप्रकाशंचमांकुर्वितिवाराहवचनात् ॥ शैवेचस्कांदे॥श्वपचादपिक ष्टत्वंब्रह्मेशानादयःसुराः ॥ तदैवाच्युतयांत्येवयदैवत्वंपराङ्मुखइति ॥ ब्राह्मेचब्रह्मवैवर्त्ते ॥नाहं नचशिवोन्येचतच्छक्त्येकांशभागिनः॥बालःक्रीडनकैर्यद्वत्क्रीडतेऽस्माभिरच्युतइति॥नचवैष्णवे षुतथा॥तच्चैषमोहमित्युक्तम्॥१॥अ०१ ॥ ब्रह्मणोलक्षणमाह ॥ ॥ ॐजन्माद्यस्ययतःॐ॥२॥ सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबंधमोक्षायतः॥उत्पत्तिस्थितिसंहारानियतिर्ज्ञानमावृतिः ॥ बंधमोक्षौचपुरुषाद्यस्मात्सहरिरेकराडितिस्कांदे ॥ यतोवाइमानिभूतानिजायंते ॥ येन

जातानिजीवंति॥यत्प्रयंत्यभिसंविशंतितद्विजिज्ञासस्वतद्ब्रह्मेति ॥ यउत्रिधातुपृथिवीमुतद्यामे
कोदाधारभुवनानिविश्वा ॥ चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँश्वीविपत् ॥ परोमात्र
यातन्वावृधानननेमहित्वमन्वश्नुवंति॥ नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमाप ॥ योनः
पिताजनितायोविधाताधामानिवेदभुवनानिविश्वेत्यादिच॥२॥अ० २॥अनुमानतोऽन्येनकल्पनी
याः॥ ॥ ॐशास्त्रयोनित्वात्ॐ ॥३॥ ॥ नावेदविन्मनुतेतेतंबृहंतंसर्वानुभूमात्मानंसांपराये ॥ औ
पनिषदःपुरुषइत्यादिश्रुतिभ्यः ॥ नचानुमानस्यनियतप्रामाण्यम् ॥ श्रुतिसाहाय्यरहितमनुमानं
नकुत्रचित् ॥ निश्चयात्साधयेदर्थंप्रमाणांतरमेवच ॥ श्रुतिस्मृतिसहायंयत्प्रमाणांतरमुत्तमम् ॥
प्रमाणपदवींगच्छेन्नात्रकार्याविचारणा ॥ पूर्वोत्तराविरोधेनकोत्रार्थोऽभिमतोभवेत् ॥ इत्याद्य
मूहनंतर्कःशुष्कतर्कंतुवर्जयेदित्यादिकौर्मे ॥ शक्यत्वाच्चानुमानानांसर्वत्र ॥ सर्वत्रशक्यतेकर्तु
मागमंहिविनानुमा ॥ तस्मान्नसाशक्तिमतीविनागममुदीक्षितुमितिवाराहे ॥ रेतोधातुवटकणि
काघृतधूमाधिवासनम् ॥ जातिस्मृतिरयस्कांतःसूर्यकांतोंबुभक्षणम् ॥ प्रेत्यभूताप्ययश्चैवदेव
ताभ्युपयाचनम् ॥ मृतेकर्मनिवृत्तिश्चप्रमाणमितिनिश्चयइतिमोक्षधर्मवचनान्ननास्तिक्यवादो
युज्यते ॥ दर्शनाच्चतपआदिफलस्य ॥ ऋग्यजुःसामाथर्वाश्चभारतंपंचरात्रकम् ॥ मूलरामायणं
चैवशास्त्रमित्यभिधीयते ॥ यच्चानुकूलमेतस्यतच्चशास्त्रंप्रकीर्तितम् ॥ अतोन्योग्रंथविस्तारोनैव
शास्त्रंकुवर्त्मंतदितिस्कांदे ॥ सांख्यंयोगःपाशुपतंवेदारण्यकमेवचेत्यारभ्यवेदपंचरात्रयोरैक्या
भिप्रायेणपंचरात्रस्यैवप्रामाण्यमुक्तम्॥इतरेषांभिन्नमतत्वंप्रदर्श्यमोक्षधर्मेष्वपि ॥ शास्त्रं योनिःप्र

माणमस्येतिशास्त्रयोनि॥३॥अ० ३॥ आज्ञानांप्रतीयमानमपिनेतरेषांशास्त्रयोनित्वम्॥कुतः ॥ ॥
ॐतत्तुसमन्वयात्ॐ ॥ ४ ॥ ॥ अन्वयउपपत्त्यादिलिंगम्॥उक्तंचबृहत्संहितायाम्॥उपक्रमोपसं
हारावभ्यासोपूर्वताफलम्॥ अर्थवादोपपत्तीचलिंगंतात्पर्यनिर्णयइति ॥ उपक्रमादितात्पर्यलिंगैः
सम्यग्निरूप्यमाणेतदेवशास्त्रगम्यम्॥ मांविधत्तेऽभिधत्तेमांविकल्प्योपोह्यइत्यहम् ॥ इत्यस्या
हृदयंसाक्षान्नान्योमद्वेदकश्चनेतिहिभागवते ॥४॥अ० ४॥ ननुयतोवाचोनिवर्तंतेअप्राप्यमनसा
सह ॥ अशब्दमस्पर्शमरूपमव्ययंतथाऽरसंनित्यमगंधवच्चयत् ॥ अवचनेनैवप्रोवाच ॥ यद्वाचा
नभ्युदितम् ॥ येनवागभ्युद्यते ॥ यच्छ्रोत्रेणनशृणोति॥येनश्रोत्रमिदंश्रुतमित्यादिभिर्नतच्छ
ब्दगोचरम् ॥ नेत्याह ॥ ॥ ॐईक्षतेर्नाशब्दम्ॐ ॥५॥ सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुष
मीक्षते ॥ आत्मन्येवात्मानंपश्येत् ॥ विज्ञायप्रज्ञांकुर्वीतेत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव ॥
औपनिषदत्वान्नावचनेनेक्षणम् ॥ सर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति ॥ वेदैश्चस
र्वैरहमेववेद्योवेदांतकृद्वेदविदेवचाहमित्यादिश्रुतिस्मृतिभ्यश्च ॥अवाच्यत्वादिकंत्वप्रसिद्धत्वात् ॥
नतदीदृगितिज्ञेयंनवाच्यंनचतर्क्यते ॥ पश्यंतोऽपिनपश्यंतिमेरोरूपंविपश्चितइतिवत् ॥ अप्रसि
द्धेरवाच्यंतद्वाच्यंसर्वागमोक्तितः ॥ अतर्क्यंतर्क्यमज्ञेयंज्ञेयमेवंपरंस्मृतमितिगारुडे ॥नचाऽशब्द
त्वमितरसिद्धम् ॥ ५॥ ॥ॐगौणश्चेन्नात्मशब्दात्ॐ ॥६॥ ॥ नचगौणआत्मादृश्योवाच्यश्चननि
र्गुणइतियुक्तम् ॥ आत्मशब्दात् ॥ योगुणैःसर्वतोहीनोयश्चदोषविवर्जितः ॥ हेयोपादेयरहितःस
आत्मेत्यभिधीयते ॥ एतदन्यस्वभावोयःसोनात्मेतिसतांमतम् ॥अनात्मन्यात्मशब्दस्तुसोपचारः

प्रयुज्यतइतिवामने ॥ द्वेवावब्रह्मणोरूपेआत्माचैऽवानात्माच ॥ तत्रयःसआत्मासनित्यः
शुद्धःकेवलोनिर्गुणश्च ॥ अथह्योऽनीदृशःसोनात्मेतितलवकारब्राह्मणम् ॥नचमुख्येसत्यमुख्यंयु
ज्यते ॥ ६ ॥ ॥ ॐतन्निष्ठस्यमोक्षोपदेशात्ॐ ॥ ७ ॥ ॥ नहिगौणात्मनिष्ठस्यमोक्षः॥यस्यानुवि
त्तःप्रतिबुद्धआत्माअस्मिन्संदेहेगहनेप्रविष्टः ॥ सविश्वकृत्सहिसर्वस्यकर्तातस्यलोकःसउलो
कएवेत्यात्मनिष्ठस्यमोक्षउपदिश्यते ॥ अथमात्माब्रह्म ॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते॥
दत्तंदुर्वाससंसोममात्मेशब्रह्मसंभवान् ॥ चेतनस्तुद्विधाप्रोक्तोजीवआत्मेतिचप्रभो ॥ जीवाब्र
ह्मादयःप्रोक्ताआत्मैकस्तुजनार्दनः ॥ इतरेष्वात्मशब्दस्तुसोपचारःप्रयुज्यते ॥ तस्यात्मनोनि
र्गुणस्यज्ञानान्मोक्षउदाहृतः ॥ सगुणास्त्वपरेप्रोक्ताःतज्ज्ञानान्नैवमुच्यते॥ परोहिपुरुषोविष्णुस्त
स्मान्मोक्षस्ततःस्मृतइतिपाद्मे ॥७॥ ॥ ॐहेयत्वावचनाच्चॐ ॥८॥ ॥ तमेवैकंजानथआत्मानम
न्यावाचोविमुंचथअमृतस्यैषसेतुरित्यन्येषांहेयत्ववचनादस्याहेयत्ववचनान्नगौणआत्मा ॥८॥
ॐस्वाप्ययात्ॐ ॥९॥ ॥पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते॥पूर्णस्यपूर्णमादायपूर्णमेवावशिष्य
ते ॥ सआत्मनआत्मानमुद्धृत्याऽऽत्मन्येवविलापयत्यथात्मैवभवति ॥ सदेवोबहुधाभूत्वानि
र्गुणःपुरुषोत्तमः ॥ एकीभूयपुनःशेतेनिर्दोषोहरिरादिकृदितिस्वस्यैवस्वस्मिन्नप्ययवचनात् ॥
नहिगौणात्मनिनिर्दोषस्यलयः॥९॥ ॥ॐगतिसामान्यात्ॐ॥१०॥ ॥नचकासुचिच्छाखास्वन्य
थोच्यते ॥ सर्ववेदायुक्तयःसुप्रमाणाब्राह्मंज्ञानंपरमंत्वेकमेव ॥ प्रकाशयंतेनविरोधःकुतश्चिद्वे
देषुसर्वेषुतथेतिहासइतिपैंगिश्रुतेर्गतेर्ज्ञानस्यसाम्यमेव॥ ॥ॐश्रुतत्वाच्चॐ॥ ११ ॥ ॥एकोदेवः

सर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा ॥ कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्चे
ति ॥ नह्यशब्दःश्रूयते॥नचाप्रसिद्धंकल्प्यम्॥सर्वशब्दावाच्यस्यलक्षणाऽयुक्तेः॥११॥अ०५ ॥
तमेवसमन्वयंप्रकटयत्यानंदमयोभ्यासादित्यादिनासमस्तेनाध्यायेनप्रायेण ॥ प्रायेणान्यत्रप्रसि
द्धानांशब्दानांपरमात्मनिसमन्वयःप्रदर्श्यतेऽस्मिन्पादे ॥ नान्यथातददृष्टेः॥ ब्रह्मजिज्ञासाकर्त
व्येत्युक्तम् ॥ तच्चब्रह्म॥ ब्रह्मपुच्छंप्रतिष्ठेत्यानंदमयावयवरूपंप्रतीयते॥ नह्यवयविनं [illegible]ऽवयव
मात्रस्यज्ञेयतेत्यतआह॥ ॥ॐआनंदमयोभ्यासात्ॐ॥१२॥ ॥आनंदमयोब्रह्मादिप्रकृतिर्विष्णु
र्वा॥ ब्रह्मशब्दाद्धिरण्यगर्भस्यप्राप्तिः॥ शतानंदनाम्नाच॥ अष्टमूर्तित्वात्सूर्यप्रोक्तत्वाच्चरुद्रस्य॥
एवमन्येषामपि॥ ममयोनिर्महद्ब्रह्मेतिब्रह्मशब्दाद्बहुभावाच्चप्रकृतेः॥ बृहजातिजीवकमलासनश
ब्दराशिष्वितिब्रह्मशब्दादेवसर्वजीवानाम्॥अन्नमयत्वादेश्च ॥ तथापिनतआनंदमयशब्देनोच्यं
ते॥किंतुविष्णुरेव ॥ तदेवब्रह्मपरमंकवीनाम् ॥एतमेवब्रह्मेत्याचक्षते॥ ब्रह्मशब्दःपरेविष्णौना
न्यत्रकचिदिष्यते॥ असंपूर्णाःपरेयस्मादुपचारेणवाभवेत्॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्य
ते॥ वासुदेवात्मकंब्रह्ममूलमंत्रेणवायतिरित्यादिपुतस्मिन्नेवप्रसिद्धब्रह्मशब्दाभ्यासात् ॥१२॥
ॐविकारशब्दान्नेतिचेन्नप्राचुर्यात्ॐ॥१३॥ ॥विकारात्मकत्वात्तदभिमानित्वाच्चयुज्यतेप्रकृत्या
दीनांमयट्छब्दोनतुपरमात्मनइतिमाभूत् ॥ प्रचुरानंदत्वाद्ध्यानंदमयः ॥ नतुतद्विकारित्वात् ॥
अन्नादीनांचप्राचुर्यमेव ॥ अथतेत्तिचेलिव्याख्यानात्तत्प्राचुर्यंचयुज्यते॥ उपजीव्यत्वमेवाऽ
द्यत्वम॥ सवाएषइत्यन्यप्रारंभात् ॥ येऽन्नंब्रह्मोपासतइत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्चनविकारि

त्वमविरोधश्च ॥ नचपृथक्कल्पनायुक्ता ॥ स्वरूपेचयुज्यतेप्रचुरप्रकाशोरविरितिवत् ॥१३॥ ॥ॐत
द्धेतुव्यपदेशाच्चॐ॥१४॥ ॥कोह्येवान्यात्कःप्राण्यात्य देषआकाशआनंदोनस्यादिति ॥१४॥
ॐमांत्रवर्णिकमेवचगीयतेॐ॥१५॥ ॥ब्रह्मविदाप्नोतिपरमितिसूचयित्वासत्यंज्ञानमनंतंब्रह्मेतिमं
त्रवर्णलक्षितंपरमेवब्रह्मशब्दानुसंधानाद्गीयते ॥ नचावयत्वविरोधः ॥ सशिरःसदक्षिणःपक्षःसउ
त्तरःपक्षःसआत्मासपुच्छमितितस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम्॥शिरोनारायणःपक्षोदक्षिणः
सव्यएवच ॥ प्रद्युम्नश्चानिरुद्धश्चसंदोहोवासुदेवकः ॥ नारायणोऽथसंदोहोवासुदेवःशिरोऽपिवा॥
पुच्छंसंकर्षणःप्रोक्तएकएवतुपंचधा ॥ अंगांगित्वेनभगवान्क्रीडतेपुरुषोत्तमः॥ ऐश्वर्यान्नविरोध
श्चिंत्यस्तस्मिञ्जनार्दने ॥ अतर्केहिकुतस्तर्कस्त्वप्रमेयेकुतःप्रमेतिबृहत्संहितायाम् ॥ रसशब्दे
नविशेषणात्तत्तत्सारभूतंचिन्मात्रमेवोच्यते ॥ इदमितिचदृश्यमानसन्निहितत्वात् ॥ अनन्योऽ
प्यन्यशब्देनतथैकोबहुरूपवान् ॥ प्रोच्यतेभगवान्विष्णुरैश्वर्यात्पुरुषोत्तमइतिब्रह्मांडे ॥१५॥
ॐनेतरोनुपपत्तेःॐ ॥ १६ ॥ ॥ नचोक्तप्राप्त्याविरिंचादिरत्रोच्यते ॥ नह्यन्यज्ञानान्मोक्षउपप
द्यते ॥ तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतइतिह्युक्तम् ॥१६॥ ॥ ॐभेदव्यप
देशाच्चॐ ॥ १७ ॥ ॥ तेयेशतंप्रजापतेरानंदाः ॥ सएकोब्रह्मणआनंदइति ॥ अदृश्येऽनात्म्ये
निरुक्तेऽनिलयनेऽभयंप्रतिष्ठांविंदते ॥ अथसोभयंगतोभवति ॥ सयश्चायंपुरुषइत्यादिभेदव्यप
देशात् ॥ नचतत्त्वमस्यहंब्रह्मास्मिइत्यादिश्रुतिविरोधः ॥ नामानिसर्वाणियमाविशंतीतितत्तच्छ
ब्दवाच्यत्वोक्तेः ॥ इदंहिविश्वंभगवानिवेतरोयतोजगत्स्थाननिरोधसंभवः ॥ असर्वःसर्वइत्यपि ॥

विद्यात्मनिभिदाबोधः ॥ भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणा ॥ जुष्टंयदापश्यत्यन्यमीशम
स्यमहिमानमितिवीतशोकः ॥ असर्वःसर्वइवआत्मैवसन्ननात्मेवप्रत्यङ्पराङिवैकईयते ॥ बद्धुधे
यतेसपुरुषःसईश्वरःसब्रह्म ॥ सर्वांतर्यामिकोविष्णुःसर्वनाम्नाऽभिधीयते ॥ एषोहंत्वमसौचेति
नतुसर्वस्वरूपतः ॥ नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्भवेत्यादेश्च ॥ उक्ताचप्राप्तिः ॥ ब्रह्मैवसन्नि
त्यपिजीवएवब्रह्मशब्दः ॥ उपपद्यतेचविरोधे ॥ प्रमादात्मकत्वाद्बंधस्यविमुक्तत्वंचयुज्यते ॥ मु
क्तिर्हित्वाऽन्यथारूपंस्वरूपेणव्यवस्थितिरितिभागवते ॥ १७ ॥ ॥ ॐकामाच्चनानुमानापेक्षाॐ
॥ १८ ॥ ॥ नचतत्तदनुमानविरोधः ॥ यथाकामंह्यनुमातुंशक्यते ॥ अतोनतत्त्वेपृथगनुमानम
पेक्षते ॥ उक्तंचस्कांदे ॥ यथाकामानुमायस्मात्तस्मात्साऽनपगाश्रुतेः ॥ पूर्वोत्तराविरोधायचेष्य
तेनान्यथाक्वचिदिति ॥ नैषातर्केणमतिरापनेयेतिच ॥ १८ ॥ ॥ ॐअस्मिन्नस्यचतद्योगंशा
स्तिॐ ॥ १९ ॥ ॥ अस्यजीवस्ययुक्तिसमुच्चयेचशब्दः ॥ सोऽश्नुतेसर्वान्कामान्सहब्रह्मणा
विपश्चिता ॥ अनिलयनेभयंप्रतिष्ठांविंदते ॥ एतमानंदमयमात्मानमुपसंक्रामतीत्यादि ॥ १९ ॥
अ० ६ ॥ अदृश्येनात्मइत्युक्तम् ॥ तच्चादृश्यत्वम् ॥ अंतःप्रविष्टंकर्तारमेतम् ॥ अंतश्चंद्रमसिम
नसाचरंतम् ॥ सहैवसंतंनविजानंतिदेवाइत्यंतस्थस्यकस्यचिदुच्यते ॥ सचेंद्रोराजासंसयुंजंती
त्यादिभिरन्यःप्रतीयते ॥ तस्मात्सएवानंदमयइतिनमंतव्यम् ॥ ॥ ॐअंतस्तद्धर्मोपदेशात्ॐ
॥ २० ॥ अंतःश्रूयमाणोविष्णुरेव ॥ अंतःसमुद्रेमनसाचरंतम् ॥ ब्रह्माऽन्वविंददशहोतारमर्णे ॥
समुद्रेअंतःकवयोविचक्षते ॥ मरीचीनांपदमिच्छंतिवेधसः ॥ यस्यांडकोशंशुष्ममाहुरित्यादि

तद्धर्मोपदेशात् ॥ सहिक्षीरसमुद्रशायी ॥ तस्यचवीर्यमंडकोशः ॥ सोऽभिध्यायशरीरात्स्वात्
सिसृक्षुर्विविधाःप्रजाः ॥ अपएवससर्जादौतासुवीर्यमवासृजत ॥ तदंडमभवद्धैमंसहस्रांशुसम
प्रभम् ॥ यस्मिञ्जज्ञेस्वयंब्रह्मासर्वलोकपितामहः ॥ आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अ
यनंतस्यताःपूर्वंतेननारायणःस्मृतइतिव्यासस्मृतेः॥अहंतत्तेजोरश्मीन्नारायणंपुरुषंजातमग्रतः ॥
पुरुषात्प्रकृतिर्जगदंडकोशमितिचतुर्वेदशिखायाम् ॥२०॥ ॥ ॐभेदव्यपदेशाच्चान्यःॐ ॥२१॥
इंद्रस्यात्मानिहितःपंचहोता ॥ वायोरात्मानंकवयोनिचिक्युः ॥ अंतरादित्येमनसाचरंतम् ॥ दे
वानाᳪहृदयंब्रह्मान्वविंददित्यादिभेदव्यपदेशात् ॥२१॥ अ० ७॥ कोह्येवान्यात्कःप्राण्यात्यदे
षआकाशआनंदोनस्यादित्यकाशस्यानंदमयत्वेहेतुरुक्तोनतुविष्णोरितिनमंतव्यम् ॥ ॥ ॐआ
काशस्तल्लिंगात्ॐ ॥२२॥ ॥ यतः ॥ अस्यलोकस्यकागतिरित्याकाशइतिहोवाचेत्यत्रभूताका
शस्यप्राप्तिः।।नचासौयुज्यतेकिंतुविष्णुरेव ॥ सएषपरोवरीयानुद्गीथःसएषोनंतइत्यादितल्लिंगात्॥
विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ परोमात्रयातन्वावृधानेत्यादिनातस्यैव
हितल्लिंगम् ॥ अनंतोभगवान्ब्रह्मआनंदेत्यादिभिःपदैः ॥ प्रोच्यतेविष्णुरेवैकःपरेषामुपचारतइति
ब्राह्मे॥नामानिसर्वाणियमाविशंतीतिचोक्तम् २२अ. ८॥ ॥ॐअतएवप्राणःॐ ॥२३॥ ॥तद्वैत्वंप्रा
णोअभवः ॥ महान्भोगःप्रजापतेः भुजःकरिष्यमाणः ॥ यद्देवान्प्राणयोनवेतिमहाभोगशब्देनप
रमानंदत्वंप्राणस्योक्तम्॥ सचप्राणःप्रसिद्धोवायुरित्यापतति ॥ नचैवम्॥ यतोविष्णुरेवप्राणः॥अत
एवश्रीश्चतेलक्ष्मीश्चपत्न्यौ॥अहोरात्रेपार्श्वेइत्यादितल्लिंगादेव ॥२३॥अ० ९ ॥योवेदनिहितंगुहा

यामित्युक्तम् ॥ तच्चगुहानिहितम् ॥विमेकर्णापतयतोविचक्षुर्वीइदंज्योतिर्हृदयआहितंयत् ॥विमे
मनश्चरतिदूरआधीःकिंस्विद्वक्ष्यामिकिमनूमनिष्येइतिज्योतिरुक्तम् ॥ तच्चज्योतिरग्निसूक्तत्वात्प्र
सिद्धेश्चाग्निरेवेतिप्राप्तम् ॥ अतआह ॥ ॥ ॐज्योतिश्चरणाभिधानात्ॐ ॥२४॥ ॥ विष्णुरेवज्यो
तिः ॥कर्णादीनांविचरणाभिधानात् ॥ सहिपरोमात्रयातन्वावृधानेत्यादिनाकर्णादिविदूरः ॥२४॥
अ०१०॥ ॥ॐछंदोभिधानान्नेतिचेन्नतथाचेतोर्पणनिगदात्तथाहिदर्शनम्ॐ ॥२५॥ ॥ अथ
यदतःपरोदिवोज्योतिर्दीप्यतइत्युक्तस्यज्योतिषोगायत्रीवाइदंसर्वमितिगायत्र्यासमारंभःकृतः ॥
तस्मान्नविष्णुरितिचेन्न ॥ तथाचेतोर्पणार्थंहिनिगद्यते ॥ अग्निगायत्र्यादिशब्दार्थरूपोसाविति
चेतोर्पणार्थंहिनिगद्यते ॥ तथाहिदर्शनम् ॥ गायतित्रायतिचेत्यादि ॥ सर्वच्छंदोभिधोह्येपसर्वदे
वाभिधोह्यसौ ॥ सर्वलोकाभिधाह्येषतेषांतदुपचारतइतिवामने ॥२५॥ ॥ ॐभूतादिपादव्यपदे
शोपपत्तेश्चैवम्ॐ ॥ २६॥ ॥तावानस्यमहिमाततोज्यायांश्चपूरुषः ॥ पादोस्यसर्वाभूतानित्रिपा
दस्यामृतंदिवीति ॥ सुवर्णकोशंरजसापरिवृतम् ॥देवानांवसुधानींविराजम् ॥ अमृतस्य
पूर्णांतामुकलांविचक्षते ॥ पादंषड्ढोतुर्नकिलाविवित्सइतिश्रुतेः ॥ पादइत्येकदेशपरिमितंच
तुर्भागबलइतिवद्भिन्नंच ॥ सहिपुरुषसूक्ताभिधेयः ॥ यज्ञेनयज्ञमयजंतेतियज्ञशब्दात ॥ यज्ञो
विष्णुर्देवतेतिहिश्रुतिः ॥ तस्मिन्कालेमहाराजोरामएवाभिधीयते ॥ यथाहिपौरुषेसूक्तेविष्णुरेवा
भिधीयतइतिस्कांदे ॥ २६ ॥ ॥ ॐउपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात्ॐ ॥ २७॥
त्रिपादस्यामृतंदिवीतिपूर्वोपदेशः ॥ परोदिवइतिपंचम्यतःपश्चिमः ॥ तस्मान्नैकंवस्त्वत्रोच्यतइ

तिचेन्न ॥ त्रिसत्यलोकापेक्षयोभयस्मिन्नप्यविरोधात्॥ २७ ॥ अ० ११ ॥प्राणोविष्णुरित्युक्त
म्॥ तत्रनावाएताःशीर्षञ्छ्रियःश्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राणइत्यत्रप्राणस्यविष्णुत्वंनविद्यते ॥
इंद्रियैःसहाभिधानादितिअतआह ॥ ॐप्राणस्तथानुगमात्ॐ ॥ २८ ॥ ॥ तंदेवाःप्राणयंत
सएषोसुःसएषप्राणःप्राणश्चइत्येवविद्यात् ॥ तदयंप्राणोधितिष्ठतीत्याद्यनुगमादत्रापिप्राणो
विष्णुरेव ॥ विष्णुमेवानयन्देवाविष्णुंभूतिमुपासते ॥ सएवसर्ववेदोक्तस्तद्वर्थोदेहउच्यतइति
स्कांदे ॥ ब्रह्मशब्दानुगमाच्च ॥२८॥ ॥ ॐनवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमाह्यस्मि
न्ॐ ॥२९॥ ॥ प्राणोवाहअहमस्म्यृषइतिवक्तुरात्मोपदेशादिंद्रएवेतिचेन्न ॥ प्राणस्त्वंप्राणःसर्वा
णिभूतानीतिबह्वध्यात्मसंबंधोह्यत्रविद्यते ॥२९॥ ॥ ॐशास्त्रदृष्ट्यातूपदेशोवामदेववत्ॐ॥३०॥
शास्त्रमंतर्यामी ॥ संविच्छास्त्रंपरंपदमितिहिभागवते ॥ तत्तन्नाम्नोच्यतेविष्णुःसर्वशास्तृत्वहेतु
तः ॥ नक्वापिकिंचिन्नामास्तितमृतेपुरुषोत्तममितिपाद्मे ॥ अहंमनुरभवंसूर्यश्चेत्यादिवत् ॥
॥ ३० ॥ ॥ ॐजीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्ॐ ॥
॥ ३१ ॥ ॥ तावंतिशतसंवत्सरस्याह्नांसहस्राणिभवंतीतिजीवलिंगम् ॥ प्राणसंवादादिमुख्यप्रा
णलिंगंतस्मान्नेतिचेन्न ॥ अंतर्बहिःसर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च ॥ सएतमेव
सीमानंविदार्यैतयाद्वाराप्राप्यद्यत ॥ सएतमेवपुरुषंब्रह्मततमपश्यत् ॥ एतद्धस्मवैतद्विद्वाना
हमहिदासऐतरेयइत्यादिना ॥ महिदासाभिधोजज्ञेइतरायास्तपोबलात् ॥ साक्षात्सभगवान्वि
ष्णुर्यस्तंत्रं वैष्णवंव्यधादितिचब्रह्माण्डे ॥ तत्तदुपासनायोग्यतयाचपुरुषाणाम् ॥ केषांचित्सर्व

गत्वेनकेषांचिद्धृदयेहरिः ॥ केषांचिद्बहिरेवासावुपास्यः पुरुषोत्तमइतिब्राह्मे ॥ अग्नौक्रियावतां
विष्णुर्योगिनांहृदयेहरिः ॥ प्रतिमास्वप्रबुद्धानांसर्वत्रविदितात्मनामितिच॥३१॥अ० १२॥ ॥
इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्य
प्रथमःपादः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
श्रीगुरुभ्योनमः ॥ ॐलिंगात्मकानांशब्दानांविष्णौप्रवृत्तिंदर्शयत्यस्मिन्पादेप्राधान्येन॥ब्रह्मतत
ममितिसर्वगतत्वमुक्तंविष्णोः ॥ तच्चतस्यैतस्यासावादित्योरसइत्यादिनाऽऽदित्यस्यप्रतीयते ॥
अतोऽब्रवीत् ॥ ॥ ॐसर्वत्रप्रसिद्धोपदेशात्ॐ॥१॥ ॥ सयश्चायमशरीरःप्रज्ञात्मेत्यादिनासर्वत्रो
च्यमानोनारायणएव ॥ तदेवब्रह्मपरमंकवीनाम् ॥ परमंयोमहद्ब्रह्म॥वासुदेवात्परःकोनुब्रह्मशब्दो
दितोभवेत्॥सहिसर्वगुणैःपूर्णस्तदन्येतूपचारतइतितस्मिन्नेवप्रसिद्धब्रह्मशब्दोपदेशात्॥१॥ ॥ॐ
विवक्षितगुणोपपत्तेश्च॥ २ ॥ ॥ सयोतोऽश्रुतइत्यादि ॥ सहिनतेविष्णोजायमानइत्यादिनाऽश्रु
तत्वादिगुणकः ॥ ससवितासवायुःसइंद्रःसोऽश्रुतःसोऽदृष्टोयोइरियिंःपरमोयोविष्णुर्योनंतइत्यादि
चतुर्वेदशिखायाम्॥२॥ ॥नचाऽऽदित्यशब्दाच्चक्षुर्मयत्वादेश्चजीवइतिवाच्यम्॥ ॥ॐअनुपपत्ते
स्तुनशारीरःॐ ॥३॥ एकस्यसर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥ ॥ ॐकर्मकर्तृव्यपदेशाच्च
ॐ ॥४॥ आत्मानंपरस्मैशंसतीत्यादि ॥ ४ ॥ ॥ ॐशब्दविशेषात्ॐ॥ ५ ॥ ॥ एतमेवब्र
ह्मेत्याचक्षतइतिनहिजीवमेवब्रह्मेत्याचक्षते॥ एषउएवब्रह्मैषउएवात्मैषउएवसवितैषउएवेंद्रएषउ
एवहरिर्हरतिपरःपरानंदइतिचेंद्रद्युम्नशाखायाम् ॥५॥ ॥ॐस्मृतेश्चॐ॥ ६ ॥ ॥अहमात्मागुडाके

शसर्वभूताशयस्थितः ॥ गामादिश्यचभूतानिधारयाम्यहमोजसेत्यादि ॥ नचाप्रामाणिकंकल्प्य
म् ॥ ६ ॥ ॥ ॐअर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्ननिचाय्यत्वादेवंव्योमवच्चॐ ॥७॥ ॥ सर्वे
 षुभूतेष्वित्यल्पौकस्त्वाचक्षुर्मयत्वादिनाजीवव्यपदेशाच्चनेतिचेन्न ॥ अर्भकौकस्त्वेनचक्षुर्मयत्वा 
दिरूपेणचतस्यैवविष्णोर्निचाय्यत्वात् ॥ सर्वगतत्वेप्यल्पौकस्त्वंचयुज्यतेव्योमवत् ॥ सर्वेंद्रियम
योविष्णुःसर्वप्राणिषुसंस्थितः ॥ सर्वनामाभिधेयश्चसर्ववेदोदितश्चसइतिस्कांदे ॥ ७ ॥ ॥ ॐसंभो
गप्राप्तिरितिचेन्नवैशेष्यात् ॥ ८ ॥ ॥ जीवपरयोरेकशरीरस्थत्वेसमानभोगप्राप्तिरितिचेन्न ॥ साम
र्थ्यवैशेष्यात् ॥ उक्तंचगारुडे ॥ सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ॥ स्वातंत्र्यपारतंत्र्याभ्यां
संभोगोनेशजीवयोरितिच ॥८॥अ० १ ॥ जन्माद्यस्ययतइत्युक्तम् ॥ तत्राऽत्तृत्वंसयद्यदेवासृज
ततत्तदत्तुमध्रियतसर्वंवाअत्तीतितददितेरदितित्वमित्यदितेःप्रतीयते ॥ सयद्यदेवाऽसृजतेतिपुंल्लिं
गंचकूटस्थोऽक्षरउच्यतइत्यादिवत् ॥ अत्रोच्यत्ते ॥ ॥ ॐअत्ताचराचरग्रहणात्ॐ ॥ ९ ॥ ॥ नहि
चराचरस्यसर्वस्यात्तृत्वमदितेः ॥ स्रष्टापातातथैवात्तानिखिलस्यैकएवतु ॥ वासुदेवःपरःपुंसामित
रेऽल्पस्यवानवेतिस्कांदे ॥ एकःपुरस्ताद्यइदंबभूवयतोबभूवभुवनस्यगोपाः ॥ यमप्येतिभुवनंसां
परायेसनोहरिर्घृतमिहायुषेऽत्तुदेवइतिश्रुतिः ॥९॥ ॥ ॐप्रकरणाच्चॐ ॥ १० ॥ ॥ अप्संवत्सरसृ
ष्ट्यादिनातत्प्रकरणाच्च ॥ नेहासीत्किंचनाप्यादौमृत्युरासीद्धरिस्तदा ॥ सोऽमनोऽमनसाऽऽक्षीद
पएवजनार्दनः ॥ शयानस्तासुभगवान्निर्ममेंऽडंमहत्तरम् ॥ तत्रसंवत्सरंनामब्रह्माणमसृजत्प्रभुः ॥ 
तमत्तुंव्याददादास्यंतदासौविरुरावह ॥ अथतंकृपयाविष्णुःसृष्टिकर्मण्ययोजयत् ॥ सोऽसृजद्भुवनं

विश्वमद्यार्थंहरयेविभुरितिब्रह्मवैवर्त्ते॥१०॥अ० २॥सर्वात्तैकःपरउक्तः ऋतंपिबंतौसुकृतस्यलोके
गुहांप्रविष्टौपरमेपरार्धे ॥ छायातपौब्रह्मविदोवदंतिपंचाग्नयोयेचत्रिनाचिकेताइतिपिबंतौप्रतीये
तेतौकाविति॥उच्यते ॥ ॥ ॐगुहांप्रविष्टावात्मानौहितद्दर्शनात्ॐ॥११॥ ॥ गुहांप्रविष्टौपि
बंतौविष्णुरूपेएव ॥ घर्मासमंतात्रिवृतंव्यापतुस्तयोर्जुष्टिंमातरिश्वाजगामेत्यादिनातद्दर्शना
त् ॥ आत्मांतरात्मेतिहहरिरेकएवद्विधास्थितः ॥ निविष्टोहृदयेनित्यंरसंपिबतिकर्मजमितिब्रह
त्संहितायाम् ॥ शुभंपिबत्यसौनित्यंनाशुभंसहरिःपिबेत् ॥ पूर्णानंदमयस्यास्यचेष्टानज्ञायतेक्वचि
दितिपाद्मे ॥ योवेदनिहितंगुहायामित्यादिनाप्रसिद्धिंहिशब्देनदर्शयति ॥ ११॥ ॥ ॐविशेषणा
च्चॐ॥१२॥ ॥यःसेतुरीजानानामक्षरंब्रह्मतत्परमिति॥ पृथग्वक्तुंगुणास्तस्यनशक्यंतेऽमितत्व
तः ॥ यतोऽतोब्रह्मशब्देनसर्वेषांग्रहणंभवेत् ॥ एतस्माद्ब्रह्मशब्दोयंविष्णोरेवविशेषणम् ॥ अमि
ताहिगुणायस्मान्नान्येषांतमृतेप्रभुमितिब्राह्मे ॥ नचजीवेसमन्वयोऽभिधीयते ॥ सत्यआत्मास
त्योजीवःसत्यंभिदासत्यंभिदासत्यंभिदामैवारुवण्यो मैवारुवण्योमैवारुवण्यइतिपैंगिश्रुतिः॥आ
त्माहिपरमःस्वतंत्रोऽधिगुणोजीवोऽल्पशक्तिरस्वतंत्रोऽवरइतिचभाल्लवेयश्रुतिः ॥ यथेश्वरस्यजी
वस्यभेदःसत्योविनिश्चयात् ॥ एवमेवाहिमेवाचंसत्यांकर्त्तुमिहार्हसि ॥ यथेश्वरश्चजीवश्चसत्यभेदौ
परस्परम् ॥ तेनसत्येनमांदेवास्त्रायंतुसहकेशवाइत्यादेर्नासत्योभेदः ॥ १२ ॥ अ० ३॥ आदित्यो
विष्णुरित्युक्तम् ॥ यएषआदित्येपुरुषःसोहमस्मिसएवाहमस्मीत्यादावग्नीनामेवाऽऽदित्यादिस्थ
त्वमुच्यतेअतोऽक्ष्यादित्ययोरैक्याद्यएषोंतरक्षिणिपुरुषोदृश्यतइत्यत्राप्यग्निरेवोच्यते ॥ अतस्त

द्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यतइत्यग्निज्ञानादेवसर्वपापाश्ले-
षान्मोक्षोपपत्तिरित्यतोब्रवीति ॥ ॥ ॐअंतरउपपत्तेःॐ॥१३॥ ॥ चक्षुरंतस्थोविष्णुरेव ॥ त्रिपा
दस्याऽमृतंदिवीत्यादिनातस्यैवाऽमृतत्वाद्युपपत्तेः ॥ ब्रह्मशब्दाद्युपपत्तेश्च ॥ सोहमस्मीत्यादित्वं
तर्याम्यपेक्षया ॥ अंतर्यामिणमीशेशमपेक्ष्याहंत्वमित्यपि ॥ सर्वेशब्दाःप्रयुज्यंतेसतिभेदेपिवस्तु
ष्वितिमहाकौर्मे ॥१३॥ ॥ॐस्थानादिव्यपदेशाच्चॐ॥ १४ ॥ ॥ तद्यदस्मिन्सर्पिर्वोदकंवा
सिंचतिवर्त्मनीएवगच्छतीत्यादिस्थानशक्तिः ॥ वामनिर्भामनिरित्याद्यात्मशक्तिश्चोच्यते॥ तस्य
ह्येतल्लिंगम् ॥ सईशःसोऽसपत्नःसहरिःसपरःसपरोवरीयान्यदिदंचक्षुषिसर्पिर्वोदकंवासिंचतिवर्त्म
नीएवगच्छतिसवामनःसभामनःसआनंदःसोच्युतइतिचतुर्वेदशिखायाम्॥ यत्स्थानत्वादिदंचक्षु
रसंगंसर्ववस्तुभिः ॥ सवामनःपरोऽस्माकंगतिरित्येवचिंतयेदितिचवामने ॥ १४ ॥ ॥ ॐसुखवि
शिष्टाभिधानादेवचॐ ॥ १५ ॥ ॥ प्राणोब्रह्मकंब्रह्मखंब्रह्मेति ॥ विज्ञानमानंदंब्रह्म आनंदो
ब्रह्मेतिव्यजानादित्यादेस्तस्यैवहितल्लक्षणम् ॥लक्षणंपरमानंदोविष्णोरेवनसंशयः ॥ अव्यक्तादि
तृणांतास्तुविप्रुडानंदभागिनइतिब्रह्मवैवर्ते ॥ नचमुख्येसत्यमुख्यंयुज्यते ॥ १५ ॥ ॥ ॐश्रु
तोपनिषत्कगत्यभिधानाच्चॐ ॥ १६ ॥ ॥ सएनान्ब्रह्मगमयतीति ॥ नह्यन्यविद्ययान्यगतिर्यु
क्ता ॥ १६॥ ॥ॐअनवस्थितेरसंभवाच्चनेतरःॐ ॥१७ ॥ ॥ जीवस्यजीवांतरनियामकत्वेनाऽव
स्थितेः॥साम्यादसंभवाच्चनजीवः ॥ नियमप्रमाणाभावात् ॥ अनीश्वरापेक्षत्वाच्च ॥१७॥ अ०
॥ ४ ॥ यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमयत्ये

षतआत्मांतर्याम्यमृतइत्यादिनांतर्याम्युच्यते ॥ तत्रचैतदमृतमित्युक्तममृतत्वमुच्यते ॥ सचश्री
[illegible]यस्यपृथिवीशरीरमित्यादिनासर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवोवायुक्तः ॥ नहिविष्णोःपृथिव्या
दिशर्ममंगीक्रियतइत्यतआह ॥ ॥ ॐअंतर्याम्यधिदेवादिषुतद्धर्मव्यपदेशात्ॐ ॥ १८॥ ॥ यंपृथि
वीनवेदयःपृथिव्याअंतरइत्यादिनाअधिदैवादिषुतद्धर्मव्यपदेशाद्विष्णुरेवांतर्यामी ॥ सहिनतेवि
ष्णोजायमानोनजातःसर्योऽतोऽश्रुतोगतोमतोनतोदृष्टोविज्ञातोनादिष्टःसर्वेषांभूतानामंतरपुरुषइ
त्यादिनाविदितोंतरश्च ॥ १८ ॥ ॥ ॐनचस्मार्तमतद्धर्माभिलापात्ॐ ॥ १९॥ ॥ त्रिगुणत्वादिप्र
धानधर्मानुक्तेर्नस्मृत्युक्तंप्रधानमंतर्यामी ॥ १९ ॥ ॥ ॐशारीरश्चोभयेऽपिहिभेदेनैनमधीयतेॐ ॥
॥२०॥ ॥ यआत्मनितिष्ठन्नात्मनोंतरोयमात्मानवेदयस्यात्माशरीरंयआत्मानमंतरोयमयत्येषत
आत्मांतर्याम्यमृतः ॥ योविज्ञानेतिष्ठन्विज्ञानादंतरोयंविज्ञानंनवेदयस्यविज्ञानंशरीरमित्युभयेऽ
पिहिशाखिनोभेदेनैनंजीवमधीयते ॥ शीर्यतेनित्यमेवास्माद्विष्णोस्तुजगदीदृशम ॥ रमतेचपराह्य
स्मिन्शरीरंतस्यतज्जगदितिवचनान्नशरीरत्वविरोधः ॥ २० ॥ अ० ५ ॥ अदृश्यत्वादिगुणाविष्णो
रुक्ताः ॥ तत्रयत्तददृश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मंत
दव्ययंयद्भूतयोनिंपरिपश्यंतिधीराइत्युक्ता ॥ यथोर्णनाभिःसृजतेगृह्णतेचयथापृथिव्यामोषधयः
संभवंतियथासतःपुरुषात्केशलोमानितथाऽक्षरात्संभवतीहविश्वमित्युक्त्वातस्माच्चाक्षरात्परतः
परइतिपरःप्रतीयते ॥ अतोब्रवीति ॥ ॥ ॐअदृश्यत्वादिगुणकोधर्मोक्तेःॐ ॥ २१ ॥ ॥ पृथि
व्यादिदृष्टांतमुक्त्वाऽक्षरात्संभवतीहविश्वमित्यतःपरंतत्परतःपराभिधानात्कूटस्थोऽक्षरउच्यतइ

द्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यतइत्यग्निज्ञानादेवसर्वपापाश्ले-
षान्मोक्षोपपत्तिरित्यतोब्रवीति ॥ ॥ ॐअंतरउपपत्तेः ॐ ॥१३॥ ॥ चक्षुरंतस्थोविष्णुरेव ॥ त्रिपा
दस्याऽमृतंदिवीत्यादिनातस्यैवाऽमृतत्वाद्युपपत्तेः ॥ ब्रह्मशब्दाद्युपपत्तेश्च ॥ सोहमस्मीत्यादित्वं
तर्याम्यपेक्षया ॥ अंतर्यामिणमीशेशमपेक्ष्याहंत्वमित्यपि ॥ सर्वेशब्दाःप्रयुज्यंतेसतिभेदेपिवस्तु
ष्वितिमहाकौर्मे ॥१३॥ ॥ ॐस्थानादिव्यपदेशाच्च ॐ ॥ १४ ॥ ॥ तद्यदस्मिन्सर्पिर्वोदकंवा
सिंचतिवर्त्मनीएवगच्छतीत्यादिस्थानशक्तिः ॥ वामनिर्भामनिरित्याद्यात्मशक्तिश्चोच्यते॥ तस्य
ह्येतल्लिंगम् ॥ सईशःसोऽसपत्नःसहरिःसपरःसपरोवरीयान्यदिदंचक्षुषिसर्पिर्वोदकंवासिंचतिवर्त्म
नीएवगच्छतिसवामनःसभामनःसआनंदःसोच्युतइतिचतुर्वेदशिखायाम्॥ यत्स्थानत्वादिदंचक्षु
रसंगंसर्ववस्तुभिः ॥ सवामनःपरोऽस्माकंगतिरित्येवचिंतयेदितिचवामने ॥ १४ ॥ ॥ ॐसुखवि
शिष्टाभिधानादेवच ॐ ॥ १५ ॥ ॥ प्राणोब्रह्मकंब्रह्मखंब्रह्मेति ॥ विज्ञानमानंदंब्रह्म आनंदो
ब्रह्मेतिव्यजानादित्यादेस्तस्यैवहितल्लक्षणम् ॥लक्षणंपरमानंदोविष्णोरेवनसंशयः ॥ अव्यक्तादि
तृणांतास्तुविप्रुडानंदभागिनइतिब्रह्मवैवर्ते ॥ नचमुख्येसत्यमुख्यंयुज्यते ॥ १५ ॥ ॥ ॐश्रु
तोपनिषत्कगत्यभिधानाच्च ॐ ॥ १६ ॥ ॥ सएनान्ब्रह्मगमयतीति ॥ नह्यन्यविद्ययान्यगतिर्यु
क्ता ॥ १६ ॥ ॥ ॐअनवस्थितेरसंभवाच्चनेतरः ॐ ॥१७ ॥ ॥ जीवस्यजीवांतरनियामकत्वेनाऽव
स्थितेः॥साम्यादसंभवाच्चनजीवः ॥ नियमप्रमाणाभावात् ॥ अनीश्वरापेक्षत्वाच्च ॥१७॥ अ०
॥ ४ ॥ यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमयत्ये

षतआत्मांतर्याम्यमृतइत्यादिनांतर्याम्युच्यते ॥ तत्रचैतदमृतमित्युक्तममृतत्वमुच्यते ॥ सचर्वा
यस्यपृथिवीशरीरमित्यादिनासर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवोवायुक्तः ॥ नहिविष्णोःपृथिव्या
दिशरीरमंगीक्रियतइत्यतआह ॥ ॥ ॐअंतर्याम्यधिदेवादिषुतद्धर्मव्यपदेशात्ॐ ॥ १८॥ ॥ यंपृथि
वीनवेदयःपृथिव्याअंतरइत्यादिनाअधिदैवादिषुतद्धर्मव्यपदेशाद्विष्णुरेवांतर्यामी ॥ सहिनतेवि
ष्णोजायमानोनजातःसर्योऽतोऽश्रुतोगतोमतोनतोदृष्टोविज्ञातोनादिष्टःसर्वेषांभूतानामंतरपुरुषइ
त्यादिनाविदितोंतरश्च ॥ १८ ॥ ॥ ॐनचस्मार्तमतद्धर्माभिलापात्ॐ ॥ १९॥ ॥ त्रिगुणत्वादिप्र
धानधर्मानुक्तेर्नस्मृत्युक्तंप्रधानमंतर्यामी ॥ १९ ॥ ॥ ॐशारीरश्चोभयेऽपिहिभेदेनैनमधीयतेॐ ॥
॥२०॥ ॥ यआत्मनितिष्ठन्नात्मनोंतरोयमात्मानवेदयस्यात्माशरीरंयआत्मानमंतरोयमयत्येषत
आत्मांतर्याम्यमृतः ॥ योविज्ञानेतिष्ठन्विज्ञानादंतरोयंविज्ञानंनवेदयस्यविज्ञानंशरीरमित्युभयेऽ
पिहिशाखिनोभेदेनैनंजीवमधीयते ॥ शीर्यंतेनित्यमेवास्माद्विष्णोस्तुजगदीदृशम ॥ रमतेचपराह्य
स्मिन्शरीरंतस्यतज्जगदितिवचनान्नशरीरत्वविरोधः ॥ २०॥ अ० ५॥ अदृश्यत्वादिगुणाविष्णो
रुक्ताः ॥ तत्रयत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मंत
दव्ययंयद्भूतयोनिंपरिपश्यंतिधीराइत्युक्त्वा ॥ यथोर्णनाभिःसृजतेगृह्णतेचयथापृथिव्यामोषधयः
संभवंतियथासतःपुरुषात्केशलोमानितथाऽक्षरात्संभवतीहविश्वमित्युक्त्वातस्माच्चाक्षरात्परतः
परइतिपरःप्रतीयते ॥ अतोब्रवीति ॥ ॥ ॐअदृश्यत्वादिगुणकोधर्मोक्तेःॐ ॥ २१ ॥ ॥ पृथि
व्यादिदृष्टांतमुक्त्वाऽक्षरात्संभवतीहविश्वमित्यतःपरंतत्परतःपराभिधानात्कूटस्थोऽक्षरउच्यतइ

तिस्मृतेश्चप्रकृतेःप्राप्तिः ॥ ब्रह्मशब्दात्तत्परतःपराभिधानादेवचहिरण्यगर्भस्य ॥ तमेवंविद्वानमृत
इहभवति॥ तत्कर्महरितोषंयत्साविद्यातन्मतिर्यया ॥ अथद्वेवावविद्येवेदितव्येपराचैवाऽपराच॥
तत्रयेवेदायान्यंगानियान्युपांगानियानिप्रत्यंगानिसाअपरा ॥ अथपरा ॥ ययासहरिर्वेदितव्यो
योऽसावदृश्योनिर्गुणःपरःपरमात्मेत्यादिनातद्धर्मत्वेनाऽवगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्य
त्वादिगुणकः ॥ २१ ॥ ॥ ॐविशेषणभेदव्यपदेशाभ्यांचनेतरौॐ ॥ २२ ॥ ॥ यःसर्वज्ञःसर्ववि
द्यस्यज्ञानमयंतपइतिविशेषणान्नप्रकृतिः ॥ तस्मादेतद्ब्रह्मनामरूपमन्नंचजायतेइतिभेदव्यपदे
शान्नविरिंचः ॥ अपरंत्वक्षरंयासाप्रकृतिर्जडरूपिका ॥ श्रीःपराप्रकृतिःप्रोक्ताचेतनाविष्णुसंश्र
या ॥ तामक्षरंपरंप्राहुःपरतःपरमक्षरम् ॥ हरिमेवाखिलगुणमक्षरत्रयमीरितमितिस्कांदे ॥ अ
क्षराभिधानादक्षरात्परतःपरइत्यपिविशेषणमेव ॥ जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमिति
वीतशोकः ॥ इतिभेदव्यपदेशादीशपदप्राप्तोपिनरुद्रः ॥ २२ ॥ ॥ ॐरूपोपन्यासाच्चॐ ॥ २३ ॥
॥ यदापश्यःपश्यतेरुग्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिमिति ॥ एकोनारायणआसीन्नब्रह्मानचशं
करः ॥ समुनिर्भूत्वासमाचिंतयत् ॥ ततएतेव्यजायंतविश्वोहिरण्यगर्भोग्नियमोवरुणरुद्रेंद्राइ
ति ॥ तस्यहैतस्यपरमस्यनारायणस्यचत्वारिरूपाणि ॥ शुक्लंरक्तंरौग्मंकृष्णमिति ॥ सएतान्येते
भ्योऽभ्यचीक्लृपत् ॥ विमिश्राणिव्यमिश्रयत् ॥ अतएतादृगेतद्रूपमितितस्यैवहिरूपाण्यभिधी
यंते ॥ २३ ॥ अ० ६ ॥ अदृश्यत्वादिगुणेषुसर्वगतत्वम् ॥ यस्त्वेतमेवंप्रादेशमात्रमभिविमानमा
त्मानंवैश्वानरमुपास्तइतिवैश्वानरस्योक्तमित्यतआह ॥ ॥ ॐवैश्वानरःसाधारणशब्दविशेषात्ॐ

॥ २४ ॥ ॥ अग्नाविष्णोःसाधारणस्यवैश्वानरशब्दस्यविष्णावेवप्रसिद्धात्मशब्देनविशेषणाद्वैश्वा
नरोविष्णुरेव ॥ २४ ॥ ॥ ॐस्मर्यमाणमनुमानंस्यादितिॐ ॥ ॥ अहंवैश्वानरोभूत्वाप्राणिनांदेह
माश्रितइतिस्मर्यमाणमत्रापिसएवोच्यतइत्यस्यानुमापकम् ॥ समाख्यानात् ॥ इतिशब्दःसमा
ख्याप्रदर्शकः ॥२५॥ ॥ ॐशब्दादिभ्योंतःप्रतिष्ठानान्नेतिचेन्नतथादृष्ट्युपदेशादसंभवात्पुरुषविध
मपिचैनमधीयतेॐ ॥२६॥ ॥ अयमग्निर्वैश्वानरः ॥ वैश्वानरमृतआजातमग्निमित्यादिशब्दः ॥
वैश्वानरेतद्धुतंभवति ॥ हृदयंगार्हपत्योमनोन्वाहार्यपचनआस्यमाहवनीयइत्याद्यग्निलिंगमादि
शब्देनोक्तम् ॥ येनेदमन्नंपच्यते तद्यद्भक्तंप्रथममागच्छेत्तद्धोमीयमित्यादिनापाचकत्वेनांतःप्रति
ष्ठानंचप्रतीयते ॥तस्मान्नविष्णुरितिचेन्न ॥ अथहैममात्मानमणोरणीयांसंपरतःपरंविश्वंहरिमुपा
सीतेति सर्वनामासर्वकर्मासर्वलिंगःसर्वगुणःसर्वकामःसर्वधर्मःसर्वरूपइतिसयएतमेवमात्मानंविश्वं
हरिमारादरमुपास्तेतस्यसर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेषुदेवेषुसर्वेषुवेदेषुकामचारोभवतीतितत्तन्नाम
लिंगादिनातस्यैवदृष्ट्युपदेशान्महोपनिषदि ॥ अनात्तत्वादनात्मानऊनत्वाद्गुणराशितः ॥ अब्रह्मा
णःपरेसर्वेब्रह्मात्माविष्णुरेवहीत्यादिनाकोनआत्माकिंब्रह्मेत्यारंभाच्चान्येषामसंभवाद्विष्णुरेववैश्वा
नरः ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायतेत्यादिनायःपुरुषाख्योविष्णुरभिहितस्तद्विधमेवात्रमू
र्धैवसुतेजाश्चक्षुर्विश्वरूपःप्राणःपृथग्वर्मेत्यादिनैनंवैश्वानरमधीयते ॥ चशब्देनसकलवेदतंत्रपुरा
णादिषुविष्णुपरत्वंपुरुषसूक्तस्यदर्शयति ॥ तथाचब्राह्मे ॥ यथैवपौरुषंसूक्तंनित्यंविष्णुपरायणम् ॥
तथैवमेमनोनित्यंभूयाद्विष्णुपरायणमिति ॥ चतुर्वेदशिखायांच ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसह

स्यपादिति ॥ एषह्येवाचिंत्यः परः परमो हरिरादिरनादिरनंतोनंतशीर्षोनंताक्षोनंतबाहुरनंतगुणोनंत
रूपइति ॥ बृहत्संहितायांच ॥ यथाहिपौरुषंसूक्तंविष्णोरेवाभिधायकम् ॥ नतथासर्ववेदाश्चवेदांगानि
चनारदेत्यादि ॥ यस्माद्यज्जायते चांगाल्लोकवेदादिकंहरेः ॥ तन्नामवाच्यमंगंतद्यथाब्रह्मादिकंमुख
मितिनारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥ ॐअतएवनदेवताभूतंचॐ ॥ २७ ॥ ॥ अग्निर्वैश्वान
रादिशब्दस्तेजसिभूतेऽग्निदेवतायांचप्रसिद्धोप्यतः पूर्वोक्तहेतुनएवात्रनसातच्चाभिधीयते ॥ २७ ॥
॥ ॐसाक्षादप्यविरोधंजैमिनिःॐ ॥ २८ ॥ ॥ नाग्न्यादयः शब्दाअग्न्यादिवाचकास्तथापिसाक्षादे
वानन्ययोगेब्रह्मवाचकैः शब्दैर्व्यवहारार्थमनभिज्ञानाच्चान्यत्रव्यवहरंतीत्यभ्युपगमेऽविरोधंजैमिनि
र्वक्ति ॥ व्यासचित्तस्थिताकाशादवच्छिन्नानिकानिचित् ॥ अन्येव्यवहरंत्येतान्यूरीकृत्यगृहादिव
दितिस्कांदवचनान्नमतानांपरस्परंविरोधः ॥ २८ ॥ ॥ ॐअभिव्यक्तेरित्याश्मरथ्यःॐ ॥ २९ ॥
तत्रतत्रप्रसिद्धावप्यग्न्यादिषुब्रह्मणोभिव्यक्तेरग्न्यादिसूक्तनियमइत्याश्मरथ्यः ॥ २९ ॥ ॥ ॐअ
नुस्मृतेर्बादरिःॐ ॥ ३० ॥ ॥ तत्रतत्रोक्तस्यविष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियमइतिबाद
रिः ॥ ३० ॥ ॥ ॐसंपत्तेरितिजैमिनिस्तथाहिदर्शयतिॐ ॥ ३१ ॥ ॥ साक्षादप्यविरोधंवदन्जै
मिनिः सूक्तादिनियममग्न्यादिसंप्राप्त्यामन्यते ॥ तंयथायथोपासतेतदेवभवतीतिदर्शयति ॥ ३१ ॥
नह्यन्योपासकोन्यंप्राप्नुतइतियुज्यतइत्यतआह ॥ ॥ ॐआमनंतिचैनमस्मिन्ॐ ॥ ३२ ॥ ॥
एनंविष्णुमस्मिन्नग्न्यादावामनंतियोऽग्नौतिष्ठन्यएषएतस्मिन्नग्नौतेजोमयोऽमृतमयः पुरुषइत्या
दिना ॥ ३२ ॥ अ० ३७ ॥ ॥ इतिश्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगव
त्पदाचार्यविरचितेप्रथमाध्यायस्यद्वितीयपादः ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥ ॥

श्रीहयग्रीवायनमः ॥ ॥ ॐतत्रचान्यत्रप्रसिद्धानांशब्दानांविष्णौसमन्वयंप्रायेणाऽस्मिन्पादेदर्शयति॥विष्णोःपरविद्याविषयत्वमुक्तम् ॥ तत्रयस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चसर्वैः ॥ तमेवैकंजानथाऽऽत्मानमित्यत्रप्राणानांग्रंथिरसिरुद्रोमाविशांतकः ॥ प्राणेश्वरःकृत्तिवासाःपिनाकीत्यादिनारुद्रस्यप्राणाधारत्वप्रतीतेः॥ सएषोंतश्चरतेबहुधाजायमानइतिजीवलिंगाच्चतयोःप्राप्तिरिति ॥ अतउच्यते ॥ ॥ ॐद्युभ्वाद्यायतनंस्वशब्दात्ॐ ॥१॥ ॥ तमेवैकंजानथाऽऽत्मानमित्यात्मशब्दाद्युभ्वाद्याश्रयोविष्णुरेव ॥ आत्मब्रह्मादयःशब्दास्तमृतेविष्णुमव्ययम् ॥ नसंभवतियस्मात्तैर्नैवासागुणपूर्णेतितिब्रह्मवैवर्त्ते ॥ १ ॥॥ ॐमुक्तोपसृप्यव्यपदेशात्ॐ ॥ २ ॥ ॥ अमृतस्यैषसेतुरिति॥ब्रह्मविदाप्नोतिपरम् ॥ नारायणंमहाज्ञेयंविश्वात्मानंपरायणम् ॥ मुक्तानांपरमागतिः ॥ एतमानंदमयमात्मानमुपसंक्रामतीत्यादिनातस्यैवमुक्तप्राप्यत्वव्यपदेशात् ॥ बहुनात्रकिमुक्तेनयावच्छ्वेतंनगच्छति ॥ योगीतावन्नमुक्तःस्यादेषशास्त्रस्यनिर्णयइत्यादित्यपुराणे ॥२॥ ॥ ॐनानुमानमतच्छब्दात्ॐ ॥३॥ ॥ नानुमानात्मकागमपरिकल्पितरुद्रोऽत्रवाच्यः ॥ भस्मधरोग्रत्वादितच्छब्दाभावात्सोंतकःसरुद्रःसप्राणभृत्सप्राणनायकःसईशोयोहरियोंनंतोयोविष्णुर्यःपरःपरोवरीयानित्यादिनाप्राणग्रंथिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् ॥ ब्रह्मांडेच॥रुजंद्रावयतेयस्माद्रुद्रस्तस्माज्जनार्दनः ॥ ईशनादेवचेशानोमहादेवोमहत्त्वतः ॥ पिबंतियेनराऩाकंमुक्ताःसंसारसागरात् ॥ तदाधारोयतोविष्णुःपिनाकीतिततस्मृतः ॥ शिवःसुखात्मकत्वेनशर्वःशंरोधनाद्धरिः ॥ कृत्यात्मकमिमंदेहंयतोवस्तेप्रवर्तयन् ॥ कृत्तिवासास्ततोदेवोविरिंचश्चविरेचनात् ॥ बृंहणात्ब्रह्मनामाऽ

स्यपादिति ॥ एषह्येवाचिंत्यःपरःपरमोहरिरादिरनादिरनंतोनंतशीर्षोनंताक्षोनंतबाहुरनंतगुणोनंत
रूपइति ॥ बृहत्संहितायांच ॥ यथाहिपौरुषंसूक्तंविष्णोरेवाभिधायकम् ॥ नतथासर्वेवेदाश्चवेदांगानि
चनारदेत्यादि ॥ यस्माद्यज्ञायतेचांगाल्लोकवेदादिकंहरेः ॥ तन्नामवाच्यमंगंतद्यथाब्रह्मादिकंमुख
मितिनारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥ ॐअतएवनदेवताभूतंचॐ ॥ २७ ॥ ॥ अग्निर्वैश्वान
रादिशब्दस्तेजसिभूतेऽग्निदेवतायांचप्रसिद्धोप्यतःपूर्वोक्तहेतुतएवात्रनसातच्चाभिधीयते ॥ २७ ॥
॥ ॐसाक्षादप्यविरोधंजैमिनिःॐ ॥ २८ ॥ ॥ नाग्न्यादयःशब्दाअग्न्यादिवाचकास्तथापिसाक्षादे
वानन्ययोगेब्रह्मवाचकैःशब्दैर्व्यवहारार्थमनभिज्ञानाच्चान्यत्रव्यवहरंतीत्यभ्युपगमेऽविरोधंजैमिनि
र्वक्ति ॥ व्यासचित्तस्थिताकाशादवच्छिन्नानिकानिचित् ॥ अन्येव्यवहरंत्येतान्युरीकृत्यगृहादिव
दितिस्कांदवचनान्नमतानांपरस्परंविरोधः ॥ २८ ॥ ॥ ॐअभिव्यक्तेरित्याश्मरथ्यःॐ ॥ २९ ॥
तत्रतत्रप्रसिद्धावप्यग्न्यादिषुब्रह्मणोभिव्यक्तेरग्न्यादिसूक्तनियमइत्याश्मरथ्यः ॥ २९ ॥ ॥ ॐअ
नुस्मृतेर्बादरिःॐ ॥ ३० ॥ ॥ तत्रतत्रोक्तस्यविष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियमइतिबाद
रिः ॥ ३० ॥ ॥ ॐसंपत्तेरितिजैमिनिस्तथाहिदर्शयतिॐ ॥ ३१ ॥ ॥ साक्षादप्यविरोधंवदन्जै
मिनिःसूक्तादिनियममग्न्यादिसंप्राप्त्यामन्यते ॥ तंयथायथोपासतेतदेवभवतीतिदर्शयति ॥ ३१ ॥
नह्यन्योपासकोन्यंप्राप्नुतइतियुज्यतइत्यतआह ॥ ॥ ॐआमनंतिचैनमस्मिन्ॐ ॥ ३२ ॥ ॥
एनंविष्णुमस्मिन्नग्न्यादावामनंतियोऽग्नौतिष्ठन्यएषएतस्मिन्नग्नौतेजोमयोऽमृतमयःपुरुषइत्या
दिना ॥ ३२ ॥ अ० ३७ ॥ ॥ इतिश्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगव
त्पदाचार्यविरचितेप्रथमाध्यायस्यद्वितीयपादः ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥ ॥

श्रीहयग्रीवायनमः ॥ ॥ ॐतत्रचान्यत्रप्रसिद्धानांशब्दानांविष्णौसमन्वयंप्रायेणास्मिन्पादेदर्श
यति॥विष्णोःपरविद्याविषयत्वमुक्तम् ॥ तत्रयस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चस
र्वैः ॥ तमेवैकंजानथाऽऽत्मानमित्यत्रप्राणानांग्रंथिरसिरुद्रोमाविशांतकः ॥ प्राणेश्वरःकृत्तिवासाः
पिनाकीत्यादिनारुद्रस्यप्राणाधारत्वप्रतीतेः॥ सएषोंतश्चरतेबहुधाजायमानइतिजीवलिंगाच्चतयोः
प्राप्तिरिति ॥ अतउच्यते ॥ ॥ ॐद्युभ्वाद्यायतनंस्वशब्दात्ॐ ॥१॥ ॥ तमेवैकंजानथाऽऽत्मान
मित्यात्मशब्दाद्युभ्वाद्याश्रयोविष्णुरेव ॥ आत्मब्रह्मादयःशब्दास्तमृतेविष्णुमव्ययम् ॥ नसंभव
तियस्मात्तैर्नैवासागुणपूर्णेतिब्रह्मवैवर्ते ॥ १ ॥॥ ॐमुक्तोपसृप्यव्यपदेशात्ॐ ॥ २ ॥ ॥ अमृ
तस्यैषसेतुरिति॥ब्रह्मविदाप्नोतिपरम् ॥ नारायणंमहाज्ञेयंविश्वात्मानंपरायणम् ॥ मुक्तानांपरमाग
तिः ॥ एतमानंदमयमात्मानमुपसंक्रामतीत्यादिनातस्यैवमुक्तप्राप्यत्वव्यपदेशात् ॥ बहुनात्रकिं
मुक्तेनयावच्छेतंनगच्छति ॥ योगीतावन्नमुक्तःस्यादेषशास्त्रस्यनिर्णयइत्यादित्यपुराणे ॥२॥ ॥
ॐनानुमानमतच्छब्दात्ॐ ॥३॥ ॥ नानुमानात्मकागमपरिकल्पितरुद्रोऽत्रवाच्यः ॥ भस्मधरोग्र
त्वादितच्छब्दाभावात्सोंतकःसरुद्रःसप्राणभृत्सप्राणनायकःसईशोयोहरिर्योनंतोयोविष्णुर्यःपरः
परोवरीयानित्यादिनाप्राणग्रंथिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् ॥ ब्रह्मांडेच॥रुजंद्रावयतेयस्माद्रुद्रस्त
स्माज्जनार्दनः ॥ ईशनादेवचेशानोमहादेवोमहत्त्वतः ॥ पिबंतियेनरशानाकंमुक्ताःसंसारसागरात् ॥
तदाधारोयतोविष्णुःपिनाकीतिततस्मृतः ॥ शिवःसुखात्मकत्वेनशर्वःशंरोधनाद्धरिः ॥ कृत्यात्म
कमिमंदेहंयतोवस्तेप्रवर्तयन् ॥ कृत्तिवासास्ततोदेवोविरिंचश्चविरेचनात् ॥ बृंहणात्ब्रह्मनामाऽ

सावैश्वर्यादिंद्रउच्यते ॥ एवंनानाविधैःशब्दैरेकएवत्रिविक्रमः ॥ वेदेषुसपुराणेषुगीयतेपुरुषोत्तमइ
ति ॥ वामनेच ॥ नतुनारायणादीनांनाम्नामन्यत्रसंभवः ॥ अन्यनाम्नांगतिर्विष्णुरेकएवप्रकी
र्तितइति ॥ स्कांदेच ॥ ऋतेनारायणादीनिनामानिपुरुषोत्तमः ॥ प्रादादन्यत्रभगवान्राजे
वर्तेस्वकंपुरमिति ॥ चतुर्मुखःशतानंदोब्रह्मणःपद्मभूरिति ॥ उग्रोभस्मधरोनग्नःकपालीतिशिवस्य
च ॥ विशेषनामानिददौस्वकीयान्यपिकेशवइतिचब्राह्मे ॥ ३ ॥ ॥ ॐप्राणभृच्चॐ ॥ ४ ॥ ॥ ए
तैरेवहेतुभिर्नजीवोवायुश्च ॥ अजायमानोबहुधाविजायतइतितस्यैवबहुधाजन्मोक्तेः॥ ४॥ ॥ ॐ
भेदव्यपदेशात्ॐ ॥ ५ ॥ ॥ नचैक्यंवाच्यम् ॥ जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिभेद
व्यपदेशात् ॥ ५ ॥ ॥ ॐप्रकरणात्ॐ ॥ ६ ॥ ॥ द्वेविद्येवेदितव्येइतितस्यह्येतत्प्रकरणम् ॥ ६ ॥
॥ ॐस्थित्यदनाभ्यांचॐ ॥७॥ ॥ द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते ॥ तयोरन्यः
पिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतीतीशजीवयोःस्थित्यदनोक्तेः ॥ ७ ॥ अ० ॥ १ ॥ प्राणो
वाआशायाभूयानित्युक्त्वायोवैभूमातत्सुखमित्युक्तेस्तस्यैवभूमत्वप्राप्तिः॥ उत्क्रांतप्राणानित्यादि
तल्लिंगात् ॥ प्राणशब्दश्चवायुवाचीति ॥ अतोवक्ति ॥ ॥ ॐभूमासंप्रसादादध्युपदेशात्ॐ ॥ ८ ॥
॥ संप्रसादात्पूर्णसुखरूपत्वात् ॥ अध्युपदेशात्सर्वेषामुपर्युपदेशाच्चविष्णुरेवभूमा ॥ सहस्रशीर्षंदे
वंविश्वाक्षंविश्वशंभुवम् ॥ विश्वंनारायणंदेवमक्षरंपरमंपदम् ॥ विश्वतःपरमान्नित्यमितिहिश्रु
तिः ॥ तमुत्क्रामंतंप्राणोनूत्क्रामतीत्यादिनानोत्क्रमणादिलिंगविरोधोऽपि॥ ८॥ ॥ ॐधर्मोपपत्तेश्चॐ
॥ ९ ॥ सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥ अ० ॥ २ ॥ अदृश्यत्वादिगणाविष्णोरुक्ताः ॥ अदृष्टं

द्रष्टृश्रुतंश्रोत्रित्यादिना ॥ अहंसोममाहनसंबिभर्मीत्यादेस्तस्यापिसंभवान्मध्यमाक्षरस्योक्ताइ
ति ॥ ॥ अतोब्रूते ॥ ॥ ॐअक्षरमंबरांतधृतेःॐ ॥ १० ॥ ॥ एतस्मिन्नुखल्वक्षरेगार्ग्याकाशओ
तश्चप्रोतश्चेत्यंबरांतस्यसर्वस्यधृतेर्ब्रह्मैवाक्षरम् ॥ यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानि
विश्वा ॥ भर्तासन्भ्रियमाणोबिभर्ति ॥ एकोदेवोबहुधानिविष्टः ॥ यदाभारंतंद्रयतेस
भर्तुम् ॥ परास्यभारंपुनरस्तमेति ॥ यस्मिन्निदꣳसंचविचैधिसर्वंयस्मिन्देवाअधिविश्वेनिषे
दुरित्यादिश्रुतेः ॥ पृथिव्यादिप्रकृत्यंतंभूतंभव्यंभवच्चयत् ॥ विष्णुरेकोबिभर्तीदंनान्यस्तस्मा
त्क्षमोधृताविति चस्कांदे ॥१०॥ ॥ ॐसाचप्रशासनात्ॐ ॥११॥ ॥ साचधृतिःप्रशासनादु
च्यते ॥ एतस्यवाक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतइत्यादिना ॥ तच्चप्रशासनंवि
ष्णोरेव ॥ समाधंगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणि ॥ चतुर्भिःसाकंनवतिंचनाम
भिश्चक्रंनवृत्तंव्यतीं रवीविपदित्यादिश्रुतेः ॥ एकःशास्तानद्वितीयोऽस्तिशास्तायोहृच्छयस्तमह
मिहब्रवीमि ॥ नकेवलंमेभवतश्चराजन्सर्वैबलंबलिनांचापरेषामित्यादेश्च ॥ ११ ॥ ॥ ॐअन्यभाव
व्यावृत्तेश्चॐ ॥ १२ ॥ ॥ अस्थूलमनण्वित्यादिनास्थूलाणवादीनामन्यवस्तुस्वभावानांव्यावृत्तेश्च ॥
अस्थूलोऽनणुरमध्यमोमध्यमोऽव्यापकोऽव्यापकोयोऽसौहरिरादिरनादिरविश्वोविश्वःसगुणोनिर्गु
णइत्यादेर्विष्णोरेवैतेधर्माः ॥ अस्थूलोनणुरूपोसावविश्वोविश्वएवच ॥ विरुद्धधर्मरूपोऽसावैश्वर्या
त्पुरुषोत्तमइतिचब्राह्मे ॥ १२ ॥ अ० ३ ॥ सदेवसोम्येदमग्रआसीदित्यादिनासतःस्रष्टृत्वमुच्यते ॥ तच्च
सद्बहुस्यांप्रजायेयेतिपरिणामप्रतीतेर्नैविष्णुः ॥ सह्यविकारःसदाशुद्धोनित्यआत्मासदाहरिरित्या

दिनाऽविकारःप्रसिद्धइति॥अतोब्रवीति॥ ॥ॐईक्षतिकर्मव्यपदेशात्सःॐ॥१३॥तदैक्षतेतीक्षति
कर्मव्यपदेशात्सएवविष्णुरत्रोच्यते॥ नान्योतोस्तिद्रष्टानान्यदतोस्तिद्रष्टृइत्यादिनातस्यैवहितल्ल
क्षणम्॥बहुत्वंचाविकारेणोक्तम्॥अजायमानोबहुधाविजायतइति॥१३॥अ० ४॥चंद्रादित्याद्या
धारत्वंविष्णोरुक्तम्॥तच्चअथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोस्मिन्नंतरआकाशः॥किं
तदत्रविद्यते ॥ उभेअस्मिन्द्यावापृथिवीअंतरेवसमाहिते॥उभावग्निश्चवायुश्चसूर्याचंद्रमसाउभौ
विद्युन्नक्षत्राणीत्यादिनाऽऽकाशस्यप्रतीयते ॥ सचाकाशोनविष्णुः ॥ तस्यांतेसुषिरंसूक्ष्मंतस्मि
न्सर्वंप्रतिष्ठितमितिश्रुतेरिति ॥ अतआह॥ ॥ ॐदहरउत्तरेभ्यःॐ ॥ १४ ॥ ॥ यआत्मापहत
पाप्माविजरोविमृत्युर्विशोकोविजिघत्सोपिपासःसत्यकामःसत्यसंकल्पःसोन्वेष्टव्यःसविजिज्ञासि
तव्यइत्यादिभ्यउत्तरेभ्योगुणेभ्योदहरेविष्णुरेव॥योशनायापिपासेशोकंमोहंजरांमृत्युमत्येति ॥स
एषसर्वेभ्यःपाप्मभ्यउदितइत्यादिनाविष्णोरेवहितेगुणाः॥नित्यतीर्णाशनायादिरेकएवहरिःस्वतः।
अशनायादिकानन्येतत्प्रसादात्तरंतिहीतिचपाद्मे॥सापेक्षनिरपेक्षयोश्चनिरपेक्षंस्वीकर्तव्यम्॥ सत्य
कामःपरोनास्तितमृतेविष्णुमव्ययम्॥सत्यकामत्वमन्येषांभवेत्तत्काम्यकामितेतिस्कांदे ॥१४॥
ॐगतिशब्दाभ्यांतथाहिदृष्टंलिंगंचॐ॥१५॥ ॥ अहरहर्गच्छंत्यएतंब्रह्मलोकंनविदंतीतिसुप्तस्य
तद्गतिब्रह्मशब्दश्चोच्यते ॥ सतासोम्यतदासंपन्नोभवतीतिश्रुतेस्तंहिसुप्तोगच्छति ॥ अरश्चहवै
ण्यश्चार्णवौब्रह्मलोकेइतिलिंगंचतथादृष्टम् ॥ अरश्चवैण्यश्चसुधासमुद्रौतत्रैवसर्वाभिमतप्रदौद्वावि
त्यादिनातस्यैवहितल्लक्षणत्वेनोच्यते॥१५॥ ॥ ॐधृतेश्चमहिम्नोस्यास्मिन्नुपलब्धेःॐ॥१६॥ ॥ ए

षसेतुर्विधृतिरितिधृतेः ॥ एषभूताधिपतिरेषभूतपालइत्याद्यस्यमहिम्नोस्मिन्नुपलब्धेः ॥ एत
स्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्च॥ एतस्यवाक्षरस्यप्रशासनेगार्गि ॥ सहिसर्वाधिपतिः ॥
सहिसर्वपालःसईशःसविष्णुःपतिंविश्वस्यात्मेश्वरमित्यादिश्रुतिभ्यः ॥तस्यह्येषमहिमा ॥ सर्वेशो
विष्णुरेवैकोनान्योऽस्तिजगतःपतिरितिचस्कांदे ॥१६॥ ॥ॐप्रसिद्धेश्चॐ॥१७॥ ॥ तत्रापिदहरं
गगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यमितिप्रसिद्धेश्च ॥तदंतस्थत्वापेक्षत्वान्नसुषिरश्रुतिविरो
धः॥१७॥ ॥ॐइतरपरामर्शात्सइतिचेन्नासंभवात्ॐ॥१८॥ ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभि
निष्पद्यतएषआत्मेतिहोवाचेतिजीवपरामर्शात्सइतिचेन्न ॥ तस्यस्वतोऽपहतपाप्मत्वाद्यसंभवात्
॥१८॥ ॥ॐउत्तराच्चेदाविर्भूतस्वरूपस्तुॐ॥ १९॥ ॥ सतत्रपर्येतिजक्षन्क्रीडन्रममाणइत्याद्यु
त्तरवचनाज्जीवएवेतिचेन्न ॥ तत्रहिपरमेश्वरप्रसादादाविर्भूतस्वरूपोमुक्तउच्यते॥यत्प्रसादात्स
मुक्तोभवतिसभगवान्पूर्वोक्तः॥१९॥ ॥ॐअन्यार्थश्चपरामर्शःॐ॥२०॥यंप्राप्यस्वेनरूपेणजीवोऽ
भिनिष्पद्यतेसएषआत्मेतिपरमात्मार्थश्चपरामर्शः॥२०॥ ॥ॐअल्पश्रुतेरितिचेत्तदुक्तम्ॐ॥२१॥
दहरइत्यल्पश्रुतेर्नेतिचेन्न ॥ निचाय्यत्वादेवंव्योमवच्चेत्युक्तत्वात् ॥ एषमआत्मांऽतर्हृदयेज्या
यानितिश्रुत्युक्तत्वाच्च॥२१॥अ०५ ॥ अदृश्यत्वादयःपरमेश्वरगुणाउक्तास्तेषांसुखंशाश्वतंनेतरे
षाम्॥तदेतदितिमन्यंतेऽनिर्देश्यंपरमंसुखमित्यादिनाज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वंचोच्यत
इति॥अतोवक्ति॥ ॥ ॐअनुकृतेस्तस्यचॐ॥२२॥ ॥ तमेवभांतमनुभातिसर्वमित्यनुकृतेस्तस्य
भासासर्वमिदंविभातीतिवचनाच्चपरमात्मैवानिर्देश्यसुखरूपः ॥ नहिज्ञानिसुखमनुभातिसर्वंनचत

द्भासा ॥ अहंतत्तेजोरश्मीदितिनारायणभासाहिसर्वंभाति ॥२२॥ ॥ ॐअपिस्मर्यतेॐ ॥२३॥
यदादित्यगतंतेजोजगद्भासयतेखिलम् ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमिति ॥ नत
द्भासयतेसूर्योनशशांकोनपावकः॥ यद्गत्वाननिवर्त्तंतेतद्धामपरमंममेतिच ॥२३॥ अ० ६॥विष्णुरे
वजिज्ञास्यइत्युक्तम् ॥ तत्रऊर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति ॥ मध्येवामनमासीनंविश्वेदेवा
उपासतइतिसर्वदेवोपास्यःकश्चित्प्रतीयते ॥ सचएवमेवैषप्राणइतरान्प्राणान्पृथक्पृथगेवसंनि
धत्ते ॥ योयंमध्यमःप्राणःकुविदंगेत्यादिनाप्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्चवा
युरेवेतिप्रतीयते ॥ अतोऽब्रवीत् ॥ ॥ ॐशब्दादेवप्रमितःॐ ॥ २४ ॥ ॥ वामनशब्दादेववि
ष्णुरितिप्रमितः ॥ नहिश्रुतेर्लिंगंबलवत् ॥ श्रुतिर्लिंगंसमाख्याचवाक्यंप्रकरणंतथा ॥ पूर्वंपूर्वं
बलीयःस्यादेवमागमनिर्णयइतिस्कांदे ॥ तच्चलिंगंविष्णोरेव ॥ तस्यैवप्राणोक्तेस्तद्वैत्वंप्राणोऽभ
वइति ॥२४॥ ॥ ॐहृद्यपेक्षयातुमनुष्याधिकारत्वात्ॐ ॥ २५ ॥ ॥ सर्वगतस्यापितस्यांगुष्ठमात्र
त्वंहृद्यवकाशापेक्षयायुज्यते ॥ इतरप्राणिनामंगुष्ठाभावेपिमनुष्याधिकारत्वान्नविरोधः ॥ २५ ॥
अ० ७॥ मनुष्याणामेववेदविद्यायामधिकारइत्युक्तम् ॥ तिर्यगाद्यपेक्षयैवमनुष्यत्वविशेषणमुक्त
म् ॥नतुदेवाद्यपेक्षयेत्याह ॥ ॥ ॐतदुपर्यपिबादरायणःसंभवात्ॐ ॥२६॥ ॥ तदुपरिमनुष्याणां
सताम् ॥ देवादित्वप्राप्त्युपरि ॥ संभवतिहितेषांविशिष्टबुद्ध्यादिभावात् ॥ तिर्यगादीनांतदभावा
दभावः ॥ तेषामपियत्रविशिष्टबुद्ध्यादिभावस्तत्राविरोधः ॥ निषेधाभावात् ॥ दृश्यंतेहिजरितार्या
दयः ॥ ॥ ॐविरोधःकर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात्ॐ ॥ २७ ॥ ॥ मनुष्याएवदेवादयो

भवंतीतितदुपरीत्युक्तम् ॥ तत्रयदिमनुष्याःसंतोदेवादयोभवंतितत्पूर्वेदेवताभावाद्देवतोद्दिष्टकर्म
णिविरोधइतिचेन्न ॥ अनेकेषांदेवतापदप्राप्तेर्दर्शनात् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याः
संतिदेवाइति ॥२७॥ ॥ ॐशब्दइतिचेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम्ॐ ॥२८॥ ॥ वाचा
विरूपमित्यर्थेत्याहिश्रुतेराप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्चमूलप्रमाणस्यस्वतःप्रामाण्यप्रसिद्धेश्च
नित्यत्वाद्वेदस्यतदुदितानांदेवानामनित्यत्वात्पुनरन्यभावनियमाभावाच्चशब्देविरोधइतिचेन्न ॥
सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ यथैवनियमःकालेसुरादिनियमस्तथा ॥ तस्मान्नानीद्द
शंकापिविश्वमेतद्भविष्यतीत्यादेरतएवशब्दात्तेषांप्रभवनियमात् ॥ महतांप्रत्यक्षात् ॥ यथेदानीं
तथोपर्यपिदेवाभविष्यंतीतीतरेषामनुमानाच्च॥२८॥ ॥ ॐअतएवचनित्यत्वम्ॐ॥२९॥ ॥ अत
एवशब्दस्यनित्यत्वादेवचदेवप्रवाहनित्यत्वंयुक्तम् ॥ २९ ॥ ॥ ॐसमाननामरूपत्वाच्चावृत्ताव
प्यविरोधोदर्शनात्स्मृतेश्चॐ ॥३०॥ ॥ अतीतानागतानांदेवानांसमाननामरूपत्वात्प्राप्तपदानां
मुक्त्याऽवृत्तावप्यविरोधः ॥ यथापूर्वमितिदर्शनात् ॥ अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा ॥
ऋषीणांनामधेयानियाश्चवेदेषुदृष्टयः ॥ वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरइतिस्मृतेश्च ॥ ३० ॥
ॐमध्वादिष्वसंभवादनधिकारंजैमिनिःॐ ॥३१॥ ॥ वसूनामेवैकोभूत्वेत्यादिनाप्राप्यफलत्वात्
प्राप्तपदानांदेवानांमध्वादिविद्यास्वनधिकारंजैमिनिर्मन्यते ॥३१॥ ॥ ॐज्योतिषिभावाच्चॐ ॥
॥३२॥ ॥ ज्योतिषिसर्वज्ञत्वेभावाच्च ॥ आदित्यप्रकाशेंतर्भाववत् ॥ तज्ज्ञानेसर्ववस्तूनामंतर्भावा
त्॥नित्यसिद्धत्वाच्चविद्यानाम्॥३२॥ ॥ॐभावंतुबादरायणोऽस्तिहिॐ ॥३३॥ ॥ फलेविशेषभा

वात् ॥ प्राप्तपदानामपिदेवानांमध्वादिष्वप्यधिकारंबादरायणोमन्यते ॥अस्तिहिप्रकाशविशेषः॥
यावत्सेवापरेतत्त्वेनावत्सुखविशेषता॥संभवाच्चाप्रकाशस्यपरमेकमृतेहरिम्॥ तेषांसामर्थ्ययोगाच्च
देवानामप्युपासनम् ॥ सर्वंविधीयतेनित्यंसर्वयज्ञादिकर्मचेतिस्कांदे ॥ उक्तफलानधिकारमात्रं
जैमिनिमतमतोनमतविरोधः ॥ सर्वज्ञस्यैवकृष्णस्यत्वेकदेशविचिंतितम् ॥ स्वीकृत्यमुनयोब्रू
युस्तन्मतंनविरुध्यतइतिचब्राह्मे ॥ ३३ ॥अ०८॥ ॥ मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्र
स्याप्यहहारेत्वाशूद्रेतिपौत्रायणोक्तेरधिकारइत्यतआह ॥ ॥ ॐशुगस्यतदनादरश्रवणात्तदाद्र
वणात्सूच्यतेहिॐ ॥ ३४ ॥ ॥ नासौपौत्रायणःशूद्रःशुचाद्रवणमेवहिशूद्रत्वम् ॥ कम्वरएनमेत
त्संतमित्यनादरश्रवणात् ॥ सहसंजिहानएवक्षत्तारमुवाचेतिसूच्यतेहि ॥ ३४ ॥ ॥ ॐक्षत्रिय
त्वावगतेश्चोत्तरत्रचैत्ररथेनलिंगात्ॐ ॥ ३५ ॥ ॥ अयमश्वतरीरथइतिचित्ररथसंबंधित्वेनलिंगे
नपौत्रायणस्यक्षत्रियत्वावगतेश्च ॥ रथस्त्वश्वतरीयुक्तश्चित्रइत्यभिधीयतइतिब्राह्मे ॥ यत्रवेदो
रथस्तत्रनवेदोयत्रनोरथइतिचब्रह्मवैवर्ते ॥ ३५ ॥ ॥ ॐसंस्कारपरामर्शात्तदभावाभिलापाच्च
ॐ ॥ ३६ ॥ ॥ अष्टवर्षंब्राह्मणमुपनयीततमध्यापयीतेत्यध्ययनार्थसंस्कारपरामर्शात् ॥ नाग्नि
र्नयज्ञोनक्रियानसंस्कारोनव्रतानिशूद्रस्येतिपैंगिश्रुतौसंस्काराभावाभिलापाच्च ॥ उत्तमस्त्रीणां
तुनशूद्रवत् ॥ सपत्नींमेपराधमेत्यादिष्वधिकारदर्शनात् ॥ संस्काराभावेनाभावस्तुसामान्येन॥
अस्तिचतासांसंस्कारः ॥ स्त्रीणांप्रदानकर्मैवयथोपनयनंतथेतिस्मृतेः ॥ ३६ ॥ ॥ ॐतदभाव
निर्धारणेचप्रवृत्तेःॐ ॥ ३७॥ ॥ नाहमेतद्वेदभोयद्गोत्रोऽहमस्मीतिसत्यवचनेनसत्यकामस्यशूद्र

त्वाभावनिर्धारणेहारिद्रुमतस्यनैतदब्राह्मणोविवक्तुमर्हतीतितंसंस्कारेप्रवृत्तेश्च ॥ ३७ ॥ ॥ ॐ
श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्चॐ ॥ ३८ ॥ ॥ श्रवणेत्रपुजतुभ्यांश्रोत्रपरिपूरणम् ॥ अध्य
यनेजिह्वाच्छेदः ॥ अर्थावधारणेहृदयविदारणमितिप्रतिषेधात् ॥ नाग्निर्नयज्ञःशूद्रस्यतथैवाध्य
यनंकुतः ॥ केवलैवतुशुश्रूषात्रिवर्णानांविधीयतइतिस्मृतेश्च॥ विदुरादीनांतूत्पन्नज्ञानत्वात्कश्चि
द्विशेषः ॥३८॥अ० ९॥ ॥यदिदंकिंचजगत्सर्वंप्राणएजतिनिःसृतम् ॥ महद्भयंवज्रमुद्यतंयएत
द्विदुरमृतास्तेभवंतीत्युद्यतवज्रज्ञानान्मोक्षःश्रूयतइति ॥ अतोऽब्रवीत् ॥ ॥ ॐकंपनात्ॐ ॥
॥३९॥ ॥ एजतीतिकंपनवचनात् ॥ उद्यतवज्रोभगवानेव ॥ कोह्येवान्यात्कःप्राण्याद्यदेषआ
काशआनंदोनस्यादितिहिश्रुतिः॥प्राणस्यप्राणमुतचक्षुषश्चक्षुरितिच ॥ नभस्वतोपिसर्वाःस्युश्चे
ष्टाभगवतोहरेः ॥ किमुतान्यस्यजगतोयस्यचेष्टानभस्वतइतिचस्कांदे ॥ चक्रंचंक्रमणादेषवर्ज
नाद्वज्रमुच्यते ॥ खंडनात्खड्ग एवैषहेतिनामास्वयंहरिरितिब्रह्मवैवर्ते ॥ ३९ ॥अ० १०॥ ॥ हृ
दयआहितंज्योतिःपरमात्मेत्युक्तम् ॥ तत्रयोयंविज्ञानमयःप्राणेषुहृद्यंतज्योतिःपुरुषइत्यत्रो
भौलोकावनु संचरंतीतिवचनाज्जीवइतिप्रतीयतइति ॥ अतउच्यते ॥ ॥ ॐज्योतिर्दर्शनात्
ॐ ॥ ४० ॥ ॥ विष्णुरेवज्योतिर्विष्णुरेवब्रह्मविष्णुरेवबलंविष्णुरेवयशोविष्णुरेवआनंदइतिद
र्शनात्चतुर्वेदशिखायाम्॥ ज्योतिर्विष्णुरेवप्राज्ञेनात्मनान्वारूढउत्सर्जंयातीतिवचनात्तस्यापिलो
कसंचरणमस्त्येव॥४०॥ अ० ११ ॥ ॥सर्वाधारत्वंविष्णोरुक्तम् ॥ तत्राकाशोवैनामनामरूपयो
र्निर्वहितेत्यत्राकाशस्यप्रतीयते ॥ वैनामेतिप्रसिद्धोपदेशात् ॥ प्रसिद्धाकाशश्चांगीकर्तव्यइति ॥

अतउच्यते ॥ ॥ ॐआकाशोऽर्थांतरत्वादिव्यपदेशात्ॐ ॥ ४१ ॥ ॥ तेयदंतरातद्ब्रह्मेत्यर्थांतर त्वादिव्यपदेशादाकाशोहरिरेव ॥ अवर्णम् ॥ यतोवाचोनिवर्तंतइत्यादिश्रुतेस्तस्यैवहितल्लक्षणम्॥ अनामासोऽप्रसिद्धत्वादरूपोभूतवर्जनादितिब्राह्मे ॥ ४१ ॥ अ० १२॥ असंगत्वंपरमात्मनउक्त म् ॥ तच्चसयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइतिस्वमादिद्रष्टुःप्रतीयते॥ सच जीवःप्रसिद्धेरिति॥ अतोवक्ति॥ ॥ॐसुषुप्त्युत्क्रांत्योर्भेदेनॐ ॥४२॥ ॥ प्राज्ञेनात्मनासंपरिष्वक्तो नबाह्यंकिंचनवेदनांतरम् ॥ प्राज्ञेनात्मनान्वारूढउत्सर्जंद्यातीतिभेदेव्यपदेशान्नजीवःपरएवासंगः॥ स्वमादिद्रष्टृत्वंचसर्वज्ञत्वात्तस्यैवयुज्यते॥४२॥अ० १३॥एषनित्योमहिमाब्राम्हणस्येतिब्राह्मण स्यापिनित्यमहिमाप्रतीयते ॥ सचब्राह्मणःसवाएषमहानजआत्मेत्यजशब्दाद्विरिंचइतिप्राप्तम् ॥ देवानांचविद्याकर्मणोःपदप्राप्तिःसूचिता ॥ तदुपर्यपीति ॥ अतोऽब्रवीत् ॥ ॥ ॐपत्यादिशब्दे भ्यःॐ ॥४३॥ ॥ सर्वस्याधिपतिःसर्वस्येशानःसवाएषनेतिनेतीत्यादिशब्देभ्योनित्यमहिमाविष्णु रेव॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति॥सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्म णि॥सयोतोऽश्रुतइत्यादिश्रुतिभ्यस्तस्यैवहितेशब्दाः ॥४३॥ अ० १४॥ इतिश्रीमत्कृष्णद्वैपाय नकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्यतृतीयःपादः ॥ ३ ॥

श्रीवेदव्यासायनमः ॥ ॥ ॐश्रुतिलिंगादिभिरन्यत्रैवप्रसिद्धानामपिशब्दानांसामस्त्येनविशेषहेतु भिर्विष्णावेवप्रवृत्तिंदर्शयत्यस्मिन्पादे ॥ ॥ ॐआनुमानिकमप्येकेषामितिचेन्नशरीररूपकविन्य स्तगृहीतेर्दर्शयतिचॐ॥ १॥ ॥ तत्तुसमन्वयादितिसर्वशब्दानांपरमेश्वरेसमन्वयउक्तः॥तन्नयुज्य

यतोऽव्यक्तात्पुरुषःपरइतिसांख्यानुमानपरिकल्पितंप्रधानमप्येकेषांशाखिनामुच्यतइतिचेन्न ॥
तस्यैवपारतंत्र्याच्छरीररूपकेऽव्यक्तेविन्यस्तस्यपरमात्मनएवाव्यक्तशब्देनगृहीतेः ॥ कप्रत्ययः
कुत्सने ॥ परमात्मनएवाव्यक्तशब्दस्तत्तंत्रत्वेनतच्छरीररूपत्वादितरस्याप्यव्यक्तशब्दः ॥
तुच्छ्येनाभ्वपिहितंयदासीदितिदर्शयति ॥ अव्यक्तमचलंशांतंनिष्कलंनिक्रियंपरम् ॥ योवेद
हरिमात्मानंसभयादनुमुच्यतइतिपिप्पलादशाखायाम् ॥ अक्षरंब्रह्मपरममित्युक्त्वाव्यक्तोऽक्षरउ
च्यतइतिवचनाच्च ॥१॥ ॥ ॐसूक्ष्मंतुतदर्हत्वात्ॐ ॥२॥ ॥ सूक्ष्ममेवाव्यक्तशब्देनोच्यते॥तद्धि
अव्यक्ततामर्हति ॥ सूक्ष्मत्वंचमुख्यंतस्यैव ॥ यत्तत्सूक्ष्मंपरमंवेदितव्यंनित्यंपदंवैष्णवंह्यामनंति॥
यत्तल्लोकानविदुर्लोकसारंविंदंत्येतत्कवयोयोगनिष्ठाइतिचपिप्पलादशाखायाम्॥ मुख्येचाविद्यमा
नेनामुख्यंयुक्तम्॥२॥ ॥ॐतदधीनत्वादर्थवत्ॐ ॥३॥ ॥तदधीनत्वाच्चाव्यक्तत्वादीनांतस्यैवाव्य
क्तत्वपरावरत्वादिकमर्थवत्॥यदधीनोगुणोयस्यतद्गुणीसोऽभिधीयते ॥ यथाजीवःपरात्मेतियथारा
जाजयीत्यपीतिचस्कांदे ॥३॥ ॥ ॐज्ञेयत्वावचनाच्चॐ ॥४॥ ॥ अन्यस्यनवाच्यत्वंयुज्यते
॥४॥ ॥ॐवदतीतिचेन्नप्राज्ञोहिॐ ॥५॥ ॥ महतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यतइतिज्ञेय
त्वंवदतीतिचेन्न॥प्राज्ञःपरमात्माहितत्रोच्यते ॥ अणोरणीयान्महतोमहीयानितितस्यैवहिमहतो
महत्त्वम् ॥ सर्वस्मात्परस्यमहतोपिपरत्वंयुज्यते॥५॥ ॥ ॐप्रकरणात्ॐ॥६॥ ॥ सोध्वनःपारमाप्नो
तितद्विष्णोःपरमंपदमितितस्यह्येतत्प्रकरणम् ॥६॥ ॥ॐत्रयाणामेवचैवमुपन्यासःप्रश्नश्चॐ ॥७॥
त्रयाणामेवपितृसौमनस्यस्वर्ग्याग्निपरमात्मनांप्रश्नउपन्यासश्च॥ अविज्ञानप्रार्थनंचप्रश्नइत्यभिधी

यतइतिवचनान्नविरोधः ॥७॥ ॥ॐमहद्वच्चॐ॥८॥ ॥यथामहच्छब्दोमहत्तत्त्वेप्रसिद्धोपिपरम
महत्त्वात्परमात्मनएवमुख्यः॥ एवमितरेपि ॥ ८ ॥ ॥ॐचमसवदविशेषात्ॐ ॥९॥ ॥ यथा
चमसशब्दोऽन्यत्रप्रसिद्धोपिइदंतच्छिरएषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नइतिश्रुतेःशिरोवाचकः ए
वमव्यक्तादिशब्दाःसर्वेऽन्यत्रप्रसिद्धाअपिनामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरंतीति
श्रुतेःपरमात्माभिधायकाएवाविशेषाच्छ्रुतेः ॥ ९ ॥ अ०१ ॥ वसंतेवसंतेज्योतिषायजेते
त्यादिकर्माभिधायककर्मकमादिविरोधान्नयुज्यतइति ॥ अतआह ॥ ॥ ॐज्योतिरुपक्रमा
त्तुतथाह्यधीयतएकेॐ ॥१०॥ ॥ ज्योतिरादिकर्मवाचकत्वेनप्रसिद्धाभिधेयोपिसएव ॥ एषइमं
लोकमभ्यार्चदित्युपक्रम्यतावाएतासर्वाऋचःसर्वेवेदाःसर्वेघोषाः॥एकैवव्याहृतिःप्राणएवप्राणऋ
चइत्येवविद्यादितिह्यधीयतएके॥१०॥ ॥ॐकल्पनोपदेशाच्चमध्वादिवदविरोधःॐ॥११॥ ॥मधु
विद्यादिवत्सर्वशब्दार्थत्वेनपरस्यकल्पनोपदेशाच्चनकर्मकमादिविरोधः॥११॥अ०२॥ ॥ॐनसं
ख्योपसंग्रहादपिनानाभावादतिरेकाच्चॐ॥१२॥ ॥यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितइत्या
दिषुबहुसंख्योपसंग्रहेपिनविरोधः॥तस्यैवाऽऽकाशादिषुनानाभावात्तदतिरिक्तस्वरूपत्वाच्च ॥१२
पंचजनानाह ॥ ॥ ॐप्राणादयोवाक्यशेषात्ॐ ॥१३॥ ॥ प्राणस्यप्राणमुतचक्षुषश्चक्षुःश्रोत्र
स्यश्रोत्रमन्नस्यान्नंमनसोमनइतिवाक्यशेषात् ॥१३॥ ॥ ॐज्योतिषैकेषामसत्यन्नेॐ ॥१४॥
॥ तद्देवाज्योतिषांज्योतिरित्यनेनकाण्वानांपंचकम्॥१४॥अ०३॥ अवांतरकारणत्वेनापिसएवो
च्यतइतिवक्ति॥ ॥ ॐकारणत्वेनचाकाशादियथाव्यपदिष्टोक्तेःॐ ॥१५॥ ॥आकाशादिष्ववां

तरकारणत्वेनसएवस्थितः ॥ यथाव्यपदिष्टस्यैवपरस्ययआकाशेतिष्ठन्नित्यादिनाऽऽकाशा
दिषूक्तेः॥ १५॥अ० ४॥सर्वशब्दानांपरमात्मवाचकत्वेकथमन्यत्रव्यवहारइत्यतोऽब्रवीत्॥ ॥ॐस
माकर्षात्ॐ ॥ १६ ॥ ॥ परमात्मवाचिनःशब्दाअन्यत्रसमाकृष्यव्यवह्रियंते ॥ परस्यवाचकाः
शब्दाःसमाकृष्येतरेष्वपि॥ व्यवह्रियंतेसततंलोकवेदानुसारतइतिपाद्मे॥ १६॥ तर्हिकथंतेषांशब्दा
नांजगतिप्रसिद्धिः ॥ ॥ ॐजगद्वाचित्वात्ॐ ॥ १७॥ ॥ जगतिव्यवहारोलोकस्यनतुपरमा
त्मनितथा ॥ अतोजगतिप्रसिद्धिःशब्दानाम् ॥ १७॥ ॥ ॐजीवमुख्यप्राणलिंगादितिचेत्तद्व्या
ख्यातम्ॐ ॥१८॥ ॥ तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम् ॥ तज्जीवमुख्यप्राणयोर्लिंगम् ॥
अस्ययदेकांशाखांजीवोजहात्यथसाशुष्यति ॥ वायुनाहिसर्वेलोकानेनीयंतइत्यादिश्रुतिभ्यइति
चेन्न ॥ उपासात्रैविध्यादितिव्याख्यातत्वात् ॥ १८ ॥ ॥ ॐअन्यार्थंतुजैमिनिःप्रश्नव्याख्याना
भ्यामपिचैवमेकेॐ॥ १९ ॥ ॥ परमात्मज्ञानार्थंकर्मादिकमपिवदतीतिजैमिनिः ॥ कस्मिन्नुभ
गवोविज्ञातेसर्वमिदंविज्ञातंभवतीतितस्मैसहोवाच ॥ द्वेविद्येवेदितव्ये ॥ कथंनुभगवःसआ
देशोभवतीति ॥ यथासोम्यैकेनमृत्पिंडेनेत्यादिनाप्रश्नव्याख्यानाभ्याम् ॥ एवमपिचैकेपठंति ॥
यस्तंनवेदकिमृचाकरिष्यतीति ॥ १९ ॥ ॥ ॐवाक्यान्वयात्ॐ ॥ २० ॥ ॥ वाक्यस्याप्येवम
न्वयोयुज्यते पृथक्पृथक्स्थितस्यापिपरमात्मना ॥२०॥ ॥ ॐप्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यःॐ
॥ २१ ॥ ॥ नान्यःपंथाअयनायविद्यतइतिप्रतिज्ञासिद्धेर्लिंगत्वेनकर्मादिकमुच्यतइत्याश्मर
थ्यः ॥ यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यःपंथाइति ॥ २१ ॥ ॥ ॐउत्क्रमिष्यतएवंभा

वादित्यौडुलोमिः ॐ ॥ २२ ॥ ॥ उत्क्रमिष्यतोमुमुक्षोःकर्मादिनाभाव्यंसाधनसाधनत्वेनाऽतस्त
द्वक्तीत्यौडुलोमिर्मन्यते ॥ २२ ॥ ॥ ॐअवस्थितेरितिकाशकृत्स्नः ॐ ॥ २३ ॥ ॥ सर्वंपरमात्म
न्यवस्थितमितिवक्तुंतद्वचनमितिकाशकृत्स्नः ॥ कृष्णद्वैपायनमतादेकदेशविदःपरे ॥ वदंतितेयथा
प्रज्ञंनविरोधःकथंचनेतिपाद्मे ॥ २३ ॥ अ० ५ ॥ स्त्रीशब्दाअपितस्मिन्नेवेत्याह ॥ ॥ ॐप्रकृति
श्चप्रतिज्ञादृष्टांतानुपरोधात् ॐ ॥ २४ ॥ ॥ हंतैतमेवपुरुषंसर्वाणिनामान्यभिवदंति ॥ यथान
द्यःस्यंदमानाःसमुद्रायणाःसमुद्रमभिविशंत्येवमेवैतानिनामानिसर्वाणिपुरुषमभिविशंतीतिप्रति-
ज्ञादृष्टांतानुपरोधात्प्रकृतिशब्दवाच्योपिसएव ॥ २४ ॥ ॥ ॐअभिध्योपदेशाच्च ॐ ॥ २५ ॥
मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ महामायेत्यविद्येतिनियतिर्मोहिनीतिच ॥ प्रकृतिर्वा
सनेत्येवंतवेच्छानंतकथ्यतेतिवचनात्तदभिध्यैवचप्रकृतिशब्देनोच्यते ॥ सोभिध्यासजूतिःसप्रज्ञा
सआनंदइतिश्रुतेरभिध्याचस्वरूपमेव ॥ ध्यायतिध्यानरूपोसौसुखीसुखमतीवच ॥ परमैश्वर्य
योगेनविरुद्धार्थतयेष्यतइतिब्रह्मांडे ॥ २५ ॥ ॥ ॐसाक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥ ॥ एषह्ये
षपुरुषएषप्रकृतिरेषआत्मैषब्रह्मैषलोकएषआलोकोयोसौहरिरादिरनादिरनंतोनंतःपरमःपराद्वि-
श्वरूपइतिपैङ्गिश्रुतौसाक्षादेवप्रकृतिपुरुषत्वाम्नानात् ॥ २६ ॥ ॥ ॐआत्मकृतेःपरिणामात् ॐ
॥२७॥ ॥ प्रकर्षेणकरोतीतिप्रकृतिरितिहियोगाच्च ॥ प्रकृतावनुप्रविश्यतांपरिणाम्यतत्परिणामनि
यामकत्वेनतत्रस्थित्वात्मनोबहुधाकरणात् ॥ अथहैषआत्माप्रकृतिमनुप्रविश्याऽऽत्मानंबहुधाच
कारतस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षतइतिभाल्लवेयश्रुतिः ॥ अविकारोपिपरमःप्रकृतिंतुवि

कारिणीम् ॥ अनुप्रविश्यगोविंदःप्रकृतिश्चाभिधीयतइतिनारदीये ॥ नचान्यत्कल्प्यम् ॥ अप्रामा
णिकत्वात् ॥२७॥ ॥ ॐयोनिश्चहिगीयतेॐ ॥२८॥ ॥ अव्यवधानेनोत्पत्तिद्वारत्वंप्रकृतित्वंतच्चा
स्यैवहिगीयते ॥ यद्भूतयोनिंपरिपश्यंतिधीराइति ॥ व्यवधानेनसूतिस्तुपुंस्त्वंविद्वद्भिरुच्यते ॥ सू
तिरव्यवधानेनप्रकृतित्वमितिस्थितिः ॥ उभयात्मकसूतित्वाद्वासुदेवःपरःपुमान् ॥ प्रकृतिःपुरुषश्चेति
शब्दैरेकोऽभिधीयतइतिब्रह्मांडे ॥२८॥अ० ६ ॥ ॐएतेनसर्वेव्याख्याताव्याख्याताःॐ ॥ २९ ॥
॥ एतेनसर्वेशून्यादिशब्दाअपिव्याख्याताः ॥ एषह्येवशून्यएषह्येवतुच्छएषह्येवाऽभावएषह्येवाऽ
व्यक्तोऽदृशोऽचिंत्योनिर्गुणश्चेतिमहोपनिषदि ॥ शमूनंकुरुतेविष्णुरदृश्यःसन्परःस्वयम् ॥ तस्मा
च्छून्यइतिप्रोक्तस्तोदनात्तुच्छउच्यते ॥ नैषभावयितुंयोग्यःकेनचित्पुरुषोत्तमः ॥ अतोभावंवदं
त्येनंनाश्यत्वान्नाश्यइत्यपि ॥ सर्वस्यतदधीनत्वात्तत्तच्छब्दाभिधेयता ॥ अन्येषांव्यवहारार्थमि
ष्यतेव्यवहर्तृभिरितिमहाकौर्मे ॥ एतेनतदधीनत्वादुक्तयुक्तिसमुदायेन ॥ अवधारणार्थंसर्वस्याप्यु
क्तस्याध्यायमूलतः ॥ द्विरुक्तिंकुर्वतेप्राज्ञाअध्यायांतेविनिर्णयइतिवाराहसंहितायाम् ॥ २९ ॥
अ० ७ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
प्रथमाध्यायस्यचतुर्थःपादः ॥ ४ ॥ इतिप्रथमाध्यायः ॥ ॥ छ ॥ ॥ छ ॥



श्रीवेदव्यासायनमः ॥ ॥ ॐउक्तेर्थेऽविरोधंदर्शयत्यनेनाध्यायेनप्रथमपादेयुक्त्यविरोधम् ॥प्रथम
तःस्मृत्यविरोधंदर्शयति ॥ ॥ ॐस्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगा
त्ॐ ॥ १ ॥ ॥ सर्वज्ञाहिरुद्रादयः ॥ अतस्तेषांवचनविरोधेऽप्रामाण्यमेवस्यादितिचेन्न॥
अन्यस्मृतीनांविष्णवादिभिर्नितरांसर्वज्ञैरेवकृतत्वाच्छ्रु तेराधिक्यंचसिध्यति ॥ १ ॥ ॥ ॐइ
तरेषांचानुपलब्धेःॐ ॥ २ ॥ ॥ इतरेषांतासुस्मृतिषूक्तानांफलादीनांप्रत्यक्षतोऽनुपलब्धेरप्रा
माण्यंतासांयुक्तम् ॥ चशब्देनभागोपलब्धिरंगीकृता ॥ २ ॥ ॥ ॐएतेनयोगःप्रत्युक्तःॐ ॥३॥
॥योगफलंप्रत्यक्षतउपलभ्यतइतिनमंतव्यम्॥उक्ताभ्यासेतत्कालएवफलाद‍ृष्टेः ॥ ३ ॥अ० १॥
ॐनविलक्षणत्वादस्यतथात्वंचशब्दात्ॐ ॥४॥ ॥नैवंश्रुतेस्तदनुसारिस्मृतेश्चतदुक्तानुपलब्धेरप्रा
माण्यंवाच्यम्॥विलक्षणत्वान्नित्यत्वात्तदनुसारित्वाच्च॥नहिनित्येदोषाःकल्प्याः ॥स्वतश्चप्रामा
ण्यम्॥अन्यथाऽनवस्थितेः ॥नचक्षुर्नश्रोत्रंनतर्कोनस्मृतिर्वेदाह्येवैनंवेदयंतीतिभाल्लवेयश्रुतेश्च॥
नित्यत्वंचशब्दादेवप्रतीयते ॥ वाचाविरूपनित्ययेत्यादेः॥अनादिनिधनानित्येतिचस्मृतिः ॥४॥
ॐद‍ृश्यतेतुॐ ॥ ५ ॥ ॥ आधिकारिणांफलम् ॥ भविष्यत्पुराणेच ॥ ऋग्यजुःसामाथर्वाख्यामूल
रामायणंतथा ॥ भारतंपंचरात्रंचवेदाइत्येवशब्दिताः ॥ पुराणानिचयानीहवैष्णवानिविदोविदुः ॥
स्वतःप्रामाण्यमेतेषांनात्रकिंचिद्विचार्यते ॥ यद्येपूक्तंनद‍ृश्येतपूर्वकर्मात्रकारणम् ॥ नाप्रामाण्यंभ
वेदेषांद‍ृश्यतेह्यधिकारतः ॥ इतःप्रामाण्यमन्येषांनस्वतस्तुकथंचन ॥ अद‍ृश्योक्तौततस्तेषाम
प्रामाण्यंनसंशयइति ॥ ५ ॥ अ० २ ॥ मृदब्रवीदापोऽब्रुवन्नित्यादिवचनाद्युक्तिविरुद्धोवेदइत्य

तोऽब्रवीत् ॥ ॥ॐअभिमानिव्यपदेशस्तुविशेषानुगतिभ्याम्ॐ ॥ ६ ॥ ॥ मृदाद्यभिमानिदेव
तातत्रव्यपदिश्यते ॥ तासांचेतरेभ्योविशिष्टंसामर्थ्यमनुगतिश्चसर्वत्र ॥ अतस्तासांसर्वमुक्तंयु
ज्यते ॥६॥ ॥ ॐदृश्यतेचॐ ॥ ७ ॥ ॥ तासांसामर्थ्यंमहद्भिः ॥ भविष्यत्पुराणेच ॥ पृथि
व्याद्यभिमानिन्योदेवताःप्रथितौजसः॥अचिंत्याःशक्तयस्तासांदृश्यंतेमुनिभिश्चताः ॥ ताश्चसर्व
गतानित्यंवासुदेवैकसंश्रयाइति॥ ७ ॥ अ० ३॥ असदेवेदमग्रआसीत् असतःसदजायतेत्यादि-
नाऽसतःकारणत्वोक्तेर्युक्तिविरोधइत्यतोवक्ति ॥ ॥ ॐअसदितिचेन्नप्रतिषेधमात्रत्वात्ॐ ॥
॥ ८ ॥ ॥ प्रतिषेधमात्रत्वान्नासतःकारणत्वंयुक्तम् ॥ असतःकारणत्वाद्युक्तिविरुद्धंवेदवाक्यमि
त्येतदत्रनिषिध्यते ॥ सर्वशब्दानांब्रह्मणिसमन्वयेपितदधीनत्वादर्थवदित्यादिनाऽमुख्यत्वेनान्य
स्यापिवाच्यत्वेनांगीकारादसतःप्राप्तिः ॥ तथाश्रुतिप्राप्तमेवाऽसन्मतमत्रनिषिध्यते ॥ समयस्यो
परिनिषेधात् ॥ अर्थाद्युक्तिविरोधोनिराक्रियते ॥८॥ ॥ ॐअपीतौतद्वत्प्रसंगादसमंजसम्ॐ॥९॥
॥ असतउत्पत्तौप्रलयेसर्वासत्वमेवस्यात् ॥९॥ ॥ ॐनतुदृष्टांतभावात्ॐ ॥ १० ॥ ॥ प्रलये
सर्वासत्त्वंभावेदृष्टांतभावादेवनयुज्यते ॥ सतउत्पत्तिःसशेषविनाशश्चहिलोकेदृष्टः ॥१०॥ ॥ ॐ
स्वपक्षदोषाच्चॐ॥११॥ ॥दृष्टांताभावादेव ॥११ ॥ ॥ ॐतर्काप्रतिष्ठानादन्यथानुमेयमितिचेदे
वमप्यनिर्मोक्षप्रसंगःॐ ॥ १२ ॥ ॥ एतावानेवतर्कइतिप्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाप्य
नुमेयमितिचेन्न ॥ एवंसतिप्रमाणसिद्धेपिमोक्षेऽन्यथानुमेयत्वादनिर्मोक्षप्रसंगः ॥ अतोयावत्प्र
माणसिद्धंतावदेवांगीकर्तव्यम्॥नातोन्यच्छंक्यम्॥यावदेवप्रमाणेनसिद्धंतावदहापयन्॥स्वीकुर्या

नैवचान्यत्रशंक्यमानमृतेक्वचिदितिवामने॥१२॥ ॥ ॐएतेनशिष्टापरिग्रहाअपिव्याख्याताःॐ ॥१३॥ ॥ एतेनदृष्टांतभावेनाभावेनचाऽवशिष्टाअप्यपरिग्रहाविरुद्धसिद्धांताअकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽप्यकस्माद्वीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति ॥ प्रधानादिदमुत्पन्नंप्रधानमधितिष्ठति ॥ प्रधानेलयमभ्येतिनह्यन्यत्कारणंमतम् ॥ जीवाद्भवंतिभूतानिजीवेतिष्ठंत्यचंचलाः ॥ जीवेतुलयमृच्छंतिनजीवात्कारणंपरमित्यादिश्रुतिप्रमाणानिराकृताः ॥ यथादुःखादिषुजीवस्याऽस्वातंत्र्यमेवमन्येष्वपीतिदृष्टांतः ॥ श्रुतिगतिस्तुब्रह्मवाचकत्वेनदर्शिता ॥ यत्रान्यवाचकत्वेप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते ॥ यत्रविरोधस्तत्रब्रह्मैवोच्यतइतिनियमः॥१३॥अ०४॥ ॥ॐभोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्ॐ॥१४॥ ॥कर्माणिविज्ञानमयश्चआत्मापरेऽव्ययेसर्वएकीभवंतीतिमुक्तजीवस्यपरापत्तिरुच्यते ॥ अतस्तयोरविभागः॥अतःपूर्वमपिसएव॥नह्यन्यस्यानन्यत्वंयुज्यतइतिचेत् ॥ नस्याल्लोकवत्॥यथालोकेउदकेउदकांतरस्यैकीभावव्यवहारेप्यंतर्भेदोस्त्येव ॥एवंस्यादत्रापि॥तथाचश्रुतिः ॥यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवतीति ॥स्कांदेच ॥ उदकंतूदकेसिक्तंमिश्रमेवयथाभवेत् ॥ नचैतदेवभवतियतोवृद्धिःप्रदृश्यते ॥ एवमेवहिजीवोपितादात्म्यंपरमात्मना॥ प्राप्तोपिनासौभवतिस्वातंत्र्यादिविशेषणादिति ॥ ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइतिच ॥ नतेमहित्वमन्वश्नुवंति ॥ नतेविष्णोजायमानोनजातइत्यादिचफल ॥ त्वेपियुक्तिविरोधेनभावादत्रोक्तम् ॥१४॥अ०५॥ ॥ ॐतदनन्यत्वमारंभणशब्दादिभ्यःॐ॥१५॥ ॥ स्वतं

त्रबहुसाधनासृष्टिर्लोकेदृष्टा ॥ नैवंब्रह्मणः ॥ किंतुस्वरूपसामर्थ्यादेवतस्यसृष्टिः ॥ किंस्विदासी
दधिष्ठानमारंभणंकतमत्स्वित्कथासीदितिह्याक्षेपः ॥ अधिष्ठानाद्यनुक्तेः ॥ आदिशब्दाद्युक्ति
भिश्च ॥ परतंत्रोह्यपेक्षेतस्वतंत्रःकिमपेक्षते ॥ साधनानांसाधनत्वंयतःकिंतस्यसाधनैरित्यादि
भिः ॥ १५ ॥ ॥ ॐभावेचोपलब्धेःॐ ॥ १६ ॥ ॥ स्वतंत्रसाधनभावेप्रमाणैरुपलभ्येत ॥ अ
नुक्तंपंचभिर्वेदैर्नवस्त्वस्तिकुतश्चन॥अतोवेदत्वमेतेषांयतस्तेसर्ववेदकाइतिस्कांदे ॥ १६ ॥ अद्भ्यः
संभूतःपृथिव्यैरसाच्चेत्यादिनासाधनांतरप्रतीतेःकथमनुपलब्धिरित्यतआह ॥ ॥ ॐसत्त्वाच्चाव
रस्यॐ ॥ १७ ॥ ॥ अवरस्यतदधीनस्यसाधनस्यसत्त्वात् ॥ कालआसीत्पुरुषआसीत्प
रमआसीत्तद्यदासीत्तदावृतमासीत्तदधीनमासीदथह्येकएवपरमआसीद्यस्यैतदासीन्नह्येतदासी
दि[illegible]र्तिकाषायणश्रुतिः॥१७॥ ॥ ॐअसद्व्यपदेशान्नेतिचेन्नधर्मांतरेणवाक्यशेषात्ॐ ॥ १८ ॥
॥ नासदासीन्नोसदासीदितिसर्वस्याऽसत्त्वव्यपदेशान्नेतिचेन्न ॥ अव्यक्तत्वपारतंत्र्यादिधर्मांतरेण
तदुच्यते ॥ तमआसीदितिवाक्यशेषात् ॥ नचान्यत्रप्रमाणमस्ति ॥ अजोह्येकोजुषमाणोऽनुशे
तेजहात्येनांभुक्तभोगामजोन्यः ॥अनाद्यनंतंजगदेतदीदृक्प्रवर्ततेनात्रविचार्यमस्ति ॥ नचान्य
थाक्कापिचकस्यचेदमभूत्पुरानापितथाभविष्यत् ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ अस
त्यमाहुर्जगदेतदज्ञाःशक्तिंहरेर्यैनविदुःपरांहि ॥ यःसत्यरूपंजगदेतदीदृक्सृष्ट्वाह्यभूत्सत्यकर्मा
महात्मा ॥ अथैनमाहुःसत्यकर्मेतिसत्यंह्येवेदंविश्वमसौसृजते ॥ अथैनमाहुर्नित्यकर्मे
तिनित्यंह्येवाऽसौकुरुते ॥ यच्चिकेतसत्यमितन्नमोघमित्यादिश्रुतिस्मृतिभ्यः ॥ परस्परवि

रोधंतुवाक्यानांयत्रयुक्तता ॥ तथैवार्थःपरिज्ञेयोनावाक्यायुक्तिरिष्यतइतिबृहत्संहितायाम् ॥
विरुद्धवत्प्रतीयंतेआगमायत्रवैमिथः ॥ तत्रदृष्टानुसारेणतेषामर्थोन्ववेक्ष्यतइतिच ॥ ईशोऽनी
शोजगन्मिथ्यानपूज्योगुरुरित्यपि ॥ एकआत्मापरंब्रह्मभावोमुक्तिरितिह्यपि ॥ एवमादिविरु
द्धानिप्रमाणान्यथयुक्तयः ॥ प्रमाणैर्बहुभिर्ज्ञेयाआभासाइतिवैदिकैः ॥ वेदवेदानुसारेषुविरोधेऽ
न्यार्थकल्पना ॥ अन्येषांतुविरुद्धानांविप्रलंभोऽथवाभ्रमइतिभागवततंत्रे ॥ शास्त्रार्थयुक्तोऽनु
भवःप्रमाणंतूत्तमंमतम् ॥ मध्यमंत्वागमोज्ञेयःप्रत्यक्षंत्वधमंस्मृतम् ॥ प्रत्यक्षयोरागमयोर्विरो
धेनिश्चयायतु ॥ अनुमाद्यानस्वतंत्राःप्रमाणपदवींययुरितिपुरुषोत्तमतंत्रे ॥ १८ ॥ ॥ ॐयु
क्तेशब्दान्तराच्चॐ ॥ १९ ॥ ॥ साधनानांसाधनत्वंयदात्माधीनमिष्यते ॥ तदासाधनसंपत्तिरैश्व
र्यद्योतिकाभवेदित्यादेःसाधनांतरेणसृष्टिर्युक्ता ॥ अज्ञःसंभूतोहिरण्यगर्भइत्यष्टावित्यादिशब्दां
तराच्च ॥ १९ ॥ ॥ ॐपटवच्चॐ ॥ २० ॥ ॥ साधनांतरेणपटादिसृष्टिर्दृष्टा ॥ २० ॥ ॥
ॐयथाप्राणादिःॐ ॥ २१ ॥ ॥ तच्चसाधनजातंतेनानुप्रविष्टमेवशरीरेंद्रियादिः ॥ प्रकृतिंपु
रुषंचैवप्रविश्यपुरुषोत्तमः ॥ क्षोभयामासभगवान्सृष्ट्यर्थंजगतोविभुरितिकौर्मे ॥ २१॥अ०६॥
जीवकर्तृत्वपक्षःश्रुतिप्राप्तोविस्तरान्निराक्रियते ॥ ॥ ॐइतरव्यपदेशाद्धिताकरणादिदोषप्रस
क्तिःॐ॥२२॥ ॥जीवकर्तृत्वपक्षेहिताकरणमहितकरणंचनस्यात्॥२२॥ ॥ॐअधिकंतुभेदनिर्दे
शात् ॐ॥२३॥ ॥नचब्रह्मण.श्रमचिंतादिदोषप्रसक्तिः॥अधिकशक्तित्वात्॥ श्रोतामंताद्रष्टादे
ष्टाघोष्टाविज्ञाताप्रज्ञातासर्वेषांभूतानामंतरपुरुषः ॥ समआत्मेतिविद्यात् ॥ एषतआत्मासर्वांत

रोयोऽशनायापिपासेशोकंमोहंजरांमृत्युमत्येतिइत्यादिविशेषनिर्देशात् ॥ २३ ॥ ॥ ॐअश्मादि
वच्चतदनुपपत्तिःॐ ॥ २४॥ ॥चेतनत्वेऽप्यश्मादिवदस्वतंत्रत्वात्॥स्वतःकर्तृत्वानुपपत्तिर्जीवस्य॥
यथादारुमयींयोषांनरस्थिरसमाहितः॥इंगयत्यंगमंगानितथाराजन्निमाःप्रजाइतिचभारते ॥२४॥
ॐउपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धिॐ ॥ २५॥ ॥ जीवेनकार्योपसंहारदर्शनात्तस्यकर्तृत्वमि
तिचेन्न ॥ यथागोषुक्षीरंदृश्यमानमपिप्राणादेवजायते ॥ अन्नंरसादिरूपेणप्राणःपरिणयत्य
साविति वचनात् ॥ एवंजीवेदृश्यमानोपिकार्योपसंहारोऽस्वातंत्र्यात्परकृतएव ॥ यआत्मानमंत
रोयमयति ॥ नाहंकर्तानकर्तात्वंकर्त्तायस्तुसदाप्रभुरित्यादेः ॥ २५ ॥ ॥ ॐदेवादिवद
पिलोकेॐ ॥ २६ ॥ ॥ नचकर्तुरीश्वरस्यादृष्टिविरोधः ॥ देवादिवददृश्यत्वशक्तियोगात् ॥ लो
केपिशाचादीनांतादृशीशक्तिर्दृष्टाकिम्वीश्वरस्य ॥ नयुक्तियोगाद्वाक्यानिनिराकार्याण्यपिकचि
त् ॥ विरोधएववाक्यानांयुक्तयोनतुयुक्तयइतिब्रहत्संहितायाम् ॥ २६ ॥ ॥ ॐकृत्स्नप्रसक्ति
र्निरवयवत्वशब्दकोपोवाॐ॥२७॥ ॥ अयंचदोषोजीवकर्तृत्वपक्षे ॥ एकेनांगुल्मिमात्रेणप्रवर्त
मानोपिपूर्णप्रवृत्तिःस्यात् ॥ नचतद्युज्यते ॥ सामर्थ्यैकदेशदर्शनात् ॥ नचैकदेशोननिरवयव
त्वात् ॥ अथयःसजीवःसनित्योनिरवयवोज्ञाताऽज्ञातासुखीदुःखीशरीरेंद्रियस्थइतिभाल्लवेयश्रु
तिः ॥ नचोपाधिकृतोंशःसएवांऽशउपहितइतिद्वित्वापेक्षत्वात् ॥ नचान्यत्कल्प्यम् । य
द्वियुक्त्याविरुध्येततदीशकृतमेवहीतिगत्यंतरोक्तेः ॥ २७ ॥ अ० ७॥ ॥ ॐश्रुतेस्तुशब्दमूल
त्वात्ॐ ॥ २८ ॥ ॥ नचेश्वरपक्षेऽयंविरोधः ॥ योसौविरुद्धोऽविरुद्धोमनुरमनुरवाग्वा

न्नैवचान्यत्रशंक्यमानमृतेक्वचिदितिवामने॥१२॥ ॥ ॐएतेनशिष्टापरिग्रहाअपिव्याख्याताः ॐ
॥१३॥ ॥ एतेनदृष्टांतभावेनाभावेनचाऽवशिष्टाअप्यपरिग्रहाविरुद्धसिद्धांताअकर्तृकत्वाचेतन
कर्तृकत्वजीवकर्तृकत्वादयोऽप्यकस्माद्वीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति ॥ प्र
धानादिदमुत्पन्नंप्रधानमधितिष्ठति ॥ प्रधानेलयमभ्येतिनह्यन्यत्कारणंमतम् ॥ जीवाद्भवंति
भूतानिजीवेतिष्ठंत्यचंचलाः ॥ जीवेतुलयमृच्छंतिनजीवात्कारणंपरमित्यादिश्रुतिप्राप्तानिरा
कृताः ॥ यथादुःखादिषुजीवस्याऽस्वातंत्र्यमेवमन्येष्वपीतिदृष्टांतः ॥ श्रुतिगतिस्तुब्रह्मवाचक
त्वेनदर्शिता ॥ यत्रान्यवाचकत्वेप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते ॥ यत्रविरोधस्तत्रब्रह्मैवो
च्यतइतिनियमः॥१३॥अ०४॥ ॥ॐभोक्रापत्तेरविभागश्चेत्स्याल्लोकवत्ॐ॥१४॥ ॥कर्माणि
विज्ञानमयश्चआत्मापरेऽव्ययेसर्वएकीभवंतीतिमुक्तजीवस्यपरापत्तिरुच्यते ॥ अतस्तयोरविभा
गः॥अतःपूर्वमपिसएव॥नह्यन्यस्यानन्यत्वंयुज्यतइतिचेत् ॥ नस्याल्लोकवत्॥यथालोकेउदकेउद
कांतरस्यैकीभावव्यवहारेप्यंतर्भेदोस्त्येव ॥एवंस्यादत्रापि॥तथाचश्रुतिः॥यथोदकंशुद्धेशुद्धमा
सिक्तंतादृगेवभवतीति ॥स्कांदेच ॥ उदकंतूदकेसिक्तंमिश्रमेवयथाभवेत् ॥ नचैतदेवभवतियतो
दृद्धिःप्रदृश्यते ॥ एवमेवहिजीवोपितादात्म्यंपरमात्मना॥ प्राप्तोपिनासौभवतिस्वातंत्र्यादिविशे
षणादिति ॥ ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलो
हरइतिच ॥ नतेमहित्वमन्वश्नुवंति ॥ नतेविष्णोजायमानोनजातइत्यादिचफल ॥ त्वेपियुक्ति
विरोधेंतर्भावादत्रोक्तम् ॥१४॥अ०५॥ ॥ ॐतदनन्यत्वमारंभणशब्दादिभ्यःॐ॥१५॥ ॥ स्वतं

त्रबहुसाधनासृष्टिर्लोकेदृष्टा ॥ नैवंब्रह्मणः ॥ किंतुस्वरूपसामर्थ्यादेवतस्यसृष्टिः ॥ किंस्विदासी
दधिष्ठानमारंभणंकतमत्स्वित्कथासीदितिह्याक्षेपः ॥ अधिष्ठानाद्यनुक्तेः ॥ आदिशब्दाद्युक्ति
भिश्च ॥ परतंत्रोह्यपेक्षेतस्वतंत्रःकिमपेक्षते ॥ साधनानांसाधनत्वंयतःकिंतस्यसाधनैरित्यादि
भिः ॥ १५ ॥ ॥ ॐभावेचोपलब्धेःॐ ॥ १६ ॥ ॥ स्वतंत्रसाधनभावेप्रमाणैरुपलभ्येत ॥ अ
नुक्तंपंचभिर्वेदैर्नवस्त्वस्तिकुतश्चन॥अतोवेदत्वमेतेषांयतस्तेसर्ववेदकाइतिस्कांदे ॥१६॥ अद्भ्यः
संभूतःपृथिव्यैरसाच्चेत्यादिनासाधनांतरप्रतीतेःकथमनुपलब्धिरित्यतआह ॥ ॥ ॐसत्त्वाच्चाव
रस्यॐ ॥ १७ ॥ ॥ अवरस्यतदधीनस्यसाधनस्यसत्त्वात् ॥ कालआसीत्पुरुषआसीत्प
रमआसीत्तद्यदासीत्तदाप्तमासीत्तदधीनमासीदथह्येकएवपरमआसीद्यस्यैतदासीन्नह्येतदासी
दितिर्तिकाषायणश्रुतिः॥१७॥ ॥ ॐअसद्व्यपदेशान्नेतिचेन्नधर्मांतरेणवाक्यशेषात्ॐ ॥ १८ ॥
॥ नासदासीन्नोसदासीदितिसर्वस्याऽसत्त्वव्यपदेशान्नेतिचेन्न ॥ अव्यक्तत्वपारतंत्र्यादिधर्मांतरेण
तदुच्यते ॥ तमआसीदितिवाक्यशेषात् ॥ नचान्यत्रप्रमाणमस्ति ॥ अजोह्येकोजुषमाणोऽनुशे
तेजहात्येनांभुक्तभोगामजोन्यः ॥अनाद्यनंतंजगदेतदीदृक्प्रवर्ततेनात्रविचार्यमस्ति ॥ नचान्य
थाक्कापिचकस्यचेदमभूत्पुरानापितथाभविष्यत् ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ अस
त्यमाहुर्जगदेतदज्ञाःशक्तिंहरेर्येनविदुःपरांहि ॥ यःसत्यरूपंजगदेतदीदृक्सृष्ट्वाह्यभूत्सत्यकर्मा
महात्मा ॥ अथैनमाहुःसत्यकर्मेतिसत्यंह्येवेदंविश्वमसौसृजते ॥ अथैनमाहुर्नित्यकर्मे
तिनित्यंह्येवाऽसौकुरुते ॥ यच्चिकेतसत्यमितन्नमोघमित्यादिश्रुतिस्मृतिभ्यः ॥ परस्परवि

रोधेतुवाक्यानांयत्रयुक्तता ॥ तथैवार्थःपरिज्ञेयोनावाक्यायुक्तिरिष्यतइतिबृहत्संहितायाम् ॥
विरुद्धवत्प्रतीयंतेआगमायत्रवैमिथः ॥ तत्रदृष्टानुसारेणतेषामर्थोन्ववेक्ष्यतइतिच ॥ ईशोऽनी
शोजगन्मिथ्यानपूज्योगुरुरित्यपि ॥ एकआत्मापरंब्रह्मभावोमुक्तिरितिह्यपि ॥ एवमादिविरु
द्धानिप्रमाणान्यथयुक्तयः ॥ प्रमाणैर्बहुभिर्ज्ञेयाआभासाइतिवैदिकैः ॥ वेदवेदानुसारेषुविरोधेऽ
न्यार्थकल्पना ॥ अन्येषांतुविरुद्धानांविप्रलंभोऽथवाभ्रमइतिभागवततंत्रे ॥ शास्त्रार्थयुक्तोऽनु
भवःप्रमाणंतूत्तमंमतम् ॥ मध्यमंत्वागमोज्ञेयःप्रत्यक्षंत्वधमंस्मृतम् ॥ प्रत्यक्षयोरागमयोर्विरो
धेनिश्चयायतु ॥ अनुमाद्यानस्वतंत्राःप्रमाणपदवींययुरितिपुरुषोत्तमतंत्रे ॥ १८ ॥ ॥ ॐयु
क्तेशब्दांतराच्चॐ ॥ १९ ॥ ॥ साधनानांसाधनत्वंयदात्माधीनमिष्यते ॥ तदासाधनसंपत्तिरैश्व
र्यद्योतिकाभवेदित्यादेःसाधनांतरेणसृष्टिर्युक्ता ॥ अद्भ्यःसंभूतोहिरण्यगर्भइत्यष्टावित्यादिशब्दां
तराच्च ॥ १९ ॥ ॥ ॐपटवच्चॐ ॥ २० ॥ ॥ साधनांतरेणपटादिसृष्टिर्दृष्टा ॥ २० ॥ ॥
ॐयथाप्राणादिःॐ ॥ २१ ॥ ॥ तच्चसाधनजातंतेनानुप्रविष्टमेवशरीरेंद्रियादिः ॥ प्रकृतिंपु
रुषंचैवप्रविश्यपुरुषोत्तमः ॥ क्षोभयामासभगवान्सृष्ट्यर्थंजगतोविभुरितिकौर्मे ॥ २१॥अ०६॥
जीवकर्तृत्वपक्षःश्रुतिप्रासोविस्तरान्निराक्रियते ॥ ॥ ॐइतरव्यपदेशाद्धिताकरणादिदोषप्रस
क्तिःॐ॥२२॥ ॥जीवकर्तृत्वपक्षेहिताकरणमहितकरणंचनस्यात्॥२२॥ ॥ॐअधिकंतुभेदनिर्दे
शात् ॐ॥२३॥ ॥नचब्रह्मणःश्रमचिंतादिदोषप्रसक्तिः॥अधिकशक्तित्वात्॥ श्रोतामंताद्रष्टादे
ष्टाघोष्टाविज्ञाताप्रज्ञातासर्वेषांभूतानामंतरपुरुषः ॥ समआत्मेतिविद्यात् ॥ एषतआत्मासर्वांत

रोयोऽशनायापिपासेशोकंमोहंजरांमृत्युमत्येतिइत्यादिविशेषनिर्देशात् ॥ २३ ॥ ॥ ॐअश्मादि
वच्चतदनुपपत्तिःॐ ॥ २४॥ ॥चेतनत्वेप्यश्मादिवदस्वतंत्रत्वात्॥स्वतःकर्तृत्वानुपपत्तिर्जीवस्य॥
यथादारुमयींयोषांनरस्थिरसमाहितः॥इंगयत्यंगमंगानितथाराजन्निमाःप्रजाइतिचभारते ॥२४॥
ॐउपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धिॐ ॥ २५॥ ॥ जीवेनकार्योपसंहारदर्शनात्तस्यकर्तृत्वमि
तिचेन्न ॥ यथागोषुक्षीरंदृश्यमानमपिप्राणादेवजायते ॥ अन्नंरसादिरूपेणप्राणःपरिणयत्य
सावितिवचनात् ॥ एवंजीवेदृश्यमानोपिकार्योपसंहारोऽस्वातंत्र्यात्परकृतएव ॥यआत्मानमंत
रोयमयति ॥ नाहंकर्तानकर्तात्वंकर्त्तायस्तुसदाप्रभुरित्यादेः ॥ २५ ॥ ॥ॐदेवादिवद
पिलोकेॐ ॥ २६ ॥ ॥ नचकर्तुरीश्वरस्यादृष्टिविरोधः ॥ देवादिवददृश्यत्वशक्तियोगात् ॥ लो
केपिशाचादीनांतादृशीशक्तिर्दृष्टाकिम्वीश्वरस्य ॥ नयुक्तियोगाद्वाक्यानिनिराकार्याण्यपिकिंचि
त् ॥ विरोधएववाक्यानांयुक्तयोनतुयुक्तयइतिबृहत्संहितायाम् ॥ २६ ॥ ॥ ॐकृत्स्नप्रसक्ति
र्निरवयवत्वशब्दकोपोवाॐ॥२७॥ ॥ अयंचदोषोजीवकर्तृत्वपक्षे ॥ एकेनांगुलिमात्रेणप्रवर्त
मानोपिपूर्णप्रवृत्तिःस्यात् ॥ नचतद्युज्यते ॥ सामर्थ्यैकदेशदर्शनात् ॥ नचैकदेशेननिरवयव
त्वात् ॥ अथयःसजीवःसनित्योनिरवयवोज्ञाताऽज्ञातासुखीदुःखीशरीरेंद्रियस्थइतिभाल्लवेयश्रु
तिः ॥ नचोपाधिकृतोंशःसएवांऽशउपहितइतिद्वित्वापेक्षत्वात् ॥ नचान्यत्कल्प्यम् । य
द्धियुक्त्याविरुध्येततदीशकृतमेवहीतिगत्यंतरोक्तेः ॥ २७ ॥ अ० ७॥ ॥ ॐश्रुतेस्तुशब्दमूल
त्वात्ॐ ॥ २८ ॥ ॥ नचेश्वरपक्षेऽयंविरोधः ॥ योसौविरुद्धोऽविरुद्धोमनुरमनुरवाग्वा

गिंद्रोनिंद्रःप्रवृत्तिरप्रवृत्तिःसपरःपरमात्मेतिपैंग्यादिश्रुतेरेवशब्दमूलत्वाच्चनयुक्तिविरोधः ॥ यद्वा
क्योक्तंनतद्युक्तिर्विरोद्धुंशक्नुयात्कचित् ॥ विरोधेवाक्ययोःक्वापिकिंचित्साह्यकारणमितिपुरु
 षोत्तमतंत्रे ॥ २८॥ ॥ ॐआत्मनिचैवंविचित्राश्चहिॐ ॥ २९ ॥ ॥ परमात्मनोविचित्राश्चश
क्तयःसंतिनान्येषाम् ॥ विचित्रशक्तिःपुरुषःपुराणोनचान्येषांशक्तयस्तादृशाःस्युः ॥ एको
वशीसर्वभूतांतरात्मासर्वान्देवानेकएवानुविष्टइतिश्वेताश्वतरस्मृतिः॥ २१ ॥ ॥ ॐस्वपक्षदोषा
च्चॐ ॥ ३० ॥ ॥ येदोषाइतरत्रापितेगुणाःपरमेमताः ॥ नदोषाःपरमेयस्माद्गुणाएवनिरंतरा
इतिवचनाज्जीवपक्षएवदोषोनपरपक्षे ॥ अथयःसदोषःसांजनःसजनिःसजीवोऽथयःसनिर्दोषोनि
ष्कलःसगुणःपरःपरात्मेतिकाषायणश्रुतिः॥ ३० ॥ ॥ ॐसर्वोपेताचतद्दर्शनात्ॐ ॥ ३१ ॥ ॥
सर्वैर्युक्ताशक्तिभिर्देवतासापरेतियांप्राहुरजस्रशक्तिम् ॥ नित्यानंदानित्यरूपाजराचयाशाश्वता
त्मेतिचयांवदंतीतिचतुर्वेदशिखायाम् ॥ अतोनकेवलंविचित्रशक्तिःकिंतुसर्वशक्तिरेव ॥ ३१ ॥
॥ॐविकरणत्वान्नेतिचेत्तदुक्तम्ॐ॥३२॥ ॥ नचकरणाभावादनुपपत्तिरितियुक्तम् ॥ अपाणिपा
दोजवनोगृहीतापश्यत्यचक्षुःसशृणोत्यकर्णः ॥ सवेत्तिवेद्यंनचतस्यास्तिवेत्तातमाहुरग्र्यंपुरुषं
महांतम् ॥ नतस्यकार्यंकरणंचविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यते ॥ परास्यशक्तिर्विविधैवश्रू
यतेस्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रुतिभ्यः॥सर्वोपेताचेतिसामान्यपरिहारेपिविशेषयुक्त्यर्थं 
पुनराशंका॥३२॥अ०८॥यत्प्रयोजनार्थंसृष्ट्यादिस्तदूनत्वादपूर्णतेत्यतआह॥ ॥ॐनप्रयोजनव
त्त्वात्ॐ ॥ ३३ ॥ ॥ अथैषएवपरमआनंदइत्यादिनाकृतकृत्यत्वान्नप्रयोजनायसृष्टिः ॥३३॥

किंतु।। ॥ॐलोकवत्तुलीलाकैवल्यम्ॐ ॥ ३४ ॥ ॥ यथालोकेमत्तस्यसुखोद्रेकादेवनृत्तगाना
दिलीलानतुप्रयोजनापेक्षया ॥ एवमेवेश्वरस्य ॥ नारायणसंहितायांच ॥ सृष्ट्यादिकंहरिर्नैवप्र
योजनमपेक्ष्यतु।।कुरुतेकेवलानंदाद्यथामत्तस्यनर्तनम्।। पूर्णानंदस्यतस्येहप्रयोजनमतिःकुतः ॥
मुक्ताअप्याप्तकामाःस्युःकिमुतस्याखिलात्मनइति ॥ देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहे
तिचश्रुतिः ॥३४॥अ०१ ॥ सर्वकर्तृत्वेवैषम्यनैर्घृण्येतस्येत्यतोवक्ति।। ॥ ॐवैषम्यनैर्घृण्येनसापे
क्षत्वात्तथाहिदर्शयतिॐ ॥३५॥ ॥ कर्मापेक्षयाफलदातृत्वान्नतस्यवैषम्यनैर्घृण्ये।। पुण्येनपुण्यं
लोकंनयतिपापेनपापमितिहिश्रुतिः ॥३५॥ ॥ॐनकर्माविभागादितिचेन्नानादित्वात्ॐ॥३६॥
यदपेक्षयासौफलंददातिनतत्कर्म ॥ एषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषते
एषउएवासाधुकर्मकारयतितंयमधोनिनीषतइतिश्रुतेः ॥ कर्मणोपितन्निमित्तत्वादितिचेन्न ॥ त
स्यापिपूर्वकर्मकारणमित्यनादित्वात्कर्मणः ॥ भविष्यत्पुराणेच ॥ पुण्यपापादिकंविष्णुः
कारयेत्पूर्वकर्मणा ॥ अनादित्वात्कर्मणश्चनविरोधःकथंचनेति ॥ ३६ ॥ ॥ ॐउपपद्यतेचाऽ
प्युपलभ्यतेचॐ ॥ ३७ ॥ ॥ नचकर्मापेक्षत्वेनेश्वरस्यास्वातंत्र्यम् ॥ द्रव्यंकर्मचकालश्चस्वभा
वोजीवएवच ॥ यदनुग्रहतःसंतिनसंतियदुपेक्षयेत्यादिनाकर्मादीनांसत्वस्यापितदधीनत्वात् ॥
नचपुनर्वैषम्याद्यापातेनदोषः ॥ तादृशवैषम्यादेरुपलभ्यमानत्वात् ॥ सकारयेत्पुण्यमथापिपापं
नतावतादोषवानीशितापि ॥ ईशोयतोगुणदोषादिसत्वेस्वयंपरोऽनादिरादिःप्रजानामितिचतुर्वेद
शिखायाम्॥३७॥अ०१०॥ अवशिष्टैरुपसंहरति।। ॥ॐसर्वधर्मोपपत्तेश्चॐ॥३८॥ ॥गुणाःश्रुताः

सुविरुद्धाश्चदेवेसंत्यश्रुताअपि । नैवात्रशंका ॥ चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्चनाज्ञैर्हितथा
प्रतीताइतिसर्वगुणोपपत्तिश्रुतेश्च ॥ ३८ ॥ अ० ११ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभा
ष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यप्रथमःपादः ॥ १ ॥ ७ ॥ ॥
श्रीलक्ष्मीनरसिंहायनमः ॥ ॥ हरिःॐइतरेषांचानुपलब्धेरितिसामान्यतोनिराकरणंसर्वसम
यानांकृतम् ॥ विशेषतोनिराकरोत्यस्मिन्पादे ॥ अचेतनप्रवृत्तिमतंप्रथमतोनिराकरोति ॥
॥ ॐरचनानुपपत्तेश्चनानुमानम्ॐ ॥ १ ॥ ॥अचेतनस्यस्वतःप्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पि
तंप्रधानंजगत्कर्तृ ॥ चशब्देनप्रमाणाभावंदर्शयति ॥ ॥ॐप्रवृत्तेश्चॐ ॥ २ ॥ ॥ चेतनस्यस्व
तःप्रवृत्तिदर्शनाच्च ॥ २॥ ॥ ॐपयोंबुवच्चेत्तत्रापिॐ ॥ ३ ॥ ॥ पयोंबुवदचेतनस्यापिप्रवृत्तिर्यु
ज्यतइतिनयुक्तम् ॥ एतस्यवाक्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यःस्यंदंतेयाश्वेतेभ्यःपर्वतेभ्यःप्र
तीच्योन्यायांयांचदिशमनुएतेनहवावपयोमंडंभवतीत्यादितत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ॥३॥
॥ ॐव्यतिरेकानवस्थितेश्चानपेक्षत्वात्ॐ ॥ ४ ॥ ॥ नकृतेत्वत्क्रियतेकिंचनारइतितद्व्यतिरे
केणकस्यापिकर्मणोऽनवस्थितेरनपेक्षितमेवाचेतनवादिमतम् ॥४॥अ० १ ॥ सेश्वरसांख्यमतंनि
राकरोति ॥ यथापृथिव्याएवपर्जन्यानुगृहीतंतृणादिकमुत्पद्यतेएवंप्रधानादीश्वरानुगृहीतंजगदि
ति ॥ अतोब्रवीति ॥ ॥ॐअन्यत्राभावाच्चनतृणादिवत्ॐ ॥५॥ ॥ यच्चकिंचिज्जगत्सर्वंदृश्यते
श्रूयतेपिवा ॥ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः॥ब्रह्मण्येवेदमाविरासीद्ब्रह्मणिस्थितंब्रह्म
णिलयमभ्युपैति॥ब्रह्मैवाधस्ताद्ब्रह्मैवोपरिष्टाद्ब्रह्ममध्यतोब्रह्मसर्वतोब्रह्मैवेदंसर्वमित्यादिश्रुतिभ्यो

ऽन्यत्रजगतोभावात्तृणादीनांपर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य॥ सएवभूयोनिजवीर्यचोदि
तांस्वजीवमायांप्रकृतिंसिसृक्षतीम् ॥ अनामरूपात्मनिरूपनामनीविधित्समानोऽनुससारशास्त्रिक
दितिचभागवते ॥ द्रव्यंकर्मचकालश्चेत्यादिच॥चशब्देनप्रकृतिसत्तादिप्रदत्वंचांगीकृतम् ॥ ५ ॥
अ० २॥ लोकायतिकपक्षंनिराकरोति॥ ॥ॐअभ्युपगमेप्यर्थाभावात्ॐ ॥६॥ ॥ यस्यधर्माधर्मौ
नस्तस्तत्सिद्धांतेकिंप्रयोजनम् ॥ अतःस्वव्याहतेरेवोपेक्ष्यः ॥६॥अ० ३॥ पुरुषोपसर्जनप्रकृतिक
र्तृत्ववादमपाकरोति॥ ॥ॐपुरुषाश्मवदितिचेत्तथापिॐ॥७॥ ॥यथाचेतनसंबंधादचेतनमेवशरी
रमश्मादिकमादायगच्छति ॥ एवमचेतनापिप्रकृतिःपुरुषसंबंधात्प्रवर्ततइतिचेन्न ॥ नकृतेत्व
त्कियतइतितत्रापितथात्वेदृष्टांताभावात् ॥ ७ ॥ ॥ ॐअंगित्वानुपपत्तेःॐ ॥ ८ ॥ ॥ शरी
रप्रवृत्तौपुरुषस्यांगित्वात् ॥ अंगमंगीसमादाययथाकार्यंकरोत्यसावित्यंगित्वव्यवहारोनुपपन्नः
॥ ८॥अ०४ ॥प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति॥ ॥ॐअन्यथानुमितौचज्ञशक्तिवियो
गात्ॐ ॥९॥ ॥ शरीरसंबंधात्पुरुषःप्रवर्ततइत्यंगीकारेपिस्वतस्तस्यासामर्थ्याच्छरीरसंबंधएवायु
क्तः॥ ९॥ ॥ ॐविप्रतिषेधाच्चासमंजसम्ॐ ॥१०॥ ॥ सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानी
श्वरमतमसमंजसम् ॥ श्रुतयःस्मृतयश्चैवयुक्तयश्चेश्वरंपरम्॥वदंतितद्विरुद्धंयोवदेत्तस्मान्नचाधम
इतिपाद्मे ॥१०॥अ०५ ॥परमाण्वारंभवादमपाकरोति॥ ॥ ॐमहद्दीर्घवद्वाह्रस्वपरिमंडलाभ्या
म्ॐ ॥ ११ ॥ ॥ महत्त्वाद्दीर्घत्वाच्चयथाकार्यमुत्पद्यते ॥ एवंह्रस्वत्वात्परिमांडल्याच्चोत्पद्येत॥
वाशब्दादन्यथैतयोरपिनस्यात् ॥ विशेषकारणाभावात् ॥११॥ ॥ॐउभयथापिनकर्मातस्तदभा

वः ॐ ॥ १२॥ ॥ ईश्वरेच्छायानित्यत्वेतद्भावेपिपरमाणुकर्माभावान्नेदानीमपितत्स्यात्॥अनित्य
त्वेतत्कारणाभावात् ॥ अतःपरमाणुचेष्टाभावात्तत्कार्याभावः ॥ वैदिकेश्वरस्यतुवेदेनैवसर्वश
क्तित्वोक्तेःसर्वमुपपद्यते ॥ स्वतएवकालेविशेषांगीकृतेश्च ॥१२॥ ॥ ॐसमवायाभ्युपगमाच्चसा
म्यादनवस्थितेः ॐ ॥ १३ ॥ ॥ कार्यकारणादीनांसमवायसंबंधांगीकारात्तस्यचभिन्नत्वसाम्या
त्समवायांतरापेक्षायामनवस्थितिः ॥ नचतत्प्रमाणम् ॥ प्रथमसंबंधासिद्धौवचतदसिद्धिः ॥ स्व
निर्वाहकत्वेसमवायएवनस्यात् ॥१३॥ ॥ ॐनित्यमेवचभावात् ॐ ॥ १४ ॥ ॥ नित्यत्वाच्चप
रमाणूनांसमवायस्यचतस्यैवजनित्वांगीकारान्नित्यमेवकार्यस्यात् ॥अन्यथानकदाचित् ॥१४॥
॥ ॐरूपादिमत्वाच्चविपर्ययोदर्शनात् ॐ ॥ १५ ॥ ॥ रूपादिमत्वाच्चपरमाणूनामनित्यत्वम् ॥
तथादृष्टत्वाल्लोके ॥१५॥ ॥ ॐउभयथाचदोषात् ॐ ॥ १६ ॥ ॥ नित्यत्वेपरमाणूनांतद्वत्स
र्वंनित्यत्वंस्यात् ॥ विशेषप्रमाणाभावात् ॥ अनित्यत्वेकारणाभावात्तदुत्पत्त्यभावः ॥ १६॥
ॐअपरिग्रहाच्चात्यंतमनपेक्षा ॐ ॥ १७ ॥ ॥ श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष्यता ॥
आन्वीक्षिकींतर्कविद्यामनुरक्तोनिरर्थकामितिचमोक्षधर्मे ॥ १७ ॥ अ० ६ ॥ ॥ परमाणुपुंज
वादिमतंनिराकरोति ॥ ॥ ॐसमुदायउभयहेतुकेपितदप्राप्तिः ॐ ॥ १८ ॥ ॥ समुदा
यस्यैकहेतुकत्वंनयुज्यते ॥ उभयहेतुकेप्यन्योन्याश्रयात्तदप्राप्तिः ॥ अन्यथासर्वदासमुदायस
त्वंस्यात् ॥१८॥ ॥ ॐइतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ॥१९॥ सर्वदावि
द्यमानोपिसमुदायःपरस्परापेक्षयाव्यवह्रियतइतिचेन्न ॥ एकंकार्यमुत्पाद्यतस्यविनष्टत्वात्पर

स्परप्रत्ययस्तदपेक्षयाव्यवहारइतिनयुज्यते ॥ कारणेसतिकार्यंभवत्येवेतिहितस्यनियमः॥१९॥
॥ ॐउत्तरोत्पादेचपूर्वनिरोधात्ॐ॥ २० ॥ ॥ कार्योत्पत्तावेवकारणस्यविनाशाच्चनविशेषका
र्योत्पत्तिः ॥ २० ॥ ॥ॐअसतिप्रतिज्ञोपरोधोयौगपद्यमन्यथाॐ ॥२१॥ ॥ कारणेविनष्टेकार्य
मुत्पद्यतेचेत्तत्कार्यमितिप्रतिज्ञाहानिः ॥ तत्कालेकारणमस्तिचेत्विनाशकारणाभावाद्यौगपद्यं
सर्वकार्याणाम् ॥२१॥ ॥ॐप्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्ॐ ॥ २२ ॥ ॥ का
रणेसतिकार्यंभवत्येवेतिनियमान्निःसंतानःससंतानश्चविनाशोनयुज्यते ॥ २२ ॥ ॥ॐउभयथा
चदोषात्ॐ ॥ २३ ॥ ॥ कारणेसतिकार्यंभवत्येवेतिनियमेसर्वदाकार्यभावान्नकार्यकारणविशे
षः ॥ अनियमेकार्यानुत्पत्तिः ॥२३॥ ॥ॐआकाशेचाविशेषात्ॐ ॥ २४ ॥ ॥ दीपादिषुवि
शेषदर्शनात्क्षणिकत्वेनान्यत्रापिक्षणिकत्वमनुमीयतेचेदाकाशादिष्वविशेषदर्शनादन्यत्रापितदनु
मीयेत ॥२४॥ ॥ ॐअनुस्मृतेश्चॐ ॥ २५ ॥ ॥ तदेवेदमितिप्रत्यभिज्ञानाच्च ॥ प्रत्यभिज्ञाया
भ्रांतित्वेविशेषदर्शनस्यापिभ्रांतित्वम् ॥२५॥अ०७ ॥ शून्यवादमपाकरोति ॥ ॥ ॐनासतो
दृष्टत्वात्ॐ ॥ २६ ॥ ॥अदृष्टत्वान्नासतःकारणत्वंयुज्यते ॥ २६ ॥ ॥ ॐउदासीनानामपिचै
वंसिद्धिःॐ ॥ २७ ॥ ॥ असतःकारणत्वेउदासीनानांहेयोपादेयबुद्धिवर्जितानांखपुष्पादीना
मपिसकाशात्कार्यसिद्धिः ॥ चशब्दान्नचेदन्यत्रापिनस्यात् ॥ अविशेषात् ॥ २७ ॥ ॥ ॐना
भावउपलब्धेःॐ ॥ २८ ॥ ॥ नचजगदेवशून्यमितिवाच्यंदृष्टत्वात् ॥ २८ ॥ ॥ ॐवैधर्म्याच्च
नस्वमादिवत्ॐ ॥ २९ ॥ ॥ नचदृष्टस्यापिस्वमादिवदभावः ॥ तस्योत्तरकालेस्वमोयंना

यंसर्पइत्याद्यनुभवात् ॥नचात्रतादृशंप्रमाणमस्ति॥२९॥अ०८॥विज्ञानवादमपाकरोति॥ ॥ॐ
नभावोऽनुपलब्धेःॐ ॥३०॥ ॥नविज्ञानमात्रंजगत्तथानुभवाभावात्॥३०॥ ॥ॐक्षणिकत्वाच्च
ॐ ॥ ३१ ॥ ॥ ज्ञानंक्षणिकमर्थानांचस्थायित्वमुक्तम् ॥ अतश्चनैक्यम् ॥ ३१॥ ॥ॐसर्व
थानुपपत्तेश्चॐ ॥ ३२ ॥ ॥ प्रमाणाभावात्सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चनैतेपक्षाग्राह्याः ॥
॥३२॥अ० ९ ॥ स्याद्वादिमतंदूषयति ॥ ॥ ॐनैकस्मिन्नसंभवात्ॐ ॥ ३३ ॥ ॥ सत्स्यादस
त्स्यात्सदसत्स्यात्ततोऽन्यच्चस्यादित्येतन्नैकस्मिन्युज्यते ॥ अदृष्टत्वेनासंभवात् ॥३३॥ ॥ ॐ
एवंचात्माकार्त्स्न्यम्ॐ ॥३४॥ ॥जीवस्यशरीरपरिमितत्वांगीकारेऽण्वादिशरीरस्थस्यहस्त्यादि
शरीरेऽकार्त्स्न्यंस्यात् ॥ ३४ ॥ ॥ ॐनचपर्यायादप्यविरोधोविकारादिभ्यःॐ ॥ ३५॥ ॥ त
त्तच्छरीरस्थस्यतत्तत्परिमाणत्वमितिनमंतव्यम् ॥ विकारित्वादनित्यत्वप्रसक्तेः ॥३५॥ ॥ ॐअं
त्यावस्थितेश्चोभयनित्यत्वादविशेषात्ॐ ॥ ३६ ॥ ॥ परिमाणाभावेस्वरूपाभावप्राप्त्यांत्यपरि
माणस्थितेस्तदर्थत्वेनशरीरस्थितेरुभयनित्यत्वादविशेषेणसर्वशरीरनित्यत्वंस्यात् ॥३६॥अ० १०
पाशुपतपक्षमपाकरोति॥ ॥ॐपत्युरसामंजस्यात्ॐ॥३७॥ ॥यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंत
मृषिंतंसुमेधाम् ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाउ॥अस्यदेवस्यमीळ्हुषोवयाविष्णो
रेषस्यप्रभृथेहविर्भिः ॥विदेहिरुद्रोरुद्रियंमहित्वंयासिष्टंवर्तिरश्विनाविरावत्॥ एकोनारायणआसी
न्नब्रह्मानेशानोनाग्नीषोमावित्यादिश्रुतेःपारतंत्र्येणासमंजसत्वान्नपशुपतिरीश्वरोजगत्कर्ता॥३७
॥ ॐसंबंधानुपपत्तेश्चॐ ॥ ३८॥ ॥ अशरीरत्वात्तस्यजगतासंबंधोनयुज्यतेकर्तृत्वेनमृतपुरुषव

त् ॥३८॥ ॥ ॐअधिष्ठानानुपपत्तेश्चॐ॥३९॥ ॥पृथिव्याद्यधिष्ठानेस्थितोहिकुलालादिःकार्यं
करोतिनचास्यनदस्ति॥३९॥ ॥ ॐकरणवच्चेन्नभोगादिभ्यःॐ॥४०॥ ॥इदमेवजगत्तस्यकरण
वदधिष्ठानादिरूपंनित्यस्यापिकस्यचिद्भावाद्युज्यतइतिचेन्न ॥ भोगादिप्राप्तेः ॥ उत्पत्ति
विनाशौसुखदुःखभोगाश्चप्राप्स्यंतेतद्वताः ॥ ४० ॥ ॥ ॐअंतवत्त्वमसर्वज्ञतावाॐ ॥ ४१ ॥ ॥
देहवत्त्वेऽतवत्त्वमन्यथाज्ञानाभावः ॥ शरीरिणएवहिज्ञानोत्पत्तिर्दृष्टाविष्णोस्तुश्रुत्यैवसर्वेविरोधाः
परिहृताः ॥ यदात्मकोभगवांस्तदात्मिकाव्यक्तिः ॥ किमात्मकोभगवान्॥ज्ञानात्मकऐश्वर्यात्म
कःशक्त्यात्मकइति ॥ बुद्धिमनोंगप्रत्यंगवत्तांभगवतोनुलक्षयामहे॥बुद्धिमान्मनोवानंगवान्प्रत्यं
गवानिति ॥ सद्देहःसुखगंधश्चज्ञानभाःसत्पराक्रमोज्ञानज्ञानःसुखसुखःसविष्णुःपरमोऽक्षरइत्या
दिकया ॥४१॥अ० ११ ॥ शक्तिपक्षंदूषयति ॥ ॥ ॐउत्पत्त्यसंभवात्ॐ ॥४२॥ ॥ नहिपुरु
षाननुगृहीतस्त्रीभ्यउत्पत्तिर्दृश्यते ॥४२॥ ॥ ॐनचकर्तुःकरणम्ॐ ॥ ४३ ॥ ॥ यदिपुरुषोंगी
क्रियतेतस्यापिकारणाभावादनुपपत्तिः ॥४३॥ ॥ ॐविज्ञानादिभावेवातदप्रतिषेधःॐ॥४४॥
॥ यदिविज्ञानादिकरणंतस्यांगीक्रियतेतदाततएवसृष्ट्याद्युपपत्तेरीशवादांतर्भावः ॥ ४४ ॥
॥ॐविप्रतिषेधाच्चॐ॥४५ ॥ ॥ सकलश्रुत्यादिविरुद्धत्वाच्चासमंजसम् ॥४५॥अ० १२ ॥ इति
श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्य
द्वितीयःपादः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीहयग्रीवायनमः ॥ ॥ हरिःॐजीवपरमात्माधिभूताधिदैवेषुश्रुतीनांपरस्परविरोधमपाकरो
त्यनेनपादेन ॥ ॥ ॐनवियदश्रुतेःॐ ॥ १ ॥ ॥ नवियदनुत्पत्तिमत् ॥ तथाश्रुतेः ॥ १ ॥
॥ ॐअस्तितुॐ ॥ २ ॥ ॥ अस्त्येवचोत्पत्तिश्रुतिः ॥ आत्मनआकाशःसंभूतइत्यादि ॥ २ ॥
॥ ॐगौणयसंभवात्ॐ ॥ ३ ॥ ॥ अनादिर्वायमाकाशःशून्योलौकिकइत्यादिश्रुतिर्गौणी ॥
अन्यथोत्पत्तिश्रुतिबाहुल्यासंभवात् ॥ ३ ॥ ॥ ॐशब्दाच्चॐ ॥ ४ ॥ ॥ अथहवावनित्यानि
पुरुषःप्रकृतिरात्माकालइति ॥ अथयान्यनित्यानिप्राणःश्रद्धाभूतानिभौतिकानीति ॥ यानिह
वावउत्पत्तिमंतितान्यनित्यानि ॥ यानिहवाअनुत्पत्तिमंतितानिनित्यानिनह्येतानिकदाचनोत्पद्यं
तेनविलीयंतेपुरुषःप्रकृतिरात्माकालइति ॥ अथैतान्युत्पत्तिमंतिचानुत्पत्तिमंतिचप्राणःश्रद्धा
काशइतिभागशोह्युत्पद्यंतइतिभाल्लवेयश्रुतेश्च ॥ ४ ॥ ॥ ॐस्याच्चैकस्यब्रह्मशब्दवत्ॐ ॥ ५ ॥
स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वंचगौणमुख्यापेक्षया ॥ यथाब्रह्मशब्दः ॥ अथकस्मादु
च्यतेपरंब्रह्मेतिबृहतिबृंहयतिचेतिश्रुतेः ॥ परेब्रह्मणिमुख्योपिगौणत्वेनविरिंचादिष्वपिवर्तते ॥
अतएवाब्रह्मत्वंचतेषाम् ॥ एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ॥५॥ ॥ ॐप्रतिज्ञाहानिरव्यतिरेका
च्छब्देभ्यःॐ ॥ ६ ॥ ॥ ब्रह्मणोऽन्यस्यनित्यत्वेसइदंसर्वमसृजतेत्यादिप्रतिज्ञाहानिः ॥ आका
शस्यापिसर्वस्मादव्यतिरेकात्॥आत्मावाइदमेकएवाग्रआसीत्॥सदेवसौम्येदमग्रआसीत् ॥एक
मेवाद्वितीयंब्रह्म ॥ इदंवाअग्रेनैवकिंचनासीदित्यादिश्रुतिभ्यः ॥ ६ ॥ ॥ ॐयावद्विकारंतु
विभागोलोकवत्ॐ ॥ ७ ॥ ॥ विभक्तत्वाच्चविकारित्वंयुक्तम् ॥ विकारिणएवहिविभक्तालोके

दृश्यंते ॥ एकोऽविभक्तःपरमःपुरुषोविष्णुरुच्यते ॥ प्रकृतिःपुरुषःकालस्त्रयएतेविभागिनः ॥
चतुर्थस्तुमहान्प्रोक्तःपंचमाहंकृतिर्मता ॥ तद्विभागेनजायंतेआकाशाद्याःपृथक्पृथक् ॥ योविभा
गीविकारीससोऽविकारःपरोहरिः ॥ अविभागात्परानंदोनित्योनित्यगुणात्मकः ॥ विभागोह्यल्पश
क्तिःस्यान्नतदस्तिजनार्दनइतिबृहत्संहितायाम्॥७॥अ० १॥अथहनित्याश्चानित्याश्च॥तेजोबन्ना
न्याकाशइति तान्यनित्यानिवायुर्वावनित्योवायुनाहिसर्वाणिभूतानिनेनीयंते॥अथहचेतनाश्चाचे
तनाश्चतेजोबन्नान्याकाशइतितान्यचेतनानिवायुर्वावचेतनोवायुनाहिसर्वाणिभूतानिविज्ञायंते॥
कुविदंगनमसायेवृधासःपुरादेवाअनवद्यासआसन्॥ तेवायवेमनवेबाधितायावासयन्नुषसंसूर्येण॥
सावाएषादेवतानादिर्योयंपवतइति ॥ यस्यनादिर्नमध्यंनांतोनोदयोननिम्लोचइत्यादिश्रुतिभ्यो
वायोरनुत्पत्तिरित्यतोब्रवीति ॥ ॥ ॐएतेनमातरीश्वाव्याख्यातःॐ ॥ ८॥ ॥ एतेनमुख्यामुख्या
नुत्पत्तिवचनेनविभक्तत्वाच्चवाय्वनुत्पत्तिश्रुतिरपिव्याख्याता ॥ नित्यःपरमनित्यश्चतथानित्यःपर
स्तथा ॥ चतुर्धैतज्जगत्सर्वंपरानित्यंतुपार्थिवम् ॥ अनित्यानितुभूतानिनित्योवायुरुदाहृतः ॥ प
रस्तुनित्यःपुरुषःप्रकृतिःकालएवच ॥ एतच्चतुष्टयंविष्णुःस्वयंनित्यःपरात्परः ॥ प्रतिव्यूह्यव्यूह्य
चासावतीत्यचजनार्दनः ॥ धारयत्यनिशंदेवोनित्यानंदैकलक्षणइतिकौर्म्ये ॥ ८ ॥ अ० २ ॥
॥ ॐअसंभवस्तुसतोनुपपत्तेः ॥ ९ ॥ ॥ असद्वाइदमग्रआसीत्ततोवैसदजायत ॥ असतःसद
जायतेत्यादिश्रुतिभ्यःसतोप्युत्पत्तिरितिचेन्न ॥ अनुत्पत्तिरेवसतः ॥ तुशब्देनोक्तव्यवस्थामपा
करोति ॥ नह्यसतःसदुत्पद्यते ॥ अदृष्टत्वादनुपपत्तेः ॥ तद्वाएतद्ब्रह्माहुःबृहतिबृंहयतिचेति ॥

तद्वाएतदसदाहुर्नह्यासादयतिकश्चनेति ॥ तद्वाएतत्परमाहुःपरतोहितदुदीक्षतइतिश्रुतेरसच्छ
ब्दोब्रह्मवाची ॥ देवानांपूर्व्येयुगेसतःसदजायतेति ॥ ब्रह्मवाअसत्सद्वावप्राणः ॥ प्राणोवावमहान्
सहओजोबलमित्याचक्षतइतिपैंगिश्रुतिः ॥ त्वंदेवशक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविराद
धेऽजः ॥ ततोवयंसत्प्रमुखायदर्थेबभूविमात्मनूकरवामकिंतइतिभागवते ॥ अजायमानो
बहुधाविजायतइतिच ॥ प्रत्यक्षत्वंहरेर्जन्मनविकारःकथंचन ॥ पुरुषःप्रकृतिःकालोमहानि
त्यादिषुक्रमात् ॥ विकारएवजननंपुरुषेतद्विशेषणम् ॥ परतंत्रविशेषोहिविकारइतिकीर्तितइति
पाद्मे ॥ अविकारोपिभगवान्सर्वशक्तित्वहेतुतः ॥ विकारहेतुकंसर्वंकुरुतेनिर्विकारवान्॥शक्तिश
क्तिमतोश्चापिनविभेदःकथंचन॥अविभिन्नापिसेच्छादिभेदैरपिविभाष्यतइतिभागवततंत्रे॥९॥
अ०१३॥ॐतेजोतस्तथाह्याहॐ॥१०॥ ॥ वायोरग्निरित्यादेर्नान्यतउत्पत्तिर्ग्राह्या ॥ अतएवपरा
त्तदपिजायते ॥ तत्तेजोऽसृजतेतिह्याह ॥कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपिशब्दोक्तत्वा
त्पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थम् ॥१०॥अ०४ ॥ॐआपःॐ॥११॥ ॥ ब्रह्मैवेदमग्रआसी
त्तदपोऽसृजततदिदंसर्वमसृजतेतिश्रुतेरग्नेरापइत्युक्तेपिब्रह्मणएवाबादिसृष्टिः ॥ एतस्माज्जायते
प्राणोमनःसर्वेंद्रियाणिच ॥ खंवायुर्ज्योतिरापःपृथिवीविश्वस्यधारिणीत्यादिच ॥ कर्तासर्वस्य
वैविष्णुरेकएवनसंशयः॥इतरेषांतुसत्ताद्यायतएवतदाज्ञयेतिभविष्यत्पुराणे ॥ वामनेच॥तत्रतत्र
स्थितोविष्णुस्तत्तच्छक्तीःप्रबोधयन् ॥ एकएवमहाशक्तिःकुरुतेसर्वमंजसेति॥घर्मात्स्वेदादिदृष्टेः
पुनःप्रतिषेधः ॥११॥अ०५ ॥ ताआपऐक्षंतबह्व्यःस्यामप्रजायेमहीति॥ताअन्नमसृजंतेत्यद्भ्यो

न्नसृष्टिःश्रूयते॥अद्भ्यःपृथिवीतिकुत्रचित्पृथिवीसृष्टिः॥अतोविरुद्धत्वादप्रामाण्यमित्यतोवक्ति॥
॥ ॐपृथिव्यधिकाररूपशब्दांतरादिभ्यःॐ॥ १२ ॥ ॥ पृथिवीतत्रान्नशब्देनोच्यते ॥
भूताधिकारत्वात् ॥ कार्ष्ण्यप्रचुराचपृथिवी ॥ नान्नस्यतथाविशेषः ॥ आपश्चपृथिवीचा
न्नं पृथिवीवाअन्नंताआपोऽन्नमसृजंत ॥ पृथिवीवाअन्नमित्यादिशब्दांतराच्च ॥ आदिशब्दा
द्युक्तिः ॥ अपौरुषेयत्वेनादोषस्यवाक्यस्यनाप्रामाण्यमित्यादि ॥ कौर्मेच ॥ विरोधोवाक्ययो
र्यत्रनाप्रामाण्यंतदेष्यते ॥ यथाविरुद्धतानस्यात्तथार्थःकल्प्यएतयोरिति ॥ रक्तोग्निरुदकंशुक्लं
कृष्णैवपृथिवीस्वतः ॥ नाभिपद्माभिसंबंधात्पीतासेत्यभिधीयते ॥ क्षत्ररक्ताभिसंबंधाद्रक्तोद
कवह्नित्वतः ॥ शुक्लत्वमेत्येवमेववर्णांतरगतिर्भवेत् ॥ विष्णुवीर्याभियोगाच्चपीतत्वंभुवइष्यते ॥
स्वर्णवीर्योहिभगवाननादिःपरमेश्वरइतिव्योमसंहितायाम् ॥ १२ ॥ अ० ६ ॥ प्राणानांग्रंथिर
सिरुद्रोमाविशांतकस्तेनान्नेनाप्यायस्वेत्यादिनाऽन्यःसंहर्ताप्रतीयतइत्यतोब्रूते॥ ॥ॐतदभिध्या
नादेवतुतल्लिंगात्सःॐ॥१३॥ ॥तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांतेविश्वमायानिवृत्तिरि
तिबंधलयस्यतदभिध्याननिमित्तत्वलिंगात्तत्कर्तृत्वंप्रतीयतेकिमुसादेर्जगतः॥ इत्येतस्मादेवसंहा
रकर्ताविष्णुरेवेतिप्रतीयते ॥ किमुयमप्येतिभुवनंसांपरायेसनोहरिर्घृतमिहायुषेतुदेवः ॥ यइदं
सर्वंविलापयतिसहरिः परःपरमात्मेत्यादिश्रुतिभ्यइत्येवशब्दः॥ स्रष्टापाताचसंहर्तासएकोहरिरी
श्वरः॥ स्रष्टृत्वादिकमन्येषांदारुयोषावदुच्यते ॥ एकदेशक्रियाचात्रनतुसर्वात्मनेरितम् ॥ सृ
ष्ट्यादिकंसमस्तंतुविष्णोरेवपराद्भवेदितिचस्कांदे ॥ निमित्तमात्रमीशस्यविश्वसर्गनिरोधयोः॥

हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तवेतिच भागवते ॥ सब्रह्मणासृजतिसरुद्रेणविलापयति सोनुत्पत्तिरलयएकएवहरिःपरःपरानंदइतिचमहोपनिषदि॥१३॥अ० ७॥अतएवहीदंपराक्रमादुत्पद्यतेक्रमाद्विलीयतेनासावुदेतिनास्तमेतीतिभाल्लवेयश्रुतौक्रमाल्लयःप्रतीयते ॥ अक्षरात्परमादेवसर्वमुत्पद्यतेक्रमात् ॥ व्युत्क्रमाद्विलयश्चैवतस्मिन्नेवपरात्मनीतिचतुर्वेदशिखायाम् ॥ व्युत्क्रमाल्लयःप्रतीयतेऽतआह ॥ ॥ ॐविपर्ययेणतुक्रमोऽतउपपद्यतेचॐ ॥ १४ ॥ ॥ क्रमवचनमपिविपरीतक्रमापेक्षया ॥ कर्ताप्राणादिकस्यास्यहंताभूम्यादिकस्यच ॥ यःक्रमाद्व्युत्क्रमाच्चैवसहरिःपरउच्यतइत्यतएवभाल्लवेयश्रुतिवचनात् ॥ अनुरूपःक्रमःसृष्टौप्रतिरूपोलये क्रमः ॥ इतिक्रमेणभगवान्सृष्टिसंहारकृद्विभुरितिचपाद्मे ॥ पूर्वेषांपूर्वेषांसामर्थ्याधिक्यादुपपद्यतेच ॥ वामनेच ॥ पूर्वेपूर्वेयतोविष्णोःसंनिधानंक्रमाधिकम् ॥ सामर्थ्याधिक्यमेतेषांपश्चादेवलयस्तथा॥ व्याप्तिश्चाभ्यधिकातेषामतएवनसंशयइतिच॥१४॥अ० ८॥ ॥ ॐअंतराविज्ञानमनसीक्रमेणतल्लिंगादितिचेन्नाविशेषात्ॐ ॥१५॥ ॥ प्राणान्मनोमनसश्चविज्ञानम् ॥ यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनीतिर्लिंगाद्विज्ञानमनसीअंतराविपरीतक्रमइतिचेन्न ॥ विशेषप्रमाणाभावात् ॥ १५ ॥ ॥ ॐचराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वात्ॐ ॥ १६ ॥ मनसश्चविज्ञानमितिव्यपदेशश्चराचरेष्वालोचनाद्विज्ञानंभवतीतिभागापेक्षयास्यात् ॥ नविज्ञानतत्त्वापेक्षया ॥ स्कांदेच ॥ परादव्यक्तमुत्पन्नमव्यक्तात्तुमहांस्तथा ॥ विज्ञानतत्त्वंमहतःसमुत्पन्नंचतुर्मुखात् ॥ विज्ञानतत्त्वात्तुमनोमनस्तत्त्वाच्चखादिकम् ॥ एवंबाह्यापरासृष्टिरंतस्तद्व्यत्ययपेक्ष

या ॥ विपरीतक्रमोऽज्ञेयोयस्मादंतेहरेर्द्वंशिरिरिति ॥१६॥ अ० १ ॥ ॥ ॐनात्माश्रुतेर्नित्यत्वा
च्चताभ्यःॐ ॥ १७ ॥ ॥ सइदंसर्वंविलाप्यांतस्तमसिनिलीनस्ताद्विलाप्यव्युत्तिष्ठते ॥ सइदंसर्वं
विसृजतिविलापयतिविस्थापयतिप्रस्थापयतिआच्छादयतिप्रकाशयतिविमोचयत्येकएवेतिश्रु
तेः ॥ परमात्मापिनलीयते ॥ अश्रुतत्वाद्ब्रह्मलयस्य ॥ निलीनशब्देनापिहितत्वमुच्यते ॥ तुच्छये
नाभ्वपिहितंयदासीदितिश्रुतेः ॥ सएतस्मिंस्तमसिनिलीनःप्रकृतिंपुरुषंकालंचानुपश्यतिनैनंप
श्यतिकश्चनेतिपैंगिश्रुतिः ॥ नित्योनित्यानांचेतनश्चेतनानाम् ॥ सनित्योनिर्गुणोविभुःपरःपर
मात्मा ॥ नित्योविभुःकारणंलोकसाक्षीपरोगुणैःसर्वदृक्शाश्वतश्चेत्यादिश्रुतिभ्योनित्यत्वाच्च ॥
॥ १७ ॥ अ० १०॥नित्योनित्यानामितिजीवस्यापिनित्यत्वमुक्तम् ॥ सर्वएतेचिदात्मानोव्युच्चरं
तीत्युत्पत्तिरुच्यते ॥ अतोविरोधइत्यतआह ॥ ॥ ॐज्ञोऽतएवॐ ॥ १८ ॥ ॥ जीवोप्यत
एवपरमेश्वरादुत्पद्यते ॥ शब्दादेव ॥ तेवाएतेचिदात्मानोऽविनष्टाःपरंज्योतिर्निविशंत्यविनष्टा
एवोत्पद्यंतेनविनश्यंतिकदाचनेतिकाषायणश्रुतिः ॥ १८ ॥ ॥ ॐयुक्तेश्चॐ ॥ १९ ॥ ॥ नि
त्यस्यापिजीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ॥ उत्पद्यंतेचिदात्मानोनित्यान्नित्याःपरात्मनः ॥ उ
पाध्यपेक्षयातेषामुत्पत्तिरपिगीयतइतिव्योमसंहितायाम् ॥१९॥अ० ११॥ व्यासाद्यात्मानश्चेत
नानिर्गुणाश्चसर्वात्मानःसर्वरूपाअनंताइतिकाषायणश्रुतौव्याप्तत्वंप्रतीयते ॥ अणुर्ह्येषआत्मायंवा
एतेसिनीतःपुण्यंचापुण्यंचेतिगौपवनश्रुतावणुत्वमित्यतोविरोधइत्यतोब्रवीति ॥ ॥ ॐउत्क्रां
तिगत्यागतीनाम्ॐ ॥२०॥ ॥ हेतूनांसकाशादणुरेव ॥ सोऽस्माच्छरीरादुत्क्रम्यामुंलोकमभिग

च्छत्यमुष्मादिमंल्लोकमागच्छतिसगर्भीभवति सप्रसूयतेसकर्मकुरुतइतिपौष्यायणश्रुतेः॥ २०॥
तत्रस्वातंत्र्यप्रतीतेः॥एकःप्रसूयतेजंतुरेकएवप्रलीयते॥ एकोनुऽभुंक्तेसुकृतमेकएवचदुष्कृतमित्या
देश्चस्वयमेवेत्यतोवक्ति ॥ ॥ ॐस्वात्मनाचोत्तरयोः॥२१॥ ॥ सएतेनैवस्वात्मनापरेणेमंगर्भमनुप्र
विशतिपरेणजायतेपरेणकर्मकुरुतेपरेणनीयतेपरेणोन्नीयते॥ तंवाएतमभिवदंतिस्वात्मेति॥एषह्या
नंदमादत्तेएषह्येनंजीवमभिजीवयतिएषउद्गमयत्येषआगमयतीत्युत्तरयोर्वाक्ययोःपरमात्मनैवो
त्क्रांत्यादयः ॥ २१ ॥ ॥ ॐनाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्ॐ ॥२२॥ ॥ व्यासाह्यात्मान
श्चेतनानिर्गुणाश्चेतिव्याप्तिश्रुतेर्नाणुर्जीवइतिचेन्न ॥ सआत्मेदंसृजतिसद्विधेदंबिभर्ति ॥ अंतर्बहि
श्चसबहुधेदमनुप्रविश्यात्मनोऽभिनयति ॥ सआत्मासआत्मानःसईशःसविष्णुःसपरःपरोवरीया
निनिपरमात्माधिकारात् ॥ एकशब्दैर्द्विशब्दैश्चबहुशब्दैश्चकेशवः ॥ एकएवोच्यतेवेदैस्ताव
तानास्यभिन्नतेतिभविष्यत्पुराणे ॥ तदयंप्राणोधितिष्ठतितदुक्तमृषिणाआतेनयातमित्यादिच ॥
॥२२॥ ॥ॐस्वशब्दोन्मानाभ्यांचॐ॥२३॥ ॥ एषोह्यात्माऽध्युद्गतोमानशक्तेस्तथाऽप्यसौप्रमि
तिंयातिवेदैः ॥ पूर्णोऽचिंत्यःसर्ववेदैकयोनिःसर्वाधीशःसर्ववित्सर्वकर्तेतिवाक्यशेषेआत्मशब्दोन्मा
नाभ्यांच ॥ आत्मामेयःपरंब्रह्मपरानंदादिकाभिदाः ॥ वदंतिविष्णुमेवैकंनान्यत्राऽसांगतिः
क्वचिदितिकौर्म्ये ॥ २३॥ ॥ ॐअविरोधश्चंदनवत्ॐ ॥ २४ ॥ ॥ अणोरपिजीवस्यसर्वश
रीरव्याप्तिर्युज्यते ॥ यथाहरिचंदनविप्रुषएकदेशपतितायाःसर्वशरीरव्याप्तिः ॥ अणुमात्रो
प्ययंजीवःस्वदेहंव्याप्यतिष्ठति॥यथाव्याप्यशरीराणिहरिचंदनविप्रुषइतिचब्रह्मांडपुराणे॥२४॥

॥ ॐअवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहिॐ ॥ २५ ॥ ॥ सम्यगसम्यगवस्थान
विशेषाद्युज्यतेचंदनस्येतिचेन्न ॥ हृदिह्येषआत्मेतिजीवस्यापितथाभ्युपगमात् ॥२५॥ ॥ॐगु
णाद्वालोकवत्ॐ ॥ २६ ॥ ॥ यथालोकस्यप्रकाशगुणेनव्याप्तिर्ज्योतीरूपेणाव्याप्तिरेवंचि
द्गुणेनव्याप्तिर्जीवरूपेणाव्याप्तिरितिवा ॥ स्कांदेच ॥ असम्यक्सम्यगितिचव्यवस्थाभेदतःसु
राः ॥ व्याप्त्यव्याप्तियुतास्त्वन्येचिद्गुणेनैवनान्यथा ॥ चिद्गुणस्यस्वरूपत्वात्तद्व्याप्तिश्चेतियुज्य
ते ॥ शक्तियोगात्सुराणांतुविविधाचव्यवस्थितिरिति ॥२६॥अ० १२ ॥सनित्योनिरवयवःपुण्य
युक्पापयुक्चसइमंल्लोकममुंचावर्ततेसविमुच्यतेसएकधानसप्तधानदशधानशतधेतिगौपवनश्रु
तावेकस्याबहुत्वंप्रतीयते॥ सपंचधाससप्तधासदशधाभवतिसशतधाचसहस्रधासगच्छतिसमुच्य
तइतिपाराशर्यायणश्रुतौबहुरूपत्वंप्रतीयते ॥ अतोविरोधंपरिहरति ॥ ॥ ॐव्यतिरेकोगंधव
त्तथाचदर्शयतिॐ ॥ २७॥ ॥यथापुष्पाद्गंधःपृथग्गच्छतिएवमंशिनोजीवादंशाःपृथग्गच्छंति ॥
अथैकएवसन्गंधवद्व्यतिरिच्यते॥अथैकीभवति ॥ अथबह्वीभवतितंयथायथेश्वरःप्रकुरुतेतथात
थाभवतिसोऽचिंत्योःपरमोगरीयानितिशांडिल्यश्रुतिः॥ अचिंत्ययेशशक्त्यैवह्येकोवयववर्जितः॥
आत्मानंबहुधाकृत्वाक्रीडतेयोगसंपदेतिचपाद्मे ॥२७॥अ० १३ ॥ तत्त्वमस्यहंब्रह्मास्मीत्यादिषु
जीवस्यपरेणाभेदःप्रतीयते ॥नित्योनित्यानांचेतनश्चेतनानाम् ॥ द्वासुपर्णेत्यादिषुभेदः ॥ अतउ
च्यते ॥ ॥ ॐपृथगुपदेशात्ॐ ॥ २८॥ ॥ भिन्नोचिंत्यःपरमोजीवसंघात्पूर्णःपरोजीवसंघो
ह्यपूर्णः ॥ यतस्त्वसौनित्यमुक्तोह्ययंचबंधान्मोक्षंततएवाभिवांच्छेदितिसोपपत्तिककौशिकश्रु

तेर्भिन्नएवजीवः ॥ २८ ॥ ॥ ॐतद्गुणसारत्वात्तद्व्यपदेशःप्राज्ञवत्ॐ ॥ २९॥ ॥ ज्ञानानंदा
दिब्रह्मगुणाएवाऽस्ययतःसारःस्वरूपमतोऽभेदव्यपदेशः॥ यथासर्वगुणात्मकत्वात्सर्वात्मकत्वंब्रह्म
णउच्यतेसर्वंखल्विदंब्रह्मेति ॥ भविष्यत्पर्वणिच ॥ भिन्नाजीवाःपरोभिन्नस्तथापिज्ञानरूपतः॥
प्रोच्यंतेब्रह्मरूपेणवेदवादेषुसर्वशइति ॥ २९ ॥ अ० १४ ॥ जीवस्याप्युत्पत्तिरुक्ता ॥ अतस्त
स्यसोनादिनापुण्येनपापेनचानुबद्धःपरेणनिर्मुक्तआनंत्यायकल्प्यतइत्यनादिकर्मसंबंधआनंत्या
वासिश्चनयुज्यतइत्यतआह ॥ ॥ ॐयावदात्मभावित्वाच्चनदोषस्तद्दर्शनात्ॐ ॥ ३० ॥
यावत्परमात्मातिष्ठत्यनाद्यनंतत्वेनैवंजीवोपिनित्यःपरोनित्योजीवोऽनित्यास्तस्यधातवःअतउत्प
द्यतेम्रियतेचविमुच्यतेचेतिचाग्निवेश्यश्रुतिः ॥ आत्मानित्यःसुखदुःखेत्वनित्येजीवोनित्योधातु
रस्यत्वनित्यइतिचभारते ॥३०॥अ० १५॥ विज्ञानात्मासहदेवैश्चसर्वैःसआनंदःसबलःसओजःस
परेणामुंलोकमुन्नीयतेसविमुच्यतइतिजीवस्यज्ञानानंदादिरूपत्वमुच्यते ॥ सदुःखाद्विमुक्तआनं
दीभवतिसोऽज्ञानाद्विमुक्तोज्ञानीभवतिसोऽबलाद्विमुक्तोबलीभवतिसनित्योनिरातंकोवतिष्ठतइ
तिपैंगिश्रुतावनानंदादिरूपत्वंचप्रतीयतेऽतआह ॥ ॥ ॐपुंस्त्वादिवत्त्वस्यसतोऽभिव्यक्तियोगा
त्ॐ ॥ ३१ ॥ ॥ यथाबालस्यसदेवपुंस्त्वंयौवनेऽभिव्यज्यतएवंसतामेवानंदादीनांव्यक्त्यप
पेक्षयातदुक्तिः ॥ बलमानंदओजश्चसहोज्ञानमनाकुलम् ॥ स्वरूपाण्येवजीवस्यव्यज्यंतेपरमा
द्विभोरितिगौपवनश्रुतिः ॥ ३१ ॥ ॥ ॐनित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमोवान्यथा
ॐ ॥ ३२ ॥ ॥ व्यक्त्यनंगीकारेदेवानांनित्योपलब्धिरानंदादीनामसुराणांनित्यानुपलब्धिर्म

नुषाणांचनित्योपलब्ध्यनुपलब्धीप्रसज्येते॥ नित्यानंदोनित्यज्ञानोनित्यबलःपरमात्मानैवमसुराःए
वमनेवंचमनुष्याइत्याग्निवेश्यश्रुतिः॥ भविष्यत्पर्वणिच॥ नित्यानंदज्ञानबलादेवानैवंतुदानवाः॥
दुःखोपलब्धिमात्रास्तेमानुषास्तूभयात्मकाः॥ तेषांयदन्यथादृश्यंतदुपाधिकृतंमतम् ॥ विज्ञा
नेनात्मयोग्येननिजरूपेव्यवस्थितिः ॥ सम्यग्ज्ञानंतुदेवानांमनुष्याणांविमिश्रितम् ॥ विपरीतं
तुदैत्यानांज्ञानस्यैवंव्यवस्थितिरिति ॥३२॥अ०१६॥ ईश्वरस्यैवकर्तृत्वमुक्तम्॥ यत्कर्मकुरु
तेतदभिसंपद्यतइतिजीवस्याप्युपलभ्यतेऽतआह॥ ॥ ॐकर्ताशास्त्रार्थवत्त्वात्ॐ ॥३३॥
जीवस्यकर्तृत्वाभावेशास्त्रस्याऽप्रयोजकत्वप्राप्तेर्जीवोऽपिकर्त्ता॥ ३३ ॥ ॥ ॐविहारो
पदेशात्ॐ॥ ३४ ॥ ॥ स्त्रीभिर्वायानैर्वाज्ञातिभिर्वाऽज्ञातिभिर्वेत्यादिमोक्षेपि॥ ३४ ॥ ॥
ॐउपादानात्ॐ॥ ३५ ॥ ॥ साधनाद्युपादानप्रतीतेश्च॥ ३५॥ ॥ ॐव्यपदेशाच्चक्रि
यायांनचेन्निर्देशविपर्ययःॐ॥ ३६ ॥ ॥ आत्मानमेवलोकमुपासीतेतिक्रियायांव्यपदेशाच्च॥
अन्यथाऽऽत्मैवलोकमितिनिर्देशःस्यात् ॥३६॥ तर्हिकथमीश्वरस्यैवकर्तृत्वमित्यतोवक्ति॥ ॥
ॐउपलब्धिवदनियमःॐ॥ ३७ ॥ ॥ यथाज्ञानेऽदंज्ञास्यामीत्यनियमःप्रतीयतेएवंकर्मण्यपि
जीवस्ययआत्मानमंतरोयमयतीतिचश्रुतिः॥३७॥ कुतः॥ ॥ ॐशक्तिविपर्ययात्ॐ॥३८॥
अल्पशक्तित्वाज्जीवस्य॥ ३८ ॥ ॥ ॐसमाध्यभावाच्चॐ॥३९॥ ॥ समाधानाभावाच्चास्वा
तंत्र्यंप्रतीयते॥३९॥अतः॥ ॥ ॐयथाचतक्षोभयथाॐ॥४०॥ ॥ यथातक्षणःकारयितृनियत
त्वंकर्तृत्वंचविद्यतेएवंजीवस्यापि॥४०॥ ॥ ॐपरात्तुतच्छ्रुतेःॐ॥४१॥ ॥ साचकर्तृत्वशक्तिः

परादेव ॥ कर्तृत्वंकरणत्वंचस्वभावश्चेतनाधृतिः ॥ यत्प्रसादादिमेसंतिनसंतियदुपेक्षयेतिपैंगिश्रुतिः
॥४१॥ ॥ ॐकृतप्रयत्नापेक्षस्तुविहितप्रतिषेधावैयर्थ्यादिभ्यःॐ ॥४२॥ ॥ ततोऽप्रयोजकत्वंशा
स्त्रस्यनापद्यते ॥ कृतप्रयत्नापेक्षत्वात्तत्प्रेरकत्वस्य ॥ आदिशब्देनावैषम्यादि ॥ पूर्वकर्मप्रयत्नं
चसंस्कारंचाप्यपेक्ष्यतु ॥ ईश्वरःकारयेत्सर्वंतच्चेश्वरकृतंमतम् ॥ अनादित्वाददोषश्चपूर्णशक्ति
त्वतोहरेरितिभविष्यत्पर्वणि ॥ एतदेवंनचाप्येवमेतदस्तिनचास्तिचेतिमोक्षधर्मे ॥४२॥अ० १७॥
अंशाएवहीमेजीवाअंशीहिपरमेश्वरः ॥ स्वयमंशैरिदंसर्वंकारयत्यचलोहरिरितिगौपवनश्रुतावं
शत्वंजीवस्योपलभ्यते ॥ नैवांशोनसंबंधोनापेक्ष्योजीवःपरस्य ॥ तथापितुयथायोगंफलदः
प्रभुरेकराट् ॥ ननियम्यःसकस्यापिससर्वस्यनियामकइतिचभाल्लवेयश्रुतावतोब्रवीति ॥
॥ ॐअंशोनानाव्यपदेशादन्यथाचापिदाशकितवादित्वमधीयतएकेॐ ॥ ४३ ॥ ॥ मांरक्ष
तुविभुर्नित्यंपुत्रोहंपरमात्मनः ॥ अवःपरेणपितरंयोअस्यानुवेदपरएनावरेण ॥ यस्तद्वेद सपितु
ष्पितासत् ॥ कवीयमानःकइहप्रवोचद्देवंमनःकुतोधिप्रजातम् ॥ स्त्रियःसतीस्ताँउमेपुंसआहुःप
श्यदक्षिण्वान्नविचेतदंध ॥ कविर्यःपुत्रःसइमाचिकेतयस्ताविजानात्सपितुष्पितासत् ॥ द्वा सुप
र्णासयुजासखायेत्यादिनानानाव्यपदेशादंशोजीवः ॥ तथाचपाराशर्यायणश्रुतिः ॥ अंशोह्येष
परस्ययोयंपुमानुत्पद्यतेचम्रियतेचनानाह्येनंव्यपदिशंतिपितेतिपुत्रेतिभ्रातेतिसखेतिचेति ॥ ३ न
न्यःपरोन्योजीवोनासावस्यकुतश्चन ॥ नायंतस्यापिकश्चनेति ॥ अन्यथाचकाषायणश्रुतिः ॥
ब्रह्मदाशाब्रह्मकितवाब्रह्मैवेमेदाशाइत्यभेदेनाप्येकेऽधीयते ॥ तथाचाग्निवेश्यश्रुतिः ॥ अंशोह्ये

पपरस्यभिन्नंह्येतमधीयिरेऽभिन्नंह्येनमधीयिरइति ॥ वाराहेच ॥ पुत्रभ्रातृसखित्वेनस्वामित्वेनय
तोहरिः ॥ बहुधागीयतेवेदैर्जीवांशस्तस्यतेनतु ॥ यतोभेदेनतस्यायमभेदेनचगीयते ॥ अतश्चां
शत्वमुद्दिष्टंभेदाभेदौनमुख्यतइति॥४३॥ ॥ ॐमंत्रवर्णात्ॐ ॥४४॥ ॥ पादोऽस्यविश्वाभूता
नीति ॥ ४४ ॥ ॥ ॐअपिस्मर्यतेॐ ॥ ४५ ॥ ॥ ममैवांशोजीवलोकेजीवभूतःसनातनइति
॥४५॥ अनंशत्वश्रुतेर्गतिंचाह ॥ ॥ ॐप्रकाशादिवन्नैवंपरःॐ ॥ ४६ ॥ ॥ अंशत्वेपिनमत्स्या
दिरूपीपरएवंविधः ॥ यथातेजोंशस्यैवकालाग्नेःखद्योतस्यचनैकप्रकारात् ॥ यथाजलांशस्यामृ
तसमुद्रस्यमूत्रादेश्चयथाचपृथिव्यंशस्यमेरोर्विष्ठादेश्चअभिमानिदेवतापेक्षयैतत् ॥ ४६ ॥ ॥ ॐ
स्मरंतिचॐ ॥४७॥ ॥ एतेस्वांशकलाःपुंसःकृष्णस्तुभगवान्स्वयम्॥इंद्रारिव्याकुलंलोकंमृडयंति
युगेयुगे ॥ अतःपरंयदव्यक्तमव्यूढगुणबृंहितम् ॥ अदृष्टाश्रुतवस्तुत्वात्सजीवोयःपुनर्भवः ॥ स्वां
शश्चाथोविभिन्नांशइतिद्वेधांशइष्यते॥ अंशिनोयत्तुसामर्थ्यंयत्स्वरूपंयथास्थितिः ॥तदेवनाणुमा
त्रोपिभेदःस्वांशांशिनोःक्वचित् ॥ विभिन्नांशोऽल्पशक्तिःस्यात्किंचित्सादृश्यमात्रयुगितिवाराहे॥
नत्वतसमोस्त्यभ्यधिकःकुतोन्यइतिच ॥ ४७ ॥ ॥ ॐअनुज्ञापरिहारौदेहसंबंधाज्ज्योतिरादिव
त्ॐ ॥ ४८ ॥ ॥ परानुज्ञयाप्रवृत्तिःपरतोबंधनिवृत्तिश्चजीवस्यप्रतीयते ॥ अंशत्वेपिदेहसंबंधा
त् ॥ यआत्मानमंतरोयमयति ॥ तमेवंविद्वानमृतइहभवतीत्यादिना ॥ नतुपरस्य ॥ वासुदेवःसं
कर्षणःप्रद्युम्नोनिरुद्धोहंमत्स्यःकूर्मोवराहोनारसिंहोवामनोरामोरामःकृष्णोबुद्धःकल्किरहंशतधा
हंसहस्रधाहममितोहमनंतोहंनैवेतेजायंतेनम्रियंतेनैषामनुज्ञानबंधोनमुक्तिःसर्वएवह्येतेपूर्णाअज

राअमृताःपराःपरानंदाइतिचतुर्वेदशिखायाम् ॥ युज्यतेचज्योतिरादिवत् ॥ यथादित्योवियद्ग
तस्तत्प्रकाशश्चैकप्रकारः ॥ शुक्लंकृष्णंकनीनिकेतितदंशस्याप्यक्ष्णोदेहसंबंधान्नतादृशीशक्तिः ॥
तदनुग्राह्यत्वंतेनैवावृत्तिपरिहारश्च ॥ यथाबाह्यजलस्यामृतसमुद्रस्यचैकत्वंतदंशस्यापिश्लेष्म
णस्तदनुग्राह्यत्वंतेनैवविरोधिनिवृत्तिश्च ॥ मोक्षधर्मेच ॥ यत्किंचिदिहलोकेस्मिन्देहबद्धंवि
शांपते ॥ सर्वंपंचभिराविष्टंभूतैरीश्वरबुद्धिजैः ॥ ईश्वरोहिमहद्भूतंप्रभुर्नारायणोविराट् ॥ भूतांत
रात्माविज्ञेयःसगुणोनिर्गुणोपिच ॥ भूतप्रलयमव्यक्तंशुश्रूषुर्नृपसत्तमेति ॥ वाराहेच ॥ अंशाश्चदे
हयोग्यत्वाज्जीवाबंधादिसंयुताः ॥ अनुग्राह्याश्चेश्वरेणनतुमत्स्यादिकोहरिः ॥ अदेहबंधयोग्यत्वा
द्यथासूर्यप्रभाक्षिणी ॥ यथामृतसमुद्रस्यश्लेष्मादेश्चविरूपता ॥ अनुग्राह्यत्वमन्यस्यतेनैवावृ
त्तिरोधनमिति ॥ ४८ ॥ ॥ ॐअसंततेश्चाव्यतिकरःॐ ॥४९ ॥ ॥ अपूर्णशक्तित्वाच्चनजी
वस्यमत्स्यादिसाम्यम् ॥ तथाचचतुर्वेदशिखायाम् ॥ तस्यहवाएतस्यपरमस्यत्रीणिरूपाणि ॥
कृष्णोरामःकपिलइति ॥ तस्यहवाएतस्यपरमस्यपंचरूपाणिदशरूपाणिशतरूपाणिसहस्ररू
पाण्यमितरूपाणितानिहवाएतानिसर्वाणिपूर्णानिसर्वाण्यनंतानिसर्वाण्यसंमितानिसर्वाण्यमिता
नि ॥ अथावराःसर्वएवापूर्णाःसर्वएवबध्यंतेऽथमुच्यंतेचकेचनेति ॥ ४९ ॥ ॥ ॐआभा
सएवचॐ ॥ ५० ॥ ॥ रूपंरूपंप्रतिरूपोबभूवेतिप्रतिबिंबत्वाच्चनसाम्यम् ॥ वाराहेच ॥
द्विरूपावंशकौतस्यपरमस्यहरेर्विभोः ॥ प्रतिबिंबांशकश्चाथस्वरूपांशकएवच ॥ प्रतिबिंबां
शकाजीवाःप्रादुर्भावाःपरेस्मृताः ॥ प्रतिबिंबेल्पसाम्यंस्वरूपाणीतराणित्विति ॥ सोपाधि

रनुपाधिश्चप्रतिबिंबोद्विधेयते ॥ जीवःपरस्यानुपाधिरिंद्रचापोयथारवेरितिपैंगिश्रुतिः ॥ यथै
षापुरुषेच्छायाएतस्मिन्नेतदाततमितिश्रुतिः ॥ ५० ॥ अ० १८ ॥ ॥ प्रतिबिंबानांमिथो
वैचित्र्येकारणमाह ॥ ॥ ॐअदृष्टानियमात्ॐ ॥ ५१ ॥ ॥ अनादिविद्याकर्मादिवैचि
त्र्याद्वैचित्र्यम् ॥ ५१ ॥ ॥ ॐअभिसंध्यादिष्वपिचैवम्ॐ॥ ५२ ॥ ॥ इच्छाद्वेषसुखदुःखादि
वैचित्र्यंचादृष्टादेव ॥ चशब्देनप्रतिक्षणंवैचित्र्यंच ॥ ५२ ॥ ॥ ॐप्रदेशादितिचेन्नांतर्भा
वात्ॐ ॥ ५३ ॥ ॥ नस्वर्गनरकभूम्यादिप्रदेशविशेषाद्वैचित्र्यम् ॥ तत्प्राप्तेरदृष्टापेक्षत्वात् ॥
एकदेशस्थितानामेववैचित्र्यदर्शनाच्च ॥ ५३ ॥ अ० ११ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्र
ह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यतृतीयःपादः ॥ ३ ॥
श्रीवेदव्यासायनमः ॥ ॥ हरिःॐयुक्तिसहितश्रुतिविरोधंश्रुतीनामपाकरोत्यनेनपादेन ॥ प्राणाए
वेदमग्रआसुस्तेभ्योभूतानिजज्ञिरेभूतेभ्योंडमंडस्यांतस्त्विमेलोकाअथप्राणाएवानादयःप्राणानि
त्याइतिकाषायणश्रुतौप्राणानामनुत्पत्तिःश्रूयते ॥ नोपादानंहींद्रियाणामतोनुत्पत्तिरिष्यते ॥ उ
पादानकृतासृष्टिःसर्वलोकेषुदृश्यतइतिभविष्यत्पर्वणि ॥ एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिचे
तिचातउच्यते॥ ॥ॐतथाप्राणाःॐ ॥ १ ॥ ॥ यथाकाशादयःपरमात्मनउत्पद्यंतेतथाप्राणाअ
पि ॥ १॥ ॥ॐगौणयसंभवात्ॐ॥२॥ ॥ अनादित्वश्रुतिर्गौणानादित्वापेक्षया॥मुख्यासंभवात्॥
नित्यान्येतानिसूक्ष्मेणहींद्रियाणिचसर्वशः ॥ तेषांभूतैरुपचयःसृष्टिकालेविधीयते ॥ परेणसाम्य
संप्राप्तेःकस्यस्यान्मुख्यनित्यतेतिहिभविष्यत्पर्वणि॥२॥ ॥ॐप्रतिज्ञानुपरोधाच्चॐ॥३॥ ॥सइदं

सर्वमसृजतेति॥ ३॥ अ० १॥ द्विधाहैवेंद्रियाणिनित्यान्यनित्यानिच॥ तत्रनित्यंमनोऽनादित्वात् ॥
नह्यमनाःपुमांस्तिष्ठत्यनित्यान्यन्यानीतिगौपवनश्रुतौमनसोऽनुत्पत्तिःसयुक्तिकाश्रूयते ॥ अ
तआह ॥ ॥ ॐतत्प्राक्श्रुतेश्चॐ ॥ ४ ॥ ॥ मनःसर्वेंद्रियाणिचेतिपूर्वोक्तत्वान्नानुत्पत्तिर्मन
सोयुज्यते ॥ पूर्वंमनःसमुत्पन्नंततोन्येषांसमुद्भवः ॥ तदनुत्पत्तिवचनमल्पोपचयकारणादिति
वायुप्रोक्तवचनंचशब्देनसंगृहीतम् ॥ ४ ॥ अ० २ ॥ ॥ नित्ययानित्ययास्तौमिपरमात्मा
नमच्युतमितिवाग्वावनित्यान्ह्येषोत्पद्यतेऽस्यांहिश्रुतिरवतिष्ठतइतिसयुक्तिकंपौष्यायणश्रुतौ
वाचोऽनुत्पत्तिरुच्यतेअतोब्रवीत् ॥ ॥ ॐतत्पूर्वकत्वाद्वाचःॐ ॥ ५ ॥ ॥ तस्मा
न्मनएवपूर्वरूपंवागुत्तररूपमितिमनःपूर्वकत्वाद्वाचोनानुत्पत्तिः ॥ वागिंद्रियस्यनित्यत्वंश्रुतिसं
निधियोग्यता ॥ उत्पत्तिर्मनसोयस्मान्ननित्यत्वंकुतश्चनेतिवायुप्रोक्ते ॥ ५ ॥ अ० ३ ॥
सप्तप्राणाःप्रभवंतितस्मादितिश्रुतिः ॥ सप्तैवमारुताबाह्येप्राणाःसप्ततथात्मनि ॥ अधिदैवेत
थाध्यात्मेसंख्यासाम्यंविदोविदुरितिचस्कांदे ॥ द्वादशवाएतेप्राणाद्वादशमासाद्वादशादित्याद्वा
दशराशयोद्वादशग्रहाइतिकौंडिन्यश्रुतौद्वादशप्राणादृश्यंते ॥ अतोवक्ति ॥ ॐसप्तगतेर्विशे
षितत्वाच्चॐ ॥ ६ ॥ ॥ ज्ञानेंद्रियापेक्षयासप्तत्वम् ॥ गुहाशयांनिहिताःसप्तसप्तेतिविशेष
णात् ॥ सप्तप्राणास्त्ववगतेःपंचप्राणाश्चकर्मणः ॥ एवंप्राणद्वादशकंशरीरेनित्यसंस्थितमितिभ
विष्यत्पर्ववचनंचशब्दात् ॥ ६ ॥ ॥ ॐहस्तादयस्तुस्थितेऽतोनैवम्ॐ ॥ ७॥ ॥ हस्तादीनांकर्मवि
षयत्वान्नसहपाठः ॥ संसारस्थितिहेतुत्वात्स्थितंकर्मविदोविदुः ॥ तस्माद्बुद्धिहेतुत्वाज्ज्ञानंगतिरि

ह्योच्यतइतिचवायुप्रोक्ते ॥ ७ ॥अ० ४ ॥ दिवीवचक्षुराततमितिव्याप्तिःप्रतीयते ॥ दूरश्रवणद
र्शनादियुक्तिश्च ॥ अणुभिःपश्यत्यणुभिःशृणोतिप्राणावाअणवःप्राणैर्ह्येतद्भवतीतिकौंडिन्यश्रु-
तिः॥ अतोवक्ति ॥ ॥ ॐअणवश्चॐ ॥८ ॥ ॥ तद्यथाह्यणुनश्चक्षसःप्रकाशोन्यातनएवमेवास्य
पुरुषस्यप्रकाशोन्यानतोऽणुर्ह्येवैषपुरुषोभवतीतिशांडिल्यश्रुतिः ॥८॥ अ० ५ ॥ नैषप्राणउदेति
नास्तमेत्येकलएवमध्येस्थाताथैनमाहुर्मध्यमइतीतिमुख्यप्राणस्यानुत्पत्तिःश्रूयते ॥ यत्प्राप्तिर्य
त्परित्यागउत्पत्तिर्मरणंतथा ॥ तस्योत्पत्तिर्मृतिश्चैवकथंप्राणस्ययुज्यतइतिचयुक्तिर्वायुप्रोक्ते ॥
आत्मनएषप्राणोजायतइतिच॥ अतआह ॥ ॥ ॐश्रेष्ठश्चॐ ॥ ९ ॥ ॥ सौक्ष्मेणह
वाएषोवतिष्ठतेस्थूलत्वेनोदेतिसूक्ष्मश्चाथोस्थूलश्च ॥ प्रकृतितःसूक्ष्मोन्यतःस्थूलोथैनमाहुःसादि
रनादिरितीतिगौपवनश्रुतेः ॥ ९ ॥ ॥ ॐनवायुक्रियेपृथगुपदेशात्ॐ ॥ १० ॥ ॥ चेष्टायां
बाह्यवायौचमुख्यप्राणेचगीयते ॥ प्राणशब्दस्त्रिषुह्येषुमुख्येमुख्यःप्रकीर्तितइतिवायुक्रिययोरपि
व्यपदेशादुत्पत्तिश्रुतिस्तयोर्नस्यात् ॥ सप्राणमसृजतखंवायुर्ज्योतिरापस्तपोमंत्राःकर्मेतिपृथगुप
देशात् ॥ भूतानिचेष्टामंत्राश्चमुख्यप्राणादिदंजगत् ॥ मुख्यप्राणःपरस्माच्चनपरःकारणान्वितइ
तिवायुप्रोक्ते॥१०॥अ० ६ ॥ प्राणादिदमाविरासीत्प्राणोधत्तेप्राणेलयमभ्युपैतिनप्राणःकिंचिदा
श्रितइत्याग्निवेश्यश्रुतौ ॥ यदाश्रयादस्यचेष्टाःसोन्यंकथमुपाश्रयेत् ॥ यथाप्राणस्तथाराजास
र्वस्यैकाश्रयोभवेदितिचयुक्तिर्भारते ॥ प्राणस्यैतद्वशेसर्वंप्राणःपरवशेस्थितः ॥ नपरःकिंचिदा
श्रित्यवर्ततेपरमोयतइतिचपैंगिश्रुतिरित्यतआह ॥ ॥ ॐचक्षुरादिवत्तुतत्सहशिष्ट्यादिभ्यःॐ

॥ ११ ॥ ॥ चक्षुरादिवन्मुख्यप्राणोऽपिपरमात्मवशएव ॥ सर्वंह्येवैतत्परमेऽवतिष्ठतेप्राणश्च
प्राणाश्चप्राणिनश्चसह्येकएवैतान्नयत्युन्नयतिवशीकरोतीतिगौपवनश्रुतौचक्षुरादिभिःसहतद्वशत्वे
नैवशंसनात् ॥ सर्वकर्तापिसन्प्राणःपरमाधारतःस्थितः ॥ कथमेवान्यथासस्याद्यतोनैवेश्वरद्व
यम् ॥ अवांतरेश्वरत्वेनतस्येश्वरवचोभवेत् ॥ अतोमध्यमतामाहुस्तस्यवेदेषुवेदिनः ॥ अनन्ये
श्वरताप्राणेतदन्येश्वरवर्जनात् ॥यतोविशेषवाक्येनह्रियतेसमतावचः ॥ नान्योऽतोऽस्तिद्रष्टाना
न्यदतोस्तिद्रष्टृत्यादिवचनंयुक्तयश्चादिशब्देनोक्ताः ॥ ११ ॥ ॥ ॐअकरणत्वाच्चनदोषस्तथा
हिदर्शयतिॐ ॥ १२ ॥ ॥ इतरेषांप्राणानांकरणत्वान्मुख्यप्राणस्याकरणत्वाच्चतस्यान्येभ्यउ
त्तमत्वंयुज्यते ॥ मांडव्यश्रुतिश्च ॥ तानिहवाएतानिसर्वाणिकरणान्यथप्राणएवाकरणस्त
स्मान्मुख्यइत्याचक्षतइति ॥ १२ ॥ अ० ७ ॥ सर्वेवाएतेमुख्यदासाःप्राणोऽपानोव्यानउदानः
समानइत्यथप्राणोवावसम्राडितिकौंडिन्यश्रुतिः ॥ प्राणापानादयःसर्वेमुख्यदासायतोऽनिश
म् ॥ अतस्तदाज्ञयानित्यंस्वानिकर्माणिकुर्वतइतियुक्तिर्वायुप्रोक्ते ॥ मुख्यस्यैवस्वरूपा
णिप्राणाद्याःपंचवायवः ॥ सएवप्राणिनांदेहेपंचधावर्ततेऽनिशमितिगौपवनश्रुतिः॥अतोवक्ति ॥
॥ ॐपंचवृत्तिर्मनोवद्व्यपदिश्यतेॐ ॥ १३ ॥ ॥ अथपंचत्त्वैतत्प्रवर्ततेप्राणोवावपंचवृत्तिः
प्राणोऽपानोव्यानउदानःसमानइतितेभ्योवाएतेभ्यःपंचदासाःप्रजायंते ॥ प्राणाद्वावप्राणोऽपा
नादपानोव्यानाद्व्यानउदानादुदानःसमानादेवसमानोयथाहवैमनःपंचधाव्यपदिश्यतेमनोबुद्धिर
हंकारश्चित्तंचेतनेतितेभ्योवाएतेभ्यपंचदासाःप्रजायंतेमनसोवावमनोबुद्धेर्बुद्धिरहंकारादहंकार

श्चित्ताच्चित्तंचेतनायाएवचेतनैवमितीति ॥ १२ ॥ अ० ८ ॥ प्राणएवाधस्तात्प्राणउपरिष्टा
त्प्राणोमध्यतःप्राणःसर्वतःप्राणएवेदंसर्वमितिप्राणस्यव्याप्तिःप्रतीयते ॥ यतःसर्वंजगद्व्याप्य
तिष्ठतिप्राणएवतु ॥ अतोधृतंजगत्सर्वमन्यथाकेनवार्यतइतियुक्तिर्वायुप्रोक्ते ॥ अणुनैतत्सृ
ज्यते ॥ अणुनैतद्धार्यते अणौलयमभ्युपैति ॥ प्राणोवाअणुःप्राणेह्येतद्भवतीतिचसौत्रायण
श्रुतिरतआह ॥ ॥ ॐअणुश्चॐ ॥ १४ ॥ ॥ सवाएषप्राणोणुर्महान्नामांतर्वाअणुर्बहिर्म
हान्प्राणोवाईशितव्येशईशोह्यसौसर्वस्येशितव्यश्चपरस्येतिकौण्डिन्यश्रुतिः ॥ १४ ॥ अ० ९ ॥
करणत्वंप्राणानामुक्तम् ॥ जीवस्यकरणान्याहुःप्राणानेतांस्तुसर्वशः ॥ यस्मात्तद्दशगाएतेदृश्यं
तेसर्वदेहिष्वितिसौत्रायणश्रुतौसयुक्तिकंजीवकरणत्वंप्रतीयते ॥ ब्रह्मणोवाएतानिकरणानिच
क्षुःश्रोत्रंमनोवागिति ॥ तद्ध्येतैःकारयतीतिचकाषायणश्रुतौ ॥ अतआह ॥ ॥ ॐज्यो
तिराद्यधिष्ठानंतुतदामननात्ॐ ॥ १५ ॥ ॥ यज्ज्योतिराद्यधिष्ठानंब्रह्मतदेवैतैःकरणैःप्रवर्तय
ति ॥ यःप्राणेतिष्ठन्नित्यादितदामननात् ॥ १५ ॥ कथंजीवकरणत्वश्रुतिरित्यतोवक्ति ॥ ॥ ॐ
प्राणवताशब्दात्ॐ ॥ १६ ॥ ॥ जीवेनैवस्वकरणैःकारयतिपरमात्माऽतोनविरोधः ॥ एष
ह्यनेनात्मनाकारयतिचक्षुषादर्शयतिश्रोत्रेणश्रावयतिमनसामानयतिबुद्ध्याबोधयतितस्मादेना
वाहुःसृतिरसृतिरितीतिभाल्लवेयश्रुतिः ॥ करणैःकरणंब्रह्मपुरुषापेक्षयाखिलम् ॥ श्रोत्रादि
भिःकारयतिकरणानीत्यतोविदुः ॥ नजीवापेक्षयामुख्यंकारयेत्परमेश्वरः ॥ केवलात्मेच्छयातस्मा
न्मुख्यत्वंतस्यनिश्चितमितिवाराहे ॥ १६ ॥ ॥ ॐतस्यचनित्यत्वात्ॐ ॥ १७ ॥ ॥ अ

नादिनित्यत्वाज्जीवकरणसंबंधस्ययुज्यतेतत्करणत्वश्रुतिः ॥ अथाविवियोगीनिकरणैर्वावनयुज्य
तेदेहेनैववियुज्यतइत्येनद्वावकरणानांकरणत्वंयद्वावनवियुज्यतइतिगौपवनश्रुतिः ॥ चशब्दः
करणसंबंधग्राही ॥ १७ ॥ अ०१० ॥ अथेंद्रियाणिप्राणावाइंद्रियाणिप्राणाहीदंद्रवंनीतिसयु
क्तिकपौत्रायणश्रुतिःसामान्येनप्राणानामिंद्रियत्वंवक्ति ॥ द्वादशैवेंद्रियाण्याहुर्मनोबुद्धीतुद्वाद
शइतिचकापायणश्रुतिः ॥ अतःकस्येंद्रियत्वंनिवार्यमित्यतोवक्ति ॥ ॥ ॐतइंद्रियाणितद्य
पदेशादन्यत्रश्रेष्ठात्ॐ ॥ १८ ॥ ॥ मुख्यप्राणमृतेऽतएवेंद्रियाणि ॥ द्वादशैवेंद्रियाण्या
हुःप्राणोमुख्यस्त्वनिंद्रियम् ॥ द्रवतामिंद्रियाणांहिनियंताप्राणएकराडितिपौत्रायणश्रुतिः ॥
श्रोत्रादीनितुपंचैवतथावागादिपंचकम् ॥ मनोबुद्धिसहायानिद्वादशैवेंद्रियाणितु ॥ विषयद्रवणा
त्तेषामिंद्रियत्वमुदाहृतम् ॥तेषांनियामकःप्राणःस्थितएवाखिलप्रभुरितिबृहत्संहितायाम् ॥१८॥
॥ ॐभेदश्रुतेःॐ ॥ १९ ॥ ॥ स्थितएवहीदंमुख्यप्राणःकरोतिकारयतिबलतिबालयतिधत्ते
धारयतिप्रभुंवाएनमाहुरथेंद्रियाणिनस्थितानिनकुर्वंतिनकारयंतिनबलंतिनबालयंतिनधत्तेनधार
यतितानिहवाएतान्यबलानितस्मादाहुरिंद्रियाणिकरणानीतिपौत्रायणश्रुतेः ॥१९॥ ॥ ॐवैलक्ष
ण्याच्चॐ ॥२०॥ ॥ पुरुषापेक्षयाप्रवृत्तिरिंद्रियाणांदृश्यतेनमुख्यस्य ॥ प्राणाग्नयएवैतस्मिन्पुरेजा
ग्रतीतिचश्रुतेः ॥२०॥ अ०११॥ विरिंचोवाइदंविरेचयतिविदधातिब्रह्मावावविरिंचएतस्माद्धीमे
रूपनामनीतिगौपवनश्रुतिः॥यस्माद्विरेचयेत्सर्वंविरिंचस्तेनभण्यते॥एकोहिकर्ताजगतोब्रह्मैवचच
तुर्मुखइतिचयुक्तिर्ब्राह्मे ॥ अथकस्मादुच्यतेपरमइतिपरमाद्ध्येतेनामरूपेव्याक्रियेतेतस्मादेनभा

हुःपरमइति ॥ अथकस्मादुच्यतेब्रह्मेतिबृहत्वाद्बृंहणत्वाच्चेत्याग्निवेश्यश्रुतिः ॥ अतआह ॥
ॐसंज्ञामूर्तिकॢप्तिस्तुत्रिवृत्कुर्वतउपदेशात्ॐ ॥ २१ ॥ ॥ नामरूपकॢप्तिःपरादेव ॥ सर्वाणिरूपा
णिविचित्यधीरोनामानिकृत्वाभिवदन्यदास्तइतिश्रुतेः ॥ त्रिवृत्कुर्वतइतिहेतुगर्भः ॥ त्रिवृत्कर
णापेक्षत्वान्नामरूपयोः ॥ सर्वनाम्नांचरूपाणांव्यवहारेषुकेशवः ॥ एकएवयतःस्रष्टाब्रह्माद्यास्त
दवांतराइतिचपाद्मे॥त्रिवृत्क्रियायतोविष्णोरूपंचतदपेक्षया ॥रूपापेक्षंतथानामव्यवहारस्तदात्म
कः ॥ अतोनाम्नश्चरूपस्यव्यवहारस्यचैकराट् ॥ हरिरेवयतःकर्तापिताऽतोभगवान्प्रभुरितिब्रह्मां
डे ॥ २१॥अ० १२ ॥ अद्भ्योहीदमुत्पद्यतेआपोवावमांसमस्थिचभवंत्यापःशरीरमापः॥ आपए
वेदंसर्वमितिचकौंडिन्यश्रुतिः॥ अम्मयंतुयतोमांसमतस्तृप्तिश्चमांसतइतिचभारते॥ पृथिवींशरीर
मप्येतिआकाशमात्मेतिचातोब्रवीति॥ ॥ ॐमांसादिभौमंयथाशब्दमितरयोश्चॐ ॥२२॥ ॥ य
त्कठिनंसापृथिवीयद्द्रवंतदापोयदुष्णंतत्तेजइतिश्रुतेर्मांसाद्येवभौमंनसर्वशरीरम् ॥ अपेजसोश्चका
र्यंयथाशब्दमंगीकर्तव्यम् ॥ यद्वावाथोविमिश्रमिश्राद्धेतद्भवतिमिश्राणिहिभूतानितस्मादेवैव
माचक्षतेभूतानीतिहिकाषायणश्रुतिः ॥ पंचभूतात्मकंसर्वंतदप्येकविवक्षया ॥ एकभूतात्मक
त्वेनव्यवहारस्तुवैदिके ॥ भौममित्येवकाठिन्यात्शौक्ल्यादौदकमित्यपि ॥ तेजिष्ठत्वात्तैजसं
चयथास्थांवचनंश्रुताविलिवायुप्रोक्ते ॥२२॥ कथंतर्हिविशेषवचनमित्यतआह ॥ ॥ ॐ
वैशेष्यात्तुतद्वादस्तद्वादःॐ ॥ २३ ॥ ॥ भूतानांतुविशेषसंयोगादेवविशेषव्यवहारः ॥ पार्थिवा
नांशरीराणामर्धेनपृथिवीस्मृता ॥ इतरेर्द्धेत्रिभागिन्यआपस्तेजस्तुभागतः ॥ इतिसामान्यतो

ज्ञेयंभेदश्चप्रतिपूरुषम् ॥ स्वर्गस्थानांशरीराणामर्धंतेजउदाहृतमितिब्रह्मसंहितायाम् ॥ सर्वा ध्यायार्थावधारणार्थाध्यायांतेद्विरुक्तिः॥ गारुडेच॥ अध्यायांतेद्विरुक्तिःस्याद्वेदेवावैदिकेऽपिवा॥ विचारोयत्रसञ्जेतपूर्वोक्तस्यावधारणे ॥ अनुक्तानांप्रमाणानांस्वीकारश्चक्तोभवेत् ॥ विनिंद्य चेतरान्मार्गान्संपूर्णफलतातथेतिच ॥ २३ ॥ अ० १३ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृत ब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यचतुर्थःपादः ॥ ४ ॥



श्रीवेदव्यासायनमः ॥ ॥ हरिःॐ ॥ साधनविचारोयमध्यायः ॥ वैराग्यार्थंगत्यादिनिरूपणाप्र
थमपादे भूतबंधोहिबंधः ॥ भूतबंधस्तुसंसारोमुक्तिस्तेभ्योविमोचनमितिवाराहे ॥ तच्चमरणे
भवति ॥ भूतानांविनिवृत्तिस्तुमरणंसमुदाहृतम् ॥ भूतानांसंप्रयोगश्चजनिरित्येवपंडितैरि
तिभारते॥ अतःकिंसाधनैरित्यतआह ॥ ॥ ॐतदंतरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्ननिरूपणा
भ्याम्ॐ ॥ १ ॥ ॥ शरीरांतरप्रतिपत्तौभूतसंपरिष्वक्तएवगच्छति ॥ वेत्थयथापंचम्यामाहुता
वापःपुरुषवचसोभवंति इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीतिप्रश्नपरिहाराभ्याम्॥१॥
॥ ॐत्र्यात्मकत्वात्तुभूयस्त्वात्ॐ ॥ २ ॥ ॥ अप्शब्दस्तुत्र्यात्मकत्वात्तुयुज्यते ॥ भूयस्त्वाच्चा
पाम् ॥ तापापनोदोभूयस्त्वमंभसोवृत्तयस्त्विमाइतिचभागवते ॥ २ ॥ ॥ ॐप्राणगते
श्चॐ ॥३॥ ॥ यत्रवावभूतानितत्रकरणानिनित्यानिहवाएतानिभूतानिचकरणानिचनैतानि
कदाचिद्वियुज्यंतेनचविलीयंतइतिभाल्लवेयश्रुतेः ॥ प्राणगतेर्भूतान्यपिसंनीतिसिद्धम् ॥ ३ ॥
ॐअग्न्यादिगतिश्रुतेरितिचेन्नभाक्तत्वात्ॐ ॥ ४ ॥ ॥ यत्रास्यपुरुषस्यमृतस्याग्निंवागप्ये
तिवातंप्राणइतिश्रुतेर्नप्राणानांजीवेनसहगतिरितिचेन्न ॥ भागतोग्न्यादिप्राप्तेः ॥ पुरुषस्यमृ
तौब्रह्मन्प्राणाभागतएवतु ॥ अधिदैवंप्राप्नुवंतिभागतोऽनुव्रजंतितम् ॥ पुनःशरीरसंप्राप्तौ
तमेवानुविशंतिचेतिब्राह्मे ॥ ब्रह्मांडेच ॥ मृतिकालेजहत्येनंप्राणाभूतानिपंचच ॥ भागतो
भागतस्त्वेनमनुगच्छंतिसर्वशइति॥४॥ ॥ ॐप्रथमेश्रवणादितिचेन्नताएवह्युपपत्तेःॐ॥५॥ ॥ त
स्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतीतिप्रथमाग्नौश्रूयते॥नभूतानिजुह्वतीति अतोनेतिचेन्न॥ताए

वमस्तुताआपःश्रद्धारूपेणहूयंते॥ इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीत्युपसंहारोपपत्तेः
॥ ५ ॥ ॥ॐअश्रुतत्वादितिचेन्नेष्टादिकारिणांप्रतीतेःॐ ॥६॥ ॥ अग्न्यादिगतिःप्रत्यक्षतः
श्रूयते ॥ अतःप्रत्यक्षश्रवणान्नयुक्तमितिचेन्न ॥ अथैनंयजमानंकिंनजहातिभूतान्येवभूतै
रेवगच्छतिभूतैर्भुंक्तेभूतैरुत्पद्यतेभूतैश्चरतिभूतैर्विचरतीतिकौठरव्यश्रुतौप्रतीतेः॥ ६ ॥ अपामसो
ममममृताअभूमेत्यादिश्रुतिविरोधइत्यतोवक्ति ॥ ॥ॐभाक्तंवानात्मवित्त्वात्तथाहिदर्शयतिॐ
॥ ७ ॥ ॥ भागतस्तदमृतत्वम् ॥ नान्यःपंथाअयनायविद्यतइतिश्रुतेरात्मविदएवमुख्यम् ॥ वा
शब्दात्पारंपर्येणात्मविदपेक्षयावा ॥ तथाहिश्रुतिः ॥ सएनमविदतोनभुनक्ति यथावेदोवान
नूक्तोन्यद्वाकर्माकृतम् ॥ यदिहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएवात्मा
नमेवलोकमुपासीत ॥ सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्य
त्कामयतेतत्तत्सृजते ॥ अमृतोवावसोमपोभवति ॥ यावदिंद्रोयावन्मनुर्यावदादित्यः ॥
कर्मणाज्ञानमाननोतिज्ञानेनामृतीभवति ॥ अथामृतानिकर्माणियतएनममृतत्वंनयंतीतिच
॥ ७ ॥ कृतस्यकर्मणोभोगेनक्षयान्मुक्तिरित्यतआह ॥ ॥ॐकृतात्ययेऽनुशयवान्दृष्ट
स्मृतिभ्याम्ॐ ॥ ८ ॥ ॥ ततःशेषेणेमंलोकमायातिपुनःकर्मकुरुतेपुनर्गच्छतिपुनरागच्छ
तीतिश्रुतेः ॥ भुक्तशेषानुशयवानिमांप्राप्यभुवंपुनः कर्मकृत्वापुनर्गच्छेत्पुनरायातिनित्यशः ॥
आचतुर्दशमाद्वर्षात्कर्माणिनियमेनतु ॥ दशावराणांदेहानांकारणानिकरोत्ययम् ॥ अतः
कर्मक्षयान्मुक्तिःकुतएवभविष्यतीत्यादिस्मृतेश्चशेषवानेवायाति ॥ ८ ॥ यथेतमेवगच्छतिय

थेतमागच्छतिस भुंक्तेसकर्मकुरुतेसपरिवर्तंनइतिगतिप्रकारेणागतिःश्रूयते ॥ अतोब्रूते ॥ ॥
ॐयथेतमनेवंचॐ ॥ ९ ॥ ॥ धूमादभ्रमभ्रादाकाशमाकाशाच्चंद्रलोकंयथेतमाकाशमाकाशा
द्वायुंवायुर्भूत्वाधूमोभवतिधूमोभूत्वाभ्रंभवत्यभ्रंभूत्वामेघोभवतिमेघोभूत्वाप्रवर्षतीतिकाषायण
श्रुतेर्यथागतमन्यथाच॥३॥ ॥ॐचरणादितिचेन्नतदुपलक्षणार्थेतिकार्ष्णाजिनिःॐ॥१०॥ ॥त
द्यइहरमणीयचरणारमणीयांयोनिमापद्यंतेकपूयचरणाःकपूयांयोनिमितिचश्रुतेश्चरणफलमेवग
मनागमनम् ॥ नयज्ञादिकृतः ॥ आचारइतिसंप्रोक्तःकर्मांगत्वेनशुद्धिदः ॥ अशुद्धिदस्त्वनाचा
रश्चरणंतूभयंस्मृतमितिस्मृतेरितिचेन्न ॥यज्ञाद्युपलक्षणार्थाचरणादिश्रुतिरितिकार्ष्णाजिनिर्मन्य
ते॥१०॥ ॥ॐआनर्थक्यमितिचेन्नतदपेक्षत्वात्ॐ॥११॥ ॥ तर्हिरमणीयाःकपूयाइत्येवस्यात्॥
चरणशब्दस्यानर्थक्यमितिचेन्न ॥ चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः ॥११॥
ॐसुकृतदुष्कृतेएवेतितुबादरिःॐ ॥ १२ ॥ ॥ धर्मंचरतमाधर्ममित्यादिप्रयोगात्सुकृतदुष्कृते
एवचरणशब्दोदितेइतिबादरिर्मन्यते ॥ तुशब्दात्स्वसिद्धांतोपिसएवेतिसूचयति ॥ तुशब्दस्तुवि
शेषेस्यात्स्वसिद्धांतेऽवधारणेइतिचनाममहोदधौ॥१२॥अ० १० ॥ पुण्यकृतामेवगमनागमनेनेतरे
षामिति ॥ अतआह ॥ ॥ ॐअनिष्टादिकारिणामपिचश्रुतम्ॐ ॥१३॥ ॥ तद्यइहशुभकृतो
येचाशुभकृतस्तेशुभमनुभूयावर्ततेपुनःकर्मकुर्वंतिपुनर्गच्छंतिपुनरागच्छंतीतिभाल्लवेयश्रुतौ ॥
॥ १३ ॥ ॥ ॐसंयमनेत्वनुभूयेतरेषामारोहावरोहौतद्गतिदर्शनात्ॐ ॥१४॥ ॥ संयमनमनुभू
यकेषांचिदारोहःकेषांचिदवरोहः॥ तुशब्दोऽवधारणे॥सर्वेवाएतेशुभकृतः॥ संयमनेप्रपतंतितत्रह

येपरद्विषोगुरुद्विषःश्रुतिद्विषस्तदवमंतारःशठामूर्खाइतितेवैततोवरुंध्यतमसिप्रपतंतिनैवैतउत्तिष्ठंते
ऽपिकर्हिचिद्वैवंवाएतदित्याहुरथयेन्येब्रह्मद्विषःस्तेनाःसुरापाइतितेवैतदनुभूयेमंलोकमनुव्रजंती
तिकौठरव्यश्रुतेः॥१४॥ ॥ॐस्मरंतिचॐ॥१५॥ ॥गच्छंतिपापिनःसर्वेनरकंनात्रसंशयः॥ तत्रभु
क्त्वापतंत्येवयेद्विषंतिजनार्दनम् ॥ महातमसिमग्नानांनतेषामुत्थितिःक्वचित् ॥ इतरेषांतुपापानां
व्युत्थानंविद्यतेपिच॥ सुखस्यानंतरंदुःखंदुःखस्यानंतरंसुखम्॥ इतिसर्वत्रनियमःपंचकष्टेतुतत्सदे
त्यादि॥१५॥अ०११॥ ॥ॐअपिसप्तॐ॥१६॥ ॥ रौरवोथमहांश्चैववह्निर्वैतरणीतथा ॥ कुं
भीपाकइतिप्रोक्तान्यनित्यनरकाणितु॥ तामिस्रश्चांधतामिस्रौद्वौनित्यौसंप्रकीर्तितौ ॥ इतिसप्तप्र
धानानिबलीयस्तूत्तरोत्तरम्॥ एतानिक्रमशोगत्वैवारोहोथावरोहणमितिचभारते॥१६॥अ०१२॥
ईश्वरस्यनरकायुक्तेः॥ सर्वंसृजतिसर्वंविलापयतिसर्वंरमयतिसर्वंनरमयतिसर्वंप्रवर्तयत्यंतरास्मिन्नि
विष्टइतिकौपारवश्रुतिविरोधइति ॥ अतोवक्ति ॥ ॥ॐतत्रापिचतद्व्यापारादविरोधःॐ॥१७॥
चशब्दाददुःखानुभवेन ॥ सस्वर्गेसभूमौसनरकेसोंधेतमसिप्रवृत्तिकृदेकएतानुविष्टोनासौदुःखभू
गीश्वरःप्रभुत्वात्सर्वंपश्यतिसर्वंकारयतिनासौदुःखभुग्यएवंवेदेतिपौत्रायणश्रुतेरविरोधः ॥ नरके
पिवसन्नीशोनासौदुःखभुगुच्यते ॥ नीचोच्चतैवदुःखादेर्भोगइत्यभिधीयते ॥ नासौनीचोच्चतां
यातिपश्यत्येवप्रभुत्वतइतिभागवततंत्रे ॥१७॥अ०१३ ॥अथैतयोःपथोर्नैकतरेणचगच्छंतिता
नीमानिक्षुद्रमिश्राण्यसकृदावर्तीनिभूतानिभवंतिजायस्वम्रियस्वेत्येतत्तृतीयंस्थानमितिगतिस्वा
तंत्र्यंभूतानांप्रतीयतइति ॥ अतआह ॥ ॥ ॐविद्याकर्मणोरितितुप्रकृतत्वात्ॐ॥ १८ ॥

विद्याकर्मापेक्षयैवतद्वचनम् ॥ तयोरपिप्रकृतत्वात् ॥ विद्यापथःकर्मपथोद्वौपंथानौप्रकीर्तितौ ॥ तद्वर्जितस्त्रिधायातितिर्यग्वानरकंतमइतिचभारते ॥ १८ ॥ अ० १४ ॥ यत्रदुःखंसुखंतत्रसर्वत्रापिप्रतीयते ॥ अपिनीचगतौकिंचित्किमुमानुषदेहिनइतिवचनान्महातमस्यपिसुखप्राप्तिरित्यतआह ॥ ॥ ॐनतृतीयेतथोपलब्धेःॐ ॥ १९ ॥ ॥ अथाविद्वानकर्मावाग्गच्छति त्रिधाहवावाग्गतिस्तिर्यग्यातनातमइतिद्वेवावसुखानुवृत्तेनतमःसुखानुवृत्तंकेवलंह्येवात्रदुःखंभवतीतिश्रुतेर्नतृतीयावाग्गतौसुखम् ॥ १९ ॥ ॥ ॐस्मर्यतेपिचलोकेॐ ॥ २० ॥ ॥ तिर्यक्षुनरकेचैवसुखलेशोविधीयते ॥ नांधेतमसिमग्नानांसुखलेशोपिकश्चनेतिभविष्यत्पर्वणि ॥ लोकसिद्धंचैतत् ॥ चशब्दाल्लोकसिद्धिरपिस्मार्तेत्याह ॥ अतिप्रियेयथाराजानदुःखंसहतेक्वचित् ॥ अत्यप्रियेसुखमपितथैवपरमेश्वरइतिब्राह्मे ॥ २० ॥ ॥ ॐदर्शनाच्चॐ ॥ २१ ॥ ॥ नारायणप्रसादेनसमिद्धज्ञानचक्षुषा ॥ अत्यंतदुःखसल्लीनान्निःशेषसुखवर्जितान् ॥ नित्यमेवतथाभूतान्विमिश्रांश्चगणान्बहून् ॥ निरस्ताशेषदुखांश्चनित्यानंदैकभागिनः॥अपश्यत्त्रिविधान्ब्रह्मासाक्षादेवचतुर्मुखइतिदर्शनवचनाच्चपाद्मे॥२१॥ ॥ ॐतृतीयेशब्दावरोधःसंशोकजस्यॐ॥२२॥ ॥ तृतीयेतृतीयतमसःश्रवणादेवशब्दानुसारेणसंशोकजमोहप्राप्तिः ॥ २२ ॥ ॥ ॐस्मरणाच्चॐ ॥ २३ ॥ ॥ महानमस्त्रिधाप्रोक्तमूर्ध्वंमध्यंतथाधरम् ॥ श्रवणेनैवमूर्छादिरधरस्ययतोभवेत् ॥ तस्मान्नविस्तरेणैतत्कथ्यतेराजसत्तमेतिकौर्मे ॥ २३ ॥ अ० १५ ॥ धूमोभूत्वाभ्रंभवतीत्याद्यन्यभावःश्रूयते ॥ सकथमितिअतोब्रवीति ॥ ॥ ॐ

तत्स्वाभाव्यापत्तिरुपपत्तेःॐ ॥ २४ ॥ ॥ धूमादिषुप्रविश्यतद्वतौगतिस्नात्स्थितौस्थितिरित्या
दिरेवतद्भावापत्तिः ॥ नह्यन्यस्यान्यथाभावोयुज्यते ॥ नचतत्पदप्राप्तिः ॥ गारुडेच ॥ धूमादि
भावप्राप्तिश्चतद्वतौगतिरेवतु ॥ स्थितौस्थितिप्रवेशश्चलघुत्वादिस्तथैवच ॥ नह्यन्यस्यान्यथा
भावोनचतत्पदमिष्यते ॥ विद्यागम्यंपदंयस्मान्नतत्प्राप्यंहिकर्मणा ॥ एकदेशस्वभावेनवा
गभेदापियुज्यते ॥ यथाजीवःपरंब्रह्मब्रह्मेदंजगदित्यपीति ॥ २४॥अ०१६ ॥ बहुस्थानगमना
त्कल्पांतमप्येवंस्यादितिअतआह ॥ ॥ ॐनातिचिरेणविशेषात्ॐ ॥ २५ ॥ ॥ तद्यइ
हरमणीयचरणाअभ्याशोहयत्तेरमणीयांयोनिमापद्यंतइतिविशेषान्नातिचिरेण ॥ स्वर्गाल्लोका
दवाक्प्राप्तोवत्सरात्पूर्वमेवतु ॥ मातुःशरीरमाप्नोतिपर्यटन्यत्रतत्रचेतिनारदीये ॥२५॥अ०१७ ॥
तइहव्रीहियवाओषधिवनस्पतयस्तिलामाषाइतिजायंतइतिश्रवणादनर्थफलत्वंचयज्ञादेरित्यतो
वक्ति ॥ ॥ ॐअन्याधिष्ठितेपूर्ववदभिलापात्ॐ ॥ २६ ॥ ॥ अन्याधिष्ठितेव्रीह्यादिशरीरे
प्रवेशोनतुभोगोऽस्य॥ धूमोभूत्वाभ्रंभवतीत्यादिपूर्वोक्तिवत्॥सोऽवाग्गतःस्थावरान्प्रविश्यत्यभोगे
नैवव्रजन्स्थूलंशरीरमेतिस्थूलाच्छरीराद्भोगाननुभुंक्तइत्यभिलापात्कौषारवश्रुतौ ॥ स्वर्गादवाग्ग
तोदेहीव्रीह्यादीतरदेहगः ॥ अभुंजंस्तुक्रमेणैवदेहमाप्नोतिकालतइतिवाराहे ॥ २६ ॥ ॥ ॐअ
शुद्धमितिचेन्नशब्दात्ॐ ॥ २७ ॥ ॥ हिंसारूपत्वात्पापस्यापिसंभवाद्दुःखंचभवत्विितिचेन्न ॥
शब्दविहितत्वात् ॥ हिंसात्ववैदिकीयातुतयानर्थोध्रुवंभवेत् ॥ वेदोक्तयाहिंसयातुनैवानर्थःकथंच
नेतिवाराहे ॥ २७ ॥ अ० १८ ॥ [illegible]

वतियोवारेतःसिंचतितमेवानुविशतीतिश्रुतिःकथमित्यतआह ॥ ॥ ॐरेतःसिग्योगोथॐ
॥२८॥ ॥ ततोरेतःसिचमेवानुप्रविशत्यथमातरमथप्रसूयतेसकर्मकुरुतइतिकौठरव्यश्रुतेः ॥ पि
तरमेवप्रथमतोविशतिमातृप्राप्तेःपश्चादपिभाव्यत्वात् ॥ २८ ॥ अ० १९ ॥ देहंगर्भस्थितंकापि
प्रविशेत्स्वर्गतोगतइतिवचनात्पश्चादेवप्रविशतीत्यतआह ॥ ॥ ॐयोनेःशरीरम्ॐ ॥ २९ ॥
पितृशरीरान्मातृयोनिमनुप्रविश्यततएवशरीरंप्राप्नोतिदिवःस्थास्नुंगच्छतिस्थास्नुभ्यःपितरंपितु--
र्मातरंमातुःशरीरंशरीरेणजायतइतिसंमितम् ॥ अथासंमितंस्थास्नुभ्योजायतेपितुर्मातुरंतरेवागर्भे
वाबहिर्वेतिपौष्यायणश्रुतेःस्थावराणिदिवः ॥ प्राप्तःस्थावरेभ्यश्चपौरुषम् ॥ पुरुषात्स्त्रियमापन्न
स्ततोदेहंयथाक्रमम् ॥ देहेनजायतेजंतुरितिसामान्यतोजनिः ॥ विशेषजननंचापिप्रोच्यमा
नंनिबोधमे ॥ स्थास्नुष्वथापिपुरुषेप्रमदायामथापिवा ॥ गर्भेवाबहिरेवाथक्वचित्स्थानांतरेषु
चेतिब्राह्मे ॥ २९॥ अ० २० ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेब्रह्मसूत्रभाष्येतृती
याध्यायस्यप्रथमःपादः ॥ १ ॥ ॥ ❀ ॥ ॥ ❀ ॥ ॥ ❀ ॥ ॥
श्रीगुरुभ्योनमः ॥ ॥ हरिःॐ॥ भक्तिरस्मिन्पादउच्यते ॥ भक्त्यर्थंभगवन्महिमोक्तिः ॥
ॐसंध्येसृष्टिराहहिॐ ॥ १ ॥ ॥ नस्वमोपितंविनाप्रतीयते ॥ नतत्ररथानरथयोगानपंथानो
भवंत्यथरथान्रथयोगान्पथःसृजतइत्यादिश्रुतेः ॥१॥ ॥ ॐनिर्मातारंचैकेपुत्रादयश्चॐ ॥ २ ॥
॥ यएषुसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्ममाणइतिच ॥ एतस्माद्ध्येवपुत्रोजायतएतस्माद्भ्राते
तस्माद्भ्रातृव्यादेनंपुरुषमेषस्वमेनाभिहंतीतिगौपवनश्रुतिश्च ॥ २ ॥ केनसाधनेन ॥ ॥ ॐ

मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्ॐ ॥ ३ ॥ ॥ अनादिमनोगतांश्चसंस्कारान्
स्वेच्छामात्रेणदर्शयतिनान्येनसाधनेन ॥ सम्यगनभिव्यक्तत्वात् ॥ ब्रह्मांडेच ॥ मनोगतां
स्तुसंस्कारान्स्वेच्छयापरमेश्वरः ॥ प्रदर्शयतिजीवायसस्वप्नइतिगीयते ॥ यदन्यथात्वजा
ग्रत्वंसाभ्रांतिस्तत्रतत्कृता ॥ अनभिव्यक्तरूपत्वान्नान्यसाधनजंभवेदिति ॥ ३ ॥ ॥ ॐसू
चकश्चहिश्रुतेराचक्षतेचतद्विदःॐ ॥ ४ ॥ ॥ साधनांतराभावेपिभावाभावसूचकत्वेनेश्वरो
दर्शयति ॥ यदाकर्मसुकाम्येषुस्त्रियंस्वप्नेऽभिपश्यति ॥ समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननि
दर्शनइत्यादिश्रुतेः ॥ हिशब्दाद्दर्शनाच्च ॥ यद्वापिब्राह्मणोब्रूयाद्देवताऋषभोपिवा ॥ स्वप्नस्थ
मथवाराजासतथैवभविष्यतीत्याचक्षतेचस्वप्नविदोव्यासादयः ॥ ४॥ अ० १ ॥ ॥ ॐपराभि
ध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्ययौॐ ॥ ५ ॥ ॥ बंधमोक्षप्रदत्वात्सएवस्वप्नतिरस्कर्ता ॥
स्वप्नादिबुद्धिकर्ताचतिरस्कर्तासएवतु ॥ तदिच्छयायतोह्यस्यबंधमोक्षौप्रतिष्ठितावितिचकौर्मे
॥ ५ ॥ अ० २ ॥ ॥ ॐदेहयोगाद्वासोऽपिॐ ॥ ६ ॥ ॥ देहयोगेनवासोजाग्रदपिनतएव ॥
सएवजागरितेस्थापयतिसस्वप्नेसप्रभुस्तुराषाट्सएकोबहुधाभवतीतिकौठरव्यश्रुतेः ॥६॥अ० ३॥
ॐतदभावोनाडीषुतच्छ्रुतेरात्मनिहॐ ॥ ७ ॥ ॥ जाग्रत्स्वप्नाभावःसुप्तिर्नाडीस्थेपरमात्म
नि ॥ आसुतदानाडीषुसुप्तोभवतिसतासौम्यतदासंपन्नोभवतीतिश्रुतेः ॥ ७ ॥ अ० ४ ॥
ॐअतःप्रबोधोऽस्मात्ॐ ॥ ८ ॥ ॥ यतस्तस्मिन्सुप्तिः ॥ एषएवसुप्तंप्रबोधयतिएतस्मा
ज्जीवउत्तिष्ठत्येषप्रमातैषपरमइतिकौंडिन्यश्रुतिः ॥ ८ ॥ अ० ५ ॥ ॥ ॐसएवचकर्मानु

स्मृतिशब्दविधिभ्यःॐ ॥ ९ ॥ ॥ नचकेषांचित्स्वमादिकर्तानतुसर्वेषामिति ॥ एषह्येवसा
धुकर्मकारयतिकर्मण्यवधारणात् ॥ प्रदर्शकस्तुसर्वेषांस्वमादेरेकएवतु ॥ परमःपुरुषोविष्णु
स्ततोऽन्योनास्तिकश्चनेत्यनुसारिस्मृतेश्च ॥ एषस्वमान्दर्शयत्येषप्रबोधयत्येषएवपरमआनंदइ
तिचश्रुतेः ॥ आत्मानमेवलोकमुपासीतेतिचविधिः ॥ १ ॥ अ०६ ॥ ॥ ॐमुग्धेऽर्धसंपत्तिःपरि
शेषात्ॐ ॥ १० ॥ ॥ मोहावस्थायांपरमेश्वरेर्धप्राप्तिर्जीवस्य ॥ हृदयस्थात्पराज्जीवोदूर
स्थोजाग्रदेष्यति ॥ समीपस्थस्तथास्वप्नंस्वपित्यस्मिँल्लयंव्रजन् ॥ यतएवंत्रयोवस्थामोहस्तुप
रिशेषतः ॥ अर्धप्राप्तिरितिज्ञेयोदुःखमात्रप्रतिस्मृतेरितिवाराहे ॥ सोपिततएवेतिसिद्धम् ॥
मूर्च्छाप्रबोधनंचैवयतएवप्रवर्तते ॥ सईशःपरमोज्ञेयःपरमानंदलक्षणइतिकौर्मे ॥ १० ॥ अ०७ ॥
स्थानापेक्षयापरमात्मनोभेदादनुग्राह्यानुग्राहकभावइत्यतआह ॥ ॥ ॐनस्थानतोपिप
रस्योभयलिंगंसर्वत्रहिॐ ॥ ११ ॥ ॥ स्थानापेक्षयापिपरमात्मनोनभिन्नंरूपम् ॥ स
र्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षतइतिहिश्रुतिः ॥ एकरूपःपरोविष्णुःसर्वत्रापिनसंशयः ॥ ऐश्वर्याद्रू
पमेकंचसूर्यवद्बहुधेयतइतिमात्स्ये ॥ प्रतिदृशमिवनैकधार्कमेकंसमधिगतोस्मिविधूतभेदमोह
इतिचभागवते ॥ ११ ॥ ॥ ॐनभेदादितिचेन्नप्रत्येकमतद्वचनात्ॐ ॥ १२ ॥ ॥ कार्यका
रणबद्धौताविष्येतेविश्वतैजसौ ॥ प्राज्ञःकारणबद्धस्तुद्वौतुतुर्येनसिध्यतइतिभेदवचनान्नेतिचे
न्न ॥ एषतआत्मांतयाम्यमृतः ॥ अयमेवसः ॥ योयमात्मेदममृतमिदंब्रह्मेदंसर्वम् ॥ अयंवैहर
योयंवैदशचसहस्राणिचबहूनिचानंतानिचतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानु

भूरित्यनुशासनमितिप्रत्येकमभेदवचनात् ॥१२॥ ॥ ॐअपिचैवमेकेॐ ॥ १३ ॥ ॥ ए ग्रं० २
वमभेदेनैव ॥ चशब्दाद्दनंतरूपत्वंचैकेशाखिनःपठंति ॥ अमात्रोनंतमात्रश्चद्वैतस्योपशमः
शिवः ॥ ओंकारोविदितोयेनसमुनिर्नेतरोजनइति ॥ अभेदेपिभेदव्यपदेशःस्थानभेदादैश्वर्य अ० ३
योगाच्चयुज्यते ॥ ब्रह्मतर्कैच ॥ बद्धोबंधादिसाक्षित्वाद्भिन्नोभिन्नेषुसंस्थितेः ॥ निर्दोषा
द्वयरूपोपिकथ्यतेपरमेश्वरइति ॥१३॥अ०८ ॥ रूपवत्वादनित्यत्वमित्यतोवक्ति ॥ ॥ ॐअ
रूपवदेवहितत्प्रधानत्वात्ॐ ॥ १४ ॥ ॥ प्रकृत्यादिप्रवर्तकत्वेनतदुत्तमत्वान्नैवरूपवद्ब्रह्म ॥ हि
शब्दादस्थूलमनण्वित्यादिश्रुतेश्च ॥ भौतिकानिहिरूपाणिभूतेभ्योऽसौपरोयतः ॥ अरूपवानतः
प्रोक्तःक्तदव्यक्ततःपरइतिचमात्स्ये ॥१४॥ ॥ ॐप्रकाशवच्चावैयर्थ्यम्ॐ ॥१५॥ ॥ यदापश्यः
पश्यतेरुग्मवर्णश्यामाच्छबलंप्रपद्येसुवर्णज्योतिरित्यादिश्रुतीनांचनवैय्यर्थ्यंविलक्षणरूपत्वात् ॥
यथाचक्षुरादिप्रकाशेविद्यमानेपिवैलक्षण्यादप्रकाशादिव्यवहारः ॥१५॥ ॥ ॐआहचतन्मात्रम्
ॐ ॥ १६ ॥ ॥ वैलक्षण्यंचोच्यतेरूपस्यविज्ञानानंदमात्रत्वम् ॥ ऐकात्म्यप्रत्ययसार
मिति ॥ आनंदमात्रमजरंपुराणमेकंसंतंबहुधादृश्यमानम् ॥ तमात्मस्थंयेनुपश्यंतिधीरास्तेषां
सुखंशाश्वतंनेतरेषामितिचतुर्वेदशिखायाम्॥१६॥ ॥ ॐदर्शयतिचाथोअपिस्मर्यतेॐ ॥१७॥
दर्शयतिचानंदस्यरूपत्वम् ॥ तद्विज्ञानेनपरिपश्यंतिधीराः॥आनंदरूपममृतंयद्विभातीति॥शुद्ध
स्फटिकसंकाशंवासुदेवंनिरंजनम् ॥ चिंतयीतयतिर्नान्यंज्ञानरूपादृतेहरेरितिचमात्स्ये ॥१७॥ ॥४१॥
अ० ९ ॥ ॥ ॐअतएवचोपमासूर्यकादिवत्ॐ ॥ १८ ॥ ॥ यस्मादेवंपरमेश्वररूपाणांमिथोनक

श्चिद्भेदः ॥ अतएवसादृश्याज्जीवस्यापितथास्यादिति ॥ तस्यप्रतिबिंबत्वमुक्त्वाचशब्देनभेदंद
र्शयति ॥ रूपंरूपंप्रतिरूपोबभूव ॥ बहवःसूर्यकायद्वत्सूर्यस्यसदृशाजले ॥ एवमेवात्मकालोके
परात्मसदृशामताइति ॥ अतएवभिन्नत्वतदधीनत्वतत्सादृश्यैरेवसूर्यकाद्युपमानोपाध्यधीनत्वा
दिना ॥१८॥ अ० १० ॥ नित्यासिद्धत्वात्सादृश्यस्यनित्यानंदज्ञानादेर्नभक्तिज्ञानादिनाप्रयोजन
मित्यतोब्रवीति ॥ ॥ ॐअंबुवदग्रहणात्तुनतथात्वम्ॐ ॥ १९ ॥ ॥ अंबुवत्स्नेहेनग्रहणंज्ञा
विनानतत्सादृश्यंसम्यगभिव्यज्यते ॥ यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्मावृणुतेतनूंस्वामितिश्रु
तिः ॥ महत्त्वबुद्धिर्भक्तिस्तुस्नेहपूर्वाऽभिधीयते ॥ तयैवव्यज्यतेसम्यग्जीवरूपंसुखादिकमिति
पाद्मे॥१९॥अ० ११॥ ॥ॐवृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवम्ॐ॥२०॥ ॥ तस्यच
भक्तिज्ञानादेर्वृद्धिह्रासभात्वंविद्यते ॥ ब्रह्मादीनामुत्तमानांसर्वेषांभक्तत्वेंतर्भावात् ॥ एवंभक्त्या
दिविशेषांगीकारादेवेश्वरस्यब्रह्मादीनन्यान्प्रतिसामंजस्यंभवति ॥ साधनस्योत्तमत्वेनसाध्यंचो
त्तममोमुयुः॥ब्रह्मादयःक्रमेणैवयथाऽऽनंदश्रुतिश्रुताइतिचब्राह्मे॥२०॥ कुतः ॥ ॥ॐदर्शनाच्च
ॐ॥२१॥ ॥अथातआनंदस्यमीमांसाभवतीत्यारभ्यब्रह्मपर्यंतेषुसुखविशेषदर्शनात् ॥ चशब्दा
त्स्मृतिः ॥ यथाभक्तिविशेषोऽत्रदृश्यतेपुरुषोत्तमे॥तथामुक्तिविशेषोपिज्ञानिनोर्लिंगभेदतइति ॥
२१॥अ० १२॥सृष्टिसंहारकर्तृत्वमेवास्यनपालकत्वंस्वतःसिद्धेरित्यतआह ॥ ॥ॐप्रकृतैतावत्त्वं
हिप्रतिषेधतिततोब्रवीतिचभूयःॐ ॥ २२ ॥ ॥ उक्तसृष्टिसंहारकर्तृत्वमात्रंप्रतिषिध्यततोधिकं
ब्रवीति॥नैतावदेनापरोअन्यदस्त्युक्षासद्यावापृथिवीबिभर्तीति॥चशब्दात्स्मृतिश्च॥सृष्टिंचपालनं

चैवसंहारंनियमंतथा ॥ एकएवकरोतीशःसर्वस्यजगतोहरिरितिब्रह्मांडे ॥ २२॥अ० १३ ॥ पर
मात्माऽपरोक्ष्यंतत्प्रसादादेवनजीवशक्त्येतिवक्तुमुच्यते॥ॐतदव्यक्तमाहहिॐ॥२३॥ अव्यक्तमे
वतद्ब्रह्मस्वतः ॥ अरूपमक्षरंब्रह्मसदाऽव्यक्तंचनिष्कलम्॥ यज्ज्ञात्वामुच्यतेजंतुरानंदश्चाक्षयोभ
वेदितिकौठरव्यश्रुतिः॥२३॥ ॥ॐअपिसंराधनेप्रत्यक्षानुमानाभ्याम्ॐ॥२४॥ ॥ आराधनेऽप्य
व्यक्तमेवज्ञानिप्रत्यक्षेण॥इतरेषामतिसूक्ष्मत्वल्लिंगादनुमानेन ॥ ननमाराधयित्वापिकश्चिद्व्यक्तीक
रिष्यति॥नित्याव्यक्तोयतोदेवःपरमात्मासनातनइतिचब्रह्मवैवर्ते॥२४॥ नित्याऽव्यक्तस्वरूपेणतथै
वतिष्ठति॥ व्यक्तंकिंचिद्रूपंगृहीत्वादृश्यते ॥ यथाग्न्यादयस्तन्मात्रारूपेणादृश्याअपिस्थूलरूपे
णदृश्यंतेएवमितिचेन्न॥ ॥ ॐप्रकाशवच्चावैशेष्यम्ॐ॥२५॥ ॥ अग्न्यादिवत्स्थूलसूक्ष्मत्वविशे
षाभावात् ॥ नासौसूक्ष्मोनस्थूलःपरएवसभवतितस्मादाहुःपरमइतिमांडव्यश्रुतेः ॥ स्थूल
सूक्ष्मविशेषोत्रनक्वचित्परमेश्वरे ॥ सर्वत्रैकप्रकारोऽसौसर्वरूपेष्वजोयतइतिचगारुडे ॥ अव्यक्त
व्यक्तभावौचनक्वचित्परमेश्वरे॥सर्वत्राव्यक्तरूपोयंयतएवजनार्दनइतिचकौर्मे॥२५॥तर्हिकिंयत्ने
नेत्यतआह ॥ ॥ ॐप्रकाशश्चकर्मण्यभ्यासात्ॐ ॥ २६ ॥ ॥ विषयभूतेतास्मिन्नेवश्रवणाद्य
भ्यासात्प्रकाशश्चभवति॥आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रुतेः॥२६॥
नित्याव्यक्तस्यकथंप्रकाशइत्यतउच्यते॥ ॥ॐअतोनंतेनतथाहिलिंगम्ॐ॥२७॥॥उभयत्रप्रमा
णभावात्तत्प्रसादादेवप्रकाशोभवति॥तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चांतेविश्वमायानि
वृत्तिरितिलिंगात्॥युज्यतेचतस्यानंतशक्तित्वात्॥नित्याव्यक्तोपिभगवानीक्ष्यतेनिजशक्तितः॥

तमृतेपरमात्मानंकःपश्येतामितंप्रभुमितिचनारायणाध्यात्मे॥२७॥अ० १४॥स्वरूपेणानंदादिना
कथमानंदित्वादि॥अत्रोच्यते॥ ॥ ॐउभयव्यपदेशात्त्वहिकुंडलवत्ॐ॥२८॥ ॥आनंदंब्रह्मणो
विद्वान् ॥ अथैषएवपरमानंदइत्युभयव्यपदेशादहिकुंडलवदेवयुज्यते ॥ यथाहिःकुंडली
कुंडलंच॥तुशब्दात्केवलश्रुतिगम्यत्वंदर्शयति॥२८॥ ॥ॐप्रकाशाश्रयवद्वातेजस्त्वात्ॐ॥२९॥
यथाऽऽदित्यस्यप्रकाशत्वंप्रकाशित्वंचएवंवादृष्टांतः॥ तेजोरूपत्वाद्ब्रह्मणः॥२९॥ ॥ॐपूर्ववद्वाॐ
॥३०॥ यथैकएवकालःपूर्वइनिव्यवच्छेदकोव्यवच्छेद्यश्चभवति॥अतिसूक्ष्मत्वापेक्षयाएषदृष्टां
तः॥स्थूलमतीनांचप्रदर्शनार्थमहिकुंडलदृष्टांतः॥प्रकाशवत्कालवद्वायथागेशयनादिकम्॥ब्रह्मण
श्चमुक्तानामानंदोभिन्नएवत्विविनारायणाध्यात्मे ॥ आनंदेनत्वभिन्नेनव्यवहारःप्रकाशवत् ॥
कालवद्वायथाकालःस्वावच्छेदकतांव्रजेदितिब्राह्मे ॥ ३० ॥ ॥ ॐप्रतिषेधाच्चॐ ॥ ३१ ॥
एकमेवाद्वितीयंनेहनानास्तिकिंचनेतिभेदस्य ॥३१॥ अ० १५॥ ॥ ॐपरमतःसेतून्मानसंबंधभेद
व्यपदेशेभ्यःॐ ॥३२॥ ॥ नचानंदादित्वाल्लोकानंदादिवत् ॥ एषसेतुर्विधृतिर्यएप आनंदःपरस्यैष
नित्योमहिमाब्राह्मणस्येतिसेतुत्वंह्युच्यते ॥ यतोवाचोनिवर्ततंतइत्युन्मानत्वम् ॥ एतस्यैवानं
दस्यान्यानिभूतानिमात्रामुपजीवंतीतिसंबंधः ॥ अन्यज्ज्ञानंतुजीवानामन्यज्ज्ञानंपरस्यच ॥
नित्यानंदाव्ययंपूर्णंपरज्ञानंविधीयतइतिभेदः ॥ अतोलौकिकत्वात्परमेवब्रह्मानंदादिकम् ॥३२॥
॥ ॐदर्शनाच्चॐ ॥ ३३ ॥ ॥ दर्शनादेवचान्यानंदादीनाम् ॥ अदृष्टमव्यवहार्यमव्यपदे
श्यंसुखंज्ञानमोजोबलमितिब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षतेतस्माद्ब्रह्मेत्याचक्षतइतिकौंडिन्यश्रुतिः॥

॥३३॥अप्रसिद्धस्यकथमानंदइत्यादिव्यपदेशइत्यतोवक्ति ॥ ॥ ॐबुद्ध्यर्थःपादवत्ॐ॥३४॥ ॥
जीवेश्वरसंबंधज्ञापनार्थमप्रसिद्धोपिपादोयथापादशब्देनव्यपदिश्यते ॥ पादोस्यविश्वाभूतानी
ति तथा अलौकिकोपिज्ञानादिस्तच्छब्दैनैवभण्यते ॥ ज्ञापनार्थायलोकस्ययथाराजेवदेवरा
डितिब्राह्मे॥३४॥अ० १६॥ परानंदमात्रत्वेकथंब्रह्माद्यानंदादीनांविशेषइत्यतउच्यते ॥ ॥ ॐ
स्थानविशेषात्प्रकाशादिवत्ॐ ॥३५॥ ॥ यथादित्यस्यदर्पणादिस्थानविशेषात्प्रतिबिंबेविशेष
एवमानंदादेरपि ॥ ब्रह्मादिगुणवैशेष्यादानंदादिपरस्यच ॥ प्रतिबिंबत्वमायातिमध्योच्चादिवि
शेषतइतिवाराहे ॥३५॥ ॥ ॐउपपत्तेश्चॐ ॥ ३६ ॥ ॥ ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनाम
नादितः ॥ ब्रह्मादीनांसूपपन्नाद्यानंदादेर्विचित्रतेतिपाद्मे ॥३६॥अ० १७ ॥ ध्यानकालेयच्चित्ते
प्रदृश्यतेतदेवब्रह्मरूपम्॥अतःकथमव्यक्तमित्यतआह॥ ॥ ॐतथाऽन्यत्प्रतिषेधात्ॐ ॥३७॥
यथाजीवानंदादेरन्यद्ब्रह्मतथोपासाकृतादपि ॥ यन्मनसानमनुतेयेनाहुर्मनोमतम् ॥ तदेवब्रह्म
त्वंविद्धिनेदंयदिदमुपासतइतिप्रतिषेधात् ॥ पश्यंतिपरमंब्रह्मचित्तेयत्प्रतिबिंबितम् ॥ ब्रह्मैवप्रति
बिंबेयदतस्तेषांफलप्रदम् ॥ तदुपासनंचभवतिप्रतिमोपासनंयथा ॥ दृश्यतेत्वापरोक्ष्येणज्ञानेनै
वपरंपदम् ॥ उपासनात्त्वापरोक्ष्यंगमयेत्तत्प्रसादतइतिचब्रह्मतर्के॥३७॥अ० १८ ॥ देशकालांत
रेऽन्यतोऽपिसृष्ट्यादियुक्तेत्यतोब्रूते ॥ ॥ ॐअनेनसर्वगतत्वमायामयशब्दादिभ्यःॐ ॥३८॥
सर्वदेशकालवस्तुष्वनेनैवसृष्ट्यादिकंप्रवर्तते ॥ एषसर्वएषसर्वगतएषसर्वेश्वरएषोऽचिंत्यएषपरम
इतिभाल्लवेयश्रुतिः ॥ सर्वत्रसर्वमेतस्मात्सर्वदासर्ववस्तुषु ॥ स्वरूपभूतयानित्यशक्त्यामायाख्य

यायतः ॥ अतोमायामयंविष्णुंप्रवदंतिसनातनमितिचतुर्वेदशिखायाम् ॥ आदिशब्दादन्यत्रप्र
माणाभावाच्च ॥ ३८॥अ०१९ ॥ कर्मापेक्षत्वात्फलदानस्यतदेवददातीतिनवाच्यम् ॥ कुतः ॥
ॐफलमतउपपत्तेःॐ ॥ ३९ ॥ ॥ अतएवेश्वरात्फलंभवति ॥ नह्यचेतनस्यस्वतःप्रवृत्तिर्युज्य
ते ॥३९॥ ॥ ॐश्रुतत्वाच्चॐ ॥४०॥ ॥ विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणमिति ॥ ४० ॥
ॐधर्मंजैमिनिरतएवॐ ॥ ४१ ॥ ॥ यतःफलंतदेवकर्मईश्वराद्भवति॥एषह्येवसाधुकर्मकारय
तीतिश्रुतेरितिजैमिनिः ॥ ४१॥ ॥ ॐपूर्वंतुबादरायणोहेतुव्यपदेशात्ॐ ॥ ४२ ॥ ॥ परस्यक
र्मणश्चोभयोःफलकारणत्वेपिनकर्मपरप्रवर्तकंपरएवकर्मणःप्रवर्तकः ॥ पुण्येनपुण्यंलोकंनयतिपा
पेनपापमितिहेतुव्यपदेशात् ॥ द्रव्यंकर्मचकालश्चेतिच॥४२॥अ०२०॥ ॥ इतिश्रीमत्कृष्णद्वैपा
यनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पाचार्यविरचितेतृतीयाध्यायस्यद्वितीयःपादः ॥२॥
श्रीगुरुभ्योनमः ॥ ॥ हरिःॐ ॥ उपासनास्मिन्पादउच्यते ॥ सर्वपरिज्ञानंप्रथमतउच्य
ते ॥ ॥ ॐसर्ववेदांतप्रत्ययंचोदनाद्यविशेषात्ॐ ॥ १ ॥ ॥ अंतोनिर्णयः ॥
उभयोरपिदृष्टोंतस्त्वनयोस्तत्त्वदर्शिभिरितिवचनात् ॥ सर्ववेदनिर्णयोत्पाद्यज्ञानंब्रह्म ॥ आत्मे
त्येवोपासीतेत्यादिविधीनांतदुक्तयुक्तीनांचाविशिष्टत्वात् ॥ १ ॥ ॥ ॐभेदान्नेतिचेन्नैकस्यामपि
ॐ ॥ २ ॥ ॥ विज्ञानमानंदंब्रह्म ॥ सत्यंज्ञानमनंतंब्रह्मेत्यादिप्रतिशाखमुक्तिभेदान्नै
काधिकारिविषयाःसर्वशाखाइतिचेन्नएकस्यामपिशाखायामात्मेत्येवोपासीत ॥ कंब्रह्मखंब्र
ह्मेत्यादिभेददर्शनात् ॥ २ ॥ ॥ ॐस्वाध्यायस्यहितथात्वेनहिसमाचारेऽधिकाराच्चॐ

॥ ३ ॥ ॥ स्वाध्यायोऽध्येतव्यइतिसामान्यविधेःहिशब्दाद्वेदःकृत्स्नोऽधिगंतव्यःसरहस्यो
द्विजन्मनेतिस्मृतेः ॥ सर्ववेदोक्तमार्गेणकर्मकुर्वीतनित्यशः ॥ आनंदोहिफलंयस्माच्छाखा
भेदोह्यशक्तिजः ॥ सर्वकर्मकर्तायस्मादशक्ताःसर्वजंतवः ॥ शाखाभेदंकर्मभेदंव्यासस्तस्माद
चीक्लृपदितिसमाचारेसर्वेषामधिकाराच्च ॥ ३ ॥ ॥ ॐसलिलवच्चतन्नियमःॐ ॥ ४ ॥
॥ यथासर्वसलिलंसमुद्रंगच्छत्येवंसर्वाणिवचनानिब्रह्मज्ञानार्थानीतिनियमः ॥ आग्नेयेच ॥
यथानदीनांसलिलंशक्येसागरगंभवेत् ॥ एवंसर्वाणिवाक्यानिपुंशक्त्याब्रह्मवित्तयइति ॥ ४ ॥
॥ ॐदर्शयतिचॐ ॥ ५ ॥ ॥ सर्वैश्चवेदैःपरमोहिदेवोजिज्ञास्योऽसौनाल्पवेदैःप्रसिध्येत् ॥ त
स्मादेनंसर्ववेदानधीत्यविचार्यचज्ञातुमिच्छेन्मुमुक्षुरितिचतुर्वेदशिखायाम् ॥ सर्वान्वेदानसेतिहा
सान्सपुराणान्सयुक्तिकान् । सपंचरात्रान्विज्ञायविष्णुर्ज्ञेयोनचान्यथेतिब्रह्मतर्के ॥५॥अ० १॥
सर्वैर्वेदैर्ज्ञेयोनोपास्योऽशक्यत्वादित्यतआह ॥ ॥ ॐउपसंहारोऽर्थाभेदाद्विधिशेषवत्समा
नेचॐ ॥ ६ ॥ ॥ सर्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैवपरमात्मोपास्यः ॥ उपास्य
एकःपरतःपरोयोवेदैश्चसर्वैःसहचेतिहासैः ॥ सपंचरात्रैःसपुराणैश्चदेवःसर्वैर्गुणैस्तत्रतत्रप्रतीतैरिति
भाल्लवेयश्रुतिः ॥ आग्नेयेच ॥ विधिशेषाणिकर्माणिसर्ववेदोदितान्यपि ॥ यथाकार्याणिसर्वैश्च
सर्वाण्येवाविशेषतः ॥ एवंसर्वगुणान्सर्वदोषाभावांश्चयत्नतः ॥ योजयित्वैवभगवानुपास्योना
न्यथाक्वचिदिति ॥ समानविषयेचोपसंहारोनतुसोरोदीदित्यादीनाम् ॥ गुणैरेवसतूपास्योनै
वदोषैःकथंचन ॥ गुणैरपिनतूपास्योयेपूर्णत्वविरोधिनइतिबृहत्तंत्रे ॥ ६ ॥ ॥ ॐअन्यथात्वं

चशब्दादितिचेन्नाविशेषात्ॐ ॥ ७ ॥ ॥ आत्मेत्येवोपासीतेतिशब्दादुपसंहारस्यान्यथात्व
मितिचेन्न ॥ एतेगुणानोपास्याइतिविशेषवचनाभावात् ॥ सर्वैर्गुणैरेकएवेशितासावुपासितव्यो
नैवदोषैःकदाचिदितिविशेषवचनाच्च ॥ आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥ ७ ॥ ॥
ॐनवाप्रकरणभेदात्परोवरीयस्त्वादिवत्ॐ ॥८॥ ॥ प्रकरणभेदान्नवोपसंहारःकर्तव्यः ॥ परो
वरीयस्त्वादिषुतावदेवह्युक्तम् ॥८॥ ॥ ॐसंज्ञातश्चेत्तदुक्तमस्तितुतदपिॐ ॥९॥ ॥सर्वविद्या
उक्त्वासोऽहंनामविदेवास्मिनात्मविदितिवचनात्सर्वस्यब्रह्मनामत्वात्तदुपसंहारःकार्यः॥ नामत्वात्स
र्वविद्यानांगुणानामुपसंहृतिः॥कार्यैवब्रह्मणिपरेनात्रकार्याविचारणेतिब्रह्मतर्कइतिचेत्सत्यम्॥ उ
क्तोप्युपसंहारः ॥ तत्प्रमाणमप्यस्त्येव ॥ नामवाएताब्रह्मणःसर्वविद्यास्तस्मादेकःसर्वगुणै
र्विचिंत्यइतिकौंडिन्यश्रुतौ॥१॥अ०२॥ ॥ ॐप्राप्तेश्चसमंजसम्ॐ॥१०॥ ॥युज्यतेचोपसंहारोऽ
नुपसंहारश्च ॥ योग्यताविशेषात् ॥ गुणैःसर्वैरुपास्योऽसौब्रह्मणापरमेश्वरः ॥ अन्यैर्यथाक्रमंचैव
मानुषैःकैश्चिदेवत्विितिभविष्यत्पर्वणि ॥ १०॥अ०३ ॥ ॥ ॐसर्वभेदादन्यत्रेमेॐ ॥ ११ ॥
सर्वगुणयुक्तत्वेनोपासनादन्यत्रैवफलेब्रह्मादयोभवंति॥ संपूर्णोपासनाद्ब्रह्मासंपूर्णानंदभाग्भवेत् ॥
इतरेतुयथायोगंसम्यङ्मुक्तौभवंतिहीतिपाद्मे ॥ ११ ॥अ०४॥ ॥ सर्वेषांमुमुक्षूणांकिंयन्नियमे
नोपास्यमित्यतआह ॥ ॥ ॐआनंदादयःप्रधानस्यॐ ॥ १२ ॥ ॥ प्रधानफलस्यमो
क्षस्यार्थेआनंदोज्ञानंसदात्मेत्युपास्याएव ॥ सच्चिदानंदआत्मेतिब्रह्मोपासाविनिश्चिता ॥
सर्वेषांचमुमुक्षूणांफलसाम्यादपेक्षितेतिब्रह्मतर्के ॥१२॥ अ०५ ॥ ॥ ॐप्रियशिरस्त्वाद्यप्राप्ति

ताभवेत् ॥ अयोग्योपासनादीयुरनर्थंचार्थनाशनमितिब्रह्मतंत्रे ॥ २६ ॥अ० १६ ॥ मुक्तस्यो
पासनाकर्तव्यानवेत्यतोब्रवीति ॥ ॥ ॐहानौतूपायनशब्दशेषत्वात्कुशाच्छंदस्तुत्युपगान
वत्तदुक्तम्ॐ ॥ २७ ॥ ॥ नियतस्वाध्यायानंतरंस्वेच्छयाकुशाग्रहणस्तुत्यपगानवदेवमोक्ष
उपासनादि ॥ ब्रह्मविदाप्नोतिपरमितिमोक्षवाक्यशेषत्वादितरेषाम् ॥ तच्चोक्तम् ॥ एत
त्सामगायन्नास्तइत्यादि ॥ ब्रह्मतर्कैचमुक्ताअपिहिकुर्वंतिस्वेच्छयोपासनंहरेः ॥ निय
मानंतरंविप्राःकुशाद्यैरप्यधीयतइतिकृष्णोमुक्तैरिज्यतेवीतमोहैरितिचभारते ॥ २७ ॥ ॥ ॐ
सांपरायेतर्तव्याभावात्तथाह्यन्येॐ॥ २८ ॥ ॥ स्वेच्छयेत्यंगीकार्यम् ॥ मुक्तस्यतीर्णत्वात् ॥
तीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवतीतिह्यन्येपठंति ॥ वायुप्रोक्तेच ॥ स्थितप्रज्ञत्वमाप्ताये
ज्ञानेनपरमात्मनः ॥ ब्रह्मलोकंगताःसर्वैब्रह्मणाचपरंगताः ॥ तीर्णतर्तव्यभागाश्चस्वेच्छयोपासतेपर
मिति ॥ २८॥अ० १७ ॥ कर्माणिकुर्वंतिनवेत्यतआह ॥ ॥ ॐछंदतउभयाविरोधात् ॥२९॥
स्वेच्छयाकुर्वंतिनवा॥बंधप्रत्यवाययोरभावात्॥२९॥ ॥ॐगतेरर्थवत्त्वमुभयथान्यथाहिविरोधःॐ
॥३०॥ बंधप्रत्यवायाभावेहिमोक्षस्यार्थवत्त्वम् ॥ अन्यथामोक्षत्वमेवनस्यात् ॥ कदाचित्कर्मकु
र्वंतिकदाचिन्नैवकुर्वते ॥ नित्यज्ञानस्वरूपत्वान्नित्यंध्यायंतिकेशवम् ॥ तीर्णतर्तव्यभागायेप्राप्तानं
दाःपरात्मनः॥ प्रत्यवायस्यबंधस्याप्यभावात्स्वेच्छयाभवेदितिब्रह्मांडे॥३०॥ ॥ॐउपपन्नस्तल्लक्ष
णार्थोपलब्धेर्लोकवत्ॐ ॥ ३१ ॥ ॥ उपपन्नश्चैवंभावः ॥ प्राप्तत्वात्तल्लक्षणस्यफलस्य ॥
यथालोकेविध्यर्थत्वेनविष्णुक्रमणादिकंकृत्वासमाप्तकर्मेच्छयाकरोतिनकरोतिच ॥३१॥अ० १८

ॐअनियमःसर्वेषामविरोधाच्छब्दानुमानाभ्याम्ॐ ॥३२॥ ॥प्राप्तज्ञानानामपिकेषांचिन्मुक्तिप्रा
प्तिःकेषांचिन्नयथोपसंहारनियमइतिनमंतव्यम् ॥ सर्वगुणाब्रह्मणैवह्युपास्यानान्यैर्देवैःकिमुसर्वै
र्मनुष्यैरित्युपसंहारेविरोधादन्यत्राविरोधात् ॥ नकश्चिद्ब्रह्मवित्सृतिमनुभवतिमुक्तोह्येवभवतित
स्मादाहुःसृतिहेतीतिकौंडिन्यश्रुतेश्च ॥ यथाकेषांचिन्मोक्षएवमन्येषामित्यनुमानाच्च ॥ ३२ ॥
अ० ११ ॥ ॥ ॐयावदधिकारमवस्थितिराधिकारिकाणाम्ॐ ॥ ३३ ॥ ॥ यथायथाधि
कारोविशिष्यतेएवंमुक्तावानंदोऽविशिष्यते ॥ मनुष्येभ्योगंधर्वाणांगंधर्वेभ्यऋषीणामृषिभ्योदे
वानांदेवेभ्यइंद्रस्यैंद्राद्रुद्रस्यरुद्राद्ब्रह्मणएषएवशतानंदइतिचतुर्वेदशिखायाम् ॥ अध्यात्मेच ॥
ज्ञानंचोपासनंचैवमुक्तावानंदएवच ॥ यथाधिकारंदेवानांभवत्येवोत्तरोत्तरमिति ॥ ३३ ॥
॥ ॐअक्षरधियांत्वविरोधःसामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्ॐ ॥ ३४ ॥ ॥ नचासमत्वेन
विरोधोभवति ॥ ब्रह्मधीत्वाद्दोषाभावसाम्यादुत्तमेभ्योऽन्येषांभावाच्च ॥ औपसदवच्छि
ष्यवत् ॥ उक्तंचतुरश्रुतौ ॥ नानाविधाजीवसंघाविमुक्तौनचैवतेषांब्रह्मधियांविरोधः ॥
दोषाभावाद्गुरुशिष्यादिभावाल्लोकेपिनाऽसौकिमुतेषांविमुक्तेरितिच ॥३४ ॥ अ० २० ॥ ॥ ॐ
इयदामननात्ॐ ॥ ३५ ॥ नामाद्यारभ्यप्राणांतमुत्तरोत्तरमुत्तमत्वमुक्तम् ॥ नप्राणात्किंचि
द्भूयउक्तम् ॥ तथापिपूर्ववत्स्यादितिनवाच्यम् ॥ प्राणोवावसर्वेभ्योभूयान्नहिप्राणाद्भूयान्प्रा
णोह्येवभूयांस्तस्माद्भूयान्नामेतिकौठरव्यश्रुतेः ॥३५॥ ॥ ॐअंतराभूतग्रामवदितिचेत्तदुक्तम्ॐ
॥ ३६ ॥ ॥ यथाभूतग्रामएकस्मादेकउत्तमोस्त्येवैवंप्राणादपिपरमात्मानमंतराविद्यतइति

चेन्न ॥ प्राणादुत्तमाभावेप्रमाणमुक्तम् ॥ अन्यत्रोत्तमाभावेनप्रमाणम् ॥ दृश्यतेचान्यत्रो
त्तमत्वम् ॥ ३६ ॥ ॥ ॐअन्यथाभेदानुपपत्तिरितिचेन्नोपदेशवत्ॐ ॥ ३७ ॥ ॥ प्राणस्य
सर्वोत्तमत्वेपरमात्मनाभेदानुपपत्तिरितिचेन्न ॥ श्रुत्युपदिष्टवदुपपत्तेः ॥ अन्येभ्यःप्राणस्योत्त
मत्वंतस्मात्परमात्मनोह्युपदिष्टम् ॥ ३७ ॥ अ०२१ ॥ नेतिचेन्न ॥ ॥ ॐव्यतिहारोविशि
षंतिहीतरवत्ॐ ॥ ३८ ॥ ॥ उक्तंप्राणात्परमात्मनउत्तमत्वंपूर्वोक्ताध्याहारेण ॥ एषतुवाअ
तिवदतीतिविशिंषंतिहि ॥ यथेतरेषुविशेषणम् ॥ उत्तमत्वंहदेवानांमुक्तावपिहिमानवात् ॥ तेभ्यः
प्राणस्यतस्माच्चनित्यमुक्तस्यवैहरेरितिचबृहत्तंत्रे ॥ ३८ ॥ अ०२२ ॥ कृतिर्निष्ठाज्ञानमित्यादीनांभे
दाद्बहवउत्तमाइतिचेन्न ॥ ॥ ॐसैवहिसत्यादयःॐ ॥ ३९ ॥ ॥ सत्यादिगुणास्तस्याएवपरदेवता
याःस्वरूपभूताः ॥ ब्रह्मतर्केच ॥ नामादिप्राणपर्यंताद्योहिसत्यादिरूपवान् ॥ तस्मैनमोभगवतेवि
ष्णवेसर्वजिष्णवइति ॥ सत्याद्याअहमात्मांतायद्गुणाःसमुदीरिताः ॥ तस्मैनमोभगवतेयस्मा
देवविमुच्यतइतिचाध्यात्मे ॥ ३९ ॥ अ०२३ ॥ प्रकृतेरपिजन्मादेःसंसारप्राप्तेःकिमितिनामादि
ष्वपाठइत्यत्रोच्यते ॥ ॥ ॐकामादितरत्रतत्रचायतनादिभ्यःॐ ॥ ४० ॥ ॥ स्वेच्छयैव
मूलस्थानेस्थिताअन्यत्रावतारान्करोतीश्वरेच्छानुसारेण ॥ सर्वायतनासर्वकालासर्वेच्छासर्वज्ञा
नाऽबद्धाबंधिकासैषाप्रकृतिरविकृतिरितिवत्सश्रुतेः ॥ नामादयस्तुबद्धत्वान्मोचकत्वात्परोपि
च ॥ उभयोरप्यभावेनयथाव्यक्तंनतूदितम् ॥ श्रुतौतथाजीवपरावुच्येतोकिंचनेतरत् ॥
नोच्यतेचतदातत्त्वद्वयंवैसमुदाहृतमितिब्रह्मतर्के ॥ ४० ॥ ॥ ॐआदरादलोपःॐ ॥ ४१ ॥

अबद्धत्वेपिभक्तिविशेषादेवोपासनाद्यलोपस्तस्याभवति ॥ यथाश्रीर्नित्यमुक्तापिप्राप्तकामा
पिसर्वदा ॥ उपास्तेनित्यशोविष्णुमेवंभक्तोहरेर्भवेदितिबृहत्तंत्रे ॥४१॥ ॥ ॐउपस्थितेस्तद्व
चनात्ॐ ॥४२॥ ॥ अनादिकालेभगवत्संबधित्वाद्युज्यतेचनित्यमुक्तत्वंतस्याः ॥ द्वावेता
वनादिनित्यावनादियुक्तौनित्यमुक्तावनादिकृतौनित्यकृतौयोयंपरमोयाचप्रकृतीरमतेह्यस्यांपर-
मोरमतेह्यस्मिन्प्रकृतिःस्वस्मिन्हिरमतेपरमोनस्वस्मिन्प्रकृतिरतएनमाहुःपरमइतिगौपवनश्रुतिव
चनात् ॥४२॥ अ० २४ ॥ दर्शनार्थंह्युपासनम् ॥ तच्चश्रवणादेवभवति ॥ अतःकिमर्थमिति ॥
अत्रोच्यते ॥ ॥ ॐतन्निर्धारणार्थनियमस्तद्दृष्टेःपृथग्घ्यप्रतिबंधःफलम्ॐ ॥४३॥ ॥ तत्त्वनि
श्चयोवेदार्थनियमश्चब्रह्मदृष्टेःपृथगेव ॥ हिशब्देनात्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासि
तव्यइतिश्रुतिंसूचयति ॥ श्रवणादिफलंचाज्ञानसंशयविपर्ययादिदर्शनप्रतिबंधेनिवृत्तिः ॥ ब्रह्मत
र्कैच ॥ श्रुत्वामत्वातथाध्यात्वातदज्ञानविपर्ययौ ॥ संशयंचपराणुद्यलभतेब्रह्मदर्शनमिति
॥ ४३ ॥ अ० २५ ॥ ॥ ॐप्रदानवदेवहितदुक्तम्ॐ ॥ ४४ ॥ ॥ नचश्रवणादिमात्रेणदृ
ष्टिर्भवति ॥ किंतुसेतिकर्तव्येन ॥ यथागुरुदत्तंतथैवभवति ॥ आचार्यवान्पुरुषोवेदेतिह्युक्तम् ॥
॥४४॥अ० २६ ॥ गुरुप्रसादःस्वप्रयत्नोवाबलवानितिनिगद्यते ॥ ॥ ॐलिंगभूयस्त्वात्तद्धिबली
यस्तदपिॐ ॥ ४५ ॥ ॥ ऋषभादिभ्योविद्यांज्ञात्वापिसत्यकामेनभगवांस्त्वेवमेकामेब्रूयाच्छ्रुतं
ह्येवमेभगवद्दृशेभ्य आचार्याद्धेवविद्याविदितासाधिष्ठंप्रापयतीतिवचनात् ॥ अत्रहनकिंचनवीया
येत्यनुज्ञानात् ॥ उपकोसलवचनाच्चलिंगभूयस्त्वाद्गुरुप्रसादएवबलवान् ॥ तर्हितावतालमितिनमं

तव्यम्॥श्रोतव्योमंतव्यइत्यादेस्तदपिकर्तव्यम्॥वाराहेच॥ गुरुप्रसादोबलवान्नतस्माद्बलवत्तरम्॥
तथापिश्रवणादिश्चकर्तव्योमोक्षसिद्धयइति ॥४५॥अ०२७॥ ॥ ॐपूर्वविकल्पःप्रकरणात्स्या
त्क्रियामानसवत्ॐ॥ ४६ ॥ ॥ नचपूर्वप्राप्तएवगुरुरितिनियमः ॥ समग्रानुग्रहंचेत्पश्चात्तनः
करोतिस्वयमेवतदाविकल्पःस्यात् ॥ मानसक्रियावत् ॥ यथोभयोर्ध्यानयोःसमयोः ॥ पू
र्वस्मादुत्तमोलब्धःस्वयमेवगुरुर्यदि ॥ गृह्णीयादविचारेणविकल्पःसमयोर्भवेत् ॥ समग्रानु
ग्रहाभावात्सत्यकामःस्वकंगुरुम् ॥ ऋषभाद्यनुज्ञयाचैवमापतस्माद्वियुज्यतइतिबृहत्तंत्रे ॥ स
मग्रानुग्रहंकश्चित्स्वयमेवसमोयदि ॥ कुर्यात्पुनश्चगृह्णीयादविरोधेनकामतः ॥ ध्यानयोःसमयोर्यद्व
द्विकल्पःकामतोभवेत्॥ एवंगुरोर्द्वितीयस्यविकल्पोग्रहणेपिचेतिमहासंहितायाम् ॥४६॥ ॥ ॐ
अतिदेशाच्चॐ॥ ४७ ॥ ॥ ब्रह्मोपास्वब्रह्मोपचरस्वतच्छृणुहितत्त्वामवतुयथाब्रह्मोपचरेर्यथा
मामुपचरेर्येचान्येऽस्मद्विधाःश्रेयसश्चतानुपास्वतानुपचरस्वतेभ्यःशृणुहितेत्वासर्वांत्वितिपौष्यायण
श्रुतावतिदेशाच्च॥४७॥अ०२८ ॥ नचकर्मणैवहिसंसिद्धिमास्थिताजनकादयइत्यादिनान्यन्मो
क्षसाधनम् ॥ ४८ ॥ ॥ ॐविद्यैवतुनिर्धारणात्ॐ ॥ ४८ ॥ ॥ तमेवंविदित्वाऽतिमृत्युमे
तिनान्यःपंथाविद्यतेयनायेतिनिर्धारणाद्विद्ययैवमोक्षः ॥ ४८ ॥ ॥ ॐदर्शनाच्चॐ ॥ ४९ ॥
नकेवलंविद्ययाकिंत्वपरोक्षज्ञानेनच ॥ सर्वान्परोमाययायंसिनीतेदृष्ट्वैवतंमुच्यतेनापरेणेतिकौ
शिकश्रुतेः ॥ ४९॥अ०२९ ॥ ॥ ॐश्रुत्यादिबलीयस्त्वाच्चनबाधःॐ ॥ ५० ॥ ॥ सा
वधारणाबलवतीश्रुतिः ॥ इंद्रोश्वमेधाञ्छतमिष्ट्वापिराजाब्रह्माणमीड्यंसमुवाचोपसन्नः ॥

नकर्मभिर्नधनैर्नैवचान्यैःपश्येत्सुखंतेनतत्त्वंब्रवीहीतिबलवल्लिंगम् ॥ नास्त्यकृतःकृतेनेत्युपप
त्तिश्च ॥ कर्मणाबध्यतेजंतुर्विद्ययाचविमुच्यते ॥ तस्मात्कर्मनकुर्वंतियतयःपारदर्शिनइति
युक्तिमद्भगवद्वचनम् ॥ अतोनप्रमाणांतरबाधः ॥ कर्मणैवेत्ययोगव्यवच्छेदः ॥ ५०॥अ० ३० ॥
ॐअनुबंधादिभ्यःॐ ॥ ५१ ॥ ॥ नकेवलंश्रवणादिभिर्गुरुप्रसादेनचब्रह्मदर्शनंकिंतुभक्त्यादिभि
श्च॥सर्वलक्षणसंपन्नःसर्वज्ञोविष्णुतत्परः ॥ यद्गुरुःसुप्रसन्नःसन्दद्यात्तन्नान्यथाभवेत्॥तथाप्यना
दिसंसिद्धभक्त्यादिगुणपूगतः ॥ लभेद्गुरुप्रसादंचतस्मादेवचतद्भवेदिति ॥ भक्तिर्विष्णौगुरौचै
वगुरोर्नित्यप्रसन्नताम् ॥ दद्याच्छमदमादींश्चतेनचैतेगुणाःपुनः ॥ तैःसर्वैर्दर्शनंविष्णोःश्रवणादि
कृतंभवेदितिचनारायणतंत्रे ॥५१॥अ० ३१ ॥ ॥ ॐप्रज्ञांतरपृथक्त्ववद्दृष्टिश्चतदुक्तम्ॐ ॥५२॥
उपासनाभेदवद्दर्शनभेदः ॥ तच्चोक्तंकमठश्रुतौ ॥ अंतर्दृष्टयोबहिर्दृष्टयोऽवतारदृष्टयःसर्वदृष्टय
इतिदेवावावसर्वदृष्टयस्तेषुचोत्तरोत्तरमाब्रह्मणोन्येषुयथायोगंयथाह्याचार्याआचक्षतइति ॥ अ
ध्यात्मेच ॥ दृष्ट्वैवह्यवताराणांमुच्यंतेकेचिदंजसा ॥ दर्शनेनांतरेणान्येदेवाःसर्वत्रदर्शनात् ॥ते
षांविशेषमाचार्योवेत्तिसर्वज्ञतांगतइति॥५२॥अ० ३२॥ ॥ ॐनसामान्यादप्युपलब्धेर्मृत्युवन्नहि
लोकापत्तिःॐ ॥ ५३ ॥ ॥ नसामान्यदर्शनमात्रेणमुक्तिर्यथामृत्युमात्रात् ॥ नहिलोका
पत्तिमात्रंमुक्तिः ॥ सामान्यदर्शनाल्लोकामुक्तिर्योग्यात्मदर्शनादितिनारायणतंत्रे ॥ मुच्यतेना
त्रसंदेहोदृष्ट्वातुस्वात्मयोग्ययेतिच ॥ दर्शनेनात्मयोग्येनमुक्तिर्नान्येनकेनचिदितिचाध्यात्मे ॥
॥ ५३॥अ० ३३॥ भक्तिरेवैनंनयतिभक्तिरेवैनंदर्शयतिभक्तिवशःपुरुषोभक्तिरेवभूयसीतिमाठरश्रु

तेनैंपरमात्मनोदर्शनमितिचेन्न ॥ तस्यैषआत्माविशतेब्रह्मधामेतिश्रुतेः ॥ कथंतर्ह्येषाश्रुतिः ॥ ॥
ॐपरेणचशब्दस्यताद्विध्यंभूयस्त्वात्त्वनुबंधःॐ ॥ ५४ ॥ ॥ परमात्मैवभक्त्यादर्शनंप्राप्यमुक्तिं
ददातीतिप्रधानसाधनत्वाद्भक्तिःकरणत्वेनोच्यते ॥ मायावैभवेच ॥ भक्तिस्थःपरमोविष्णुस्तयैवै
नंवशंनयेत् ॥ तयैवदर्शनंयातःप्रदद्यान्मुक्तिमेतया ॥ स्नेहानुबंधोयस्तस्मिन्बहुमानपुरःसरः ॥भ
क्तिरित्युच्यतेसैवकरणंपरमीशितुरिति॥सर्वशब्दानांब्रह्मणिप्रवृत्तेश्च॥५४॥अ० ३४॥जीवांशानां
पृथगुत्पत्तेर्नानादियोग्यतापेक्षेतिनमंतव्यम् ॥ कुतः ॥ ॥ ॐएकआत्मनःशरीरेभावात्ॐ
॥ ५५ ॥ ॥ अंशांशिनोरेकत्वमेव ॥ अंशिकर्मविनिर्मितेशरीरएवांशस्यभावात् ॥ ५५ ॥
ॐव्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्ॐ ॥ ५६ ॥ ॥ ज्ञानादिभेदेविद्यमानेपिनांशांशि
नोःपृथग्भावएव ॥ तदुपासनादिभोगादंशस्य ॥ परमसंहितायांच ॥ अंशिनस्तुपृथग्जाताअं
शास्तस्यैवकर्मणा॥पुनरैक्यंप्रपद्यंतेनात्रकार्याविचारणेति॥५६॥अ३५ ॥ ॥ ॐअंगावबद्धास्तुन
शाखासुहिप्रतिवेदम्ॐ ॥ ५७ ॥ ॥ ब्रह्माद्यंगदेवतावबद्धोपासनादिप्रतिशाखंप्रतिवेदंचनोपसं
ह्रियते॥ हिशब्दात्समत्वाद्घोत्तमत्वाद्वानांगदेवताद्युपासनम् ॥ उपसंहार्यमित्याहुर्वेदसिद्धांतवेदि
नइतिब्रह्मतर्कवचनात् ॥५७॥ ॥ ॐमंत्रादिवद्वाविरोधःॐ ॥५८ ॥ ॥सर्वदेवतामंत्रायथाधीयं
तेएवमविरोधोवा॥ उपासनांगदेवानांपरमांगतयाभवेत् ॥ उपसंहृतिर्विशेषेतुफलानामन्यथानतु॥
पुरुषाणांविशेषाद्वायथायोगंभविष्यतीतिबृहत्तंत्रे ॥ ५८॥अ० ३६ ॥ ॥ ॐभूम्नःक्रतुवज्ज्यायस्त्वं
तथाचदर्शयतिॐ ॥ ५९ ॥ ॥ सर्वंगुणेषुभूमगुणस्यज्यायस्त्वंक्रतुवत्सर्वत्रसहभावा

त् ॥ दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकःक्रतुः ॥ भूमैवदेवःपरमोह्युपास्योनैवाभू
माफलमेषांविधत्ते ॥ तस्माद्भूमागुणतोवैविशिष्टोयथाक्रतुःकर्ममध्येविशिष्टइतिगौपवनश्रुतिः
॥५९॥ अ० ३७ ॥ ॥ ॐनानाशब्दादिभेदात्ॐ ॥६०॥ ॥ शब्दोनुमातथैवाक्षोयोग्यताभे
दतःसदा ॥ ब्रह्मादीनामेकमर्थंबहुधादर्शयंतिहि॥ अतःपूर्णत्वमीशस्यनानैवेषांप्रदृश्यते ॥ अतः
फलस्यनानात्वंनानैवोपासनंयतइतिब्रह्मतर्के ॥ अतोभूमत्वमपिनानैवोपास्यते ॥ ६० ॥ अ०
३८ ॥ ॥ ॐविकल्पोविशिष्टफलत्वात्ॐ ॥ ६१ ॥ ॥ स्वयोग्योपासनानंतरंसामान्यस्या
पिकस्यचिदुपासनंविकल्पेनभवति ॥ विशिष्टफलापेक्षया ॥ मुक्त्यर्थमात्मयोग्यंहिकार्यमेव
ह्युपासनम् ॥ नृसिंहादिकमन्यच्चदुरितादिनिवृत्तये ॥ उपासतेयथायोगंनवाफलविभेदतइतिब्र
ह्मतर्के ॥ ६१ ॥ अ० ३९ ॥ ॐकाम्यास्तुयथाकामंसमुच्चीयेरन्नवापूर्वहेत्वभावात्ॐ ॥६२॥
यस्ययस्यहियःकामस्तस्यतस्यह्युपासनम् ॥ तादृशानांगुणानांचसमाहारंप्रकल्पयेत् ॥ अ
कामत्वान्मुमुक्षूणांनवातेषामुपासनम् ॥ तुष्ट्यर्थमीश्वरस्यैवनचोपासाविदुष्यतीतिबृहत्तंत्रे ॥
॥ ६२॥अ० ४० ॥ ॥ ॐअंगेषुयथाश्रयभावःॐ ॥ ६३ ॥ ॥ अंगदेवतानांयथापरमेश्वरां
गाश्रयत्वंचक्षोःसूर्योअजायतेत्यादितथाभावनाकर्तव्या ॥ ६३ ॥ ॥ ॐशिष्टेश्चॐ ॥ ६४ ॥
यस्मिन्यस्मिन्योहिचांगेनिविष्टःपरस्यांचिंत्यःसतथातथैवेतिपौत्रायणश्रुतेः ॥६४॥ ॥ ॐसमा
हारात्ॐ ॥ ६५ ॥ ॥ अंगैःपराद्येहिदेवाविसृष्टातत्तद्गुणान्परमेसंहरेत ॥ तांश्चापितत्रैव
विचिंत्यदेवान्स्थानंमुमुक्षुःपरमंव्रजेतेतिकाषायणश्रुतौसमाहारवचनाच्च ॥६५॥ ॥ ॐगुणसा

धारण्यश्रुतेश्चॐ ॥ ६६ ॥ ॥ साधारण्यात्सर्वगुणाःपरस्यसमाहार्यास्तत्त्वदर्शोमुमुक्षोरितिमां
डव्यश्रुतेश्च ॥ ६६॥अ० ४१ ॥ ॥ॐनवातत्सहभावश्रुतेःॐ ॥ ६७ ॥ ॥ नवांगदेवतोपसंहा
रःकार्यः ॥ उपसंहारस्यसहाऽश्रवणात् ॥ ६७ ॥ ॥ ॐदर्शनाच्चॐ ॥ ६८ ॥ ॥ सत्यो
ज्ञानःपरमानंदरूपआत्मेत्येवंनित्यदोपासनंस्यात् ॥ नान्यत्किंचित्समुपासीतधीरःसर्वैर्गुणैर्देवग
णाउपासतइतिकमठश्रुतौ ॥ ६८ ॥ अ ० ४२ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभा
ष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यतृतीयःपादः ॥ ३ ॥
श्रीवेदव्यासायनमः ॥ ॥ हरिःॐज्ञानसामर्थ्यमस्मिन्पादउच्यते ॥ ॥ॐपुरुषार्थोऽतः
शब्दादितिबादरायणःॐ ॥ १ ॥ ॥ यद्दर्शनार्थमुपासनोक्तातस्माद्दर्शनात्सर्वपुरुषार्थप्रा
प्तिरितिबादरायणोमन्यते ॥ यंयंलोकंमनसासंविभातिविशुद्धसत्वःकामयतेयांश्चकामान् ॥
तंतंलोकंजयतेतांश्चकामान्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइतिशब्दात् ॥ १ ॥ ॥ॐशेषत्वात्पु
रुषार्थवादोयथान्येष्वितिजैमिनिःॐ ॥ २ ॥ ॥ अस्त्येवमोक्षसाधनत्वंज्ञानस्य ॥ स्वर्गा
दिषुतत्साधनकर्मशेषत्वेन ॥ स्वर्गंधनादेहतोविग्रहाच्चप्राप्स्यंतिधीरानत्वधीराःकुतश्चिदितिवद
तिजैमिनिः ॥ २ ॥ ॥ॐआचारदर्शनात्ॐ ॥ ३ ॥ ॥ ज्ञानिनामेवदेवादीनामाचारदर्शनात्
॥३॥ ॥ॐतच्छ्रुतेःॐ ॥ ४ ॥ ॥ यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीति
शेषत्वश्रुतेः ॥४॥ ॥ॐसमन्वारंभणात्ॐ ॥५॥ ॥कर्मैवदेहंदैविकंमानुषंवाप्यन्वारभेन्नापरस्तत्र
हेतुः ॥ भोगांस्तदीयांश्चयथाविभागंददातिकर्मैवशुभाशुभंयदितिमाठरश्रुतेश्च ॥ संशब्दःप्रा

धान्यंदर्शयति ॥ ५ ॥ ॥ ॐतद्वतोविधानात्ॐ ॥ ६ ॥ ॥ ज्ञानीचकर्माणिसदोदितानि
कुर्यादकामःसततंभवेतेतिकमठश्रुतौज्ञानवतोपिविधानात् ॥ ६ ॥ ॥ ॐनियमाच्चॐ ॥ ७ ॥
कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः ॥ एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरइति ॥ ७ ॥
ॐअधिकोपदेशात्तुबादरायणस्यैवंतद्दर्शनात्ॐ ॥ ८ ॥ ॥ ज्ञानादेवस्वर्गोज्ञानादेवापवर्गोज्ञा
नादेवसर्वैकामाःसंपद्यंते ॥ तथापियथायथाकर्मकुरुतेतथातथाधिकोभवतीतिकौठरव्यश्रुतेः ॥
युधिष्ठिरादीनांराजसूयादिनाफलाधिक्यदर्शनाच्चेतिबादरायणमतम् ॥ ८ ॥ ॥ ॐतुल्यं
तुदर्शनम्ॐ ॥ ९ ॥ ॥ राजसूयादिकृत्वाकृतौचसममेवतेषांविज्ञानम् ॥ विज्ञातमेतत्सर्वे
षांमुनीनांब्रह्मदर्शनात् ॥ स्यादेवमोक्षोनान्यस्मादितितत्रापिचित्रता ॥ स्वर्गादयःकर्मणैवनान्ये
नेत्यपरेविदुः ॥ ज्ञानेनाधिक्यमित्याहुर्जैमिन्याद्यास्तुकेचन ॥ अदृष्टमेवज्ञानेनदृष्टंनैवो
पलभ्यते ॥ इतिकेचिद्विदःप्राहुर्व्यासशिष्याइमेखिलाः ॥ यस्माद्व्यासमतंसर्वंसत्यमेवततोऽ
खिलम् ॥ यथाकाशस्त्वनंतोपिव्यामोहस्तावधिस्तथा ॥ प्रादेशोपिहिसत्येनतथैतेषांमतानि
तु ॥ स्वयंतुभगवान्व्यासोव्यासज्ञानमहांशुमान् ॥ अनंताकाशवत्पश्यन्निखिलंपुरुषोत्तमः ॥
ज्ञानेनैवाप्यतेसर्वंकर्मणात्वधिकंभवेत् ॥ इतिप्राहमहायोगीपुमर्थानांविनिर्णयमितिभविष्यत्प
र्वणि ॥ ज्ञानिनामपिदेवानांविशेषःकर्मभिर्भवेत् ॥ चीर्णेकृतेवाज्ञानस्यनविशेषोऽस्तिकर्मणीति
चब्रह्मतर्के ॥१॥अ०१ ॥ सर्वेषामपिपुरुषार्थापेक्षित्वाऽज्ञानाधिकारित्वेत्यतआह ॥ ॥ ॐअसा
र्वत्रिकीॐ ॥ १० ॥ ॥ नसर्वेषामधिकारः ॥ १० ॥ ॥ ॐविभागःशतवत्ॐ ॥ ११ ॥ ॥

नवकोट्योहिदेवानांतेषांमध्येशतस्यतु ॥ सोमाधिकारोवेदोक्तोब्रह्मणीद्वेशताधिके ॥ यथालथै
वासंख्येयाःप्रजास्तासुकियाजनः ॥ ज्ञानाधिकारीसंप्रोक्तोविष्णुपादैकसंश्रयइतिवचनात् ॥
सुखापेक्षासाम्येपिविभागइष्यतेऽधिकारार्थम् ॥११॥ कस्याधिकारः ॥ ॥ ॐअध्ययनमात्रवतः
ॐ ॥१२॥ ॥ अवैष्णवस्यवेदेपिह्यधिकारोनविद्यते ॥ गुरुभक्तिविहीनस्यशमादिरहितस्य
च ॥ नचवर्णावरस्यापितस्मादध्ययनान्वितः ॥ ब्रह्मज्ञानेतुवेदोक्तेह्यधिकारीसंतांमतइतिब्र
ह्मतर्के ॥ पठेद्वेदानथार्थानधीयीताथविचार्यब्रह्मविंदेदितिचकौषारवश्रुतिः ॥ १२॥ अ० २ ॥
॥ ॐनाविशेषात्ॐ ॥ १३ ॥ ॥ नसामान्येनाधिकारोदेवादीनाम ॥ अथपुमर्थसाधनान्यर्थोध
र्मोज्ञानमित्युत्तरोत्तरम् ॥ तत्राधिकारिणोमनुष्याऋषयोदेवाइत्युत्तरोत्तरमितिकौंडिन्यश्रुतिः
॥१३॥अ० ३ ॥ अथमुनिरमौनंचमौनंचनिर्विद्याथब्राह्मणःसब्राह्मणःकेनस्याद्येनस्यात्तेनेदृशए
वेतिज्ञानिनोयथेऽष्टाचरणंविधीयतइत्यतआह ॥ ॥ ॐस्तुतयेऽनुमतिर्वाॐ ॥ १४ ॥ ॥ नवि
धिर्ज्ञानिनस्तुतयेनुमतिमात्रंवा ॥ युज्यतेच ॥१४॥ ॥ ॐकामकारेणचैकेॐ ॥१५॥ ॥ काम
चाराःकामभक्षाःकामवादाःकामेनैवेमंलोकमुत्सृज्याथपरात्परमीयुरनारंभणमितिचैकेपठंति॥१५
ॐउपमर्दंचॐ ॥१६॥ ॥ ओमित्युच्चार्यांतरितमात्मानमभिपश्योपमृद्यपुण्यंचपापंचकाममाच
रंतोब्रह्मानुव्रजंतीतिचतुरश्रुतौ ॥१६॥ ॥ॐऊर्ध्वरेतस्सुचशब्देहिॐ ॥१७॥ ॥नतावताकामचा
राणांज्ञानाधिकारः ॥ यइमंपरमंगुह्यमूर्ध्वरेतस्सुभाषयेत् ॥ ननथाविद्यतेभूयान्यंप्राप्यान्येपि
भूयसइतिमाठरश्रुतौ ॥१७॥ ॥ॐपरामर्शंजैमिनिरचोदनाचापवदितिहिॐ ॥ १८ ॥ ॥ प्रातरु

तथायाथसंध्यामुपासीतयत्संध्यामुपासतेब्रह्मैवतदुपासतेऽथदेवान्नमेज्जुहुयाद्देदानावर्तयीतनान्य
त्किंचिदाचरेन्नसुरांपिबेन्नपलांडुंभक्षयीतनभृशंवदेन्नविस्मरेदात्मानंसोमंपिबेद्धुतशेषेणवर्तयेदि
त्युक्ताचारपरामर्शेनविधिबंधवर्जितत्वेनकामतएवतस्यचरणंकामचारइतिजैमिनिर्मन्यते ॥ नच
निषिद्धंकर्मकर्तव्यमेवेतिचोदना ॥ ब्राह्मणोनहंतव्यइत्याद्यपवादश्च ॥१८॥ ॥ॐअनुष्ठेयंबादरा
यणःसाम्यश्रुतेःॐ ॥ १९ ॥ ॥ अनुष्ठेयानांमध्यएवकामतश्चरणंकामतोनिवृत्तिरितिबादराय
णोमन्यते ॥ केनस्याद्येनस्यात्तेनेदृशएवेतिसाम्यश्रुतेः ॥ यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमान
वः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यतइतिभगवद्वचनाच्च ॥ १९॥ ॥ ॐविधिर्वाधारणव
तूॐ ॥ २० ॥ ॥ केनस्याद्येनस्यादितिविधिर्वायथावेदधारणंत्रैवर्णिकानांविहितंनान्येषामेवं
स्वमतानुसारिणीप्रवृत्तिर्ज्ञानिनांविहिता ॥ नतत्राधर्मशंकाकार्या ॥ नान्येषामितिवा ॥ स्वे
च्छयैवप्रवृत्तिस्तुब्रह्मणोविधिचोदिता ॥ नाशंक्यंतन्मतंक्वापिविष्णोःप्रत्यक्षचोदना ॥ इतरे
षांनाविहितास्वेच्छावृत्तिःकथंचनेतिब्राह्मे ॥ २०॥ ॥ ॐस्तुतिमात्रमुपादानादितिचेन्नापूर्वत्वा
तूॐ ॥ २१ ॥ ॥ स्तुतिमात्रमेवस्वेच्छाचरणंनाविधिस्तैरपिसामान्यविधिस्वीकारादितिचेन्न ॥
अपूर्वत्वात्परवशत्वात् ॥ सर्वविध्यतिक्रमेणस्तुतिमात्रविषयत्वंपरब्रह्मणएवहि ॥ विधीनांवि
षयास्त्वन्येब्रह्मणःस्वेच्छयाकृतौ ॥ परस्यब्रह्मणोह्येवसर्वविध्यतिदूरतेतिब्रह्मतर्के ॥ २१ ॥ ॥
ॐभावशब्दाच्चॐ ॥ २२ ॥ ॥ यथाविधानमपरेविधिर्भावेप्रजापतेः ॥ ब्रह्मणःपरमस्यैवस
र्वविध्यतिदूरतेतिचतुरश्रुतौ ॥ २२ ॥ ॥ ॐपारिप्लवार्थाइतिचेन्नविशेषितत्वात्ॐ ॥ २३ ॥

केनस्याद्येनस्यादिज्यादयःस्थिरत्वनिवृत्त्यर्थाइतिचेन्न ॥ त्रेधाहिज्ञानिनोहवावभवंतिविधिनि
यताअनियताःस्वेच्छानियताइतिविधिनियतामनुष्याअनियताहिदेवाःब्रह्मैवस्वेच्छानियतइति
गौपवनश्रुतौविशेषितत्वात् ॥ २३ ॥ ॥ ॐतथाचैकवाक्योपबंधात्ॐ ॥ २४ ॥ ॥ एवंसति
विधिवाक्यानांस्वेच्छावृत्तिवाक्यानांचसंबंधोभवति ॥ २४ ॥ ॥ ॐअतएवचाग्नींधनाद्यनपेक्षा
ॐ ॥ २५ ॥ ॥ अतएवज्ञानस्यमोक्षदानेनाग्निहोत्राद्यपेक्षा ॥ ब्रह्मतर्केच ॥ एषांज्ञानं
समुत्पन्नंतेषांमोक्षोविनिश्चितः ॥ शुभकर्मभिराधिक्यंविपरीतेविपर्ययः ॥ स्वेच्छानुवृत्त्यैवभवेद्ब्रं
ह्मणःप्रायशस्तथा ॥ देवानामपिसर्वेषांविशेषादुत्तरोत्तरमिति ॥ २५ ॥ ॥ ॐसर्वापेक्षाचयज्ञा
दिश्रुतेरश्ववत्ॐ ॥ २६ ॥ ॥ सर्वकर्मापेक्षाचज्ञानस्योत्पत्तौ ॥ विविदिषंतियज्ञेनदानेनतपसा
नाशकेनेतिश्रुतेः॥यथागतिनिष्पत्त्यर्थमश्वादयोऽपेक्षंतेननिष्पन्नगतेर्ग्रामादिप्राप्तौ॥२६॥ ॐशम
दमाद्युपेतःस्यात्तथापितुतद्विधेस्तदंगतयातेषामवश्यानुष्ठेयत्वात्ॐ ॥२७॥ ॥ यद्यपिज्ञानेनैवमो
क्षोनियतस्तथापिज्ञानीशमदमाद्युपेतःस्यात्॥आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन्शांतो
भवेद्दांतोभवेदनुकूलोभवेदाचार्यंपरिचरेत्परिचरेदाचार्यमितिमाठरश्रुतौज्ञानिनोऽपितद्विधेः ॥ ब्रा
ह्मींवावतउपनिषदमब्रूमेतितस्यैतपोदमःकर्मेतिप्रतिष्ठावेदाःसर्वांगानिसत्यमायतनंयोवाएतामुप
निषदंवेदेतिज्ञानांगतयातेषामवश्यानुष्ठेयत्वात् ॥ यस्यज्ञानंतस्यमोक्षइतिनात्रविचारणा ॥ तस्य
शांत्यादयोंगानितस्मात्तेषामनुष्ठितिः ॥ अवश्यकरणीयास्यादन्यथाल्पफलंभवेदितिचाग्नेये ॥
तुशब्दःपूर्णफलार्थत्वंसूचयति ॥२७॥ ॥ ॐसर्वान्नानुमतिश्चप्राणात्ययेतद्दर्शनात्॥२८॥ ॥ यदि

हवाअप्येवंविन्निखिलंभक्षयीतैवमेवसभवतीतिसर्वान्नानुमतिश्चप्राणात्ययविषया ॥ नवाद्यजी
विष्यामिमान्नखादन्निति होवाचकामोमउदपानमितिदर्शनात्॥२८॥ ॥ॐअबाधाच्चॐ॥२९॥
अन्यायचरणाभावेनहिज्ञानस्यबाधनम् ॥ अतोविद्वानपिन्याय्यंवर्तेतोत्कर्षसिद्धयइतिचब्रह्म
तर्के॥२९॥ ॥ ॐअपिस्मर्यतेॐ ॥३०॥ ॥अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमः॥एतादृशोऽ
पिनाचारंश्रौतंस्मार्तंपरित्यजेदितिहरिवंशेषु॥३०॥ ॥ ॐशब्दश्चातोकामचारेॐ॥३१॥ ॥ स
यएतदेवंविदेवंमन्वानएवंपश्यन्नकामचरितंचरेन्नकामंभक्षयीतनकाममनुवर्तेतेतिकौंडिन्यश्रुतौ
अतइत्यल्पफलत्वंसूचयति ॥ ननिषिद्धानिवर्तेतपूर्णज्ञानफलेच्छयेतिपाद्मे॥३१॥ ॥ॐविहि
तत्वाच्चाश्रमकर्मापिॐ ॥ ३२ ॥ ॥ नकेवलंनिषिद्धाकरणेनपूर्यते ॥ कर्तव्यंचवर्णाश्रमविहि
तंकर्म ॥ पश्यन्नपीममात्मानंकुर्यात्कर्माविचारयन् ॥ यदात्मनःसुनियतमानंदोत्कर्षमाप्नुया
दितिकौषारवश्रुतौविहितत्वाच्च ॥ अपिशब्दोवर्णधर्मसमुच्चयार्थः ॥ ३२ ॥ ॥ ॐसहकारि
त्वेनचॐ ॥ ३३ ॥ ॥ यथाराज्ञःसहकार्येवमंत्रीतथाप्येतेतंक्षितिपःकार्यमृच्छेत् ॥ एवंज्ञानं
कर्मविनापिकार्यंसहायभूतंनविचारःकुतश्चिदितिकमठश्रुतौसहकारित्वोक्तेश्च ॥ ज्ञानान्मोक्षोभव
त्येवसर्वाकार्यंकृतोऽपितु ॥ आनंदोह्रसतेऽकार्याच्छुभंकृत्वातुवर्धतइतिब्रह्मांडे ॥ सर्वदुःख
निवृत्तिश्चज्ञानिनोनिश्चितैवहि ॥ उपासयाकर्मभिश्चभक्त्याचानंदचित्रतेतिबृहत्तंत्रे ॥धर्मस्वरूप
चित्रत्वाद्योयोदेवमनोगतः॥सएवधर्मोविज्ञेयोनह्येतेलोकसंमिताइतिचपाद्मे॥३३॥अ०४ ॥ ॐ
सर्वथापितुतएवोभयलिंगात्ॐ ॥ ३४ ॥ ॥ सर्वप्रकारेणोत्साहेपियेज्ञानयोग्यास्तएवविज्ञानं

प्राप्नुवंतिनान्ये ॥ यआत्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोऽपिपासःसत्यकामःस
त्यसंकल्पःसोन्वेष्टव्यःसविजिज्ञासितव्यइतिश्रुत्याआचार्योपदेशसाम्येपिविरोचनोविपरीतज्ञान
मापेंद्रोसम्यग्ज्ञानमित्युभयविधर्लिंगात् ॥३४॥ ॥ ॐअनभिभवंचदर्शयतिॐ ॥ ३५ ॥ ॥दै
वीमेवसंपत्तिंदेवाअभिगच्छंत्यासुरीमेवासुरानैतयोरभिभवःकदाचित्स्वभावएवह्यवतिष्ठतइतिस्व
भावानभिभवंचदर्शयति ॥ ३५ ॥ ॥ ॐअंतराचापितुतद्दृष्टेःॐ ॥ ३६॥ ॥ सम्यग्ज्ञानविरीत
ज्ञानयोरंतरास्थितानामपिदेवासुरभावयोर्दार्ढ्यंदृष्टेः॥३६॥ ॥ ॐअपिस्मर्यतेॐ ॥३७॥ ॥असु
राआसुरेणैवस्वभावेनचकर्मणा॥ ज्ञानेनविपरीतेनतमोयांतिविनिश्चयात् ॥ देवादैवस्वभावेनक
र्मणाचाप्यसंशयम् ॥ सम्यग्ज्ञानेनपरमांगतिंगच्छंतिवैष्णवीम्॥नानयोरन्यथाभावःकदाचित्का
पिविद्यते॥मानुषामिश्रमनयोर्विमिश्रगतयोऽपिचेतिस्कांदे॥३७॥ ॥ॐविशेषानुग्रहंचॐ॥३८॥
शृण्वेवीरउग्रमुग्रंदमायन्नन्यमन्यमतिनेनीयमानः ॥ एधमानद्विळुभयस्यराजाचोष्कूयतेविश
इंद्रोमनुष्यानितिविशेषानुग्रहंचदर्शयतिदेवेषुपरमेश्वरस्य ॥ असुरान्दमयन्विष्णुःस्वपदंचसुरा
न्नयन् ॥ पुनःपुनर्मानुषांस्तुसृतावावर्तयत्यसावितिभविष्यत्पर्वणि॥३८॥ ॥ ॐअतस्त्वितरज्या
योर्लिंगाच्चॐ ॥३९॥ ॥ देवभागादसुरभागएवबहुलः ॥ तस्मान्नजनतामेयादितिचलिंगात्॥
चशब्दात्ततःकनीयसाएवदेवाज्यायसाअसुराइतिश्रुतेश्च ॥ असुराबहुलायस्मात्तस्मान्नजन
तामियादितिचब्राह्मे॥३९॥ ॥ ॐतद्भूतस्यतुतद्भावोजैमिनेरपिनियमातद्रूपाभावेभ्यःॐ ॥४०॥
असुरजातेरेवासुरत्वंदेवजातेरेवदेवत्वंजैमिनेरपिसिद्धमेव॥ नासुरादैवींनदेवाआसुरींनमनुष्यादैवी

मासुरींचगतिमीयुरात्मीयामेवजातिमनुभवंतीतिनियमश्रुतेः ॥ नासुराणांदैवंरूपंनदेवानामासुरं
नचोभयंमनुष्याणांयोयद्रूपःसतद्रूपोनिसर्गोह्येषभवतीत्यतद्रूपत्वश्रुतेः ॥ तंभूतिरितिदेवाउपा
सांचक्रिरेतेबभूवुस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसत्यभूरितिअसुरास्तेहपराबभूवुरितिदेवा
सुराणांभावाभावश्रुतेश्च ॥ देवानांभूतिरित्येवमनोविष्णौस्वभावतः ॥ असुराणामभूतित्वेनैतज्ज्ञे
यमतोन्यथा ॥ देवाःशापाभिभूतत्वात्प्रह्लादाद्याबभूविरे ॥ अतःसुगतिरेतेषांनान्यथाव्यत्ययोभ
वेदितिचाध्यात्मे॥४०॥अ०५॥ ॥ ॐनचाधिकारिकमपिपतनानुमानात्तदयोगात्ॐ ॥४१॥
नचपरमात्मैश्वर्यादिकमाकांक्ष्यम् ॥ ब्रह्मादीनामपिनाकांक्ष्यंकिमुपरस्येतिसूचयितुमपिशब्दः ॥
चशब्दस्तुज्ञानार्थिनांपूर्वोक्तादित्थंभावांतरसूचकः ॥ अयोग्यमारोढुंप्रयतन्पतन्हिदृश्यते ॥ ए
वमयोग्यस्यपरमात्मैश्वर्यस्यब्रह्मादिपदस्यचाकांक्षायांपतनमनुमीयते ॥ नदेवपदमन्विच्छेत्कु
तएवहरेर्गुणान् ॥ इच्छन्पततिपूर्वस्मादधस्ताद्यत्रनोत्थितिरितिब्रह्मांडे ॥ स्वकीयमिच्छमानंतु
राजाद्याःपातयंतिहि ॥ एवमेवसुराद्याश्चहरिश्चस्वपदेच्छुकमित्याद्यनुमानरूपवाक्याच्च ॥ माया
भिरुत्सिसृक्षतइंद्रद्यामारुरुक्षतः ॥ अवदस्यूँरधूनुथाइतिश्रुतिः ॥४१॥ ॥ ॐउपपूर्वमपीत्ये
केभावशमनवत्तदुक्तम्ॐ ॥४२॥ ॥ उपदेवपदंचनाकांक्ष्यमित्येकेभावशमनवत्॥ऋषिपदवदे
व ॥ तच्चोक्तमिंद्रद्युम्नश्रुतौ ॥ अथयथार्षीन्प्रजापतीनाकांक्ष्येदेवंगंधर्वान्नविद्याधरान्नसि
द्धानिति ॥ बृहत्संहितायांच ॥ नदेवानभिकांक्ष्येतकुतएवहरेर्गुणान् ॥ प्राजापत्यान्नचार्षांश्चगं
धर्वादीनपिकंचित् ॥ ऋष्यादिषुविशेषेषुदोषोनैवाविशेषितइति ॥विशेषदर्शनार्थमेकइत्युक्तम् ॥

॥४२॥ ॥ ॐबहिस्तूभयथापिस्मृतेराचाराच्चॐ ॥ ४३ ॥ ॥ देवऋषिगंधर्वादिपदेभ्योऽन्य
त्रशुभविषयेआकांक्षायामनाकांक्षायांचनपतनम् ॥ देवऋषिगंधर्वाणांपदाकांक्षीपतेद्ध्रुवम् ॥
अन्यत्रशुभमाकांक्षन्नपतेद्विरोधतइतिस्मृतेः ॥ नानात्वमेवकामानांनाकामः क्वचदृश्यते ॥
अतोविरुद्धकामःस्यादकामस्तेनभण्यतइत्याचाराच्च ॥४३॥अ०६॥ ॥ॐस्वामिनःफलश्रुते
रित्यात्रेयःॐ ॥ ४४ ॥ ॥ ब्रह्मविदाप्नोतिपरमित्यादिफलंस्वामिनांदेवानामेवभवति ॥ य
दुकिंचेमाःप्रजाःशुभमाचरंतिदेवाएवतदाचरंतियदुकिंचेमाःप्रजाविजानंतेदेवाएवतद्विजानंतेदे-
वानांह्येतद्भवतिस्वामीहिफलमश्नुतेनास्वामीकर्मकुर्वाणइतिमाध्यंदिनायनश्रुतेरित्यात्रेयोमन्यते
॥४४॥ ॥ ॐआर्त्विज्यमित्यौडुलोमिस्तस्मैहिपरिक्रियतेॐ ॥ ४५ ॥ ॥ सत्रयागेपुऋत्वि
जामपिफलदर्शनादल्पफलंप्रजानामपिभवतीत्यौडुलोमिर्मन्यते ॥ तदर्थंदेवैःक्रियमाणत्वात् ॥
॥ ४५ ॥ ॥ ॐसहकार्यंतरविधिःपक्षेणतृतीयंतद्वतोविध्यादिवत्ॐ ॥ ४६ ॥ ॥ तृतीयःस्वप
क्षोदेवानांज्ञापनादिकर्मणिसहकार्यंतरत्वेनप्रजाविधीयते ॥ यथाप्रजावतोराज्ञःप्रजाःसहकारि
त्वेनविधीयंते ॥ यथावाचार्यस्यशिष्याः ॥ वाराहेच ॥ ज्ञानादिदानंदेवानांविष्णुनासाधुचोदित
म् ॥ वेदेषुतेषांविहितंतत्राचार्योमहत्तरः ॥ विहितःसहकारित्वेसहकार्यंतरंप्रजाः ॥ पातृत्वेन
यथाराज्ञोयथाशिष्यागुरोरपि ॥ तस्माच्छ्रुतंफलंतासामाचार्याणांमहत्तरम् ॥ ततोमहत्तरंप्रोक्तं
देवानामुत्तरोत्तरमिति॥४६॥अ०७॥ ॥ ॐकृत्स्नभावात्तुगृहिणोपसंहारःॐ ॥४७॥ ॥ कुटुंबीशु
चौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदित्युक्त्वानचपुनरावर्ततइतिगृहिणोपसंहारःक्रियते ॥

तस्माद्गृहस्थस्यैवोत्तमत्वमितिनवाच्यम् ॥ यतःकृत्स्नगृहस्थान्देवापेक्ष्यैवोपसंहारःक्रियते ॥
कृत्स्नाह्येतेगृहिणोदेवाःकृत्स्नाएतेयतयोऽतएतेषांनपुत्रादायमुपयंतिनचैतेगृहान्विसृजंत्यरागाअ
द्वेषाअलोभाःसर्वभोगाःसर्वज्ञाःसर्वकर्त्तारइतिपौत्रायणश्रुतिः ॥४७॥ ॥ ॐमौनवदितरेषामप्यु
पदेशात्ॐ॥ ४८ ॥ ॥ नचाश्रमद्वयमेवदेवानांदेवाएवब्रह्मचारिणोदेवाएवगृहस्थादेवाएव
वनस्थायथाह्येतेमुनयएवंसर्ववर्णाःसर्वाश्रमाःसर्वेह्येतेकर्मकुर्वंतीतिकौठरव्यश्रुतौयतित्वदृष्टांतेना
न्येषामप्युपदेशात् ॥ ४८ ॥ अ०८ ॥ ॥ ॐअनाविष्कुर्वन्नन्वयात्ॐ ॥ ४९ ॥ ॥ एतां
विद्यामधीत्यब्रह्मदर्शीवावभवतिसएतांमनुष्येपुविब्रूयाद्यथायथाहवैब्रूयात्तथातथाधिकोभवती
तिमाठरव्यश्रुतौविद्यादानंश्रूयतेतच्चबहूनांस्वीकरणार्थमाविष्कारेणेतिनमंतव्यम् ॥ अन्व
यात् युक्तेः ॥ आविष्कारेऽयोग्यानामपिस्वीकारप्राप्तिः ॥ तच्चनिषिद्धम् ॥ मानस्तेनेभ्योये
अभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजागृधुः ॥ एषांनैतन्नापरंकिंचनैकंब्रह्मणस्पतेब्रूहितेभ्यः
कदाचित् ॥ अथोपशमेनोपरतामनुष्यायेधर्मिणोब्रूहितेभ्यःसदानः ॥ आदेवानांमोहतेवि
व्रयोहृदिबृहस्पतेनपरःसाम्नोविदुः ॥ विद्याहवैब्राह्मणमाजगामगोपायमांशेवधिष्टेहमस्मि ॥
अनार्यकायानृजवेशठायनमांब्रूयाऋजवेब्रूहिनित्यमितिच ॥ ४१ ॥ अ०९ ॥ ॥ ॐ
ऐहिकमप्रस्तुतप्रतिबंधेतद्दर्शनात्ॐ ॥ ५० ॥ ॥ आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदि
ध्यासितव्यइतिदर्शनार्थंश्रवणादिविधीयते ॥ तच्चदर्शनमैहिकमेवप्रारब्धप्रतिबंधाभावे ॥
श्रुत्वात्मानंमतिपूर्वंपाह्युस्यैहैवदृष्टिंपरमस्यविंदेत् ॥ यद्यारब्धंकर्मनिबंधकंस्यात्प्रेत्यैवपश्येद्यो

गमेवान्ववेक्ष्येतिसौपर्णश्रुतौदर्शनात् ॥ अनादिजन्मसंबंधनिर्भेत्तुंपापपंजरम् ॥ यावत्यासेवयाशक्यंतावत्कार्यंनसंशयः ॥ यावद्दूरेस्थितोगम्यात्तावद्गंतव्यमेवहि ॥ इहजन्मांतरेवापितावत्येवतुदर्शनम् ॥ श्रवणंमननंचैवनिदिध्यासनमेवच ॥ परेगुरौचयाभक्तिःपरिचर्यादिकंहरेः ॥ एषासेवेतिसंप्रोक्तायययातद्दर्शनंभवेदितिबृहत्संहितायाम् ॥ ५० ॥ अ० १० ॥

॥ ॐएवंमुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ ॥ एवमेवप्रारब्धकर्माभावेशरीरपातानंतरमेवमोक्षः ॥ तद्भावेजन्मांतराणीत्यनियमः ॥ धर्मीस्वर्गंविधर्मीनिरयमेत्येवांब्रह्मसंस्थोमृतमेत्येवब्रह्मसंस्थोमृतमेत्येवेतिब्रह्मसंस्थस्यमोक्षस्यैवावधारणात् ॥ विद्वानमृतमाप्नोतिनात्रकार्याविचारणा ॥ अवसन्नंयदारब्धंकर्मतत्रैवगच्छति ॥ नचेद्बहूनिजन्मानिप्राप्यैवतेनसंशयइतिचनारायणाध्यात्मे ॥ ५१ ॥ अ० ११ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यचतुर्थःपादः ॥ ४ ॥



श्रीवेदव्यासायनमः ॥ ॥ हरिःॐफलंनिगद्यतेऽस्मिन्नध्याये॥कर्मनाशाख्यंफलमस्मिन्पादे॥
नित्यशःकार्यंसर्वथाभाव्यंसाधनंप्रथमतउच्यते ॥ प्रायिकत्वाच्चाध्यायानांपादानांचनविरोधः ॥
ॐआवृत्तिरसकृदुपदेशात्ॐ ॥ १ ॥ ॥ आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइ
त्यादीनांनाग्निष्टोमादिवदेकवारेणैवफलप्राप्तिः॥किंत्वावृत्तिःकर्तव्या ॥ सएषोऽणिमैतदात्म्यमिदं
सर्वमित्याद्यसकृदुपदेशात् ॥ १ ॥ ॥ ॐलिंगाच्चॐ ॥ २ ॥ ॥ सतपोऽतप्यत ॥ पुनरेवव
रुणंपितरमुपससारेत्याद्यावर्तनलिंगाच्च॥ नित्यशःश्रवणंचैवमननंध्यानमेवच॥ कर्तव्यमेवपुरुषैर्ब्र
ह्मदर्शनमिच्छुभिरितिबृहत्तंत्रे ॥२॥अ० १ ॥ ॥ ॐआत्मेतितूपगच्छंतिग्राहयंतिचॐ ॥ ३ ॥
आत्मेत्युपदेशउपासनंचमोक्षार्थिभिःसर्वथाकार्यमेव ॥ नान्यंविचिंतयेआत्मानमेवाहंविजानीया
मात्मानमुपासेआत्माहिममैषभवतीतिह्युपगच्छंति ॥ आत्मेत्येवोपास्वात्मेत्येवविजानीहिना
न्यत्किंचनविजानीथाआत्माह्येवैषभवतीतिग्राहयंतिच॥आत्मेत्युपासनंकार्यंसर्वथैवमुमुक्षुभिः॥
नानाक्लेशसमायुक्तोऽप्येतावन्नैवविस्मरेदितिभविष्यत्पर्वणि ॥ आत्माविष्णुरितिध्यानंविशेषण
विशेष्यतः ॥ सर्वेषांचमुमुक्षूणामुपदेशश्चतादृशः ॥ कर्तव्योनास्यहानेनकस्यचिन्मोक्षइष्यतेइ
तिब्राह्मे ॥ ३॥अ० २ ॥ ॥ ॐनप्रतीकेनहिसःॐ ॥ ४ ॥ ॥ नामब्रह्मेत्युपास्तइत्यादिनाश
ब्दभ्रांत्यानप्रतीकेब्रह्मदृष्टिःकार्या ॥ किंतुतत्स्थत्वेनैवोपासनंकार्यम् ॥ ब्रह्मतर्केच ॥ नामादि
प्राणपर्यंतमुभयोःप्रथमत्वतः ॥ ऐक्यदृष्टिरितिभ्रांतिरबुधानांभविष्यति ॥ नामादिस्थितिरे
वात्रब्रह्मणोहिविधीयते ॥ सर्वार्थाप्रथमायस्मात्ससम्यर्थाततोमतेति ॥४॥ अ० ३॥ ॥ ॐब्रह्म

गमेवान्ववेक्ष्येतिसौपर्णश्रुतौदर्शनात् ॥ अनादिजन्मसंबंधंनिर्भेत्तुंपापपंजरम् ॥ याव
त्यासेवयाशक्यंतावत्कार्यंनसंशयः ॥ यावद्दूरेस्थितोगम्यात्तावद्गंतव्यमेवहि ॥ इहजन्मां
तरेवापितावत्येवतुदर्शनम् ॥ श्रवणंमननंचैवनिदिध्यासनमेवच ॥ परेगुरौचयाभक्तिःपरि
चर्यादिकंहरेः ॥ एषासेवेतिसंप्रोक्तायपातद्दर्शनंभवेदितिबृहत्संहितायाम् ॥ ५० ॥ अ० १० ॥
॥ ॐएवंमुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ ॥ एवमेवप्रारब्धकर्मा
भावेशरीरपातानंतरमेवमोक्षः ॥ तद्भावेजन्मांतराणीत्यनियमः ॥ धर्मीस्वर्गंविधर्मीनिरयमे
त्येवांब्रह्मसंस्थोमृतमेत्येवब्रह्मसंस्थोमृतमेत्येवेतिब्रह्मसंस्थस्यमोक्षस्यैवावधारणात् ॥ विद्वानमृ
तमाप्नोतिनात्रकार्याविचारणा ॥ अवसन्नंयदारब्धंकर्मतत्रैवगच्छति ॥ नचेद्बहूनिजन्मानि
प्राप्यैवतेनसंशयइतिचनारायणाध्यात्मे ॥ ५१ ॥ अ० ११ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसू
त्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यचतुर्थःपादः ॥ ४ ॥



श्रीवेदव्यासायनमः ॥ ॥ हरिःॐफलंनिगद्यतेऽस्मिन्नध्याये॥कर्मनाशाख्यंफलमस्मिन्पादे॥
नित्यशःकार्यंसर्वथाभाव्यंसाधनंप्रथमतउच्यते ॥ मौधिकत्वाच्चाध्यायानांपादानांचनविरोधः ॥
ॐआवृत्तिरसकृदुपदेशात्ॐ ॥ १ ॥ ॥ आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइ
त्यादीनांनाग्निष्टोमादिवदेकवारेणैवफलप्राप्तिः॥किंत्वावृत्तिःकर्तव्या ॥ सएषोऽणिमैतदात्म्यमिदं
सर्वमित्याद्यसकृदुपदेशात् ॥ १ ॥ ॥ ॐलिंगाच्चॐ ॥ २ ॥ ॥ सतपोऽतप्यत ॥ पुनरेववव
रुणंपितरमुपससारेत्याद्यावर्तनलिंगाच्च॥ नित्यशःश्रवणंचैवमननंध्यानमेवच॥ कर्तव्यमेवपुरुषैर्ब्र
ह्मदर्शनमिच्छुभिरितिबृहत्तंत्रे ॥२॥अ० १ ॥ ॥ ॐआत्मेतितूपगच्छंतिग्राहयंतिचॐ ॥ ३ ॥
आत्मेत्युपदेशउपासनंचमोक्षार्थिभिःसर्वथाकार्यमेव ॥ नान्यंविचिंतयेआत्मानमेवाहंविजानीया
मात्मानमुपासेआत्माह्निममैषभवतीतिह्युपगच्छंति ॥ आत्मेत्येवोपास्वात्मेत्येवविजानीहिना
न्यत्किंचनविजानीथाआत्माह्येवैषभवतीतिग्राहयंतिच॥आत्मेत्युपासनंकार्यंसर्वथैवमुमुक्षुभिः॥
नानाक्लेशसमायुक्तोऽप्येतावन्नैवविस्मरेदितिभविष्यत्पर्वणि ॥ आत्माविष्णुरितिध्यानंविशेषण
विशेष्यतः ॥ सर्वेषांचमुमुक्षूणामुपदेशश्चतादृशः ॥ कर्तव्योनास्यहानेनकस्यचिन्मोक्षइष्यतेइ
तिब्राह्मे ॥ ३॥अ० २ ॥ ॥ ॐनप्रतीकेनहिसःॐ ॥ ४ ॥ ॥ नामब्रह्मेत्युपास्तइत्यादिनाश
ब्दभ्रांत्यानप्रतीकेब्रह्मदृष्टिःकार्या ॥ किंतुतत्स्थत्वेनैवोपासनंकार्यम् ॥ ब्रह्मतर्केच ॥ नामादि
प्राणपर्यंतमुभयोःप्रथमत्वतः ॥ ऐक्यदृष्टिरितिभ्रांतिरबुधानांभविष्यति ॥ नामादिस्थितिरे
वात्रब्रह्मणोहिविधीयते ॥ सर्वार्थाप्रथमायस्मात्तसम्यर्थाततोमतेति ॥४॥ अ० ३॥ ॥ ॐब्रह्म

दृष्टिरुत्कर्षात्ॐ ॥ ५ ॥ ॥ ब्रह्मदृष्टिश्चसर्वथाकार्यैवपरमेश्वरे ॥ उत्कृष्टत्वात् ॥ ब्रह्मदृष्ट्यास
दोपास्योविष्णुःसर्वैरपिध्रुवम् ॥ महत्त्ववाचीशब्दोयंमहत्त्वज्ञानमेवहि ॥ सर्वतःप्रीतिजनकमत्त
स्तत्सर्वथाभवेत् ॥ आत्मेत्येवयदोपासातदाब्रह्मत्वसंयुता ॥ कार्यैवसर्वथाविष्णोर्ब्रह्मत्वंनपरित्य
जेत् ॥ इतिचब्रह्मतर्के ॥ ५ ॥अ०४ ॥ ॥ ॐआदित्यादिमतयश्चांगउपपत्तेःॐ ॥ ६ ॥ ॥ च
क्षोःसूर्योअजायतेत्याद्युपासनंदेवानांकार्यमेव ॥ स्वोत्पत्तिस्थानत्वात्स्वाश्रयत्वान्मुक्तौतत्रल
यस्यापेक्षितत्वाच्चोपपन्नंतेषांतथोपासनम् ॥ नारायणतंत्रेच ॥ आधिव्याधिनिमित्तेनविक्षिप्त
मनसोऽपितु ॥ गुणानांस्मरणाशक्तौविष्णोर्ब्रह्मत्वमेवतु ॥स्मर्तव्यंसततंतत्तुनकदाचित्परित्यजे
त् ॥ अत्रसर्वगुणानांचयतोंतर्भावइष्यते ॥ स्वोत्पत्त्यंगंचदेवानांविष्णोश्चिंत्यंसदैवतु ॥ तेषांतत्र
प्रवेशोहिमुक्तिरित्युच्यतेबुधैः ॥ तदाश्रिताश्चतेनित्यंततश्चिंत्यंविशेषतइति ॥६॥अ०५॥ ॥ॐ
आसीनःसंभवात्ॐ ॥ ७ ॥ ॥ सर्वदोपासनंकुर्वन्नप्यासीनोविशेषतःकुर्यात् ॥ तदाविक्षेपा
ल्पत्वेनसंभवात् ॥ ७ ॥ ॥ ॐध्यानाच्चॐ ॥ ८ ॥ ॥ स्मरणोपासनंचैवध्यानात्मकमिति
द्विधा ॥ स्मरणंसर्वदायोग्यंध्यानोपासनमासने ॥ नैरंतर्यमनोवृत्तेर्ध्यानमित्युच्यतेबुधैः ॥ आ
सीनस्यभवेत्तत्तुनशयानस्यनिद्रया ॥ स्थितस्यगच्छतोवापिविक्षेपस्यैवसंभवात्॥ स्मरणात्परमं
ज्ञेयंध्यानंनास्त्यत्रसंशयइतिचनारायणतंत्रे ॥ अतोध्यानत्वाच्च ॥ ८ ॥ ॥ ॐअचलत्वंचापे
क्ष्यॐ ॥ ९ ॥ ॥ अचलंचेच्छरीरंस्यात्मनसश्चाप्यचालनम् ॥ चलनेतुशरीरस्यचंच
लंचमनोभवेदितिचब्रह्मांडे ॥ ९ ॥ ॥ ॐस्मरंतिचॐ ॥ १० ॥ ॥ समंकायशिरोग्रीवंधा

रयन्नचलंस्थिरः ॥ संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन्नित्यादि ॥ १०॥ ॥ ॐयत्रैकाग्रता
तत्राविशेषात् ॥ ११ ॥ ॥ देशकालावस्थादिषुयत्रैकाग्रताभवतितत्रैवस्थातव्यम् ॥ तमेवदेशं
सेवेततंकालंतामवस्थितिम् ॥ तानेवभोगान्भुंजीतमनोयत्रप्रसीदति ॥ नहिदेशादिभिःकश्चित्
विशेषःसमुदीरितः॥मनःप्रसादनार्थंहिदेशकालादिचिंतनेतिवाराहे॥ ११॥अ० ६॥ ॥ ॐआप्राय
णात्तत्रापिहिदृष्टम्ॐ ॥ १२ ॥ ॥ यावन्मोक्षस्तावदुपासनादिकार्यम् ॥ सयोहवैतद्भगन्म
नुष्येषुप्रायणांतमोंकारमभिध्यायीतेतिहिश्रुतिः ॥ सर्वदैवेनमुपासीतयावद्विमुक्तिर्मुक्ताअपिह्ये
नमुपासतइतिचसौपर्णश्रुतिः ॥ शृणुयाद्यावदज्ञानंमतिर्यावदयुक्तता ॥ ध्यानंचयावदीक्षा
स्यान्नेक्षाक्कचनबाध्यते ॥ दृष्टतत्त्वस्यचध्यानंयदादृष्टिर्नविद्यते ॥ भक्तिश्चानंतकालीना
परमेब्रह्मणिस्फुटा ॥ आविमुक्तेर्विधिर्नित्यंस्वतएवततःपरमितिब्रह्मांडे ॥१२॥अ०७ ॥ ॥ ॐ
तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात्ॐ ॥१३॥ ॥ ब्रह्मदर्शनेउत्तराघस्याश्लेषःपू
र्वस्यविनाशश्च ॥ तद्यथापुष्करपलाशआपोनाश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यते ॥
तद्यथैषीकातूलमग्नौप्रोतंप्रदूयेतैवंहैवास्यसर्वेपाप्मानःप्रदूयंतइतितद्व्यपदेशात् ॥ १३ ॥
॥ ॐइतरस्याप्येवमसंश्लेषःपातेतुॐ ॥ १४ ॥ ॥ पुण्यस्याप्येवमश्लेषःपाते ॥ तुशब्दो
नुत्थानवाची ॥ यथाश्लेषोविनाशश्चमुक्तस्यतुविकर्मणः ॥ एवंसुकर्मणश्चापिपततस्तमसि
ध्रुवमित्याग्नेये ॥१४॥ ॥ ॐअनारब्धकार्येएवतुपूर्वेतदवधेःॐ ॥ १५ ॥ ॥ अनारब्धकार्यै
एवपूर्वेपुण्यपापेविनश्यतः ॥ तस्यतावदेवचिरम् ॥ यावन्नविमोक्ष्येऽथसंपत्स्यतइतितदव

धेः ॥ तुशब्दःस्मृतिद्योतकः ॥ यदनारब्धपापंस्यात्तद्विनश्यतिनिश्चयात् ॥ पश्यतोब्रह्म
निर्द्वंद्वंहीनंचब्रह्मपश्यतः ॥ द्विषतोवाभवेत्पुण्यनाशोनास्त्यत्रसंशयः ॥ तस्याप्यारब्धका
र्यस्यनविनाशोऽस्तिकुत्रचित् ॥ आरब्धयोश्चनाशःस्यादल्पयोःपुण्यपापयोरितिचनारायणतंत्रे
॥ १५॥ ॥ॐअग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात् ॥१६॥ ॥ अग्निहोत्राद्यपितुमोक्षानुभवायै
व ॥ तुशब्दाद्ब्रह्मदर्शनवतः॥ सएनमविदितोनभुनक्तियथावेदोवाननूक्तोऽन्यद्वाकर्माकृतम्॥यदि
हवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएवात्मानमेवलोकमुपासीतसयआ-
त्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजतइतिदर्शनात्॥
॥१६॥ ॥ ॐअतोऽन्यदपीत्येकेषामुभयोःॐ॥१७॥ ॥मुक्तावनुभवकारणाद्यदन्यत्पुण्यमपि
विनश्यत्यप्रारब्धमनभीष्टंचतथाह्येकेषांपाठउभयोस्त्यागेन ॥ तस्यपुत्रादायमुपयंति॥ सुहृदःसा
धुकृत्यांद्विषंतःपापकृत्यामिति ॥ अनभीष्टमनारब्धंपुण्यमप्यस्यनश्यति ॥ किमुपापंपरब्र
ह्मज्ञानिनोनात्रसंशयइतिपाद्मे ॥ १७ ॥ ॥ ॐयदेवविद्ययेतिहिॐ ॥ १८ ॥ ॥ ब्रह्मदर्शि
कृतमल्पमपिपुण्यंमहत्तममनंतंचभवति ॥ यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरं
भवतीतिश्रुतेः ॥ नहास्यकर्मक्षीयतइतिच ॥ अल्पमात्रकृतोधर्मोभवेज्ज्ञानवतोमहान् ॥ महा
नपिकृतोधर्मोह्यज्ञानांनिष्फलोभवेदितिचभारते ॥ १८ ॥ ॥ ॐभोगेनत्वितरेक्षपयित्वाथसंप
त्स्यतेॐ ॥ १९ ॥ ॥ आरब्धपुण्यपापेभोगेनक्षपयित्वाब्रह्मसंपत्स्यते ॥ अथेतिनियमसू
चकः ॥ आरब्धपुण्यपापस्यभोगेनक्षपणादनु ॥ प्राप्नोत्येवतमोघोरंब्रह्मवानात्रसंशयः ॥ब्रह्मणां

शतकालात्तुपूर्वमारब्धसंक्षयः॥नियमेनभवेन्नात्रकार्याकाचिद्विचारणेतिचनारायणतंत्रे ॥१९॥
अ०८॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचि
तेचतुर्थाध्यायस्यप्रथमःपादः ॥ १ ॥ ॥ श्रीवेदव्यासात्मकश्रीहयग्रीवार्पणमस्तु ॥ ॥ ७ ॥
श्रीलक्ष्मीवेंकटेशायनमः ॥ ॥ हरिःॐदेवानांमोक्षउत्क्रांतिश्चास्मिन्पादउच्यते ॥
॥ ॐवाङ्मनसिदर्शनाच्छब्दाच्चॐ ॥ १ ॥ ॥ वागभिमानिन्युमामनसोभिमानिनिरुद्रे
विलीयते ॥ वाचोमनोवशत्वदर्शनात् ॥ तस्ययावन्नवाङ्मनसिसंपद्यतइतिशब्दाच्च ॥ उमा
वैवाक्समुद्दिष्टामनोरुद्रउदाहृतः ॥ तदेतन्मिथुनंज्ञात्वानदांपत्याद्विहीयतइतिस्कांदे ॥ १ ॥
॥ ॐअतएवचसर्वाण्यनुॐ ॥ २ ॥ ॥ अतएवचशब्दात्सर्वाणिदैवतानियथानुकूलंवि
लीयंते ॥ अग्नौसर्वेदेवाविलीयंतेग्निरिंद्रइंद्रउमायामुमारुद्रेविलीयतएवमन्यानिदैवतानियथानु
कूलमितिहिगौपवनश्रुतिः ॥२॥ अ०१॥ ॥ ॐतन्मनःप्राणउत्तरात्ॐ ॥ ३ ॥ ॥ मनःप्रा
णइत्युत्तराद्वचनात् ॥ मनोभिमानीरुद्रः ॥ प्राणेवायौविलीयते ॥ वायोर्वावरुद्रउदेतिवायौ
विलीयतेतस्मादाहुर्वायुर्देवानांश्रेष्ठइतिचकौंडिन्यश्रुतिः ॥ ३ ॥अ०२॥ ॥ ॐसोध्यक्षेतदुप
गमादिभ्यःॐ ॥ ४ ॥ ॥ सप्राणःपरमात्मनिविलीयते ॥ सर्वेप्राणमुपगच्छंतिप्राणःपरमुपग
च्छति ॥ प्राणंदेवाअनुप्राणंतिप्राणःपरमनुप्राणितितस्मादाहुःप्राणस्यप्राणइति ॥ प्राणःपर
स्यांदेवतायाम् ॥ मुक्ताःसंतोग्निमाविश्यदेवाःसर्वेपिभुंजते ॥ अग्निरिंद्रंतथेंद्रश्चवायुमावि
श्यसोऽपितु ॥ आविश्यपरमात्मानंभुंक्तेभोगांस्तुबाह्यकान् ॥ नह्यानंदोनिजस्तेषांपरैर्लभ्यः

कथंचन ॥ किमुविष्णोःपरानंदोनतेविष्णाविनिश्रुतेः ॥ प्राणस्यतेजसिलयोमार्गमात्रमुदाहृ
तम् ॥ सर्वेशितुश्चसर्वादेस्तस्यान्यत्रलयःकथमित्यादिश्रुतिस्मृतिभ्यः ॥ ४ ॥ अ० ३ ॥ ॥ ॐ
 भूतेषुतच्छ्रुतेःॐ ॥ ५ ॥ ॥ भूतेष्वन्येषांदेवानांलयः ॥ ॥ भूतेषुदेवाविलीयंतेभूतानिपरेन अ०४ ४
परउदेतिनास्तमेत्येकलएवमध्येस्थातेतिबृहच्छ्रुतेः ॥ ५ ॥ अ० ४ ॥ ॥ ॐनैकस्मिन्दर्श
यतोहिॐ ॥ ६ ॥ ॥ नैकस्मिन्भूतेसर्वेषांदेवानांलयः ॥ पृथिव्यामृभवोविलीयंते ॥ वरु
णेश्विनावग्नावग्नयोवायाविंद्रःसोमआदित्योबृहस्पतिर्गिरयाकाशएवसाध्याविलीयंतेऋभवःपृथि
व्यांवरुणआपोग्नयस्तेजसिमरुतोमारुतइतिआकाशेविनायकाविलीयंतेइतिमहोपनिषच्चतुर्वेद
शिखाचदर्शयतः ॥ अतोग्नौसर्वेदेवाविलीयंतइतितत्रनिर्दिष्टानामेव ॥ ६ ॥ अ०५ ॥ ॥ ॐ
समनाचासृत्युपक्रमादमृतत्वंचानुपोष्यॐ ॥ ७ ॥ ॥ देशतःकालतश्चव्याप्त्यासमोनापरमपुरु
षोयस्याःसासमना ॥ संसारानुपक्रमात्स्वतएवामृतत्वंतस्याः ॥ बृहच्छ्रुतिश्च ॥ द्वावावसृत्यनुप
क्रमौप्रकृतिश्चपरमश्चद्वावेतौनित्यमुक्तौनित्यौचसर्वगतौचेतौज्ञात्वाविमुच्यतइतिनैतावतासाम्यम्
॥ ७॥ ॥ ॐतदपीतेःसंसारव्यपदेशात्ॐ ॥ ८ ॥ ॥ समावेतौप्रकृतिश्चपरमश्चनित्यौस
र्वगतौनित्यमुक्तावसमावेतौप्रकृतिश्चपरमश्चविलीनोहिप्रकृतौसंसारमेतिविलीनःपरमेह्यमृतत्वमेती
तिसौपर्णश्रुतेः ॥ ८ ॥ ॥ ॐसूक्ष्मंप्रमाणतश्चतथोपलब्धेःॐ ॥ ९ ॥ ॥ सूक्ष्मत्वंचाधि 
कंब्रह्मणःप्रकृतेर्ज्ञानानंदैश्वर्यादिप्रमाणाधिक्यंच ॥ सर्वतःप्रकृतिःसूक्ष्माप्रकृतेःपरमेश्वरः ॥
ज्ञानानंदौतथैश्वर्यंगुणाश्चान्येधिकाःप्रभोरितिचतुरश्रुतिः ॥ ९ ॥ ॥ ॐनोपमर्देनातःॐ ॥

॥ १० ॥ ॥ अतस्तस्ययेविशेषगुणास्तेषामनुपमर्देनैवसाम्यम् ॥ देशतःकालतश्चैवस
माप्रकृतिरीश्वरे ॥ उभयोरप्यबद्धत्वंतदबंधःपरात्मनः ॥ स्वतएवपरेशस्यसाचोपास्तेसदाह
रिम् ॥ प्रकृतेःप्राकृतस्यापियेगुणास्तेतुविष्णुना ॥ नियतानैवकेनापिनियताहिहरेर्गुणाइतिभ
विष्यत्पर्वणि ॥ १० ॥ ॥ ॐअस्यैवचोपपत्तेरूष्माॐ ॥ ११ ॥ ॥ द्विधाहीदमवदृश्यतेऊष्मावद
नूष्मावच्च ॥ तत्रोष्मावत्परंब्रह्म ॥ यन्नजिघ्रंतिनपश्यंतिनशृण्वंतिनविजानंतिअथानूष्मावत् ॥
प्रकृतिश्चप्राकृतंचयन्नजिघ्रंतिजिघ्रंतिचयन्नपश्यंतिपश्यंतिचयन्नशृण्वंतिशृण्वंतिचयन्नजानंति
जानंतिचेतिसौपर्णश्रुतेःकिंचित्साम्योपपत्तेः ॥ ११ ॥ ॥ ॐप्रतिषेधादितिचेन्नशारी
रात्ॐ ॥ १२ ॥ ॥ असमोवाएषपरोनहिकश्चिदेवंदृश्यतेसर्वेंह्येतेऽणवोजायंतेचम्रियंतेच
च्छिद्राह्येतेभवंत्यथपरोनजायतेनम्रियतेपूर्णश्चैवभवतीतिचतुर्वेदशिखायांसाम्यप्रतिषेधादिति
चेन्न ॥ शारीराद्धिसाम्यंप्रतिषिध्यते ॥ १२ ॥ कुतः ॥ ॥ ॐस्पष्टोह्येकेषाम्ॐ ॥ १३ ॥
॥ अथातःसमाश्वासमाश्वाभिधीयंतेसमाऽसमाश्वाथसमानिब्रह्मणोरूपाणियैरुत्पत्तिःस्थिति:र्लयो
नियतिरायतिश्चैकंह्येवैतद्भवति ॥ अथासमाब्रह्मेंद्रोरुद्रःप्रजापतिर्बृहस्पतिर्येकेचदेवागंधर्वामनु
ष्याःपितरोऽसुरायत्किंचेदंचरमचरंच ॥ अथसमासमाप्रकृतिर्वावसमासमासैषाहिनित्याजरातद्धशा
चेतिस्पष्टोहिमाध्यंदिनायनानांसमादिवादः ॥ १३ ॥ ॥ ॐस्मर्यंतेचॐ ॥ १४ ॥ ॥ मत्स्य
कूर्मवराहाद्याःसमाविष्णोरभेदतः ॥ ब्रह्माद्यास्त्वसमाःप्रोक्ताःप्रकृतिश्चसमासमेतिचवाराहे ॥
॥ १४ ॥ अ० ६॥ ॥ ॐतानिपरेतथाह्याहॐ ॥ १५ ॥ ॥ प्राणद्वारेणसर्वाणिदैवतानिपरमात्म

निविलीयंते ॥ सर्वेदेवाःप्राणमाविश्यदेवेमुक्तालयंपरमेयांत्यचिंत्यइतिकौषारवश्रुतिः ॥ १५ ॥
अ० ७॥ ॥ॐअविभागोवचनात्ॐ॥१६॥ ॥एतेदेवाएनमात्मानमनुविश्यसत्याःसत्यकामाःसत्य
संकल्पायथानिकाममंतर्बहिःपरिचरंतीतिगोपवनश्रुतिः ॥ तत्परमेश्वरकामाद्यविभागेनैवतेषांसत्य
कामत्वम्॥कामेनमेकामआगाद्धृदयाद्धृदयंमृत्योरितिवचनात् ॥ मुक्तानांसत्यकामत्वंसामर्थ्यंचप
रस्यतु ॥ कामानुकूलकामत्वंनान्यत्तेषांविधीयतइतिब्राह्मे॥१६॥अ०८॥ ॥ॐतदोकोग्रज्वलनं
तत्प्रकाशितद्वारोविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्चहार्दानुगृहीतःशताधिकयाॐ॥१७॥
उत्क्रांतिकालेहृदयस्याग्रज्वलनंभवति ॥ तस्यहैतस्यहृदयस्याग्रंप्रद्योततइतिश्रुतेः ॥ तत्प्रका
शितद्वारोनिष्क्रामति ॥ विद्यासामर्थ्यात् ॥ यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरम् ॥ तंतमेवै
तिकौंतेयसदातद्भावभावितइतिस्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च ॥ आचार्यस्तुतेगतिंवक्तेति
लिंगम् ॥ हृदिस्थेनैवहरिणातस्यैवानुग्रहेणतु ॥ उत्क्रांतिर्ब्रह्मरंध्रेणतमेवोपासतोभवेदितिचा
ध्यात्मे ॥ शतंचैकाचहृदयस्यनाड्यःस्तासांमूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्याउत्क्रमणेभवंतीतिच ॥१७॥ ॥ ॐरश्म्यनुसारीॐ॥ १८ ॥ ॥ निष्क्रामतिसह
स्रवाआदित्यस्यरश्मयआसुनाडीष्वाततास्तत्रश्वेतःसुषुम्नोब्रह्मयानः ॥ सुषुम्नायामाननस्तत्प्र
काशेनैषनिर्गच्छतीतिपौत्रायणश्रुतिः ॥ १८ ॥ ॥ ॐनिशिनेतिचेन्नसंबंधात्ॐ ॥ १९ ॥
रश्म्यभावान्निशिज्ञानिनउत्क्रमणंनयुक्तमितिचेन्न ॥ सर्वदासंबंधाद्रश्मीनाम् ॥ १९ ॥ कियत्का
लम् ॥ ॥ ॐयावद्देहभावित्वाद्दर्शयतिचॐ ॥ २० ॥ ॥ यावद्देहोविद्यतेतावद्रश्मिसंबंधोऽस्त्ये

व ॥ संसृष्टावाएतेरश्मयश्चनाड्यश्चनैषांवियोगोयावदिदंशरीरमतएतैःपश्यत्येतैरुत्क्रामत्येतैःप्रवर्त
तइतिमाध्यंदिनायनश्रुतिः॥२०॥ ॥ ॐअतश्चायनेपिहिदक्षिणेॐ॥ २१॥ ॥दक्षिणेमरणाद्या
तिस्वर्गंब्रह्मोत्तरायणइत्युक्तेपिज्ञानिनोदक्षिणायनोत्क्रांतिर्युज्यते ॥शतंपंचैवसूर्यस्यदक्षिणायनर
श्मयः ॥ तावंतएवनिर्दिष्टाउत्तरायणरश्मयः ॥ तेसर्वेदेहसंबंधात्सर्वदासर्वदेहिनाम् ॥ महर्लोका
दिगंतारउत्तरायणरश्मिभिः ॥ निर्गच्छंतीनरैश्चापियैरेष्टव्येतरागतिः॥ उत्तरंदक्षिणमितितएवतुनि
गद्यते ॥ नतुकालविशेषोस्तिज्ञानिनांनियमात्फलम्॥ददातिकालेऽनुगुणेफलंकिंचिद्विशिष्यते ॥
अत्युत्तमानांकेषांचिन्नविशेषोऽस्तिकालतइतिनारायणाध्यात्मे॥२१॥अ०९॥ ॥ॐयोगिनः
प्रतिस्मर्येतेस्मार्तेचैतेॐ॥ २२॥ ॥ नकेवलंकालादिकृतेब्रह्मचंद्रगतीस्मर्यैते ॥ किंतुज्ञानयोगि
नःकर्मयोगिनश्च ॥ अग्निर्ज्योतिरहःशुक्लःषण्मासाउत्तरायणम् ॥ तत्रप्रयातागच्छंतिब्रह्मब्रह्मवि
दोजनाः ॥ धूमोरात्रिस्तथाकृष्णःषण्मासादक्षिणायनम् ॥ तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्त
तइत्यत्रयोगीतिविशेषणात् ॥ स्मरणनिमित्तेचैतेगती ॥ गत्यनुस्मरणाद्ब्रह्मचंद्रंवागच्छतिध्रुवम्॥
अननुस्मरतःकालेस्मरणंप्राप्यवैगतिरित्यध्यात्मे ॥२२॥अ०१०॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृ
तब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यद्वितीयःपादः ॥ २ ॥
श्रीलक्ष्मीनरसिंहायनमः ॥ ॥ मार्गोगम्यंचास्मिन्पादउच्यते ॥ ॥ ॐआर्चि
रादिनातत्प्रथितेःॐ ॥ १ ॥ ॥ तेर्चिषमभिसंभवंत्यर्चिषोहरह्नआपूर्यमाणपक्षमित्यर्चिषः
प्राथम्यंश्रूयते॥ यदाहवैपुरुषोस्माल्लोकात्प्रैतिसवायुमागच्छतीतिवायोः॥तत्रार्चिषःप्रासिरेवप्रथ

मा ॥ द्वावेवमार्गौप्रथितावर्चिरादिर्विपश्चिताम ॥ धूमादिःकर्मिणांचैवसर्ववेदविनिर्णयात् ॥
अग्निर्ज्योतिरितिद्वेधैवार्चिषःसंप्रतिष्ठितिः ॥अग्निंगत्वाज्योतिरेतिप्रथमंब्रह्मसंव्रजन्निति ॥ एक
स्मिंस्तुपुरेसंस्थोद्विरूपोग्नेःसुतोमहानितिचब्रह्मतर्के॥१॥अ०१॥ ॥ॐवायुशब्दादविशेषविशेषा
भ्यांम्ॐ॥ २ ॥ ॥ अर्चिषोवायुंगच्छंति ॥ सवायुमागच्छतीतिसामान्यवचनात् ॥ सइतोगतो
द्वितीयांगतिंवायुमागच्छतीतिवायोरहरह्नआपूर्यमाणपक्षमितिविशेषवचनाच्च ॥२॥ अ० २ ॥
ॐतटितोऽधिवरुणःसंबंधात्ॐ ॥ ३ ॥ ॥ मासेभ्यःसंवत्सरंसंवत्सराद्वरुणलोकंवरुणलोका
त्प्रजापतिलोकमितिकौंडिन्यश्रुतिः ॥ संवत्सरात्तटितमागच्छतितटितःप्रजापतिलोकमितिचगौ
पवनश्रुतिःतत्रतटितोवरुणंगच्छतितटिताह्यूह्यतेवरुणलोकस्तटिदुपरिमुक्तामयोराजते ॥ त
त्राऽसौवरुणोराजासत्यानृतेविविंचतीत्युपरिसंबंधत्वश्रुतेः ॥ ३ ॥ अ० ३ ॥ ॥ ॐआतिवा
हिकस्तल्लिंगात्ॐ ॥ ४ ॥ ॥ पूर्वोक्तस्त्वातिवाहिकोवायुः ॥ पूर्वंगमनल्लिंगात् ॥ ४ ॥ कुतः॥
॥ ॐउभयव्यामोहात्तत्सिद्धेःॐ ॥ ५ ॥ ॥ सवायुमागच्छतीतिप्रथममुच्यते ॥ उ
त्क्रांतोविद्वान्परमभिगच्छन्विद्युतमेवांततउपगच्छतिद्यौर्वाविद्युत्तत्पतिंवायुमुपगम्यतेनैवब्रह्म
गच्छतीत्यंतेपिवायुगमनश्रुतेः ॥ पूर्वोक्तआतिवाहिकःपरोवेतिव्यामोहेउत्तरेदिवस्पतिरितिवि
शेषणात्पूर्वत्रातिवाहिकस्यैवसिद्धेः ॥ ब्रह्मतर्केच ॥ उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेव
तु ॥ ततोहिवायोःपुत्रंचयोऽसौनाम्नातिवाहिकः ॥ ततोहःपूर्वपक्षंचाप्युदक्संवत्सरंतथा ॥ तटि
तंवरुणंचैवप्रजापंसूर्यमेवच ॥ सोमंवैश्वानरंचेंद्रंध्रुवंदेवींदिवंतथा ॥ततोवायुंपरंप्राप्यतेनैतिपुरुषो

त्तममिति ॥५॥अ०१ ॥ ॥ ॐवैद्युतेनैवततस्तच्छ्रुतेःॐ ॥ ६ ॥ ॥ प्रकारांतरेणतत्रतत्रो
च्यमानत्वाद्वायोरपिपरतोब्रह्मणोर्वाग्गंतव्योस्तीतिनाशंकनीयम्॥विद्युत्पतिनावायुनैव ॥ सएना
नूब्रह्मगमयतीतिब्रह्मगमनश्रुतेः ॥ विद्युत्पतिर्वायुरेवनयेद्ब्रह्मनचापरः ॥ कुतोऽन्यस्यभवेच्छ
क्तिस्तमृतेप्राणनायकमितिबृहत्तंत्रे॥६॥अ०५॥ ॐकार्यंबादरिरस्यगत्युपपत्तेः ॥७॥ ॥ सए
नानूब्रह्मगमयतीतिकार्यंब्रह्मगमयतीतिबादरिर्मन्यते ॥ऋतेदेवान्परंब्रह्मकःपुमान्प्राप्नुयात्कचि
त् ॥यद्यपिब्रह्मदृष्टिस्याद्ब्रह्मलोकमवाप्नुयादित्यध्यात्मवचनात्तस्यैवगत्युपपत्तेः ॥ ७ ॥ ॥ ॐ
विशेषितत्वाच्चॐ ॥ ८ ॥ ॥ यदिहवावपरमभिपश्यतिप्राप्नोतिब्रह्माणंचतुर्मुखंप्राप्नोतिब्रह्माणं
चतुर्मुखमितिकौषारवश्रुतौ ॥ ८ ॥ ॥ ॐसामीप्यात्तुतद्व्यपदेशःॐ ॥ ९ ॥ ॥ ब्रह्मविदाप्नो
तिपरमितितद्व्यपदेशस्तुसमीपलएवपरमपिप्राप्नोतीत्येतदर्थएव ॥९॥ ॥ कदा ॥ ॥ ॐकार्यात्य
येतदध्यक्षेणसहातःपरमभिधानात्ॐ ॥ १० ॥ ॥ तेहिब्रह्माणमभिसंपद्ययदेतद्विलीयतेऽथस
हब्रह्मणापरमभिगच्छंतीतिसौपर्णश्रुतेः ॥ महाप्रलयेतदध्यक्षेणब्रह्मणासहगच्छंति ॥ १० ॥
ॐस्मृतेश्चॐ ॥ ११ ॥ ॥ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंति
परंपदमिति ॥ ११ ॥ ॥ ॐपरंजैमिनिर्मुख्यत्वात्ॐ ॥ १२ ॥ ॥ ब्रह्मशब्दस्यतत्रैवमुख्यत्वा
त्परमेवब्रह्मगमयतीतिजैमिनिर्मन्यते॥ १२ ॥ ॥ ॐदर्शनाच्चॐ ॥ १३ ॥ ॥ दृष्टत्वाच्चपर
ब्रह्मणः ॥१३॥ ॥ॐनचकार्येप्रतिपत्त्यभिसंधिःॐ ॥ १४ ॥ ॥ नहिकार्येप्रतिपत्तिःप्राप्नध
नीत्यभिसंधिश्च ॥ १४ ॥ यदुपास्तेपुमान्जीवन्यत्प्राप्तुमभिवांच्छति ॥ यच्चपश्यतितृप्तःसन्त

त्प्राप्नोतिमृतेरन्विति पाद्मे ॥ ॥ ॐअप्रतीकालंबनान्नयतीतिबादरायणउभयथाचदोषात्तत्क्रतु
श्चॐ ॥ १५ ॥ ॥प्रतीकंदेहउद्दिष्टोएषांतत्रैवदर्शनम् ॥ नतुव्याप्ततयाक्कापिप्रतीकालंबनास्तु
ते ॥ अप्रतीकादेवतास्तुऋषीणांशतमेवतु ॥ राज्ञांचशतमुद्दिष्टंगंधर्वाणांशतंतथा ॥ एतेऽ
धिकारिणोव्याप्तिदर्शनेऽन्येनतुक्कचित् ॥ अयोग्यदर्शनेयत्नात्क्लेशःपूर्वस्यचापितु ॥ अप्रती
काश्रयायेहितेयांतिपरमेवतु ॥ स्वदेहेब्रह्मदृष्ट्यैवगच्छेद्ब्रह्मसलोकताम् ॥ ब्रह्मणासहसंप्राप्ते
संहारेपरमंपदमितिगारुडवचनात् ॥ उभयत्रोक्तदोषाच्चाप्रतीकालंबनान्परंनयतीतिसयथाकामो
भवतितत्क्रतुर्भवतियत्क्रतुर्भवतितत्कर्मकुरुतेयत्कर्मकुरुतेतदभिसंपद्यतइतिश्रुतेश्च ॥ अत्रकर्मो
पासनमेवान्यान्कार्यंनयतीतिभगवन्मतम् ॥ १५ ॥ ॥ ॐविशेषंचदर्शयतिॐ ॥ १६ ॥
अंतःप्रकाशाबहिःप्रकाशाःसर्वप्रकाशादेवावावसर्वप्रकाशाऋषयोंतःप्रकाशामानुषाएवबहिःप्रका
शाइतिचतुर्वेदशिखायाम् ॥ १६॥अ०६ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यतृतीयःपादः ॥ ३ ॥ ॥ ॥
श्रीलक्ष्मीनारायणायनमः ॥ हरिःॐभोगमाहाऽस्मिन्पादे ॥ ॥ ॐसंपद्याविर्भावःस्वेनशब्दात्ॐ
॥ १ ॥ ॥ सएवंविदेवंमन्वानएवंपश्यन्नात्मानमभिसंपद्यैतेनात्मनायथाकामंसर्वान्कामाननुभ
वतीतिसौपर्णश्रुतेः ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिचएतंसेतुंतीर्त्वांधःसन्न
नंधोभवतीतिच॥तत्रतरणंनामतत्प्राप्तयेऽन्यतरणमेव ॥ इमांघोरामशिवांनदींतीर्त्वैतंसेतुमाप्यैते
नैवमेतनामोदतेप्रमोदतेआनंदीभवतीतिसौपर्णश्रुतेः॥१॥अ०१॥ ॥ ॐ...

ॐ ॥ २ ॥ ॥ मुक्तएवात्रोच्यते ॥ अहरहरेनमनुप्रविशत्युपसंक्रमतेचनतत्रमोदतेनप्रमो
दतेनचकामाननुभवति॥बद्धोह्येषतदा भवति॥अथयदैनंमुक्तोऽनुप्रविशतिमोदतेचप्रमोदतेचका-
मांश्चैवनुभवातीतिबृहच्छ्रुतौप्रतिज्ञानात् ॥ २ ॥ अ० २ ॥ ॥ ॐआत्माप्रकरणात्ॐ ॥ ३ ॥
परंज्योतिःशब्देनपरमात्मैवोच्यते ॥ तत्प्रकरणत्वात्॥परंज्योतिःपरंब्रह्मपरमात्मादिकागिरः॥ सर्व
त्रहरिमेवैकंब्रूयुर्नान्यंकथंचनेतिब्रह्मांडे ॥३॥ अ० ३ ॥ ॥ ॐअविभागेनदृष्टत्वात् ॐ ॥ ४ ॥
येभोगाःपरमात्मनाभुज्यंतेतएवमुक्तैर्भुज्यंतेयानेवाहंशृणोमियान्पश्यामियान्जिघ्रामितानेवैतइ
दंशरीरंविमुच्यानुभवंतीतिदृष्टत्वाच्चतुर्वेदशिखायाम् ॥ भविष्यत्पुराणेच ॥ मुक्ताःप्राप्यपरं
विष्णुंतद्भोगाँल्लेशतःक्वचित् ॥ बहिष्ठान्भुंजतेनित्यंनानंदादीन्कथंचनेति ॥ ४ ॥ अ०
॥ ४ ॥ ॥ ॐब्राह्मेणजैमिनिरुपन्यासादिभ्यःॐ ॥ ५ ॥ ॥ सर्वदेहपरित्यागेनमु
क्ताःसंतोब्राह्मेणैवदेहेनभोगान्भुंजतइतिजैमिनिर्मन्यते ॥ सवाएषब्रह्मनिष्ठइदंशरीरंमर्त्यमति
सृज्यब्रह्माभिसंपद्यब्रह्मणापश्यतिब्रह्मणाशृणोतिब्रह्मणैवेदंसर्वमनुभवतीतिमाध्यंदिनायनश्रुता
वुपन्यासात्॥आदत्तेहरिहस्तेनहरिदृष्टचैवपश्यति ॥ गच्छेच्चहरिपादेनमुक्तस्यैषास्थितिर्भवेदिति
स्मृतेः॥गच्छामिविष्णुपादाभ्यांविष्णुदृष्ट्याचदर्शनम् ॥ इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्य
तीतिबृहत्तंत्रोक्तयुक्तेश्च ॥ ५ ॥ ॥ ॐचितिमात्रेणतदात्मकत्वादित्यौडुलोमिःॐ ॥ ६ ॥
चितिमात्रोदेहोमुक्तानांपृथग्विद्यतेतेनभुंजते ॥ सर्वंवाएतदचित्परित्यज्यचिन्मात्रएवैषभवति
चिन्मात्रएवावतिष्ठतेतामेतांमुक्तिरित्याचक्षतेइत्युद्दालकश्रुतेः ॥ चिदात्मकत्वादित्यौडुलोमिर्म

न्यते ॥ ६ ॥ ॥ ॐएवमप्युपन्यासात्पूर्वभावादविरोधंबादरायणःॐ ॥ ७ ॥ ॥ सवाएष
एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रोभवत्यथतेनैवरूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजाना
तितामाहुर्मुक्तिरितिसौपर्णश्रुतौचिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्यचभावादुभयत्राप्यविरोधं
बादरायणोमन्यते ॥ नारायणाध्यात्मेच ॥ मर्त्यदेहंपरित्यज्यचितिमात्रात्मदेहिनः ॥ चितिमा
त्रेंद्रियाश्चैवप्रविष्टाविष्णुमव्ययम् ॥ यदंगानुगृहीतैश्चस्वांगैरेवप्रवर्तनम् ॥ कुर्वंतिभुंजतेभोगां
स्तदंतर्बहिरेववा ॥ यथेष्टंपरिवर्तंतेतस्यैवानुग्रहेरिताइति ॥ ७ ॥अ०५॥ ॥ ॐसंकल्पादेवचतद्
च्छ्रुतेःॐ ॥ ८ ॥ ॥ नतेषांभोगादिषुप्रयत्नापेक्षा ॥ सयदिपितृलोककामोभवतिसंकल्पादे
वास्यपितरःसमुपतिष्ठंतीत्यादिश्रुतेः ॥ ८ ॥ अ०६॥ ॥ ॐअतएवचानन्याधिपतिःॐ ॥९॥
सत्यसंकल्पादेव ॥ परमोधिपतिस्तेषांविष्णुरेवनसंशयः ॥ ब्रह्मादिमानुषांतानांसर्वेषामविशेष
तः ॥ ततःप्राणादिनामांताःसर्वेपिपतयःक्रमात् ॥ आचार्याश्चैवसर्वेपियैर्ज्ञानंसुप्रतिष्ठितम् ॥
एतेभ्योऽन्यःपतिर्नैवमुक्तानांनात्रसंशयइतिचवाराहे॥९॥अ०७॥ ॥ ॐअभावंबादरिराहह्येवम्
ॐ ॥ १० ॥ ॥ चिन्मात्रंविनाऽन्योदेहस्तेषांनविद्यतइतिबादरिः ॥ अशरीरोवावतदाभवत्य
शरीरंवावसंतंनप्रियाप्रियेस्पृशतोयाभ्यांह्येषउन्मथ्यतइत्येवंकौठरव्यश्रुतावाहहि ॥१०॥ ॥ ॐ
भावंजैमिनिर्विकल्पाम्नानात्ॐ ॥११॥ ॥ सवाएषएवंवित्परमभिपश्यत्यभिशृणोतिज्योतिषै ॥६२॥
वरूपेणाचितावाचितावानित्येनवाऽनित्येनवाथानंदीह्येवैषभवतिनानानंदंकिंचिदुपस्पृशतीत्युद्दा
लकश्रुतौविकल्पाम्नानादन्यदेहस्यापिभावंजैमिनिर्मन्यते ॥ ११ ॥ ॥ ॐद्वादशाहवदुभ

यविधंबादरायणोऽतःॐ ॥ १२ ॥ ॥ यथाद्वादशाहः क्रत्वात्मकः सत्रात्मकश्चभवत्येवंमुक्तभो
गोबाह्यशरीरकृतश्चिन्मात्रकृतश्चभवतीतिबादरायणोमन्यते ॥ उपपत्तिश्च ॥ १२ ॥ ॥ ॐ
तन्वभावेसंध्यवदुपपत्तेःॐ ॥ १३ ॥ ॥ संध्यंस्वप्नः संध्यंतृतीयंस्वप्नस्थानमितिश्रुतेः ॥ १३ ॥
॥ ॐभावेजाग्रद्वत्ॐ ॥ १४ ॥ ॥ ब्रह्मवैवर्तेच ॥ स्वप्नस्थानांयथाभोगोविनादेहेनयुज्यते ॥
एवंमुक्तावपिभवेद्विनादेहेनभोजनम् ॥ स्वेच्छयावाशरीराणितेजोरूपाणिकानिचित् ॥ स्वीकृ
त्यजागरितवद्भुक्त्वात्यागःकदाचनेति ॥१४॥ ॥ ॐप्रदीपवदावेशस्तथाहिदर्शयतिॐ ॥ १५ ॥
शरीरमनुप्रविश्यापितत्प्रकाशयंतःपुण्यानेवभोगाननुभवंतिनदुःखादीन् ॥ यथाप्रदीपोदीपिका
दिषुप्रविष्टस्तत्स्थतैलाद्येवभुंक्तेननुतत्कार्ष्ण्यादि ॥तीर्णोहितदासर्वान्शोकान्हृदयस्यभवतीति
दर्शयति ॥१५॥ नचस्वर्गेल्लोकेनभयंकिंचनास्तीत्यादिनास्वर्गादिस्थस्यैतदितिवाच्यम् ॥ यतः ॥
ॐस्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहिॐ ॥ १६ ॥ ॥ सुप्तौमोक्षेवातदुच्यते॥अत्रहपि
ताऽपिताभवत्यनन्वागतंपुण्येनानन्वागतंपापेनेत्याद्याविष्कृतत्वात् ॥ ब्रह्मवैवर्तेच ॥ ज्योति
र्मयेषुदेहेषुस्वेच्छयाविश्वमोक्षिणः ॥ भुंजतेसुसुखान्येवनदुःखादीन्कदाचन ॥ तीर्णाहिसर्व
शोकांस्तेपुण्यपापादिवर्जिताः ॥ निवृत्तसर्वदोषास्तेगुणमात्रस्वरूपिणइति ॥ १६ ॥ अ० ८॥
ॐजगद्व्यापारवर्जम्ॐ ॥ १७ ॥ ॥ सर्वान्कामानाप्त्वामृतःसमभवदित्युच्यते ॥ तत्रसृष्ट्या
दिभ्योन्यान्व्यापारानाप्नोति॥१७॥ कुतः ॥ ॥ ॐप्रकरणादसन्निहितत्वाच्चॐ ॥१८॥ ॥जी
वकरणत्वाज्जीवानांचतादृक्सामर्थ्यविदूरत्वाच्च ॥ वाराहेच॥ स्वाधिकानंदसंप्राप्तौसृष्ट्यादिव्यापृ

तिष्वपि॥मुक्तानांनैवकामःस्यादन्यान्कामांस्तुभुंजते॥ तद्योग्यतानैवतेषांकदाचित्कापिविद्यते॥
नचायोग्यंविमुक्तोपिप्राप्नुयान्नचकामयेदिति॥१८॥ ॥ ॐप्रत्यक्षोपदेशादितिचेन्नाधिकारिकमं
डलस्थोक्तेः ॥१९ ॥ ॥ तायोवेदसवेदब्रह्मसर्वस्मैदेवाबलिमावहंतीतिप्रत्यक्षोपदेशाज्जगदैश्व
र्यमप्यस्तीतिचेन्न ॥ आधिकारिकमंडलाधिपतिर्ब्रह्माहितत्रोच्यते ॥ गारुडेच ॥ आत्मेत्येवपरं
देवमुपास्यहरिमव्ययम् ॥ केचिदत्रैवमुच्यंतेनोत्क्रामंतिकदाचन॥अत्रैवचस्थितिस्तेषामंतरिक्षे
चकेचन॥केचित्स्वर्गेमहर्लोकेजनेतपसिचापरे॥केचित्सत्येमहाज्ञानागच्छंतिक्षीरसागरम् ॥ तत्रा
पिक्रमयोगेनज्ञानाधिक्यात्समीपगाः ॥ सालोक्यंचस्वरूपत्वंसामीप्यंयोगएवच॥ इमामारभ्यसर्वे
त्रयावत्तुक्षीरसागरे ॥ पुरुषोऽनंतशयनःश्रीमन्नारायणाभिधः॥ मानुषावर्णभेदेनतथैवाऽऽश्रमभे
दतः ॥ क्षितिपामनुष्यगंधर्वादेवाश्चपितरश्चिराः ॥ आजानजाःकर्मजाश्चतात्त्विकाश्चशचीपतिः ॥
रुद्रोब्रह्मेतिक्रमशस्तेषुचैवोत्तमोत्तमाः॥नित्यानंदेचभोगेचज्ञानेश्वर्यगुणेषुच॥सर्वेशतगुणोद्रिक्ताः
पूर्वस्मादुत्तरोत्तरम् ॥ पूज्यंतेस्वावरैस्तेतुसर्वपूज्यश्चतुर्मुखः॥ स्वजगद्व्यापृतिस्तेषांपूर्ववत्समुदीरि
ता॥सयुजःपरमात्मानंप्रविश्यचबहिर्गताः॥चिद्रूपान्प्राकृतांश्चापिविनाभोगांश्चकांश्चन ॥ भुंजतेमु
क्तिरेवंतेविस्पष्टंसमुदाहृतेति ॥ १९ ॥ ॥ ॐविकारावर्तिचतथाहिदर्शयतिॐ ॥ २० ॥ ॥ वि
कारावर्तिव्यापारोमुक्तानांनविद्यते॥इमंमानवमावर्तंनावर्तंतइतिश्रुतिः ॥ वाराहेच ॥ स्वाधिकारे
णवर्तंतेदेवामुक्तावपिस्फुटम् ॥ बलिंहरंतिमुक्तायविरिंचायचपूर्ववत् ॥ सब्रह्मकास्तुतेदेवावि
ष्णवेचविशेषतः ॥ नविकाराधिकारस्तुमुक्तानामन्यएवतु ॥ विकाराधिकृताज्ञेयायेनियुक्तास्तु

विष्णुनेति ॥२०॥अ०१॥ ॥ ॐस्थितिमाहदर्शयतश्चैवंप्रत्यक्षानुमानेॐ ॥२१॥ ॥ ए
तत्सामगायन्नास्तइत्युच्यते ॥ तत्रानंदादीनांवृद्धिर्ह्रासश्चनविद्यते ॥ एकप्रकारेणैवसर्वदास्थि
तिः ॥ सदाएषएतस्मिन्ब्रह्मणिसंपन्नोनजायतेनम्रियतेनहीयतेनवर्धतेस्थितएवसदाभवतिदर्श
न्नेवब्रह्मदर्शन्नेवात्मानंतस्यैवंदर्शतोनापत्तिर्नविपत्तिरित्याहजाबालश्रुतौ ॥ यत्रगत्वानम्रियते
यत्रगत्वानजायते ॥ नहीयतेयत्रगत्वायत्रगत्वानवर्धतइतिमोक्षधर्मे ॥ विद्वत्प्रत्यक्षात्कारणा
भावलिंगाच्च ॥ ब्रह्मवैवर्तेच ॥ नह्रासोनचवृद्धिर्वामुक्तानांविद्यतेक्वचित् ॥ विद्वत्प्रत्यक्षसि
द्धत्वात्कारणाभावतोऽनुमा ॥ हरेरुपासनाचात्रसदैवसुखरूपिणी ॥ नतुसाधनभूतासासिद्धि
रेवात्रसायतइति ॥ २१ ॥ ॥ ॐभोगमात्रसाम्यलिंगाच्चॐ ॥ २२ ॥ ॥ नचभोगविशे
षादिविरोधः ॥ एतमानंदमयमात्मानमनुप्रविश्यनजायतेनम्रियतेनह्रसतेनवर्धतेयथाकामंचर
तियथाकामंपिबतियथाकामंरमतेयथाकाममुपरमतेइतिभोगमात्रसाम्यलिंगात् ॥ अवृद्धिह्रा
सरूपत्वंमुक्तानांप्रायिकंभवेत्॥ कादाचित्कविशेषस्तुनैवतेषांनिषिद्ध्यतइतिचकौर्मे॥प्रवाहतस्तु
वृद्धिर्वाह्रासोवानैवकुत्रचित् ॥ नाप्रियंकिंचिदपितुमुक्तानांविद्यतेक्वचित्॥ कुतएवतुदुःखंस्या
त्सुखमेवसदोदितम्॥ भोगानांतुविशेषेतुवैचित्र्यंलभतेक्वचिदितिनारायणतंत्रे॥२२॥अ०१०॥
॥ॐअनावृत्तिःशब्दादनावृत्तिःशब्दात्ॐ ॥ २३ ॥ ॥ नचपुनरावर्ततेनचपुनरावर्तते ॥ सर्वा
न्कामानास्वामृतःसमभवत्समभवदित्यादिश्रुतिभ्यः॥२३॥अ०११॥ ज्ञानानंदादिभिःसर्वैर्गुणैःपू
र्णायविष्णवे ॥ नमोस्तुगुरवेनित्यंसर्वथाऽतिप्रियायमे ॥१॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणि

दिव्यान्यलंबहूतद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयं वपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहरौतेनहि॥२॥ नित्यानंदोहरिःपूर्णोनित्यदाप्रीयतांमम ॥ नमस्तस्मैनमस्तस्मैनमस्तस्मैचविष्णवे ॥ ३ ॥ ॥ ७ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृत ब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्यचतुर्थःपादः ॥ ४ ॥

॥ इतिब्रह्मसूत्रभाष्यम् ॥



श्रीवेदव्यासायनमः ॥ ॥ ॐ नारायणंगुणैःसर्वैरुदीर्णंदोषवर्जितम् ॥ ज्ञेयंगम्यंगुरूंश्चापिनत्वा
सूत्रार्थउच्यते ॥ १ ॥ विष्णुरेवविजिज्ञास्यःसर्वकर्ताऽऽग [illegible] नः ॥ समन्वयादीक्षतेश्चपूर्णानं
दोंऽतरःखवत् ॥ २ ॥ प्रणेताज्योतिरित्याद्यैःप्रसिद्धैरन्यवस्तुषु ॥ उच्यतेविष्णुरेवैकःसर्वैःसर्वगु
णत्वतः॥३॥ सर्वगोत्तानियंताचदृश्यत्वाद्युज्झितःसदा ॥ विश्वजीवांतरत्वाद्यैर्लिंगैःसर्वैर्युतःसहि
॥४॥सर्वाश्रयःपूर्णगुणःसोऽक्षरःसन्हृदब्जगः ॥ सूर्यादिभासकःप्राणप्रेरकोदैवतैरपि॥५॥ज्ञेयोनवे
दैःशूद्राद्यैःकंपकोन्यश्चजीवतः ॥ पतित्वादिगुणैर्युक्तस्तदन्यत्रचवाचकैः॥ ६॥ मुख्यतःसर्वशब्दै
श्चवाच्यएकोजनार्दनः ॥ अव्यक्तःकर्मवाक्यैश्चवाच्यएकोऽमितात्मकः ॥७॥ अवांतरंकारणंचप्र
कृतिःशून्यमेवच ॥ इत्याद्यन्यत्रनिहतैरपिमुख्यतयोदितः ॥८॥ शब्दैरतोनंतगुणोयच्छब्दायोगवृ
त्तयः॥९॥इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेऽणुभाष्येप्रथमोध्यायः॥१॥ ॥छ॥ ॥श्री
गुरुभ्योनमः॥श्रौतस्मृतिविरुद्धत्वात्स्मृतेयानगुणान्हरेः॥निषेद्धुंशक्नुयुर्वेदानित्यत्वान्मानमुत्तमम्
॥१॥ देवतावचनादापोवदंतीत्यादिकंवचः ॥ नायुक्तवाच्यसन्नैवकारणंदृश्यतेक्वचित् ॥ २॥ अ
सज्जीवप्रधानादिशब्दाब्रह्मैवनापरम् ॥ वदंतिकारणत्वेनक्वापिपूर्णगुणोहरिः॥३॥ स्वातंत्र्यात्सर्वक
र्तृत्वान्नायुक्तंतद्वदेच्छ्रुतिः ॥ भ्रांतिमूलतयासर्वसमयानामयुक्तितः ॥४॥ नतद्विरोधाद्वचनं वैदि
कंशंक्यतांव्रजेत् ॥ आकाशादिसमस्तंचतज्जंतेनैवलीयते ॥ ५॥ सोऽनुत्पत्तिलयःकर्ताजीव
स्तद्वशगःसदा ॥ तदाभासोहरिःसर्वरूपेष्वपिसमःसदा ॥ ६ ॥ मुख्यप्राणश्चेंद्रियाणिदेहश्चैव
तदुद्भवः ॥ मुख्यप्राणवशेसर्वंसविष्णोर्वशगःसदा ॥ ७ ॥ सर्वदोषोज्झितस्तस्माद्भगवान्पु

रुषोत्तमः ॥ उक्तागुणाश्चाविरुद्धातस्यवेदेनसर्वशः ॥८॥ ॥ इतिश्रीम० अणुभाष्येद्वितीयः ॥
श्रीपांडुरंगायनमः ॥ ॥ शुभेनकर्मणास्वर्गेनिरयंचविकर्मणा ॥ मिथ्याज्ञानेनचतमोज्ञानेनैवपरं
पदम् ॥ १ ॥ यतिलस्माद्विरक्तःसन्ज्ञानमेवसमाश्रयेत् ॥ सर्वावस्थाप्रेरकश्चसर्वरूपेष्वभेदवा
न ॥ २ ॥ सर्वदेशेषुकालेषुसएकःपरमेश्वरः ॥ तद्भक्तितारतम्येनतारतम्यंविमुक्तिदम्
॥ ३ ॥ सच्चिदानंदआत्मेतिमानुषैस्तुसुरेश्वरैः ॥ यथाक्रमंबहुगुणैर्ब्रह्मणात्वखिलैर्गुणैः ॥ ४ ॥
उपास्यःसर्ववेदैश्चसर्वैरपियथाक्रमम् ॥ ज्ञेयोविष्णुर्विशेषैस्तुज्ञानेस्यादुत्तरोत्तरम् ॥ ५ ॥ सर्वेऽ
पिपुरुषार्थाःस्युर्ज्ञानादेवनसंशयः ॥ नलिप्यतेज्ञानवांश्चसर्वदोषैरपिक्वचित् ॥ ६ ॥ गुणदोषैःसुख
स्यापिवृद्धिह्रासौविमुक्तिगौ ॥ नृणांसुराणांमुक्तौतुसुखंक्लृप्तंयथाक्रमम् ॥ ७ ॥ ॥ इतितृतीयोऽ
ध्यायः ॥ श्रीकृष्णायनमः ॥ विष्णुर्ब्रह्मतदादातेत्येवंनित्यमुपासनम् ॥ कार्यमापद्यतेब्रह्मते
नयांतिपरोक्षताम् ॥ १ ॥ प्रारब्धकर्मणोन्यस्यज्ञानादेवपरिक्षयः ॥ अनिष्टस्योभयस्यापिसर्व
स्यान्यस्यभोगतः ॥ २ ॥ उत्तरेषूत्तरेष्वेवंयावद्वायुर्विमुक्तिगः ॥ प्रविश्यभुंजतेभोगांस्तदंतर्बहि
रेववा ॥ ३ ॥ वायुर्विष्णुंप्रविश्यैवभोगांश्चैवोत्तरोत्तरान् ॥ उत्क्रम्यमानुषामुक्तिंयांतिदेहक्षया
त्सुराः ॥ ४ ॥ अर्चिरादिपथावायुंप्राप्यतेनजनार्दनम् ॥ यांत्युत्तमानरोच्चाद्याब्रह्मलोकात्सहामु
ना ॥ ५ ॥ यथासंकल्पभोगांश्चचिदानंदशरीरिणः ॥ जगत्सृष्ट्यादिविषयंमहासामर्थ्यमप्यृते
॥६॥ यथेष्टशक्तिमंतश्चविनास्वाभाविकोत्तमान् ॥ अनन्यवशगाश्चैववृद्धिह्रासविवर्जिताः ॥७॥
दुःखादिरहितानित्यंमोदंतेनिरतंसुखम् ॥ पूर्णप्रज्ञेनमुनिनासर्वशास्त्रार्थसंग्रहः ॥८॥ कृतोयंप्रीय

तांतेनपरमात्मारमापतिः ।। नमोनमोऽशेषदोषदूरपूर्णगुणात्मने ।।९।। विरिंचिशर्वपूर्वेड्यवंद्यायश्रीवरायते ।।१०।। ।। इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेऽणुभाष्येचतुर्थोऽध्यायः ।।४।।

।। इत्यणुभाष्यम् ।।



॥ इति ब्रह्मसूत्रभाष्याणुभाष्ये समाप्ते॥ २।३ ॥

॥ अथांऽणुव्याख्यानं प्रारभ्यते ॥ ४ ॥

श्रीहयग्रीवायनमः ॥ ॥ श्रीमदानंदतीर्थभगवत्पादाचार्यगुरुभ्योनमः ॥ हरिःॐ ॥ नारा
यणंनिखिलपूर्णगुणैकदेहंनिर्दोषमाप्यतममप्यखिलैःसुवाक्यैः ॥ अस्योद्भवादिदमशेषविशेष
तोपिवंद्यंसदाप्रियतमंममसन्नमामि ॥ १ ॥ तमेवशास्त्रप्रभवंप्रणम्यजगद्गुरूणांगुरुमंजसै
व ॥ विशेषतोमेपरमाख्यविद्याव्याख्यांकरोम्यन्वपिचाहमेव ॥ २ ॥ प्रादुर्भूतोहरिर्व्यासोविरिं
चशिवपूर्वकैः ॥ अर्थितःपरविद्याख्यंचक्रेशास्त्रमनुत्तमम् ॥ ३ ॥ गुरुर्गुरूणांप्रभवःशास्त्राणांबा
दरायणः ॥ यतस्तदुदितंमानमजादिभ्यस्तदर्थतः ॥ ४ ॥ वक्तृश्रोतृप्रसक्तीनांयदाप्तिरनुकूल
ता ॥ आप्तमूलतयातेनश्रुतिमूलतयातथा ॥ ५ ॥ युक्तिमूलतयाचैवप्रामाण्यंत्रिविधंमहत् ॥
दृश्यतेब्रह्मसूत्राणांएकधान्यत्रसर्वशः ॥ ६ ॥ अतोनैतादृशंकिंचित्प्रमाणतममिष्यते ॥ स्वयं
कृतापितद्व्याख्याक्रियतेस्पष्टतार्थदः ॥ ७ ॥ तत्रनाराथमूलत्वंसर्वशास्त्रस्यचेष्यते ॥ सर्वत्रानुगत
त्वेनपृथगोंक्रियतेखिलैः ॥ ८ ॥ ओतत्ववाचीह्योंकारोवक्तयसौतद्गुणोत्ततताम् ॥ सएवब्रह्मशब्दो
र्थोनारायणपदोदितः ॥ ९ ॥ सएवभर्गशब्दार्थोव्याहृतीनांचभूमतः ॥ भावनाच्चैवसुत्वाच्चसो
यंपुरुषइत्यपि ॥ १० ॥ सएवसर्ववेदार्थोजिज्ञास्योयंविधीयते ॥ ज्ञानीप्रयतमोतोमेतंविद्वाने
वचामृतः ॥ ११ ॥ वृणुतेयंतेनलभ्यइत्याद्युक्तिबलेनहि ॥ जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव
मुच्यते॥१२॥ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच॥ यदनुग्रहतःसंतिनसंतियदुपेक्षया॥१३॥
नतत्वक्रियतेकिंचिन्नेत्यादेर्नहरिंविना ॥ ज्ञानस्वभावतोपिस्यान्मुक्तिःकस्यापिहिक्वचित्॥१४॥
अज्ञानांज्ञानदोविष्णुःज्ञानिनांमोक्षदश्चसः ॥ आनंददश्चमुक्तानांसएवैकोजनार्दनः ॥ १५ ॥

इत्युक्तेर्बंधमिथ्यात्वंनैवमुक्तिरपेक्षते ॥ मिथ्यात्वमपिबंधस्यनप्रत्यक्षविरोधतः ॥ १६ ॥ मिथ्यात्वंयदिदुःखादेस्तद्वाक्यस्याग्रतोभवेत् ॥ मिथ्यायाःसाधकत्वंचनसिद्धंप्रतिवादिनः ॥ १७ ॥ तच्चमिथ्याप्रमाणेनसतावासाध्यतेत्वया ॥ सताचेदद्वैतसिद्धिःस्यान्नसिद्धंचान्यसाधनम् ॥१८॥ साधकत्वंसतस्तेनसाक्षिणासिद्धिमिच्छता ॥ स्वीकर्तव्यंह्यविशेषस्यसाध्यासाधकतापुनः ॥ १९ ॥ तच्चाविशेषमानेनसाध्यमित्यनवस्थितिः ॥ अनंगीकुर्वतांविश्वसत्यतांतन्नवादिता ॥ २० ॥ तस्माद्व्यवहृतिःसर्वासत्येत्येवव्यवस्थिता ॥ व्यावहारिकमेतस्मात्सत्यमित्येवचागतम् ॥ २१॥ व्यवहारसतश्चापिसाधकत्वंतुपूर्ववत् ॥ सत्त्रैविध्यंचमानेनसिध्येत्केनेतिपृच्छ्यते ॥ २२ ॥ तस्याप्युक्तप्रकारेणनैवसिद्धिःकथंचन ॥ वैलक्षण्यंसदसतोरप्येतेननिषिध्यते ॥२३॥ वैलक्षण्यंसतश्चापिस्वयंसच्छेदवादिनः ॥ असतश्चापिविश्वस्यतेनानिष्टंकथंभवेत् ॥ २४ ॥ यद्युच्यतेपिसर्वस्मादितिसच्छेदसंस्थितिः ॥ सन्मात्रत्वंब्रह्मणोपितस्मात्तदपिनोभवेत् ॥ २५ ॥ ज्ञानबाध्यत्वमपितुनसिद्धंप्रतिवादिनः ॥ विज्ञातस्यान्यथासम्यग्विज्ञानंह्येवतन्मतम् ॥ २६ ॥ असद्विलक्षणज्ञस्यैज्ञातव्यमसदेवहि ॥ तस्मादसत्प्रतीतिश्चकथंतेननिवार्यते ॥२७॥ अन्यथात्वमसत्तस्माद्भ्रांतावेवप्रतीयते॥सत्त्वस्यासतएवंहिस्वीकार्यैवप्रतीतता॥२८॥तस्यानिर्वचनीयत्वेस्यादेवह्यनवस्थितिः ॥ निर्विशेषेस्वयंभातेकिमज्ञानाद्वृतंभवेत् ॥ २९ ॥ मिथ्याविशेषोप्यज्ञानसिद्धिमेवह्यपेक्षते ॥ नचावरणमज्ञानमसत्येतेनचेष्यते ॥ ३० ॥ अप्रकाशस्वरूपत्वाज्जडेज्ञानंनमन्यते ॥ अज्ञानाभावतःशास्त्रंसर्वंव्यर्थीभविष्यति ॥ ३१ ॥ अज्ञानस्यचमिथ्यात्वमज्ञानादि

अतात्पर्यंपदार्थेपिनकल्प्यमविरोधतः ॥ ६४ ॥ अतोज्ञानफलान्येवकर्माणिज्ञानमेवहि ॥ मु
ख्यप्रसाददंविष्णोर्जिज्ञासायाश्चतद्भवेत् ॥ ६५ ॥ कर्तव्यातेनजिज्ञासाश्रुतिप्रामाण्ययोगतः ॥
प्रत्यक्षवच्चप्रामाण्यंस्वतएवागमस्यहि ॥ ६६ ॥ अनवस्थान्यथाहिस्यादप्रामाण्यंतथान्यतः ॥
मिथ्याज्ञाविप्रलंभादेस्तेनवेदविरोधियत् ॥ ६७ ॥ नमानमपिवेदानामंगीकार्याहिनित्यता ॥
नहिधर्मादिसिद्धिःस्यान्नित्यवाक्यंविनाक्वचित् ॥ ६८ ॥ अविप्रलंभस्तज्ज्ञानंतत्कृतत्वादथोपि
च ॥ कल्प्यागौरवदोषेणपुंवाक्यंज्ञापकंनतत् ॥ ६९ ॥ प्रत्यक्षःकस्यचिद्धर्मोवस्तुत्वादितिचो
दिते ॥ नबुद्धोधर्मदर्शीस्यात्पुंस्त्वादित्यनुमाहतिः ॥ ७० ॥ अधर्मवादिनोवाक्यमप्रयोजनमेव
हि ॥ धर्माभावोपिनोतेनप्रत्यक्षावगतोभवेत् ॥ ७१ ॥ अतःसंशयसंपत्तौवाक्यंप्रत्यक्षवत्प्रमा ॥
शक्तिश्चैवान्वितेस्वार्थेशब्दानामनुभूयते ॥ ७२ ॥ अतोन्विताभिधायित्वंगौरवंकल्पनेन्यथा ॥
नचाशक्त्याभिधायित्वंप्रवृत्तिश्चद्विधान्यथा ॥ ७३ ॥ एतत्सर्वंतर्कशास्त्रेब्रह्मतर्केहिविस्तरात् ॥
उक्तंविद्यापृथक्त्वात्तुसंक्षेपेणात्रसूचितम् ॥ ७४ ॥ प्रमाणन्यायसच्छिक्षाक्रियतेतर्कशास्त्रतः ॥
मानन्यायैस्तुतत्सिद्धैर्मीमांसामेयशोधनम् ॥७५॥ ब्रह्मतर्कंचभगवान्सएवकृतवान्प्रभुः ॥ पंचा
शत्कोटिविस्तारान्नारायणतनोःकृतात् ॥ ७६ ॥ उद्धृत्यपंचसाहस्रंकृतवान्बादरायणः ॥ अतस्त
दर्थंसंक्षेपादतइत्यभ्यसूचयत् ॥ ७७ ॥ यतोनुभवतःसर्वंसिद्धमेतदतोपिच ॥ देवैश्चदुर्गमा
र्थेषुव्यापृतोनातिविस्तृतिम् ॥ ७८ ॥ चकारैतांश्चवज्ञेयायुक्तयःप्रतिपक्षगाः ॥ प्रत्यक्षेक्षाक्षमः
पक्षंकमेवात्राभिवीक्षते ॥ ७९ ॥ तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेभ्युपेक्षितः ॥ स्वयंभगव

ताविष्णुर्ब्रह्मेत्येतत्पुरोदितम् ॥ ८० ॥ सविष्णुराहहीत्यंतंदेवशास्त्रस्यतेनहि ॥ आद्यंतंदेव
शास्त्रस्यस्वयंभगवताकृतम् ॥ ८१ ॥ मध्यंतदाज्ञयापैलशेषाभ्यांकृतमंजसा ॥ अतस्तत्रैववि
ष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत्॥८२॥ दोषारच्छिद्रशब्दानांपर्यायत्वंयतस्ततः॥गुणानाराइतिज्ञेयास्त
द्वान्नारायणःस्मृतः॥८३॥ब्रह्मशब्दोपिहिगुणपूर्तिमेववदत्ययम्॥ अतोनारायणस्यैवजिज्ञासात्र
विधीयते ॥ ८४ ॥ सिद्धत्वाद्ब्रह्मशब्दस्यविष्णोस्पष्टतयाश्रुतौ ॥ अंभस्यपारइत्युक्तोनारायण
पदोदितः ॥ ८५ ॥ आपोनाराइतिह्याहसएवाप्स्वंतरीरितः ॥ कामतोविधिरुद्रादिपददात्यास्व
यंश्रिया ॥ ८६ ॥ योनित्वेनात्मनोविष्णोस्तिष्ठंतीत्युदितस्यच ॥ यस्मिन्देवाअधीत्युक्त्वासमुद्र
स्थानमेवच ॥ ८७ ॥ नामचाक्षरमित्येवऋचइत्युदितंतुयत् ॥ यतःप्रसूतेत्युक्त्वाचतदेवब्रह्मचा
ब्रवीत् ॥ ॥ इतिजिज्ञासाधिकरणम् ॥ १ ॥ ॥ अंतःसमुद्रगंविश्वप्रसूतेःकारणंतुयत् ॥
सूक्तोपनिषदाद्युक्तंजन्माद्यस्येतिलक्ष्यते ॥ १ ॥ सृष्टिस्थितिश्चसंहारोनियतिर्ज्ञानमावृतिः ॥
बंधमोक्षावपिह्यासुश्रुतिषूक्ताहरेःसदा ॥ २ ॥ यंनामानिविशंत्यद्धायोदेवानामितिह्यपि ॥ श्रुते
र्नामानिसर्वाणिविष्णोरेवयतस्ततः ॥ ३ ॥ अतोनमुख्यतोनामतदन्यस्यहिकस्यचित् ॥ गुणाः
श्रुताइतिह्यस्मान्नदोषोर्थःश्रुतेर्भवेत् ॥ ४ ॥ प्रीत्यामोक्षपरत्वाच्चतात्पर्यंनैवदूषणे ॥ सर्वेषामपि
वाक्यानांमहातात्पर्यमत्रहि ॥ ५ ॥ तद्विरोधेनमानत्वंफलंमुक्तिर्हिवाक्यतः ॥ नपुराणादिमानत्वं
विरुद्धार्थेश्रुतेर्भवेत् ॥ ६ ॥ दर्शनांतरमूलत्वान्मोहार्थंचाज्ञयाहरेः ॥ नसर्वनामतान्येषांश्रुताउ
क्ताहिकुत्रचित् ॥ ७ ॥ अदोषवचनाच्चैवनियमेनहरेःश्रुतौ ॥ अज्ञानंपारतंत्र्यंचप्रलयेभावएव

च ॥ ८ ॥ अशक्तिश्चोदितान्येषांसर्वेषामपिचश्रुतौ ॥ जन्माद्यस्येतितेनैतद्विष्णोरेवस्वलक्षण
म् ॥ ९॥ अस्योद्भवादिहेतुत्वंसाक्षादेवस्वलक्षणम् ॥ कृष्णध्यानच्छलेनैवस्वयंभागवतेऽब्रवीत्
॥ १० ॥ अतोजीवैक्यमपिसनिराचक्रेजगद्गुरुः ॥ नहिजन्मादिहेतुत्वंजीवस्यजगतोभवेत्
॥ ११ ॥ हिताक्रियादिदोषंचवक्ष्यत्येवस्वयंप्रभुः ॥ निर्गुणत्वंचतेनैवनिषिद्धंप्रभुणास्वयम् ॥ १२॥
भेदेनैवतुमुख्यार्थसंभवेलक्षणाकुतः ॥ कथंनित्यगुणस्यास्यस्यादैक्यंगुणहानतः ॥ १३ ॥ सदै
वगुणवत्त्वेस्यभिन्नंस्यान्निर्गुणंसदा ॥ नचमिथ्यागुणत्वंस्यादनिर्वाच्यस्यदूषणात् ॥ १४ ॥ नि
र्गुणत्वंतदाचस्यादासुरत्वंनचान्यथा ॥ लक्ष्यलक्षणयोर्भेदोभेदोवायदिवोभयम् ॥ १५ ॥ इतिपृ
ष्टेतदैक्यस्यगतिरेवनविद्यते ॥ ऐक्याभेदेनशास्त्रेणज्ञेयंतत्स्वप्रकाशतः ॥ १६ ॥ भेदेमिथ्यात्व
तोभेदसत्यत्वंस्याद्बलादपि ॥ भेदाभेदौयदितदास्यादेवह्यनवस्थितिः ॥ १७ ॥ स्वनिर्वाहक
ताचेत्स्याद्दार्ढ्यंवाहकमित्यपि ॥ पर्यायोभेदवान्वास्यादवनस्थोभयत्रच ॥ १८ ॥ सत्यज्ञानादि
केप्येवंनव्यावृत्त्याप्रयोजनम् ॥ व्यावृत्तस्याविशेषत्वेतदखंडंचखंडितम् ॥ १९ ॥ निर्विशेषत्वमेते
नमूकोहमितिवद्भवेत् ॥ अभिन्नेपिविशेषोयंबलादापततिह्यतः ॥ २० ॥ विशेषतद्वतोश्चैवस्वनि
र्वाहकताभवेत् ॥ भेदहीनेत्वपर्यायशब्दांतरनियामकः ॥ २१ ॥ विशेषोनामकथितःसोस्तिवस्तु
ष्वशेषतः॥ विशेषास्तेप्यनंताश्चपरस्परविशेषिणः॥ २२॥ स्वनिर्वाहकतायुक्ताःसंतिवस्तुष्वशेषतः॥
अतोनंतगुणंब्रह्मनिर्भेदमपिभण्यते ॥ २३॥ एवंधर्मानितिश्रुत्यातदभेदोप्युदीर्यते ॥ ॥ इतिज
न्माधिकरणम्॥ २॥ ॥ शैवाद्यागमसंप्राप्तदृष्टगेनफलेनतु ॥ तद्वाक्योपमयान्यच्चप्रमाणत्वेनुमीयते

॥१॥ईशवाक्यत्वतइतिचेत्तद्व्यभिचारिणा ॥ अप्रामाण्यानुमाचस्यान्नपृथक्कानुमेश्वरे ॥२॥ पुं
स्त्वहेतुबलादेवपूर्वोक्तेनैववर्त्मना ॥ शास्त्रयोनित्वमेतेनकारणस्यबलाद्भवेत् ॥ ३ ॥ नावेदविन्न
तर्केणमतिरित्यादिवाक्यतः ॥ तर्कोज्ञापयितुंशक्तोनेशितारंकथंचन ॥४॥ वनकर्त्त्वादिरूपेणपक्ष
भूतस्यचेशितुः ॥ किंचिज्ज्ञत्वंहिपुंस्त्वेनशक्यंसाधयितुंसुखम् ॥ ५ ॥ वृक्षकृन्नाखिलंवृक्षंवेत्तिपुं
स्त्वाद्धिचैत्रवत् ॥ इत्याद्यनुमयास्पर्धिनानुमानंपरेशितुः ॥ ६ ॥ शक्तंविज्ञापनेचातिप्रसंगोनुमये
दृशा ॥ वस्तुत्वात्तुरगःशृंगीपुष्पवत्त्वंयुतैर्युता ॥ ७ ॥ चित्रिणीचरसःषष्ठोरसत्वात्सोत्तरोभवेत् ॥
उपक्रमादिलिंगेभ्योनान्यास्यादनुमानतः ॥८॥ तएवान्वयनामानस्तैःसम्यक्प्रविचारिते ॥ मु
ख्यार्थोभगवान्विष्णुःसर्वशास्त्रस्यनापरः ॥ ९ ॥ ॥ इतिसमन्वयाधिकरणम् ॥३॥ ॥ ईक्षणीयत्व
तोविष्णुर्वाच्यएवनचान्यथा ॥ लक्ष्यत्वंक्वापिदृष्टंहिकिंतदित्यनवस्थितिः ॥ १ ॥ माधुर्यादिविशे
षश्चतच्छब्दैरुदिताःसदा ॥ वाक्यार्थोपिहिवाक्यार्थशब्दैनैवोदितोभवेत् ॥ २ ॥ नावाच्यंतेनकिं
चित्स्याद्यतइत्यादिकैर्वदन् ॥ अवाच्यत्वंकथंब्रूयान्मूकोहमितिवत्सुधीः ॥ ३ ॥ येनलक्ष्यमिति
प्रोक्तंलक्ष्यशब्देनसोवदत् ॥ एकस्यापिहिशब्दस्यगौणार्थस्वीकृतांसताम् ॥४॥ महतीजायतेल
ज्जायत्रतत्राखिलारवाः ॥ अमुख्यार्थाइतिवदन्यस्तन्मार्गानुवर्तिनाम् ॥ ५ ॥ कथंनजायतेल
ज्जावक्तुंशाब्दत्वमात्मनः ॥ आत्मब्रह्मादयःशब्दाःसाक्षात्पूर्णाभिधायिनः ॥ ६ ॥ जन्मादि
कारणंब्रह्मलक्षितंचयदातदा ॥ वंध्यापुत्रोपमंमायाशबलंवाच्यमित्यपि ॥ ७ ॥ कल्पयित्वावि
नामानंलक्ष्यंशुद्धंवदन्पदैः ॥ आत्मशब्दोदितस्यैवज्ञानंमुक्तावसाधनम् ॥ ८ ॥ आहश्रुतपरि

त्यागःस्याच्चास्याश्रुतकल्पनम् ॥ स्यात्सर्वत्रचयत्रैकमपिलोकोजुगुप्सते ॥ ९ ॥ नियमेनोभ
यंस्याद्धियस्यस्वपरयोर्मते ॥ अलंकृतःसदैवायंदुर्घटैरेवभूषणैः ॥१०॥ अंधंतमोनित्यदुःखंतस्य
स्याद्व्यसनद्वयम् ॥ अनंदानामतेलोकाअंधेनतमसावृताः ॥११॥ तांस्तेप्रेत्याभिगच्छंतियेविद्वांसो
बुधोजनाः ॥ असुर्यानामतेलोकाअंधेनतमसावृताः ॥ १२ ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्म
हनोजनाः ॥ इत्यादिश्रुतयोमानंशतशोत्रसमंततः ॥ १३ ॥ हेयत्वावचनाच्चैवनात्मागौणःश्रुतौ
श्रुतः॥तमेवैकंजानथान्यावाचोमुंचथचेतिह ॥१४ ॥ उक्तआत्माकथंगौणोहेयपक्षेह्यसौश्रुतः ॥
परिवारतयाग्राह्याअपिहेयाःप्रधानतः ॥ १५ ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते ॥ इतिस्व
स्यैवपूर्णस्यपूर्णोप्ययउदाहृतः ॥१६ ॥ कथंमायाव्यवच्छिन्नःपूर्णोमुख्यतयाभवेत् ॥ पदंचनिर्गु
णइतिकथंगौणंवदिष्यति ॥ १७ ॥ गुणाभावोपलक्ष्यंचेत्पदंतदपिवाचकम् ॥ अतोनवस्थितिमु
खसर्वदोषसमास्पदम् ॥१८॥ कथंमेतन्मतंसद्भिराद्रियेतविचक्षणैः ॥ नचसांख्यनिराकृत्यैसूत्रा
ण्येतान्यचीक्लृपत् ॥ १९ ॥ भगवान्ब्रह्मशब्दत्वंप्रधानेंगीकरोत्यसौ ॥ समन्वयेप्रतिज्ञातेशब्दगो
चरतैवहि ॥ २० ॥ प्रथमप्रतिपाद्यास्यात्तदभावेकुतोन्वयः ॥ कथंचलक्षणावादीब्रूयाद्ब्रह्म
समन्वयम् ॥ २१॥ योसौशब्दस्यमुख्यार्थस्तत्रैवस्यात्समन्वयः ॥ जन्मादिकारणेसाक्षादाहदेवः
समन्वयम् ॥ २२॥ उक्तंतदेवजिज्ञास्यंकावकाशोत्रनिर्गुणे ॥ कथंचासंभवस्तस्यमुख्यार्थस्यनि
राकृतौ ॥२३॥ मानेनकेनविज्ञेयमवाच्याज्ञेयनिर्गुणम् ॥ अमेयंचेन्नशास्त्रस्यतत्रवृत्तिःकथंचन
॥२४॥तस्माच्छास्त्रेणजिज्ञास्यमस्मदीयंगुणार्णवम्॥वासुदेवाख्यमद्वंद्वंपरंब्रह्माखिलोत्तमम् २५

[illegible]यवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥ निर्गतंमनसोवाचोयदितस्यादगोचरम् ॥२६ ॥ अस्तु
तन्मावदेद्वादीनचास्मच्छास्त्रगंतुतत् ॥ अवाच्यंवाच्यमित्युक्त्वाकिमित्युन्मत्तवन्मृषा॥२७॥अ
स्मच्छास्त्रस्यचौर्याययततेस्वोक्तिदूषकः॥जन्मादिकारणंयत्तत्साक्षान्नारायणाभिधम्॥२८॥वदं
तिश्रुतयोब्रह्मशास्त्रंचैतत्तदर्थतः ॥ प्रवृत्तमस्त्ववाच्यंतेनैवंब्रूयाःकथंचन ॥ २९ ॥ सर्वशब्दै
रवाच्यंतदुक्त्वातद्विषयंपुनः ॥ शास्त्रंवदंतमुन्मत्तंकथंलोकोनवारयेत् ॥ ३० ॥ मावदो
माविजानीहित्यजास्मच्छास्त्रचोरताम् ॥ वयंत्वांश्रुतियुक्तिभ्यांबद्ध्वास्मच्छास्त्रमंजसा ॥
॥ ३१ ॥ विचारयामःश्रुतिभिर्युक्तिभिश्चैवसादरम् ॥ अद्भुतत्वादवाच्यंतदतर्क्यांज्ञेयमे
वच ॥ ३२ ॥ अनंतगुणपूर्णत्वादित्यूचेपैंगिनांश्रुतिः ॥ अवाच्यमितिलोकोपिव
क्त्याश्चर्यतमंभुवि ॥ ३३ ॥ ॥ इत्लीक्षत्यधिकरणम् ॥ ४ ॥ ॥ एवंशास्त्रावगम्यत्वेविभागेनस
मन्वयम् ॥ आनंदमयइत्यादिनाध्यायेनवदत्यजः ॥१ ॥ तत्रान्यत्रप्रसिद्धानांविष्णावेवसमन्व
यम् ॥ शब्दानांप्रथमेपादेगुणिसामान्यवाचिनाम्॥२॥गुणवाचिनांचप्रथममाहदेवःसमन्वयम् ॥
समुद्रशायिनंसर्वप्रसूतिप्रभवंश्रुतिः ॥ ३ ॥ तदेवब्रह्मपरममितिसावधूतिर्जगौ ॥ यतोतोब्रह्मश
ब्दस्यतत्रैवनियतत्वतः ॥ ४ ॥ येन्नंब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके ॥ अन्यासुचैतद्रूपासु
शाखास्वपिसहस्रशः ॥ ५ ॥ आनंदमयइत्याद्यैःशब्दैर्वाच्योहरिःस्वयम् ॥ उपलक्षणत्वंशब्दानां
आनंदमयपूर्विणाम् ॥ ६ ॥ सूत्रस्याल्पाक्षरत्वेनसर्वशाखाविनिर्णये ॥ पुनश्चप्रापकाद्धेतोस्तत्रा
धिकरणांतरम् ॥७॥ सर्वे वेदाआमनंतियत्पदंत्वितिहिश्रुतिः ॥ आनंदमयरूपेतुब्रह्मणःपुच्छतो

मनुधातुःप्रकीर्तितः ॥ ४२ ॥ नाल्पेसुखमितिप्रोक्त्यैवानंदमयतोक्तितः ॥ अनंतत्वंसुनिर्णीतंपू
र्णानंदोहिनाल्पके ॥ ४३ ॥ अतोहिमंत्रवर्णोक्तविस्तृतिस्तुसमस्तया ॥ क्रियतेपरमायस्मादि
तरोत्रनकथ्यते ॥ ४४ ॥ पुरुषंवेत्तियोमुंच्येन्नान्यःपंथाहिविद्यते ॥ इतिश्रुतेरन्यवेदीकथंमुक्तिं
प्रयास्यति ॥४५॥ पुरुषःपरआत्माजोब्रह्मनारायणःप्रभुः ॥ महानानंदउद्विष्णुर्भगओमितिर्ईर्य
ते ॥ ४६॥ स्वयंनारायणोदेवोनान्यस्यैतानिकस्यचित् ॥ तस्मादोमित्युदाहृत्ययज्ञदानादिकुर्व
ते ॥ ४७ ॥ सूक्तेनपौरुषेणैनंयजंत्यद्धात्मकोविदाः ॥ इतिपैंगिश्रुतिस्तेनानान्यज्ञानाद्विमुच्यते
॥ ४८ ॥ ब्रह्मशब्दोदितेतस्मिन्नात्मशब्दंप्रयुज्यच ॥ तस्मादाकाशसृष्टिंचप्रोवाचात्रचतुर्विधा
म् ॥ ४९ ॥ भूतंभूताभिमानीचतद्देहोंतर्नियामकः ॥ हरिश्चाकाशशब्दोक्तोमुख्यतोहरिरेवच
॥५०॥ आसमंतात्काशतेयदाकाशोमुख्यतोहरिः ॥ बलज्ञानस्वरूपत्वाद्वायुरग्निरगंनयत् ॥५१॥
आपआपालनाच्चैवपृथिवीप्रथितोयतः ॥ उघ्रानामाश्रयत्वेनसएवौषधिनामकः ॥ ५२ ॥ ओष
धीषुस्थितोविष्णुःक्षुधितैराश्रितोभवेत् ॥ पुरिशेतेयतःसोऽथपुरुषश्चेतिकथ्यते ॥ ५३ ॥ क्रियाप्र
वर्तकत्वेनप्रादुर्भावोहरेर्जनिः ॥ आकाशादिषुनान्योस्तिह्यभिमानोभिमानिनः ॥ ५४ ॥ अभि
मानिशरीरस्यसाक्षाद्भूतस्यचोद्भवः ॥ एवंदेहादिपर्यंतमागतंहरिमेवतु ॥ ५५ ॥ परामृशतितस्यै
वपंचरूपत्ववित्तये ॥ त्यक्त्वाभूतादिकंसर्वंसवाएषइतिश्रुतिः ॥ ५६ ॥ सइत्यात्मपदोद्दिष्टःएष
जीवशरीरगः ॥ सारान्नमयएवायंनलोकान्नमयःप्रभुः ॥ ५७ ॥ इतितंरसशब्देनविशिनष्टिशरीर
गम् ॥ इदमित्येवनिर्देशोवस्त्रप्रावृतवद्विभोः ॥ ५८ ॥ शिरआदेर्भवेज्जीवशिरआदौव्यवस्थितेः ॥

तंविदित्वास्यमुक्तिःस्यान्नान्यज्ज्ञानात्कथंचन ॥ ५९ ॥ आदित्येपुरुषेचायमितिभेदोपदेशतः ॥
नास्याभेदोस्तिजीवेननानुमाकामचारिणी ॥ ६० ॥ विमतानिशरीराणिमद्भोगायतनानियत् ॥
शरीराणीत्यादिकातुतत्त्वज्ञानेह्यपेक्षते ॥६१॥ प्रत्यक्षादिविरुद्धत्वादक्षागमभयोज्झिता ॥ अनु
माकामवृत्ताहिकुत्रनावसरंव्रजेत् ॥ ६२ ॥ जडआत्मैववस्तुत्वात्प्रमेयत्वाज्जडंचितिः ॥ घनआ
काशइत्याद्यावार्यंतेकेनहेतुना ॥ ६३ ॥ नजीवभेदसूत्राणांशंक्यात्रपुनरुक्तता ॥ वाक्यांतरद्यो
तकत्वात्पृथगित्यत्रपूर्णता॥योगमन्नमयाद्येयंत्फलत्वेनास्यशंसति॥६४॥स्थानद्वयेप्यतःकोशाए
तइत्यतिसाहसम् ॥ ६५ ॥ उपसंक्रमणंचैवद्वितीयोद्देशितंप्रति ॥ अतिक्रमंवदंतंतमुपशब्दोनिवा
रयेत् ॥ ६६ ॥ अश्रुतस्यातिशब्दस्यस्थानंदद्यात्कथंपुनः ॥ श्रुताश्रुतपरित्यागकल्पनेविगत
ह्रियाम् ॥ ६७ ॥ मृतावेवपरित्यागःकुतोह्यन्नमयस्यच ॥ येन्नंब्रह्मेत्याद्युपासासामानाधिकर
ण्यतः ॥ ६८ ॥ उक्त्वापंचस्वरूपाणांपुनस्तत्प्राप्तिवादिनी ॥ स्थानद्वयगतावेदवाणीतदपलापि
नाम् ॥ ६९ ॥ तमसोन्यत्रसंस्थानंकथमेवसहेतसा ॥ अधीहिभगवोब्रह्मेत्युक्तोन्नप्राणपूर्वकम्
॥ ७० ॥ आहब्रह्मकथंतन्नद्वारंतदितिवादिनः ॥ उपसन्निंकथंविद्युरुपसन्नायहित्रिशः ॥७१॥
वक्तव्यंब्रह्मगुरुणाचतुर्वारमथापिवा ॥सकृद्वेत्यागमाब्रूयुःसंप्रदायविदोपिच ॥७२ ॥ तद्यत्किंचि
त्कथंब्रूयादुपसन्नायदिक्पतिः ॥ नवदेद्ब्रह्मचकथंमायावीनहिवारिराट् ॥७३ ॥ चष्टइत्येवत्तच्चक्षु
श्रवणाच्छ्रोत्रमुच्यते ॥ वचनादेववाग्ब्रह्मसृष्टिस्थित्यादिकारणम् ॥ ७४ ॥ तच्चवाधूलशाखाया
मष्टरूपमुदाहृतम् ॥ विज्ञानानंदसहितंपृथक्सृष्ट्यादिलक्षणैः ॥ ७५ ॥ आवापोद्वापतःशाखांय

दाहुःपरमंपदम् ॥ यतोभूतानिजायंतइत्याद्यैर्लक्षणैःस्वयम् ॥ ७६ ॥ लक्षितंगुरुणापश्चात्तपसै
वापरोक्षतः ॥ दृष्ट्वैकैकंस्वरूपंतुसमस्तोक्तानुदर्शनम् ॥ ७७ ॥ इच्छताज्ञांगुरोःप्राप्यतपसैवाप
रोक्षितम् ॥ अब्रह्मेत्येववदतांश्रुतहान्यश्रुतग्रहौ ॥ ७८ ॥ साक्षाल्लक्षणतांप्रासावितिलज्जात
दुक्तिषु ॥ समीपेसहभोगस्यमुक्तित्वेनोक्तितोऽसकृत् ॥ ७९ ॥ भेदोजीवेशयोर्मिथ्येत्येवमिथ्या
स्वयंभवेत् ॥ एतेनमयटश्चैवद्वैविध्येनार्थकल्पनात् ॥ ८० ॥ तदन्येषांमतमपिसत्संसत्सुनभास
ते ॥ अतोनारायणोदेवोनिःशेषगुणवाचकैः ॥ ८१ ॥ गुणिसामान्यवचनैरपिमुख्यतयोदितः ॥
अध्यात्मगैश्चप्राणाद्यैस्तथैवह्यधिभूतगैः ॥ ८२ ॥ अन्नादिशब्दैर्भगवानेकोमुख्यतयोदितः ॥
जन्माद्यस्येतिसूत्रेणगुणसर्वस्वसिद्धये॥ ८३ ॥ ब्रह्मणोलक्षणंप्रोक्तंशास्त्रमूलंयतस्ततः ॥ अ
न्वयःसर्वशब्दानांगुणसर्वस्ववेदकः ॥ ८४ ॥ शब्दप्रवृत्तिहेतूनांतस्मिन्मुख्यसमन्वयात् ॥ अ
न्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा ॥ ८५ ॥ तद्वाचकत्वंशब्दानांबहुलातिप्रयोगतः ॥
रूढमित्येवसाध्यंस्याद्रूढिर्हिद्विविधामता ॥ ८६ ॥ अविद्वद्विद्वदास्यैवमुख्याहिविदुषांतुसा ॥ वि
द्वद्रूढिर्वैदिकास्यात्सायोगादेवलभ्यते ॥ ८७ ॥ तस्मान्मुख्यार्थताविष्णोरितिकृत्वाह्यदिप्रभुः ॥
॥ इत्यानंदमयाधिकरणम् ॥ ६ ॥ ॥ ५ ॥ ५ ॥ समन्वयंसाधयतिदेवानांतत्रश
क्तताम् ॥ आशंक्यतत्ररूढिंचतच्छब्दानामपिस्वयम् ॥ १ ॥समुद्रांतस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढ
ताम् ॥ साधयित्वाभिदातैश्चपुनरेवन्यवारयत् ॥ इत्यंतस्थत्वाधिकरणम् ॥ ७ ॥ चेष्टाहिचे
तनानांयासाभवेत्तत्प्रसादतः ॥ अचेतनस्वभावस्तुविवरादिःकथंततः ॥ १ ॥ इतिशंकानिवृत्त्य

र्थमाकाशइतिनामच ॥ परतोऽपिवरीयस्त्वपूर्वाल्लिंगाद्धरेर्भवेत् ॥ २ ॥ नभोददातिश्वसतांमार्गेय
न्नियमाददः ॥ इत्यादिवाक्यैः ॥ ॥ इत्याकाशाधिकरणम् ॥ ८॥ अध्यात्ममन्वयव्यति
रेकतः ॥ प्राणादिहेतुनादृष्टेरतिदेशोहितादृशः ॥ १ ॥ लिंगंबलवदेवस्यात्परेकोस्यापियद्धरिः॥
॥ ९ ॥ १० ॥ ॥ इतिप्राणाधिकरणम् ॥ नित्यत्वाद्वेदशब्दस्यतत्स्वभावःकथंहरेः ॥ कथंप्र
सिद्धबहुलशब्दानामन्यथार्थता ॥१॥ इतिचेत्तद्धरेरेवबाहुल्याच्छ्रुतिलिंगयोः ॥ तादृशत्वाचत
च्छक्तेः ॥ ॥ इतिगायत्र्यधिकरणम् ॥ ॥ बाहुल्येश्रुतिलिंगयोः ॥ अन्यस्यमुख्यवाच्यत्वमि
तितन्मात्रगस्यहि ॥ १ ॥ विष्णोरेवतुलिंगानिप्राणस्थानितुसर्वशः ॥ प्राणसंवादपूर्वाणिमुख्यतो
जीवगानिच ॥२॥ अभ्यार्चच्छतवर्षाणिप्राणवंशत्वमित्यपि॥ ॥ इतिप्राणाधिकरणम् ॥ तस्मा
दन्यत्रगैःशब्दैरुक्तन्यायैःसमंततः ॥ एकोनारायणोदेवोभण्यतेनात्रसंशयः ॥ १ ॥ वासुदेवादि
रूपेणचतुर्मूर्तिश्चसर्वशः ॥ अथवापंचमूर्तिःसप्रोक्तोधिकरणंप्रति ॥२॥ प्रतिसूत्रंप्रतिपदंप्रत्यक्षरम
थापिवा ॥ तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यतायथा ॥३॥ बृहत्तंत्रप्रमाणेनबह्वर्थमपिसंग्रहात् ॥
उच्यतेनरबुद्धीनामपिकिंचिद्रहार्थतः ॥ ४ ॥ ग्रंथोयमपिबह्वर्थोभाष्यंचात्यर्थविस्तरम ॥ बहु
ज्ञाएवजानंतिविशेषेणार्थमेतयोः ॥५॥ तस्मान्महागुणोविष्णुर्नाम्नामपुनरुक्तितः ॥१२॥ इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेप्रथमाध्यायस्यप्रथमःपादः ॥१॥
श्रीगुरुभ्योनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ लिंगात्मकानांशब्दानांवृत्तिर्नारायणेपरे ॥
चिंत्यतेसर्वगत्वंतुप्रथमंप्रविचार्यते ॥१॥ तत्रतत्रस्थितोविष्णुस्तत्तच्छक्तिप्रबोधकः ॥ दूरतोऽप्य

तिशक्तःसलीलयाकेवलंप्रभुः ॥ २ ॥ इतिज्ञापयितुंकर्मकर्त्रोरुत्सर्गतोभिदा ॥ अभेदोपिविशेषे
स्याद्वलीसोप्यनयोदितः ॥ ३ ॥ एतद्भावाभिधंलिंगंक्रियालिंगेततःपरम् ॥ अंतर्याम्यंतरश्चेति
क्रियाभावाख्यमुच्यते ॥ ४ ॥ अदृश्यत्वाद्यभावाख्यंश्रुतिलिंगाधिकापरा ॥ अनित्यत्वात्क्रिया
णांतुकथमेवस्वरूपता ॥ ५ ॥ इतिचेत्सविशेषोपिक्रियाशक्त्यात्मनास्थिरः ॥ शक्तिताव्य
क्तिताचेतिविशेषोपिविशेषवान् ॥ ६ ॥ अभिन्नोपिक्रियादिश्चस्वभावइतिहिश्रुतिः ॥ ज्ञानंनि
त्यंक्रियानित्याबलंशक्तिःपरात्मनः ॥७॥ नित्यानंदोऽव्ययःपूर्णोभगवान्विष्णुरच्युतः ॥ इतिपैंगि
श्रुतिश्चाहशक्तिसद्भावएवतु ॥ ८ ॥ क्रियादिनित्यताज्ञेयातदन्यत्रत्वनित्यता ॥ इतिसत्तत्त्व
वचनम् ॥ २ ॥ द्वित्वंचैकस्ययुज्यते ॥ यःसेतुरितिचैकत्ववचनेनविशेषणात् ॥ १० ॥ ३ ॥
अंतस्थित्वारमणकृदंतरःसमुदाहृतः ॥ रमणंचात्मशब्देनादेयंमातीतिचोच्यते ॥ ११ ॥ विशि
ष्टसुखवत्त्वाच्चब्रह्मत्वंचविशिष्टता ॥ अन्योन्यनियतिश्चेशनियमेनान्यथाभवेत् ॥ १२ ॥ चेत
नानांविशेषोयःस्वभावोपीश्वरार्पितः ॥ अन्योन्यनियमेतस्मादनवस्थित्यसंभवौ ॥ १३ ॥ ईश्व
रश्चेन्नियंतास्यात्सएवप्रथमागतः ॥ किमित्यपोद्यतेकस्माद्वृथावस्थितिकल्पना ॥ १४ ॥ दोष
वत्येवतस्मात्सानैवकार्याकथंचन ॥ ४ ॥ रमणंनातियत्नस्यविक्षेपादेवयुज्यते ॥ १५ ॥ इतिचे
त्सर्वनियमोयस्यकस्मान्नशक्यते ॥ स्वात्मनानियतंवस्तुप्रतीपंह्यात्मनोभवेत् ॥ १६ ॥ स्वाधी
नसत्ताशक्त्यादिकथमात्मप्रतीपकम् ॥५॥ गुणक्रियादयोभावायदिमास्युरभेदिनः ॥१७॥ अ
भेदोऽभावधर्माणांब्रह्मणायुज्यतेकथम् ॥ नाभावोभावइतिचाविशेषःप्रायशोभवेत् ॥ १८ ॥अ

तद्भावोन्यताचेतिनविशेषोस्तिकश्चन ॥ दोषाभावोगुणइतिप्रसिद्धोलौकिकेष्वपि ॥ १९ ॥
अदृश्यत्वादिकास्तस्माद्गुणानाहस्वयंप्रभुः ॥ भावाभावविरोधोपिनतुसर्वत्रविद्यते ॥ २० ॥ त
दभावोहितद्भावविरोधीनततोऽपरः ॥ पृथक्त्वाभावतद्रूपान्भेदांस्त्रीन्कल्पयंतिचेत् ॥ २१ ॥ क
ल्पनागौरवाद्यास्तुदोषास्तत्रविरोधिनः ॥ पृथक्त्वान्यत्वभेदास्तुपर्यायेणैवलौकिकैः ॥ २२ ॥
व्यवह्रीयंतेचसततंवैदिकैरपिसर्वशः ॥ दृष्टहानिरदृष्टस्यकल्पनेत्येवदूषणम् ॥ २३ ॥ यदातद
धिकोदोषोविद्यतेकोनुवादिनाम् ॥ भावाभावस्वरूपास्तुविशेषाएववस्तुनः ॥ २४ ॥ अभिन्नाए
वसंग्राह्यांव्यवहारप्रसिद्धये ॥ यथैकःसमवायोपिभेदाभेदौचवस्तुनि ॥ २५ ॥ अंगीकार्याविवि
शेषेणस्थानेषुव्यवहर्तृभिः ॥ अखंडवादिनोऽपिस्याद्विशेषोऽनिच्छतोऽप्यसौ ॥२६॥ व्यावृत्तेनि
र्विशेषेतुकिंव्यावर्त्यंबहुत्वतः ॥ बहुलिंगसमायुक्तैर्बहुभीरूढनामभिः ॥ २७ ॥ प्रसिद्धैरन्यगत्वेन
वाच्यःसाक्षाज्जनार्दनः ॥ वैश्वानरादयःशब्दाअपितद्वाचिनस्ततः ॥२८॥ तानिर्लिंगानितेशब्दाअ
पितद्वाहिसर्वशः ॥ बहुलाप्ययज्ञरूढिस्तत्प्राज्ञरूढिंनबाधते ॥ २९ ॥ ७ ॥ ॥ इतिश्रीमदानंदतीर्थभग
वत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेप्रथमाध्यायस्यद्वितीयःपादःसमाधिकरणः ॥ ७ ॥
श्रीगुरुभ्योनमः ॥ ॥ तत्रान्यत्रप्रसिद्धानांलिंगनाम्नांपुनर्हरिः ॥ विशेषान्मुख्यतोवृत्तिंस्वस्मि
न्नेवात्रवक्त्यजः ॥ १ ॥ विष्णावेवात्मशब्दस्यरूढत्वान्नशिवादिकान् ॥ श्रुतिर्वक्ति ॥ १ ॥
अखिलेशत्वाद्भूमाविष्णुःसुखाधिकः ॥ २ ॥ २ ॥ अतोविरुद्धवद्भातमपिव्याख्यायतत्त्वतः ॥
योजनीयंहरौवाक्यंविरुद्धैर्लक्षणैर्युतम् ॥ ३ ॥ ब्रह्मैवतानिर्लिंगानितदन्यत्रत्वसंत्यपि ॥ अ

विरोधेनगोविंदेसंत्यस्थूलादिकानिच ॥ ४ ॥ अन्यवस्तुस्वभावानांस्थौल्यादीनामपाकृतिम् ॥
नारायणेश्रुतिर्वक्तिनतुतस्यास्वभावताम् ॥५॥ सर्वधर्मासर्वनामासर्वकर्मागुणाश्रुताः॥दोषांश्रुता
श्चनेत्याद्याप्रमाणंश्रुतिरत्रच ॥ ३ ॥ ॥ लिंगंसाधारणंशब्दौस्थानेलिंगमनुग्रहः ॥ ६ ॥ पुनः
शब्दालिंगशब्दौविचार्याद्विस्थिताइह ॥ बाहुल्यंलिंगशब्दानांअनुक्तिश्चविरुद्धता ॥ ७ ॥
अदृष्टिरन्वयाभावोविपरीतश्रुतिभ्रमः ॥ लिंगावकाशराहित्यभ्रमस्तादृग्द्वयंतथा ॥ ८ ॥ बहुना
दृक्कमुक्तस्यविरोधोर्थात्तथागतिः ॥ समस्तमेतदित्यत्रपूर्वपक्षेषुयुक्तयः ॥ ९ ॥ ताएवबल्वत्य
स्तुगत्यंतरविवर्जिताः ॥ सिद्धांतयुक्तयोज्ञेयाःदृश्यंतेताश्चसर्वशः ॥ १० ॥ मुक्तोपसृप्यताप्रा
णादाधिक्यंसर्वतस्तथा ॥ वैलक्षण्यंस्वभावस्यप्रेक्षापूर्वक्रियातथा ॥ ११ ॥ अरस्यण्यस्यचे
शत्वंसूर्याद्यनुकृतिस्तथा ॥ वामनाख्यासर्वकंपस्तच्छब्दानन्यसिद्धता ॥१२॥ अनामरूपताभे
दस्योपजीव्यप्रमाणता ॥ सर्वैश्वर्यादिकाद्यास्तावेदेशेनप्रदर्शिताः ॥ १३ ॥ ॥४॥५॥६॥७॥
अधिकारश्च ॥ ८ ॥ तद्धानिः ॥ ९ ॥ प्रसंगादेवचिंतितौ ॥ तत्पलायविधिःसिद्धेचोपासाया
निराकृतः ॥ १४ ॥ यतोजैमिनिनान्यार्थमासिद्धेर्थैविधिस्तथा ॥ विद्याधिराजस्यमतमविरोध
स्तयोस्ततः ॥ १५ ॥ मोक्षेफलविशेषोस्तिनतुसर्वंप्रकाशते ॥ सर्वदातेनदेवानामपियुक्ताद्युपास
ना ॥१६॥ नित्यंवृद्धिक्षयापेतंविष्णोःपूर्णंतुवेदनम् ॥ स्पष्टातिस्पष्टविशदंब्रह्मणोशेषवस्तुगम् ॥
॥ १७॥ अन्येषांक्रमशोज्ञानंमितवस्तुगतंसदा ॥ इत्यादयोविशेषास्तुसदाविद्यापतेर्हृदि ॥१८॥
जैमिन्याद्यास्तुसामान्यवेत्तृत्वात्तत्तथावदन् ॥ विद्येशमतमेतस्मान्नैवसद्भिर्विरुध्यते ॥ १९ ॥

॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीम
द्ब्रह्मसूत्रानुव्याख्यानेप्रथमाध्यायस्यतृतीयःपादः ॥ ७ ॥
श्रीगुरुभ्योनमः ॥ ॥ दुःखिबद्धावराद्यास्तुतदधीनत्वहेतुतः ॥ शब्दाब्रह्मणिवर्तंतेराज्ञियद्व
त्पराजयः ॥ १ ॥ स्वातंत्र्यंतद्गतत्वंतुशब्दवृत्तौहिकारणम् ॥ स्वातंत्र्यंतत्रमुख्यंस्यात्कुतोराज्ञिज
योऽन्यथा ॥२ ॥नहिभृत्यस्यविजयिशब्दस्तावत्प्रयुज्यते ॥ यावद्राज्ञ्यन्यगत्वेपिस्वातंत्र्याभास
मात्रतः ॥ ३ ॥ भृत्यबंधादिकंराज्ञिराज्ञोबंधादियोग्यतः ॥ कारणंसंशयस्यस्यादितिनैवप्रयु
ज्यते ॥ ४ ॥ अमंगलत्वाच्छब्दानांराज्ञोयोगादमंगले ॥अप्रियत्वात्तुशब्दस्यस्यात्प्रयोगनिवर्त
नम् ॥ ५ ॥ गुणास्तुतादृशायत्रप्रयुज्यंतेऽखिलाअपि॥पूज्येष्वेवविशेषेणस्वातंत्र्यंमुख्यकारणम्
॥ ६ ॥ अतोदोषातिदूरात्वात्संशयस्याप्यसंभवात् ॥ दोषाणांविष्णुगत्वस्यप्राज्ञबुद्धिव्यपेक्षया
॥ ७ ॥ स्वातंत्र्यार्थमभिप्रेत्यदोषशब्दाश्चविष्णवि ॥ वासुदेवश्रुतिश्चाहनैवविष्णावमंगलम्॥८॥
मंगलामंगलेन्यत्रततोनामंगलंवदे ॥ स्वातंत्र्यापेक्षयाविष्णौदोषोनामंगलोक्तितः ॥ ९ ॥ बहु
भुक्तंयथादोषोनृपुनैवहरौक्वचित् ॥ एवंदुःखादिशब्दाश्चस्वातंत्र्यापेक्षयोदिताः ॥ १० ॥ नैवदो
षाहरौतद्गबुद्ध्योक्तादोषकारिणः ॥ तस्मात्तेदोषशब्दाश्चतत्रैवगुणवाचकाः ॥ ११ ॥१॥ जात
मोतंहरौयस्माज्ज्योतिषःप्राणरूपतः ॥ आयजेतश्चायजेतोवसंतिश्चवसंस्ततः ॥१२॥ विगतच्छा
दनत्वात्तुगच्छभूतक्षयंकरः॥ भुंक्ष्वेत्युक्तोहरिर्हुंचहुतमस्मिन्जगद्यतः ॥१३॥ स्फुटत्वात्फडिति
प्रोक्तःकवरक्षणइत्यतः ॥ कवचंवर्ततेयस्मात्षड्गुणत्वेनसर्वदा ॥ १४ ॥ वषट्तद्गतत्वतस्तेषांवौष

डित्येवकथ्यते ॥ स्वीयंस्वीकुरुतेयस्मात्स्वाहेत्युक्तोजनार्दनः ॥ १५ ॥ नमंत्यस्मिन्गुणायस्मा
न्नमइत्येवकथ्यते ॥ इत्यशेषक्रियानामशब्दैरेकोजनार्दनः ॥ १६ ॥ उच्यतेमुख्यतोयस्मा
त्पदवर्णस्वरात्मभिः ॥ तस्मादनंतगुणताश्रुतितात्पर्यतोस्यहि ॥ १७ ॥ विज्ञानार्थत्वतःसर्वश
ब्दानांनास्तिदूषणम् ॥ अंगीकृतेपिनैवास्तिदोषोवाक्यसमन्वये ॥ १८ ॥ तदर्थत्वेनकर्मादेःसंभ
वादल्पबुद्धये ॥ कश्छंदसांयोगमितिश्रुतेर्योगार्थतत्त्ववित् ॥ १९ ॥ ब्रह्मैकोनैवचान्योस्तिकइ
त्यस्योभयार्थतः ॥ तस्यापिपूर्वसिद्धस्यज्ञानमेवेतिनिश्चयात् ॥ २० ॥ नित्ययोगोपिशब्दाना
मर्थैर्नैवनिषिध्यते ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ स्त्रीशब्दाश्चनिषेधार्थाःसर्वेपिब्रह्मवाचकाः ॥ २१ ॥
॥ ६ ॥ ७ ॥ विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् ॥ पृथक्समन्वयार्थानिस्थानान्येतानिस
र्वशः ॥ २२ ॥ सर्वमानैर्विरोधश्चव्युत्पत्तेरप्यशक्तता ॥ परस्परविरोधश्चविरोधःकार्यतद्वतोः ॥ २३ ॥
स्त्रीलिंगत्वंनिषेधश्चपूर्वपक्षेपुहेतवः ॥ दोषात्यस्पृष्टिनियमःशब्दार्थानेकतातथा ॥ २४ ॥ बहुरू
पत्वमीशस्यव्यक्तव्यक्तिविशेषता ॥ उत्पादनंस्वदेहाच्चदुर्जनाव्यक्ततातथा ॥ २५ ॥ इत्या
द्यायुक्तयःसाक्षात्सिद्धांतस्थापकाइह ॥ अन्वयःसर्वशब्दानामशक्योज्ञातुमंजसा ॥ २६ ॥ इति
यल्लोकवैमुख्यंजैमिन्यादिमतंवदन् ॥ विद्याधिनाथोभगवानपाचक्रेस्वयंप्रभुः ॥ २७ ॥ स्वशि
ष्याणांप्रसिद्ध्यर्थंमतमात्मीयमंशतः ॥ विज्ञातंतैर्जगादात्रतारतम्यंनृणांवदन् ॥ २८ ॥ तेषुतेषु
पदार्थेषुरूढिरंगीकृतायतः ॥ प्रयोजनबहुत्वेनतस्यतस्यविरोधतः ॥ २९ ॥ उपदेशादिसामर्थ्या
द्विष्णौशक्तिश्चगृह्यते ॥ तथाप्येतद्विरोधेतुतद्वाचित्वमपोद्यते ॥ ३० ॥ अविरोधेतुबह्वर्थाएत

न्मूलतयामताः ॥ इतोहिरूढतान्येषामुपजीव्यत्वमत्रहि ॥ ३१ ॥ तत्सिद्धिस्तदपेक्षाचसापेक्षाचहरीच्छया ॥ तस्मात्परममुख्यत्वंविष्णावन्यत्रमुख्यता॥ उपलक्षणाचगौणीचतिस्रःशब्दस्यवृत्तयः ॥ प्रवृत्तिहेतोर्बाहुल्यंज्ञेयंपरममुख्यता ॥३२॥ तत्रप्रयोगबाहुल्यंयदितत्परताकिम् ॥ उभयंदृश्यतेविष्णौशब्दानामपिसर्वशः ॥३३॥ प्रयोगमात्रबाहुल्यंरूढिरित्यभिधीयते ॥ प्रयोगयुक्तसादृश्यंसंबंधोवाप्यमुख्यतः ॥३४॥ वृत्तिहेतुरितिज्ञेयःपूर्वायोगेपरग्रहः ॥ एतमेवतथासंतंशतचींत्यादिकाश्रुतिः॥३५॥आचक्षतइतिह्यत्रसंतमित्यवधारणात् ॥ योगस्यरूढेःप्राबल्यंविद्वद्रूढिंचतत्रगाम्॥३६॥ बहुशोदर्शयंत्यंजस्तात्पर्यात्सनिरुक्तिकम् ॥ अइतिब्रह्मकथितंतद्व्याख्यानात्मतातथा ॥३७॥शब्दानामपिसर्वेषांनामवित्त्वनकत्यता ॥ विष्णुनामार्थरूपत्वंसंहितादेरथाब्रवीत् ॥३८॥णकारंचषकारंचबलचेष्टात्मकंवदन्॥तज्ज्ञानपूर्वकत्वेनसंहिताध्ययनंतथा ॥४०॥उपसर्गत्वतोवेस्तुताच्छील्यार्थादुनस्त ॥ णकारश्चषकारश्चनामरूपतयामतौ॥४१॥तस्मात्समन्वयोविष्णौस्वरवर्णपदात्मनः ॥ अपिवेदस्यकिमुतवाक्यरूपेणसंगतिः ॥ ४२ ॥ घोषाःसर्वेपिवेदाश्चसर्वेवेदाश्चयत्पदम् ॥ इंद्रंमित्रंयमिंद्रंचप्रथमःसंक्रतिस्तथा ॥ ४३ ॥ नामधाःसर्वदेवानामेकइत्यादिकाश्रुतिः ॥ प्रमाणमुक्तविषयेतदेवोक्तमुपक्रमात् ॥ ४४ ॥ इतिस्वयंभगवताब्रुवताशेषमन्वयम् ॥ नशब्दवाच्यतैवात्रप्रधानस्यनिषिध्यते ॥ ४५ ॥ सर्ववेदेतिहासेषुपुराणेषुचसंग्रहात् ॥ सत्वंरजस्तमइतिगुणाःप्रकृतिसंभवाः ॥ ४६ ॥ निबध्नंतिमहाबाहोदेहेदेहिनमव्ययम् ॥ इत्यादिवाक्यरूपेणयत्रार्थोनान्यइष्यते ॥ ४७ ॥ तेजोबन्नात्मकंवापियद्युपादानमिष्यते ॥ अमाद्येवाप

राधःकःप्रधानमितिचोदिते ॥ ४८ ॥ अजामेकामितिप्राहश्रुतिरेतांयदातदा ॥ कोदोषःसर्वथैवा
स्तिपरिणातिजडंयदि ॥ ४९ ॥ अस्माकंपरमुख्यार्थोभगवानेकएवतु ॥ मुख्यमात्रतयारूढंसर्व
मभ्युपगम्यते ॥ ५० ॥ सर्वैषामपिशब्दानांगौणाद्यंतदयोगतः ॥ अर्थद्वयमभिप्रेत्यप्रवृत्तेर्हरिरु
क्तवान् ॥ ५१ ॥ कार्याणांकारणंपूर्वंवचसांवाच्यमुत्तमम् ॥ योगानांपरमांसिद्धिंपरमंतेपदंविदुः
॥ ५२ ॥ इतिबुद्धौसमारोहादुभयोर्योगरूढयोः ॥त्यागेचकारणाभावादुभयार्थत्वमिष्यते॥५३॥
विपरीतप्रमाभावेपूर्वारोहस्तुकारणम् ॥ साभवेद्यत्रसत्यर्थःपूर्वारोहोभ्रमोयथा ॥ ५४ ॥ अतो
जगदुपादानंप्रधानंवक्तिसाश्रुतिः ॥ यत्तत्त्रिगुणमव्यक्तंनित्यंसदसदात्मकम् ॥ ५५ ॥ प्रधानंप्र
कृतिंप्राहुरविशेषंविशेषवत् ॥ पंचभिःपंचभिर्ब्रह्मचतुर्भिर्दशभिस्तथा ॥ ५६ ॥ एतच्चतुर्विंशति
कंगणंप्राधानिकंविदुः ॥ इतिभागवतेप्राहविद्याधीशःस्वयंप्रभुः ॥ ५७ ॥ नचप्रकृतिशब्देनब्रह्मो
पादानमुच्यते ॥ अविकारःसदाशुद्धोनित्यआत्मासदाहरिः ॥ ५८ ॥ सदैकरूपविज्ञानबलआ
नंदरूपकः ॥ निर्विकारोक्षरःशुद्धोनिरातंकोजरामरः ॥ ५९ ॥ अविश्वोविश्वकर्ताजो
यःपरःसोभिधीयते ॥ निर्विकारमनौपम्यंसदैकरसमक्षयं ॥ ६० ॥ ब्रह्मेतिपरमात्मेतियंविदुर्वैदि
काजनाः ॥ इतिश्रुतिपुराणोक्त्यानविकारीजनार्दनः ॥ ६१ ॥ पराधीनविशेषाप्तिरनिवर्त्यान्य
थाभवः ॥ क्षीरादिवद्विकारःस्यान्नैवसस्याद्धरेःक्वचित् ॥६२॥ अपादानत्वमेवास्ययद्युपादान
तेष्यते ॥ अंगीकृतंतत्पितृवन्नतुविश्वात्मनाभवः ॥ ६३ ॥ नचोर्णनाभिजनितृमातॄणांचविका
रिता ॥ चेतनत्वात्तदन्नंहिकार्यरूपतयाभवेत् ॥ ६४ ॥ अपादानतयाविश्वकर्तृत्वंबुद्धिपूर्वक

म् ॥ उक्तंभाह्लविशाखायांब्रह्मतर्कैचसादरम् ॥६५॥ इच्छामात्रात्प्रभोःसृष्टिरविकारस्यसर्वदा॥
स्वभावोयमनंतस्यरजोयेनाऽभवज्जगत् ॥६६॥ स्वदेहादिच्छयाविश्वंभुक्तपूर्वंजनार्दनः ॥ सस
र्जमातापितृवदूर्णनाभिवदेवच ॥६७॥ प्रधानंपरिणाम्येशोनिर्विकारःस्वयंसदा ॥ नचेतनविका
रःस्याद्यत्रकापिह्यचेतनम् ॥ ६८ ॥ नाचेतनविकारोपिचेतनःस्यात्कदाचन ॥ नचान्यस्यान्न
रूपत्वंविकृतत्वेपिदृश्यते ॥ ६९ ॥ नक्षीरादन्यतादध्नःकेनचिद्दृश्यतेकचित् ॥ सर्वज्ञाद्ब्रह्मणोऽन्य
त्वंजगतोह्यनुभूयते ॥ ७० ॥ अभेदःसत्वमात्रेणस्यात्स्वर्णस्वर्णयोरपि ॥ भागेनपरिणामश्चेद्भाग
योर्भेदएवहि ॥ ७१ ॥ योभागोनविकारीस्यात्सएवास्माकमीश्वरः ॥ भिन्नानांसमुदायस्या
मब्रह्मेतिचेद्भवेत् ॥७२॥ ब्रह्मोपादानतानस्यात्तदाविश्वस्यहिकचित् ॥ शृंगाच्छरोविलोमभ्यो
दूर्वागोमयतस्तथा ॥ ७३ ॥ वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यते ॥ उपादानैकदेशत्वंयद्यप्य
त्रप्रदृश्यते ॥ ७४ ॥ अप्यपादानतैवात्रदृष्टांतोब्रह्मणोभवेत् ॥ नह्युपादानतैवात्रबाह्यावयवगौ
रवात्॥७५॥नचाचेतनतस्तत्रचेतनस्यसमुद्भवः ॥ उपादानतयाकिंतर्ह्युपादानंह्यचेतनम्॥७६॥
कार्यदेहगतस्यास्यचेतनस्यप्रदृश्यते ॥ सच्चत्यच्चाभवदितिनास्यविश्वत्वमुच्यते ॥ ७७ ॥ तत्सृ
ष्ट्वेतिगिरैवास्यपूर्वविश्वस्यसिद्धितः ॥ सत्त्वात्तत्तैर्वैदिकत्वात्सम्यग्वक्तुमशक्यतः ॥ ७८ ॥ आ
श्रयत्वात्स्वाश्रयत्वाज्ज्ञानत्वाद्दुर्विदत्वतः ॥ सत्तनेर्यातनाच्चैवह्यप्राप्यत्वाच्चदुर्जनैः ॥ ७९ ॥ नि
त्यसाधुगुणव्याप्तियंतृरूपत्वतःसदा ॥ जगद्वतेनरूपेणब्रह्मैवहितथोच्यते ॥ ८० ॥ व्यक्तिरुक्त
गुणानांहिपुरुषापेक्षयानृणाम् ॥ भवेदभवदित्यस्मात्प्रयोगश्चात्रयुज्यते ॥ ८१ ॥ तस्मादशेषक

तैकोनिर्विकारोरमापतिः ॥ शब्दैःप्रकृतिरित्याद्यैःस्त्रीलिंगैरभिधीयते ॥ ८२ ॥ बहुस्यामितित
स्यैवह्युक्तमार्गेणयुज्यते ॥ तत्तद्रतेनरूपेणतदर्थंह्यसृजज्जगत् ॥ ८३ ॥ यच्चाविकृतमेवैकंब्रह्मवि
श्वात्मनामृषा ॥ दृश्यतेमंददृष्ट्यैवससर्गइतिकथ्यते ॥ ८४ ॥ समंददृष्टिस्तस्यैवब्रह्मणःकिंत
तोन्यगा ॥ ब्रह्मणश्चेत्कसार्वज्ञमन्यगाचेत्स्वतोन्यता ॥ ८५ ॥ नादेहयोगिनोदृष्टिरितितत्का
रणंस्वतः ॥ देहिनःकारणयुतादेहाश्रयदिनभ्रमात् ॥ ८६ ॥ किंभ्रांतिकल्पितंतत्रभेदोपिभ्र
मजोयदि ॥ भ्रांतिरज्ञानमूलत्वात्तस्यभेदव्यपेक्षया ॥ ८७ ॥ नाज्ञानकल्पकंकिंचिदन्योन्याश्र
यतायतः ॥ भ्रमत्वेत्वियमुक्तिश्चवदंतःपतनान्नहि ॥ ८८ ॥ व्यावहारिकताचास्यस्याद
बाध्यत्वएवहि ॥ बाध्यंनार्थक्रियाकारिनचस्वमोपिनोमृषा ॥ ८९ ॥ वासनाजनितत्वेनतस्याऽ
प्यंगीकृतत्वतः ॥ सहिकर्तैनिवाक्याच्चजाग्रत्त्वमितिहिभ्रमः ॥ ९० ॥ सर्पभ्रमादावपिहिज्ञान
मस्त्येवतादृशम् ॥ तदेवार्थक्रियाकारितत्सदेवार्थकारकम् ॥ ९१ ॥ ब्रह्मत्वर्थक्रियाकारिपरतः
स्वतएववा ॥ अंगीकृतंहितेनैवपरतस्त्वेनचप्रमा ॥ ९२ ॥ अमुख्यसत्यमानस्यसाधकत्वेसदाव
योः ॥ नहिसंप्रतिपत्तिस्यादतस्तिष्ठतुसाप्रमा ॥ ९३ ॥ नहिविप्रतिपन्नेनशक्यंसाधयितुंक्वचित् ॥
साधकत्वंतुसत्यस्यसाक्षिणोह्यावयोर्द्वयोः ॥ ९४ ॥ सम्यक्संप्रतिपन्नंतन्ननिवर्तमतंभवेत् ॥ य
दिनांगीकृ॰ ।किंचिदनंगीकृततापिहि ॥ ९५ ॥ नांगीकृतेतिमूकःस्यादितिनोऽस्मद्विवादिता ॥ वि
श्वंसत्यंयाचिकेतप्रधान्वस्ययथार्थतः ॥ ९६ ॥ इत्यादिश्रुतयःसर्वाविश्वसत्यत्ववाचकाः ॥ सत्य
त्वंगगनादेश्चसाक्षिप्रत्यक्षसाधितम् ॥ ९७ ॥ साक्षिसिद्धस्यनक्वापिबाध्यत्वंतददोषतः ॥ सर्वका

लेष्वबाध्यत्वंसाक्षिणैवप्रतीयते ॥ ९८ ॥ कालोहिसाक्षिप्रत्यक्षसुषुप्तौचप्रतीततः ॥ अतीताना
गतौकालावपिनासाक्षिगोचरौ ॥ ९९ ॥ पक्षीकर्तुमशक्यत्वान्नानुमानत्रवर्तते ॥ तदेतदितिस
र्वंचदृश्यंवास्मृतिगोचरम् ॥ १०० ॥ साक्षिसिद्धेनकालेनखचितंह्येववर्तते ॥ तस्मान्नतंविनाकिं
चित्स्मर्तुंद्रष्टुमथापिवा ॥१॥ शक्यंतन्नित्यसिद्धेर्हिनानुमावसरोभवेत् ॥ अतोऽदोषप्रतीतस्य
सत्यत्वंसाक्षिणामतम् ॥ २ ॥ परीक्षादेश्चसत्यत्वंतेनह्येवमतंभवेत् ॥ अन्यथाश्रुतियुक्त्यादि
प्रमाणैश्चसहैवतु ॥ ३ ॥ अकस्माद्विनिवृत्तिश्चकिंविश्वस्यनशक्यते ॥ इतःपूर्वंतथाभावाद्य
दिनासंसृतेर्गतिः ॥ ४ ॥ वाक्यानुमादितश्चेत्स्यात्तत्प्रामाण्यंचसाक्षितः ॥ तत्प्रामाण्यंयथासा
क्षीस्थापयत्येवमेवहि ॥ १०५ ॥ सर्वकालेष्वपिस्थैर्याद्व्यभिचारमपोह्यच ॥ एवमक्षजमानत्व
सिद्धांविश्वस्यसत्यताम् ॥ ६ ॥ किमितिस्थापयेन्नायंनिर्दोषज्ञानशक्तितः ॥ एकाज्ञानकृतंवि
श्वमितियच्चोच्यतेमृषा ॥ ७ ॥ बहुज्ञानकृतंविश्वमितितस्योत्तरंभवेत् ॥ परस्यसत्यतांजानन्न
पियःस्वात्मतस्करः ॥ ८ ॥ परोनास्तीतिवदतिकिमित्युन्मत्तवद्वदेत् ॥ पराभावेहिवाग्व्यर्था
यदिनैवोच्यतेतदा ॥ ९ ॥ कशावेत्रादिकंतस्यतस्करस्योत्तरंवदेत् ॥ प्रपंचोयदिविद्येतनिवर्तेत
नसंशयः ॥ ११० ॥ मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः ॥ विकल्पोविनिवर्तेतकल्पितोयदिकेन
चित् ॥ ११ ॥ उपदेशादयंवादोज्ञातेद्वैतंनविद्यते ॥ इत्यत्रयदिशब्दौचनिवर्तेतेतिचद्वयम्॥१२॥
विश्वस्यसत्यतामाहुर्विद्येतोत्पत्तिमेवच ॥ विदोत्पत्ताविति ह्यस्माद्धातोरुत्पत्तिरेवहि ॥ १३ ॥
निवृत्तिन्याप्तियुक्प्रायःप्रपंचोभेदपंचकः ॥ जीवेश्वरभिदाचैवजडेश्वरभिदातथा ॥ १४ ॥ जी

वभेदोमिथश्चैवजडजीवभिदातथा ॥ मिथश्चजडभेदोयंप्रपंचोभेदपंचकः ॥ १५ ॥ सोयंस
त्योह्यनादिश्चसादिश्चेन्नाशमाप्नुयात् ॥ द्वैतंनविद्यतइतितस्मादज्ञानिनांमतम् ॥ १६ ॥ इतिश्रु
तेर्मितंत्रातंमायाख्यहरिविद्यया ॥ उत्तमोऽर्थौहरिस्त्वेकस्तदन्यन्मध्यमाधमम् ॥ १७ ॥ वाचार
भ्धंतुसांकेत्यंनामस्याद्विकृतंबहु ॥ नित्यंतुनामधेयंयन्मृत्तिकेत्यादिवैदिकम् ॥ १८ ॥ प्राधान्यात्तत्प
रिज्ञानात्प्राकृताज्ञोऽपिपूरुषः ॥ विद्वानित्युच्यतेसद्भिरेवंनित्यपरात्मवित् ॥ १९ ॥ सदाननंसत्यमि
तिनित्यमेवोच्यतेबुधैः ॥ प्रयोगश्चोत्तरत्रास्तिजरायद्येनमाप्नुयात् ॥ १२० ॥ देहःप्रध्वंसतेचायं
किंततोऽस्यातिशिष्यते ॥ हन्यतेनवधेनायंजरयाचनजीर्यते ॥ २१ ॥ एतत्सत्यंब्रह्मपुरमितिनित्य
त्वएवहि ॥ वाचारंभणमित्युक्तेमिथ्येत्यश्रुतकल्पनम् ॥ २२ ॥ पुनरुक्तिर्नामधेयमितीत्यस्यनि
रर्थता ॥ एकःपिंडोमणिश्चेतिपदवैय्यर्थ्यमेवच ॥ २३ ॥ विकारित्वविवक्षायांनचैकनखकृंतनम् ॥ स
र्वकार्ष्णायसंचस्यादतःसादृश्यएवच ॥ २४ ॥ विवक्षात्रतुनित्यत्वेप्राधान्येचोक्तवर्त्मना ॥ प्राधान्यप्र
तिपत्त्यर्थंसृष्ट्यादेश्चैषविस्तरः ॥ १२५ ॥ तस्मात्केनापिमार्गेणनविवर्तमतंभवेत् ॥ तदसंख्यातदो
षेतंहेयमेवशुभार्थिभिः ॥ २६ ॥ असंख्यत्वेनदोषाणांग्रंथाधिक्यभयादपि ॥ उपरम्यतेततोविष्णुरि
च्छापूर्वकमश्रमः ॥ २७ ॥ करोतिपितृवद्विश्वंपूर्णाशेषगुणार्णवः ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्र
ह्मसूत्रानुव्याख्यानेश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्यचतुर्थःपादः ॥ ४ ॥ ॥१४॥
श्रीगुरुभ्योनमः ॥ ॥ उक्तःसमन्वयःसाक्षादविरोधोऽत्रसाध्यते ॥ चतुर्विधस्यतस्यादौयौक्तस्त
त्रापिचस्मृतेः ॥ १ ॥ तस्याश्चतुःस्वरूपत्वात्प्रत्येकंचतुरात्मकाः ॥ पादाःसर्वेतदंशाश्चमूर्तीनांव

र्णमागमात् ॥ २ ॥ आप्ततासमतादृष्टिश्रुतिसाम्यबलोद्भवाः ॥ सर्वानुसारोल्घुताविशेषादर्श
नाफले ॥ ३ ॥ इष्टासिद्धिश्चनियमःपूर्वपक्षेषुयुक्तयः ॥ एताएवत्वतिबलाःसिद्धांतस्यानियामि
काः ॥ ४ ॥ आप्तैःप्रत्यक्षतोदृष्टाप्रोक्तमर्थंकथंश्रुतिः ॥ पिपीलिकालिपिनिभावारयेत्सर्वगा
हिते ॥ ५ ॥ इतिचेद्यद्यशेषज्ञारुद्राद्याहरिपूर्वकाः ॥ किंनाशेषविदोमानंह्युभयत्रसमंभवेत्॥६॥
नचाप्तिनिश्चयस्तत्रशक्यतेव्यभिचारतः ॥ नचास्याव्यभिचारेपिहीयतेमानताक्वचित् ॥ ७ ॥
निर्दोषवाक्यमूलत्वान्नचतद्युक्तिमूलता ॥ वेदोक्तस्याधिकारस्यदुर्निरूपत्वतःसदा ॥ ८ ॥ निय
मोव्यभिचारोवानैवज्ञातुंहिशक्यते ॥ अधिकारोहिसुलभःकथितोऽन्यागमेष्वलम् ॥ ९ ॥ वेदो
क्तोह्यधिकारस्तुदुर्लभःसर्वमानुषैः ॥ अन्यागमेषुविप्रत्वमपिचंडालजन्मनाम् ॥ १० ॥ मंडलां
तःप्रवेशेनक्रमशःप्रतिपाद्यते ॥ अधिकारंदुरापाद्यमुक्त्वातिसुलभंपुनः ॥ ११ ॥ अशक्यंसाधनं
चोक्त्वासुशकंतत्फलाप्तये ॥ उच्यतेऽतस्तदुक्तंहिव्यभिचारिफलेऽपितु ॥१२॥ कथंप्रमाणतांग
च्छेन्नित्यत्वात्पुरुषोद्भवैः ॥ उज्झितंसर्वदोषैश्चकथंनोमानतांव्रजेत् ॥१३॥ विरूपनित्ययावाचा
नित्ययानित्ययासदा इत्यादिश्रुतिभिर्वेदोनित्यइत्यवम्यते ॥ १४ ॥ पिपीलिकालिपिश्चापि
प्रमाणमविरोध ५ णैणेरुलूकेनकृतमप्यासबोधकम् ॥ १५ ॥ अविरुद्धंविरुद्धंतु
विरोधादेवबाधितम् ॥ विरोधादर्शनात्तस्माद्वेदप्रामाण्यमिष्यते ॥ १६ ॥ तन्मूलत्वात्स्मृतीनां
चविरोधोयत्रनक्वचित् ॥ विरोधोऽपिसएवोक्तःप्रत्यक्षेणागमेनवा ॥ १७ ॥ आगमेनागमस्यैववि
रोधेयुक्तिरिष्यते ॥ उपजीव्यविरोधेतुवेदस्यान्यार्थकल्पना ॥ १८ ॥ प्रत्यक्षमुपजीव्यंस्यात्प्रा

योयुक्तिरपिकचित् ॥ आगमैकप्रमाणेषुतस्यैवह्युपजीव्यता ॥ १९ ॥ युक्तोयुक्तश्चयद्यर्थ
आगमस्यप्रतीयते ॥ स्यात्तत्रयुक्तएवार्थोयुक्तिश्चत्रिविधामता ॥ २० ॥ व्याप्तिःप्रत्यक्षगाय
स्याःयुक्तिगागमगातथा ॥ प्रत्यक्षागममूलातुयुक्तिस्तत्रबलीयसी ॥ २१ ॥ याथार्थ्यमेवमान
त्वंतन्मुख्यंज्ञानशब्दयोः ॥ अर्थत्वमर्यतैवस्यान्नक्रियार्थेषुसामता ॥ २२ ॥ ज्ञानार्थेज्ञेयतामु
ख्याशब्दार्थेतदनंतरम् ॥ यथार्थज्ञानजनकायथार्थायुक्तयःस्मृताः ॥ २३ ॥ अनुप्रमाणमेतानि
ह्यक्षयुक्तिवचांस्यतः ॥ प्रामाण्यंनानुवादस्यस्मृतेरपिविहीयते ॥ २४ ॥ यथार्थमेवप्रामाण्य
शब्दार्थोयद्विवक्षितः ॥ अंगीकृतंचेत्प्रामाण्यंस्मृत्यादेःकाविरुद्धता ॥ २५ ॥ नचाफलत्वंवक्त
व्यंसर्वस्मृत्यनुवादयोः ॥ फलवत्त्वंनचास्माभिःप्रामाण्यंहिविवक्षितम् ॥ २६ ॥ तृणादिदर्शने
किंचफलवत्त्वंनिगद्यते ॥ सुखदुःखादिकंकिंचित्स्मृतावपिहिदृश्यते ॥ २७ ॥ नपरिच्छेदकार्यैव
प्रमाणमितिचप्रमा ॥ निर्दोषाक्षोद्भवंह्यत्रप्रत्यक्षमितिगीयते ॥ २८ ॥ प्राकृतंशुद्धचैतन्यमक्षंतु
द्विविधंमतम् ॥ शुद्धमीशरमामुक्तेष्वन्यत्रप्राकृतैर्युतम् ॥ २९ ॥ निर्दोषमेवचैतन्यमन्यत्रोभय
मिष्यते ॥ सुखदुःखादिविषयंशुद्धंसंसारगेष्वपि ॥ ३० ॥ निर्दोषत्वातिनियमात्तद्धिलिष्टतमंम
तम् ॥ पंचेंद्रियमनोभेदात्प्राकृतंषड्विधंस्मृतम् ॥ ३१ ॥ अनुमायुक्तिरेवोक्ताव्याप्तिरेवतुसास्मृ
ता ॥ प्रतिज्ञातार्थसिद्ध्यर्थंव्याप्तिरेवयदोदिता ॥ ३२ ॥ अवशिष्टंकिमत्रास्तिलिंगंतत्रविजान
तः ॥ यदिलिंगमसिद्धंस्यात्कुतएवास्यमानता ॥ ३३ ॥ यदिस्मारकमात्रंस्यात्स्मर्तुर्नात्रप्रयोज
नम् ॥ नपंचावयवोक्तौचविवादावसतिर्भवेत् ॥ ३४ ॥ दृष्टांतादिषुचैवंस्यात्साधनंपुनरेवतु ॥

लिंगोक्तावपिचैवंस्यादनुमावसितिर्ध्रुवा ॥ ३५ ॥ विरोधोऽसंगतिश्चैवसाक्षाद्युक्तेस्तुदूषणम् ॥ प्र
तिज्ञायामसंबंधोयुक्तेरुक्ताह्यसंगतिः ॥ ३६ ॥ विरोधोऽपित्रिधैवस्यात्प्रतिज्ञार्थविरुद्धता ॥ लिंग
राहित्यमव्याप्तिर्न्यूनाधिक्येतुवाचिके ॥ ३७ ॥ साध्यव्यापकवैलोम्यमव्याप्तिःसाधनस्यच ॥
दुर्बलेनविरोधेपिनप्रमाणमसाधकम् ॥ ३८ ॥ स्ववाक्येनविरोधेऽपिनैवसाधकतांव्रजेत् ॥ संवादा
नुक्तिसंयुक्ताएतएवतुनिग्रहाः ॥ ३९ ॥ वादोजल्पोवितंडेतिकथास्तिस्रोविजानताम् ॥ स्वार्थंप
रार्थमपिवातत्त्वनिर्णयसाधिनी ॥ ४० ॥ केवलंतुकथावादोजल्पोऽर्थादिव्यपेक्षया ॥ सतामेवक
थाज्ञेयावितंडात्वसतांसताम् ॥ ४१ ॥ अप्रकाश्यस्वसिद्धांतमसतांपक्षदूषणम् ॥ उक्तेतैःप्रथमंमा
नेवक्तव्यंतस्यदूषणम् ॥ ४२ ॥ विद्यापरीक्षापूर्वैववितंडाजल्पएवच ॥ उच्चनीचत्वनिर्णीतिर्य
तोजयपराजयौ ॥ ४३ ॥ विनैवतत्त्वनिर्णीतिंनहिजल्पादिनाक्वचित् ॥ उच्चनीचत्वविज्ञानमि
तिविद्यापरीक्षणम् ॥ ४४ ॥ वादेनचोच्चनीचत्वविज्ञानंभवतिस्फुटम् ॥ इतिवादस्यपूर्वत्वंतत्सि
द्धौव्यर्थतान्ययोः ॥ ४५ ॥ बहुविद्यत्वसिद्धौतुनैववादोऽपिकारणम् ॥ सभासभापप्राश्नीकपूर्वस्तु
स्पर्धिनामपि ॥ ४६ ॥ वादएवोभयार्थःस्यान्निर्णीतिर्जयकारकः ॥ तत्वप्रकाशएवैकोवितंडाज
ल्पयोःफलम् ॥ ४७ ॥ विनावादेनविद्यायायदिशक्यंपरीक्षणम् ॥ स्याज्जल्पादिरपिक्वापिवादए
वान्यथाभवेत् ॥ ४८ ॥ जल्पइत्यपिनामस्याद्वादस्यैतादृशस्यतु ॥ प्रतिज्ञामात्रसाध्यत्वमपि
स्याद्याज्ञवल्क्यवत् ॥ ४९ ॥ संवादेवादिनोःक्वापिविवादेहेतुरिष्यते ॥ सभासभापतिश्चैवप्राश्नि
काश्चैववैष्णवाः ॥ ५० ॥ रागद्वेषविहीनाश्चस्युःसभ्याःसर्ववेदिनः ॥ प्राश्निकाश्चैतदज्ञोनसभ्या

योयुक्तिरपिकंचित् ॥ आगमैकप्रमाणेषुतस्यैवह्युपजीव्यता ॥ १९ ॥ युक्तोयुक्तश्चयद्यर्थ
आगमस्यप्रतीयते ॥ स्यात्तत्रयुक्तएवार्थोयुक्तिश्चत्रिविधामता ॥ २० ॥ व्याप्तिःप्रत्यक्षगाव
स्याःयुक्तिगागमगातथा ॥ प्रत्यक्षागममूलातुयुक्तिस्तत्रबलीयसी ॥ २१ ॥ याथार्थ्यमेवमान
त्वंतन्मुख्यंज्ञानशब्दयोः ॥ अर्थत्वमर्थतैवस्याज्ञक्रियार्थेषुसामता ॥ २२ ॥ ज्ञानार्थेज्ञेयतामु
ख्याशब्दार्थेतदनंतरम् ॥ यथार्थज्ञानजनकायथार्थायुक्तयःस्मृताः ॥ २३ ॥ अनुप्रमाणमेता नि
ह्यक्षयुक्तिवचांस्यतः ॥ प्रामाण्यंनानुवादस्यस्मृतेरपिविहीयते ॥ २४ ॥ यथार्थमेवप्रामाण्य
शब्दार्थोयद्विवक्षितः ॥ अंगीकृतंचेत्प्रामाण्यंस्मृत्यादेःकाविरुद्धता ॥ २५ ॥ नचाफलत्वंवक्त
व्यंसर्वस्मृत्यनुवादयोः ॥ फलवत्त्वंनचास्माभिःप्रामाण्यंहिविवक्षितम् ॥ २६ ॥ तृणादिदर्शने
किंचफलवत्त्वंनिगद्यते ॥ सुखदुःखादिकंकिंचित्स्मृतावपिहिदृश्यते ॥ २७ ॥ नपरिच्छेदकार्येव
प्रमाणमितिचप्रमा ॥ निर्दोषाक्षोद्भवंह्यत्रप्रत्यक्षमितिगीयते ॥ २८ ॥ प्राकृतंशुद्धचैतन्यमक्षंतु
द्विविधंमतम् ॥ शुद्धमीशरमामुक्तेष्वन्यत्रप्राकृतैर्युतम् ॥ २९ ॥ निर्दोषमेवचैतन्यमन्यत्रोभय
मिष्यते ॥ सुखदुःखादिविषयंशुद्धंसंसारगेष्वपि ॥ ३० ॥ निर्दोषत्वातिनियमात्तद्धलिष्ठतमंम
तम् ॥ पंचेंद्रियमनोभेदात्प्राकृतंषड्विधंस्मृतम् ॥ ३१ ॥ अनुमायुक्तिरेवोक्ताव्याप्तिरेवतुसास्मृ
ता ॥ प्रतिज्ञातार्थसिद्ध्यर्थंव्याप्तिरेवयदोदिता ॥ ३२ ॥ अवशिष्टंकिमत्रास्तिलिंगंतत्रविजान
तः ॥ यदिलिंगमसिद्धंस्यात्कुतएवास्यमानता ॥ ३३ ॥ यदिस्मारकमात्रंस्यात्स्मर्तुर्नात्रप्रयोज
नम् ॥ नपंचावयवोक्तौचविवादावसतिर्भवेत् ॥ ३४ ॥ दृष्टांतादिषुचैवंस्यात्साधनंपुनरेवतु ॥

लिंगोक्तावपिचैवंस्यादनुमावसितिर्ध्रुवा ॥ ३५ ॥ विरोधोऽसंगतिश्चैवसाक्षाद्युक्तेस्तुदूषणम् ॥ प्र
तिज्ञायामसंबंधोयुक्तेरुक्ताह्यसंगतिः ॥ ३६ ॥ विरोधोऽपित्रिधैवस्यात्प्रतिज्ञार्थविरुद्धता ॥ लिंग
राहित्यमव्याप्तिन्यूनाधिक्येतुवाचिके ॥ ३७ ॥ साध्यव्यापकवैलोम्यमव्याप्तिःसाधनस्यच ॥
दुर्बलेनविरोधेपिनप्रमाणमसाधकम् ॥ ३८ ॥ स्ववाक्येनविरोधेऽपिनैवसाधकतांव्रजेत् ॥ संवादा
नुक्तिसंयुक्ताएतएवतुनिग्रहाः ॥ ३९ ॥ वादोजल्पोवितंडेतिकथास्तिस्रोविजानताम् ॥ स्वार्थप
रार्थमपिवातत्त्वनिर्णयसाधिनी ॥ ४० ॥ केवलंतुकथावादोजल्पोऽर्थादिव्यपेक्षया ॥ सतामेवक
थाज्ञेयावितंडात्वसतांसताम् ॥ ४१ ॥ अप्रकाश्यस्वसिद्धांतमसतांपक्षदूषणम् ॥ उक्तैतैःप्रथमंमा
नेवक्तव्यंतस्यदूषणम् ॥ ४२ ॥ विद्यापरीक्षापूर्वैववितंडाजल्पएवच ॥ उच्चनीचत्वनिर्णीतिर्य
तोजयपराजयौ ॥ ४३ ॥ विनैवतत्त्वनिर्णीतिंनहिजल्पादिनाक्वचित् ॥ उच्चनीचत्वविज्ञानमि
तिविद्यापरीक्षणम् ॥ ४४ ॥ वादेनचोच्चनीचत्वविज्ञानंभवतिस्फुटम् ॥ इतिवादस्यपूर्वत्वंतत्सि
द्धौव्यर्थतान्ययोः ॥ ४५ ॥ बहुविद्यत्वसिद्धौतुनैववादोऽपिकारणम् ॥ सभासभापप्राश्नीकपूर्वंस्तु
स्पर्धिनामपि ॥ ४६ ॥ वादएवोभयार्थःस्यान्निर्णीतिर्जयकारकः ॥ तत्वप्रकाशएवैकोवितंडाज
ल्पयोःफलम् ॥ ४७ ॥ विनावादेनविद्यायायदिशक्यंपरीक्षणम् ॥ स्याज्जल्पादिरपिक्वापिवादए
वान्यथाभवेत् ॥ ४८ ॥ जल्पइत्यपिनामस्याद्वादस्यैतादृशस्यतु ॥ प्रतिज्ञामात्रसाध्यत्वमपि
स्याद्याज्ञवल्क्यवत् ॥ ४९ ॥ संवादेवादिनोःक्वापिविवादेहेतुरिष्यते ॥ सभासभापतिश्चैवप्राश्नि
काश्चैववैष्णवाः ॥ ५० ॥ रागद्वेषविहीनाश्चस्युःसभ्याःसर्ववेदिनः ॥ प्राश्निकाश्चैतदज्ञोनसभ्या

श्रेषांत्रदूरगाः ॥ ५१ ॥ प्रमाणंनिर्णयायस्युःपक्षपातविवर्जिताः ॥ उभाभ्यांसाधनंचैवदूषणंवा
दजल्पयोः ॥ ५२ ॥ सद्भिरागमएवैकःप्रयोज्योऽभीष्टसाधकः ॥ स्वसिद्धांतानुसारेणह्यसद्भिरनु
मोच्यते॥५३॥ प्रत्यक्षागमवैरूप्यमाश्रित्यान्यार्थतैवतु ॥ आगमेदर्शनीयात्रदोषोलिंगविलोमता
॥ ५४ ॥ लिंगानुकूल्यंस्वार्थस्यश्रुत्यादीनामनुग्रहः॥त्रिपंचावयवामेवयुग्मावयविनीमपि॥५५॥
नियमाद्योनुमांब्रूयात्तंब्रूयाद्यदिताटशी ॥ नानुमेतितदाकेनसाध्यावयवकल्पना ॥ ५६ ॥ निय
तावयवासिद्धौव्याप्तिमात्रेणसाधनम् ॥ कर्तव्यमेवतेनस्यात्तस्मात्सैवानुमामता ॥ ५७ ॥ अनु
भूतिःप्रमाणंचेत्केनस्मृतिरपोह्यते ॥ पूर्वानुभूतेर्किमानमित्युक्तेस्यात्किमुत्तरम् ॥ ५८ ॥ मा
नसंतद्धिविज्ञानंतच्चसाक्षिप्रमाणकम् ॥ अतीतानागतंयद्वद्योगिभिर्दृश्यतेऽजसा ॥ ५९ ॥ एवंपू
र्वानुभूतंचमनसैवावगम्यते ॥ विज्ञातंमनसापूर्वमयैतत्कृतमित्यपि ॥ ६० ॥ साक्षादनुभवात्सि
द्धंकथमेवह्यपोह्यते ॥ एवंलक्षणकंमानत्रयंब्रह्मादिवस्तुषु ॥ ६१ ॥ प्रमाणंवेदएवैकस्तत्प्रामा
ण्यंचसाधितम् ॥ तथापिमृज्जलादीनांबुद्धिवागादिवाचकः ॥ ६२ ॥ दृष्टव्याप्तिविरुद्धत्वात्त
त्रमानंकथंभवेत् ॥ ततस्तन्नामकःकश्चित्पुमानन्योभवेदिति ॥ ६३ ॥ युक्त्यागमविरोधेनप्रा
समत्राभिधीयते॥ बालरूढिंविनैवापिविद्वद्रूढिसमाश्रयात्॥ ६४ ॥ तत्तन्नामानएवैतेतत्तद्वस्त्व
भिमानिनः ॥ संतितेषांविशेषेणशक्तिरन्येभ्यउच्यते ॥ ६५ ॥ व्याप्तिश्चोक्तानुसारेणदृश्यंतेचा
धिकारिभिः ॥ शास्त्रोक्तवस्तुनश्चैवव्युत्पत्तिःशास्त्रलिंगतः ॥ ६६ ॥ व्युत्पत्तिःसाबलवतीमूर्व
व्युत्पत्तितोह्यित् ॥ दृढयुक्तिविरोधेतुसर्वत्रन्यायईदृशः ॥ ६७ ॥ अल्पवाक्ययुतायुक्तिर्बहु

लैवविरोधिनी ।। यत्रतत्रकथंवस्तुनिर्णयःस्यादितीरिते ।। ६८ ।। विरोधियुक्तिबाहुल्यादितिन्या
योविनिश्चितः ।। युक्तेस्तुयुक्तिबाहुल्यमागमादागमस्यच ।।६९।। कथंननिर्णयंकुर्यादित्यसत्का
रणंनहि ।। श्रुत्यर्थोभवतिक्वापिश्रुतिप्रायोपपत्तिभिः ।। ७० ।। अविरोधश्चतुर्थेतुपादेसम्यक्सम
र्थ्यते ।। असत्कार्यंयथादृष्टंवस्तुत्वात्कारणंतथा ।।७१।। इतिचेन्ननिषेधैकस्वरूपस्यनकर्तृता।।
बुद्धिपूर्वप्रवृत्तिर्हिकर्तृत्वमितिनिश्चितम ।। ७२ ।। प्रतिषेधात्मकत्वंतुभावस्याभावधर्मतः ।। धर्म
धर्म्यैक्यतश्चैवनतुतन्मात्रताभवेत्।।७३।।अभावस्यचभावोऽपिधर्मोऽथापिहिधर्मिणः ।। तादृक्क
मात्रतेहोक्ताबुद्धिराहित्यमेवतत् ।। ७४ ।। विशेष्यतैवधर्मित्वंप्रथमप्रतिपत्तिषु ।। निषेधविधिरू
पत्वंभावाभावत्वमत्रहि ।। ७५ ।। सर्वनाशेष्वपिसदाशिष्टत्वाद्यस्यकस्यनु ।। नाशोयंविमतोपि
स्यान्नाशत्वात्कर्तृशेषवान् ।। ७६ ।। नचाशेषनृनाशस्तुदृष्टोदृश्योऽस्तिवाक्वचित् ।। धर्माधर्मा
श्रयत्वेनस्वोकार्योऽपिनरोलये ।। ७७ ।। अनादित्वंविनादृष्टंकथंस्यात्कारणंक्वचित् ।। पूर्वादृष्टा
त्परादृष्टंयदिनैवोत्तरंकुतः ।। ७८ ।। अदृष्टंकारणंनोचेल्लयेमानंचकिंभवेत् ।। उत्पत्तिनाशिकारी
हिबुद्धिमान्दृश्यतेक्वचित् ।। ७९ ।। तद्दृष्टांतेनसर्वत्रकर्ताकिंनानुमीयते ।। आगमानुगृहीता
नुमानमेषानुमापितु ।। ८० ।। आगमानुग्रहाभावेनतर्कःस्यात्प्रतिष्ठितः ।। अक्षजागममूलस्य
स्यादेवास्यप्रतिष्ठितिः ।। ८१ ।। अन्यथास्याप्रतिष्ठाचस्ववाचाव्याहतैवहि ।। नचशिष्टागृही
तत्वंनिरीशादीशवादिनः।।८४।।अतोवशिष्टजीवादिकर्तृताऽत्रनिषिध्यते ।। तन्मनोऽकुरुतेत्यादेरस

तोमनसाजेनिः ॥८३॥ निवारितातुपूर्वंत्रह्यकस्मादितितद्विना ॥ असतोविश्वजननमाशंक्याऽ
त्रनिषिध्यते ॥ ८४ ॥ प्रापकंवाक्यमात्रंतुपरिहारोविशेषितः ॥ क्वचिज्जीवाकृतंदृष्ट्वाचेतनादेव
चाकृतम् ॥ ८५ ॥ तद्वदेवानुमाऽन्यत्रवस्तुत्वात्क्रियतेश्रुतेः ॥ नान्यदन्यत्वमापन्नंक्वचिद्दृष्टंकथं
चन ॥ ८६ ॥ अतोजीवस्यनब्रह्मभावःस्याद्धिकदाचन ॥ क्वचिद्भिन्नतयादृष्टंतदभिन्नतया
कथम् ॥ ८७ ॥ दृश्येन्नोदृष्टपूर्वंहितादृशंचनदृश्यते ॥ भोक्तृत्वापत्तितइतियन्मतंतत्कुतोहरिः
॥ ८८ ॥ भोक्त्रापत्तेरितिप्राह ॥ ५ ॥ कथंचतदनन्यता ॥ जगतस्त्वविकारित्वउक्तन्यायेनसा
धिते ॥ ८९ ॥ स्वतंत्रकारणान्यत्वंतेनह्यत्रनिषिध्यते ॥ द्रव्यंकर्मचकालश्चस्वभावश्चेतनाधृतिः
॥ ९० ॥ यत्प्रसादादिमेसंतिनसंतियदुपेक्षया ॥ इतिश्रुतेस्तद्वशस्यभावोनपरइत्यतः ॥ ९१ ॥
शक्तोऽपिह्यन्यथाकर्तुंस्वेच्छानियमतोहरिः॥ कारणैर्नियतैरेवकरोतीदंजगत्सदा ॥ ९२ ॥ नित्य
भेदोनिमित्तेन ह्युपादानेनतुद्वयम् ॥ असद्यत्कार्यरूपेणकारणात्मतयास्तिहि ॥ ९३ ॥ अ
नवस्थाऽन्यथाहिस्यात्सर्वत्रोत्पत्तिनाशयोः ॥ शक्तोऽपिभगवान्विष्णुरकर्तुंकर्तुमन्यथा॥९४॥स्व
भिन्नंकारणाभिन्नंभिन्नंविश्वंकरोत्यजः ॥ इतिश्रुतेरवसितउक्तार्थोयमशेषतः॥६॥९५॥अनंश
स्याऽपिजीवस्यकिंचित्सामर्थ्ययोजनाम् ॥ कार्येषुयःकरोत्यद्धानमस्तस्मैस्वयंभुवे ॥ ९६ ॥ य
दिभागेनकार्येषुजीवशक्तिंनयोजयेत् ॥ हरिस्तदाहिसर्वत्रकृत्स्नप्रयत्नोंशितापिवा ॥ ९७ ॥ अं
शिनोहिपटाद्यायेभिन्नैरेवपरस्परम् ॥ अंशैरंशिनउच्यंतेनैवमेवहिचेतनाः ॥ ९८ ॥ अतोऽनंशि
नइत्येवश्रुतिरेतेषुवर्त्तते ॥ अप्यनेकस्वरूपेषुविशेषादेवकेवलम् ॥ ९९ ॥ बहुस्वरूपताख्यातु

तेष्वस्त्येवहिंसांशता ॥ बहुत्वेनाविनाभावाद्भिन्नतानियमाद्भवेत् ॥ १०० ॥ यदिनैवंनियमं
कृद्भगवान्पुरुषोत्तमः ॥ तस्यत्वशेषशक्तित्वाद्युज्यतेसर्वमेवच ॥ १०१ ॥ विरोधःसर्ववैशिष्ट्ये
योद्वितीयेनिरस्यते ॥ नारायणस्यत्वध्यायेतदन्येतत्रतत्रगाः ॥ १०२ ॥ सृष्टिसंहारवाक्यानां
जीवरूपाभिधायिनाम् ॥ अप्यन्योन्याविरोधस्तुद्वितीयाध्यायगोचरः ॥ १०३ ॥ मानमेयवि
शेषेणपुनरुक्तिर्नजायते ॥ ८ ॥ सदाप्रवृत्तिरीशस्यस्वभावादेवकेवलम् ॥ १०४ ॥ अंगचेष्टा
यथापुंसःकश्चिदुद्देशवर्जिताः ॥ देवस्यैषस्वभावोऽयमित्याहश्रुतिरंजसा ॥ १०५ ॥ क्रीडांप्रयो
जनंकृत्वासृष्टिःश्रुतिविरोधिनी ॥ इतिकेवललीलैवनिर्णीताप्रभुणास्वयम् ॥ १०६ ॥ आत्मप्र
योजनार्थायस्पृहांश्रुतिरवारयत् ॥ नप्रयोजनवत्त्वेनेत्यतआहजगद्गुरुः ॥ १०७ ॥ इच्छामात्रं
प्रभोःसृष्टिरितिसृष्टौविनिश्चिताः ॥ इतिप्रकाशयाकामश्रुतिभ्यश्चैवयुक्तितः ॥ १०८ ॥ महाता
त्पर्ययुक्तेश्चनेच्छामात्रंनिषिध्यते ॥ मोक्षार्थाःश्रुतयोयस्मात्सचतस्यप्रसादतः ॥ १०९ ॥
उन्निनीषतिवाक्याच्चलोकदृष्टानुसारतः ॥ इच्छानिमित्तकोयस्मात्तदभावेकुतःश्रुतिः ॥११०॥
महातात्पर्यरहिताप्रमाणत्वंगमिष्यति ॥ याथार्थ्यमेवमानत्वमपिवाक्यंप्रयोजकम् ॥ १११ ॥
मानत्वमेतितत्रापियत्संपूर्णप्रयोजनम् ॥९॥ वैषम्यंनिर्घृणत्वंचवेदाप्रामाण्यकारणम् ॥ ११२ ॥
नांगीकार्यमतोऽन्यत्तुनवैषम्यादिनामकम् ॥ १० ॥ यदधीनागुणाश्चैवदोषाअपिहिसर्वशः ॥
॥ ११३ ॥ गुणास्तस्यकथंनस्युःस्युर्दोषाश्चकथंपुनः ॥ सर्वधर्मोपपत्तेस्तद्वाक्यैरपिहितादृशैः ॥
॥ ११४ ॥ निर्दोषाशेषगुणकोनिर्णीतोभगवान्हरिः ॥ ११५ ॥ ॥ ११ ॥ इतिश्रीमदानंद

तीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेद्वितीयाध्यायस्यप्रथमःपादः॥ २ । १ ॥
श्रीवेदव्यासायनमः ॥ स्मृतियुक्तिश्रुतिगुणयुक्तयोबह्वयुक्तयः ॥ एवंचतुर्विधानैव
विरुध्यंतेऽन्वयंप्रति ॥ १ ॥ इतिप्रथमपादेननिर्णीतेऽप्यभियोगतः ॥ दर्शनानांप्रवृत्तत्वा
न्मंदआशंकतेपुनः ॥ २ ॥ अनादिकालतोवृत्ताःसमयाहिप्रवाहतः ॥ नचोच्छेदोऽस्तिकस्यापि
समयस्येत्यतोविभुः ॥ ३ ॥ भ्रांतिमूलत्वमेतेषांपृथग्दर्शयतिस्फुटम् ॥ तर्कैर्दृढतमैरेववाक्यैश्चा
गमवादिनाम् ॥ ४ ॥ दौर्लभ्याच्छुद्धबुद्धीनांबाहुल्यादल्पवेदिनाम् ॥ तामसत्वाच्चलोकस्यमि
थ्याज्ञानप्रसक्तितः ॥ ५ ॥ विद्वेषात्परमेतत्वेतत्त्ववेदिषुचानिशम् ॥ अनादिवासनायोगादसुरा
णांबहुत्वतः ॥ ६ ॥ दुराग्रहगृहीतत्वाद्वर्ततेसमयाःसदा ॥ तथापिशुद्धबुद्धीनामीशानुग्रहयो
गिनाम् ॥ ७ ॥ सुयुक्तयस्तमोहन्युरागमानुगताःसदा ॥ इतिविद्यापतिःसम्यक्समयानांनिरा
कृतिम् ॥ ८ ॥ चकारनिजभक्तानांबुद्धिशाणत्वसिद्धये ॥ चेतनाचेतनंतत्त्वद्वयमेवनिरीश्वराः
॥ ९ ॥ आहुस्तत्पंचपंचत्वविभागस्थमचेतनम् ॥ चेतनंतदसंख्यातंभिन्नमन्यद्विदोज्झितम्
॥ १० ॥ अचेतनस्यकर्तृत्वंस्वातंत्र्येणनिगद्यते ॥ परस्परविभेदश्चकार्याणामालयंभवेत् ॥११॥
भोक्तृतांचेतनस्याहुःकेचित्तामपिनाऽपरे ॥ स्वरूपचैतन्यबलात्स्वप्रकाशाच्चभोगिताम् ॥ १२ ॥
प्रकृतेश्चस्वरूपस्यविवेकाग्रहमेवतु ॥ अभोगवादिनोभोगमाहुर्भेदग्रहात्तयोः ॥ १३ ॥ भोगिनां
मुक्तिरुद्दिष्टासएवाभोगवादिनाम् ॥ ईशस्यासंग्रहादेवनयुक्तौतावुभावपि ॥ १४ ॥ चेतनेच्छा
नुसारेणयदादृष्टःपटोद्भवः ॥ एतादृशत्वमान्यस्यवस्तुत्वात्केनवार्यते ॥१५॥ नचकाचित्प्रमोक्ता

र्थैश्रुतिरेवप्रमाहिनः ॥ आप्तत्वमुक्तमार्गेणवक्तुर्नैवोपपद्यते ॥ १६ ॥ अप्रामाण्यस्ततःस्वस्यस्वी
कारादपिमायिवत् ॥ स्वोक्ताखिलनिषेधीस्यान्नचकिंचित्प्रसिध्यति ॥ १७ ॥ इदंनाचेतनवशं
वस्तुत्वात्प्रतिपन्नवत् ॥ इत्येवप्रतिषिद्धस्यकेनमूलानुमाभवेत् ॥ १८ ॥ स्वतंत्रवृत्तीरचनासाचै
वाचेतनेकुतः ॥ अचेतनत्वंस्वातंत्र्यमितिचात्मप्रमाहतम् ॥ १९ ॥ स्वेच्छानुसारितामेवस्वातं
त्र्यंहिविदोविदुः ॥ कुतइच्छाचेतनस्यसेच्छंचेत्किमचेतनम् ॥ २० ॥ इच्छाम्यहमितिह्येवनि
जानुभवरोधतः ॥ अचेतनेच्छापगतायदिभेदाग्रहोऽत्रच ॥ २१ ॥ कथंसनघटस्यस्यान्मनोम
इतिभेदतः ॥ मनसोऽपिगृहीतत्वादुभयात्मकतायतः ॥ २२ ॥ कामस्यतुमनःकामःप्रियाप्रिय
विभेदतः ॥ द्वैविध्यंदृश्यतेचास्यतस्माद्भेदाग्रहःकुतः ॥ २३ ॥ रचनानुपपत्तेस्तन्नसर्वं ज्ञानु
मागतम् ॥ अचेतनंजगत्कर्तृपयोंब्वादिचनोपमा ॥ २४ ॥ एतत्प्रशास्तिवचनाच्चेतनाचेतनस्य
च ॥ द्वैविध्येपितुकामादेःकुतःस्वामित्वमात्मनः ॥ २५ ॥ साक्षादनुभवारूढंशक्येतेपोदितुंक्वचि
त् ॥ इच्छास्वामित्वमेवोक्तमिच्छावत्त्वंनचापरम् ॥ २६ ॥ किंचित्तद्वशगत्वेऽपिस्वामित्वंलोक
वद्भवेत् ॥ सर्वात्मतंत्रकामादेःकिमुतैवपरेशितुः ॥ २७ ॥ नचानुभवगंकामस्वामित्वंवेदवाग
पि ॥ शक्तापवदितुंतस्मात्सातदन्याभिधायिनी ॥ २८ ॥ मोक्षकामोभवेदन्योयदिमुक्ताद्भवि
ष्यतः ॥ मोक्षकामस्यकिंतेनस्वनाशार्थंचकोयतेत् ॥ २९ ॥ कर्तृत्वंयस्यतस्यैवभोक्तृत्वमुपलं
भ्यते ॥ विभागेचतयोर्मानंनैवकिंचित्क्वचिद्भवेत् ॥ ३० ॥ सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्व
यम् ॥ मायावाद्युपमायायात्तच्चशब्दान्निराकृतः ॥ ३१ ॥ सांख्यस्तुसेश्वरोब्रूतेक्षेत्रानुग्रहशक्ति

मान् ॥ अस्तीश्वरःस्वयंभातःक्लेशकर्मादिवर्जितः ॥ ३२ ॥ क्षेत्रशक्तिमतीसैवप्रकृतिर्बीजशक्ति
मान् ॥ जीवःपर्जन्यवद्दैवशक्तिमानीश्वरःस्मृतः ॥ ३३ ॥ पृथिवीवत्प्रधानंतज्जीवसन्निधिमात्र
तः ॥ बीजावपनकर्तैवेत्यत्रप्राहस्वयंप्रभुः ॥ ३४ ॥ अन्यत्रक्कापिशक्तिर्नस्वातंत्र्येणेशएवहि ॥
शक्तीस्ताःप्रेरयत्यंजस्तदधीनाश्चसर्वदा ॥ ३५ ॥ सत्ताप्रधानपुरुषशक्तीनांचप्रतीतयः ॥ प्रवृ
त्तयश्चताःसर्वाःनित्यंनित्यात्मनायतः ॥ ३६ ॥ यथानित्यतयानित्यंनित्यशक्त्यास्वयेश्वरः ॥
नियामयतिनित्यंचनकृतेत्वदितिश्रुतेः ॥ ३७ ॥ स्वभावजीवकर्माणिद्रव्यंकालश्रुतिक्रियाः ॥
यत्प्रसादादिमेसंतिनसंतियदुपेक्षया ॥ ३८ ॥ इतिश्रुतेर्नसत्ताद्याअपिनारायणंविना ॥ तत्पतं
जलिविंध्यादिमतंनपुरुषार्थदम् ॥ २ ॥ ३९ ॥ चार्वाकैरुच्यतेमानमक्षजंनापरंक्कचित् ॥ देहआ
त्मापुमर्थश्चकामार्थाभ्यांविनानहि ॥ ४० ॥ यदैवंदर्शनेनाऽस्यकोऽर्थःप्रत्यक्षगोचरः ॥ लब्धस्ते
नैवहिनैरःशास्त्रात्किंमोहनंविना ॥ ४१ ॥ स्वपरार्थविहीनत्वात्स्वमतेनैवनिष्कलम् ॥ किमित्यु
न्मत्तवच्छास्त्रंतथाप्रलपतिस्वयम् ॥ ४२ ॥ देहादन्योऽनुभवतःआत्माभातिशरीरिणाम् ॥ ममदे
हइतिव्यक्तंममार्थइतिवत्सदा ॥ ४३ ॥ प्रत्यक्षस्यैवमानत्वमितिकेनावसीयते ॥ यदितत्सा
धकंवेदप्रामाण्येनकथंभवेत् ॥ ४४ ॥ नचान्यामानताक्कापिप्रामाण्येनावसीयते ॥ स्वमतेनार्थ
रहितउपेक्ष्यःपक्षईदृशः ॥ ४५ ॥ सन्निधानाच्चेतनस्यवर्ततेयद्यचेतनम् ॥ तथाप्यबुद्धिपूर्वत्वा
दुक्तदोषःसमोभवेत् ॥ ४६ ॥ अंगित्वंपुरुषस्यैवसर्वैरप्यनुभूयते ॥ तदंगत्वोक्तितश्चैवस्यात्सर्व
स्यापलापकः ॥ ४७ ॥ किमुसर्वेश्वरस्याऽस्यह्यपलापाद्यतोऽखिलम् ॥ ४ ॥ अंगित्वंयदितस्यै

वस्वातंत्र्यंचेन्नचाखिलम् ॥ ४८ ॥ तत्प्रेरणेप्यशक्तत्वात्स्वंतंत्रोन्योह्यपेक्षितः ॥ नचस्वातंत्र्य
मस्यैवप्रत्यक्षादिविरोधतः ॥ ४९ ॥ हिताक्रियादिदोषाश्चभद्रंनानीश्वरंमतम् ॥ संसारिणोऽन्यं
सर्वेशंसर्वशक्तिमनौपमम् ॥ ५० ॥ चेतनाचेतनस्यास्यसत्तादेस्तदधीनताम् ॥ नांगीकुर्वंतिये
तेषांसर्वेषांचसमाइमे ॥ ५१ ॥ तस्माच्छ्रुतिप्रमाणेनयुक्तिभिश्चपरोहरिः ॥ अंगीकार्यतमोनि
त्यःसर्वैरपिमुनिश्चितम् ॥ ५२ ॥ नित्यज्ञानप्रयत्नेच्छंसंख्याद्यैरपिपंचभिः ॥ युक्तमीशंवदंतोऽन्ये
तदिच्छादृष्टचोदिताः ॥५३ ॥ परमाणवश्चतुर्वर्गाःसंयुज्यंतेदिशोऽखिलाः ॥ परमाणुद्वयेनैवद्व्यणु
कंनामजायते ॥ ५४ ॥ द्व्यणुकत्रयेणत्र्यणुकंतैश्चतुर्भिस्तदात्मकम् ॥ ततस्त्वनियमेनैवखंडाव
यविनांभवः ॥ ५५ ॥ ततश्चानियमेनैवसर्वावयविसंभवः ॥ कारणंसमवाय्याख्यंपरमाण्वा
दिरत्रहि ॥ ५६ ॥ ईशेच्छादृष्टकालास्तुनिमित्तंकारणंमतम् ॥ सामान्यांत्यविशेषौचसमवाय
श्चतत्त्रयम् ॥ ५७ ॥ नित्यंक्रियाअनित्याश्चगुणद्रव्येद्विरूपके ॥ कार्येगुणक्रियाणांतु
समवाय्यन्यकारणम् ॥५८॥ कारणस्थागुणाद्यास्तुसंयोगोद्रव्यकारणम् ॥ एवंस्थितेऽपिसिद्धां
तेविशेषस्तत्रकल्पितः ॥ ५९ ॥ द्व्यणुकेपरमाणौचह्रस्वत्वंपरिमंडलम् ॥ नकारणंकार्यगुणेवै
रूप्यंतत्रकारणम् ॥ ६० ॥ इत्याहुस्तानथोवाचविद्याधीशःस्वयंप्रभुः ॥ महत्त्वंचैवदीर्घत्वंत्र्य
णुकाद्येषुकल्पितम् ॥ ६१ ॥ तस्माचसदृशंकार्यंतत्कार्येषूपजायते ॥ यथातथैवह्रस्वत्वात्प
रिमांडिल्यतोऽपिहि॥ ६२ ॥ जायेतसदृशंकार्येपरिमाणंसमत्वतः ॥ नचेन्ममत्वतश्चैवदीर्घत्वाद
पिनोभवेत् ॥ ६३ ॥ सदृशस्यहिकार्यस्यनैवयोगःकथंचन ॥अप्रत्यक्षत्वमेवस्याद्यतःकार्येष्व

णुत्वतः ॥६४॥ इतिचेन्नमहत्त्वंचपरमाणावणावपि॥कथंत्र्यणुकपूर्वेषुनाणुत्वमपिकथ्यते॥६५॥
प्रत्यक्षत्वतदन्यत्वेपुरुषापेक्षयाखिले ॥ अणुत्वंचमहत्त्वंचयतोवस्तुव्यपेक्षया ॥ ६६ ॥ तारत
म्यस्थितायस्मात्पदार्थाःसर्वएवच ॥ यथामहत्त्वविश्रांतिस्तथाऽणुत्वस्यचेष्यते ॥ ६७ ॥ परिमा
णत्वतश्चेन्नमहत्त्वस्याऽपिविश्रमः ॥ दृश्यतेनंतइत्येवतथानंत्यमणावपि ॥ ६८ ॥ नमहत्तत्त्वगुण
तएतावानितिहीश्वरः ॥ परिच्छिन्नस्तथाऽणोश्चनैतावद्भागताक्वचित् ॥६९ ॥ विश्रांतोयद्यनंतां
शःकश्चिदस्तीतिगम्यते ॥ नावसाययितुंशक्योविरोधादेवकेवलम् ॥७० ॥ केवलंसाक्षिमानेन
कालोदेशोऽपिनांतवान् ॥ अपर्यवसितिश्चाणोर्दृश्यतेसाक्षिणाद्वयोः॥७१॥यदिनोसाक्षिगम्यंतद्
महत्त्वंकेनगम्यते ॥ विश्रांतिस्तारतम्येनदृश्यतेह्यनुमानतः ॥७२॥ यद्यागमादनंतंतन्महत्त्वमवग
म्यते ॥ अनंतमेवचाणुत्वंकुतोनैवावसीयते ॥ ७३ ॥ महत्त्वाणुत्वयोर्नैवविश्रांतिरुपलभ्यते ॥
अन्यदेवह्यनंतत्वंमहत्वाणुत्वयोःसमम् ॥७४॥ बहुत्वाल्पत्वयोर्यद्वत्संख्यायामुपलभ्यते ॥ आ
नंत्यमेकभागानांतावत्त्वंह्येवगण्यते ॥ ७५ ॥ अणीयांश्चमहीयांश्चभगवानागमोदितः ॥ आनं
त्यवाचकःशब्दोद्विधानंत्येऽपिमानताम्॥७६॥यातिनैवगुणाल्पत्वंकालाल्पत्वंचमानगम् ॥ सर्वका
लगतस्याऽल्पकालेऽपिस्यादवस्थितिः॥७७॥महागुणस्यचाल्पेऽपिगुणःस्यादितिचेद्भवेत् ॥ ताव
त्त्वमेवनैवस्याद्देशेऽप्येतन्ननोमतम्॥७८॥महतोऽल्पत्वमपिहिव्योमवत्प्राहवेदवित् ॥ यद्यल्पदेश
संस्थानंनसर्वत्राऽपिनोभवेत् ॥७९ ॥ स्थितस्यह्यल्पदेशेषुसर्वगत्वंभवेद्ध्रुवम् ॥ एकत्राप्यनवस्थ
स्यकुतएवाऽखिलस्थता ॥ ८०॥ शून्यत्वमेवतस्यस्याद्यस्यैकत्रापिनस्थितिः ॥ अतोनाणुत्व

विश्रांतिर्नमहत्त्वस्यचक्कचित् ॥ ८१ ॥ उभयानंत्ययुक्तःस्याद्यदिमुख्यंमहद्भवेत् ॥ तच्चब्रह्मपरं
साक्षात्सर्वानंत्ययुतंसदा ॥ ८२ ॥ यदिसाक्षीस्वयंभातोनोमानंकेनगम्यते ॥ अक्षजादेश्चमान
त्वमनवस्थान्यथाभवेत् ॥ ८३ ॥ अतःसर्वपदार्थानांभागाःसंत्येवसर्वदा ॥ सर्वदिक्ष्वपिसंबंधाद
विभागःपराणुता ॥ ८४ ॥ तत्संयोगादनियतात्पदार्थानांजनिर्भवेत् ॥द्वयोरेवतुसंयोगइतिकेनाऽ
वसीयते ॥ ८५ ॥ कारणस्यगुणास्तेनभवेयुःकार्यगाअपि ॥ तारतम्येनसर्वेपिमहंतश्चाणवोयतः
॥ ८६ ॥ नचतत्प्रोक्तसृष्टौतुमानंकेवलकल्पना ॥ कथंसाक्षिमितस्याऽस्यशक्यादृारणेक्वचित्
॥ ८७ ॥ यदिसाक्षिमितंनैतन्नानुमातत्रवर्तते ॥ पक्षीकर्तुमशक्यत्वात्कुतएवानुमाभवेत् ॥८८॥
यत्रनास्तिपदन्यासःकस्तंविषयमाप्नुयात् ॥ देशांतरादिशब्दाश्चशशशृंगादिशब्दवत् ॥ ८९ ॥ स
दृशंचसजातीयंनास्मत्पक्षेकिमेवहि ॥ येनैवचप्रकारेणात्यसिद्धमनुमीयते ॥ ९० ॥ तेनैवशश
शृंगादेःशक्यमस्तित्वकल्पनम् ॥ ९१ ॥ प्रत्यक्षमागमोवापिभवेद्यत्रनियामकः ॥ ९२॥ सैवव्या
प्तिर्भवेन्माननान्यासंदिग्धमूलतः ॥ सहदर्शनमात्रेणनव्याप्तिरवसीयते ॥ ९३॥ यदैवाव्यतिरेकेऽ
स्यप्रत्यक्षजंवागमोभवेत् ॥ तन्निर्धारितयुक्तिर्वाव्याप्तिःसैवापरानहि ॥ ९४ ॥ अन्यथासप्तमरस
भावोप्यनुमयापतेत् ॥अनिष्टानिचसर्वाणिह्यनुमाकामचारिणी ॥९५॥ कार्यकारणयोश्चैवगुणा
देःपंचकस्यच ॥ भिन्नस्यैवतुसंबंधःसमवायोऽन्यईर्यते ॥ ९६ ॥ भिन्नत्वसाम्यतस्तंतस्यताभ्यां
योगोभवेद्ध्रुवम्॥सचनिर्वाहकश्चेत्स्याद्द्रव्यमेवतथानकिम् ॥९७॥विशेषस्तद्बलत्वादिर्यद्यभिन्नोऽ
वसीयते ॥ गुणक्रियादिरूपस्यनिषेधःकेनहेतुना॥द्रव्यमेवततोनंतविशेषात्मतयासदा ॥९८॥ना

नाव्यवहृतेहैतुरनंतत्वंविशेषतः ॥ ९९ ॥ विशेषश्चविशेषीसःस्वैनैवसमवायवत् ॥ कल्पनागुरुता
दोषात्पदार्थांतरतानहि ॥ १०० ॥ कल्पयित्वाषट्पदार्थान्साभावानपिकेवलम् ॥ एकस्मिन्नवि
शेषश्चेत्किंपूर्वंतस्यविस्मृतिः ॥ १ ॥ येनप्रत्यक्षसिद्धेनव्यवहारोऽखिलोभवेत् ॥ भावाभावविभा
गेनयंविनानकथंचन ॥ २ ॥ एतादृशेविशेषेऽस्मिन्कोद्वेषोवादिनांभवेत् ॥ अभेदेनप्रतीतिश्चका
र्यकारणपूर्वके ॥ ३॥ अभावांतेपदार्थेऽस्मिन्सविशेषावसीयते॥सामान्यादिपदार्थेषुतन्निष्ठत्वाद
योऽखिलाः ॥४॥ कथंधर्मानिवार्यंतेवस्त्वैक्येपिहिवादिभिः ॥ कार्यस्यतत्तन्निष्ठत्वंगुणादेर्व्यासि
तादिकः ॥५॥ कथंविशेषोनैवाऽस्तिसचधर्मोपरोयदि ॥ षट्पदार्थातिरेकःस्यात्पदार्थानियमेऽपि
हि ॥ ६ ॥ धर्मस्यधर्मसंतानादनवस्थाकरोभवेत् ॥ सामान्यस्यापिसामान्यंगुणस्यापिगुणोह्यतः
॥ ७॥ नांगीकृतःसचयदिनानवस्थ्यात्कचिद्भवेत् ॥ अस्मत्पक्षेगुणाद्याश्चतद्वंतोहिविशेषतः॥८॥
अनन्यत्वान्नानवस्थाभेदोनाशोभवेत्तथा ॥ विशेषमेवसंश्रित्यविशेषोबलवान्यतः ॥ ९ ॥ दृष्टि
प्रमाणतश्चैवविरोधेदर्शनेकथम् ॥ विरोधोह्यविरोधश्चयतोदर्शनमानकौ ॥ ११०॥ ततोदृष्टिविरो
धस्तुसद्भिरापाद्यतेकथम् ॥ अभिन्नोभगवान्स्वेनतदन्येनविभेदवान् ॥ ११ ॥ नित्याधर्मास्त
दीयास्तुसर्वेऽस्मान्नैवभेदिनः ॥ सामस्त्योच्छेदिनोऽन्यत्रधर्माउभयरूपिणः ॥ १२ ॥ भावेतएव
चौच्छेदात्तदन्येनसमस्तशः ॥ अंशांशिनोरभेदेनत्वंशसंयोगएवहि ॥ १३ ॥ अंशिनोनानवस्था
तोयद्यप्यंशेष्वविश्रमः ॥ एकस्मिन्जातएवान्यःसंयोगोजायतेयदि॥ १४ ॥अनवस्थातदैवस्या
त्संयोगैक्येभवेत्कसा ॥ अंशेसंयोगदृष्टेश्चदृष्टेकासानवस्थितिः ॥ १५ ॥ यद्यंशगोनसंयोगःका

येंषुप्रथिमाकथम् ॥ परमाणोरणोर्नास्तिमहत्वेत्यद्भुतंवचः ॥ १६ ॥ अणूनांप्रथितापेक्षाविनैव
त्र्यणुकेऽपिसः ॥ परमाणोर्महत्त्वंचविनेत्येतद्वचःकथम्॥ १७॥ अंशिनोंशैरभेदोऽयमंशेनतुभिदा
भिधा ॥ सर्वप्रत्यक्षविषयःकथमेवह्यपोद्यते ॥ १८ ॥ संयोगश्चविभागश्चभेदश्चैवपृथक्पृथक् ॥
अन्योन्यप्रतियोगेनह्युभयोरपिदृश्यते॥भिन्नाइतितुभेदानांसमुदायोहिदृश्यते ॥ १९ ॥ यथैवच
पदार्थानामनयोर्भेदइत्यपि ॥ इतोऽमुष्यामुतोष्यस्यभेदोदृष्टोहिधार्मिकः ॥२०॥ तत्रैकवचनंध
त्तद्विप्राणांभंजनंयथा ॥ नरत्वादिकमप्येवंतत्तद्धर्मतयेयते ॥ २१ ॥नसर्वधर्मएकोऽस्तिसमुदा
यस्तुभिन्नगः ॥ एतादृशंचसादृश्यंपदार्थेषुपृथक्पृथक् ॥ २२॥ एकस्मिन्सविनष्टेऽपियतोन्यत्रै
वदृश्यते ॥ कुतोभस्मत्वमात्रस्यनरत्वंपुनरिष्यते ॥ २३ ॥ एकत्वेनास्तिमानंचश्रुतिरप्याहसाद
रम् ॥ भिन्नाश्चभिन्नधर्माश्चपदार्थानिखिलाअपि॥२४॥ स्वैस्वैर्धर्मैरभिन्नाश्चस्वरूपैरपिसर्वशः ॥
अनिवृत्तविनाशस्तुधर्माउभयरूपकाः ॥ २५ ॥ नकेनचिदभिन्नोऽतोभगवान्स्वगुणैर्विना ॥ इ
तिव्युत्पत्तिरपिहिसादृश्येनैवगम्यते ॥ २६ ॥ सर्वेषुयुगपच्छब्दःसदृशेषुप्रवर्त्तते ॥ तथापिप्राप्तित
स्त्वेकवचनाच्चविशेषतः ॥ २७ ॥ अभीष्टावगतिश्चस्याच्छक्तिःसादृश्यगायतः ॥ तादृशोऽयंच
तच्छब्देइतिज्ञापयतिस्फुटम्॥२८॥जातितश्चेत्कथंतासुतत्रचेदनवस्थितिः ॥तथैवव्यक्तिविज्ञानं
व्यक्तित्वाभावदूषितम् ॥ २९ ॥ यदितच्चास्तितस्यापिविशेषेष्वनवस्थितिः ॥ कथंस्वरूपत्वम
पिज्ञायतेनुगतंयदि ॥ ३० ॥ एकव्युत्पत्तिपर्यंतंअनवस्थादिदूषितम् ॥ कल्पनागौरवात्तेनयुक्ता
नानुगकल्पना ॥ ३१ ॥ औपाधिकविशिष्टाद्यमपितद्वस्तुकिंततः ॥ अन्यत्तदेवचेदग्निमत्त्वंकिंत

नात्यवहृतेर्हेतुरनंतत्वंविशेषतः ॥ ९९ ॥ विशेषश्चविशेषीसःस्वैनैवसमवायवत् ॥ कल्पनागुरुता
दोषात्पदार्थांतरतानहि ॥ १०० ॥ कल्पयित्वाषट्पदार्थान्साभावानपिकेवलम् ॥ एकस्मिन्नवि
शेषश्चेत्किंपूर्वंतस्यविस्मृतिः ॥ १ ॥ येनप्रत्यक्षसिद्धेनव्यवहारोऽखिलोभवेत् ॥ भावाभावविभा
गेनयंविनानकथंचन ॥ २ ॥ एतादृशेविशेषेऽस्मिन्कोद्वेषोवादिनांभवेत् ॥ अभेदेनप्रतीतिश्चका
र्यकारणपूर्वके ॥ ३॥ अभावांतेपदार्थेऽस्मिन्सविशेषावसीयते॥सामान्यादिपदार्थेषुतन्निष्ठत्वाद
योऽखिलाः ॥४॥ कथंधर्मानिवार्यंतेवस्त्वैक्येपिहिवादिभिः ॥ कार्यस्यतत्तन्निष्ठत्वंगुणादेर्व्यासि
तादिकः ॥५॥ कथंविशेषोनैवाऽस्तिसचधर्मोपरोयदि ॥ षट्पदार्थातिरेकःस्यात्पदार्थानियमेऽपि
हि ॥ ६ ॥ धर्मस्यधर्मसंतानादनवस्थाकरोभवेत् ॥ सामान्यस्यापिसामान्यंगुणस्यापिगुणोह्यतः
॥ ७॥ नांगीकृतःसचयदिनानवस्थ्यात्क्वचिद्भवेत् ॥ अस्मत्पक्षेगुणाद्याश्चतद्वंतोहिविशेषतः॥८॥
अनन्यत्वान्नानवस्थाभेदोनाशोभवेत्तथा ॥ विशेषमेवसंश्रित्यविशेषोबलवान्यतः ॥ ९ ॥ दृष्टि
प्रमाणतश्चैवविरोधेदर्शनेकथम् ॥ विरोधोह्यविरोधश्चयतोदर्शनमानकौ ॥ ११०॥ ततोदृष्टिविरो
धस्तुसद्भिरापाद्यतेकथम् ॥ अभिन्नोभगवान्स्वेनतदन्येनविभेदवान् ॥ ११ ॥ नित्याधर्मास्त
दीयास्तुसर्वेऽस्मान्नैवभेदिनः ॥ सामस्त्योच्छेदिनोऽन्यत्रधर्माउभयरूपिणः ॥ १२ ॥ भावेतएव
चौच्छेदात्तदन्येनसमस्तशः ॥ अंशांशिनोरभेदेनत्वंशसंयोगएवहि ॥ १३ ॥ अंशिनोनानवस्था
तोयद्यप्यंशेष्वविश्रमः ॥ एकस्मिन्जातएवान्यःसंयोगोजायतेयदि॥ १४ ॥अनवस्थातदैवस्या
त्संयोगैक्येभवेत्कसा ॥ अंशेसंयोगदृष्टेश्चदृष्टेकासानवस्थितिः ॥ १५ ॥ यद्यंशगोनसंयोगःका

येषुप्रथिमाकथम् ॥ परमाणोरणोर्नास्तिमहत्तेत्यद्भुतंवचः ॥ १६ ॥ अणूनांप्रथितापेक्षाविनैव
त्र्यणुकेऽपिसः ॥ परमाणोर्महत्त्वंचविनेत्येतद्वचःकथम्॥ १७॥ अंशिनोंशैरभेदोऽयमंशेनतुभिदा
भिधा ॥ सर्वंप्रत्यक्षविषयःकथमेवह्यपोद्यते ॥ १८ ॥ संयोगश्चविभागश्चभेदश्चैवपृथक्पृथक् ॥
अन्योन्यप्रतियोगेनह्युभयोरपिदृश्यते॥भिन्नाइतितुभेदानांसमुदायोहिदृश्यते ॥ १९ ॥ यथैवच
पदार्थानामनयोर्भेदइत्यपि ॥ इतोऽमुष्यामुतोष्यस्यभेदोदृष्टोहिधार्मिकः ॥२०॥ तत्रैकवचनंय
त्तद्विप्राणांभंजनंयथा ॥ नरत्वादिकमप्येवंतत्तद्धर्मतयेयते ॥ २१ ॥नसर्वधर्मएकोऽस्तिसमुदा
यस्तुभिन्नगः ॥ एतादृशंचसादृश्यंपदार्थेषुपृथक्पृथक् ॥ २२॥ एकस्मिन्सविनष्टेऽपियतोन्यत्रै
वदृश्यते ॥ कुतोभस्मत्वमाप्तस्यनरत्वंपुनरिष्यते ॥ २३ ॥ एकत्वेनास्तिमानंचश्रुतिरप्याहसाद
रम् ॥ भिन्नाश्चभिन्नधर्माश्चपदार्थानिखिलाअपि॥२४॥ स्वैस्वैर्धर्मैरभिन्नाश्चस्वरूपैरपिसर्वशः ॥
अनिवृत्तविनाशस्तुधर्माउभयरूपकाः ॥ २५ ॥ नकेनचिदभिन्नोऽतोभगवान्स्वगुणैर्विना ॥ इ
तिव्युत्पत्तिरपिहिसादृश्येनैवगम्यते ॥ २६ ॥ सर्वेषुयुगपच्छब्दःसदृशेषुप्रवर्त्तते ॥ तथापिप्रामित
स्त्वेकवचनाच्चविशेषतः ॥ २७ ॥ अभीष्टावगतिश्चस्याच्छक्तिःसादृश्यगायतः ॥ तादृशोऽयंच
तच्छब्देइतिज्ञापयतिस्फुटम्॥२८॥जातितश्चेत्कथंतामुतत्रचेदनवस्थितिः ॥तथैवव्यक्तिविज्ञानं
व्यक्तित्वाभावदूषितम् ॥ २९ ॥ यदितच्चास्तितस्यापिविशेषेष्वनवस्थितिः ॥ कथंस्वरूपत्वम
पिज्ञायतेनुगतंयदि ॥ ३० ॥ एकव्युत्पत्तिपर्यंतंअनवस्थादिदूषितम् ॥ कल्पनागौरवात्तेनयुक्ता
नानुगकल्पना ॥ ३१ ॥ औपाधिकविशिष्टाद्यमपितद्वस्तुकिंततः ॥ अन्यत्तदेवचेदग्निमत्त्वंकिंत

च्चभण्यते ॥३२॥ अग्निसंयोगमात्रंचेद्भवेत्तत्सिद्धसाधनम् ॥ भूधरस्याग्निसंयोगोयदिषष्ठ्यर्थए
वकः ॥३३॥ समवायोयदिह्यस्यचैकत्वात्सिद्धसाधनम् ॥ यद्यस्योपाधिकोभेदःकुतएकत्वमिष्य
ते ॥ ३४ ॥ नानिर्वाच्यंहितेनेष्टमतऔपाधिकान्ययोः ॥ सत्यत्वात्कोविशेषःस्यान्मायावाद्यन्य
थाभवेत् ॥ ३५॥ उपाधिजन्यंतद्भम्यमितिचौपाधिकंभवेत् ॥ उभयत्राप्यनंताःस्युःसमवायाइत
स्ततः ॥ ३६ ॥ भिन्नत्वंचैवतेष्वस्तिकोविशेषउपाधिगे ॥ अविद्यमानएवान्यःसमवायोऽवगम्य
ते ॥ ३७ ॥ उपाधिनातद्भमकमनुमानंनमाभवेत् ॥ एवमेवासतःसत्तासमवायोजनिर्मिता
॥ ३८ ॥ तत्रापिह्युक्तदोषाणांनैवकिंचिन्निवारकम् ॥ अस्मत्पक्षेविशेषस्यसर्वत्रांगीकृतत्वतः
॥ ३९ ॥ नास्तिदोषःक्वचिद्भावोह्यभावश्चसएवहि ॥ अभावस्यचधर्माःस्युःभावास्तेषांचतेऽ
खिलाः ॥ ४० ॥ प्रत्यक्षमानतःसर्वंवारमेतन्नोवरणक्षमम् ॥ सर्वेभावाअभावाश्चपदार्थास्तेनसर्व
दा ॥ ४१ ॥ तथापिप्रथमंबुद्धेर्योनिषेधश्चगोचरः ॥ सोऽभावोविधिबुद्धेस्तुगोचरःप्रथमंपरः
॥४२॥ तस्मात्प्रध्वस्तभेदादिसदित्येवावगम्यते ॥ अस्त्यभावोऽस्तिचध्वंसोदेहाभावश्चभस्म
ता॥ ४३ ॥ इत्यादियुज्यतेसर्वंप्रत्यक्षादिप्रमाणतः ॥ अन्योन्याभावभेदौचपृथक्त्वंचपृथक्पृ
थक् ॥ ४४ ॥ प्रकल्पयंतितच्चैवकल्पनागौरवाद्धतम् ॥ पर्यायत्वेनतेशब्दाःज्ञायंतेसर्वएवहि
॥ ४५ ॥ भेदस्यतुस्वरूपत्वेयेवदंतिचशून्यताम् ॥ अद्भुतास्तेयतोऽन्यस्यप्रतियोगित्वमिष्यते
॥४६ ॥ प्रतियोगिनोहिभेदोऽयंनतुस्वस्मात्कथंचन ॥ विभागेनाल्पतैवस्यात्कुतएवचशून्यता
॥ ४७ ॥ नशून्यानांहिसंयोगाद्भावोवस्तुनइष्यते ॥ विदारणार्थोधातुश्चविभागगुणवाच

कः ॥ ४८ ॥ अविदारणेपिह्यास्यस्यभिन्नावोष्ठौतुतस्यच ॥ अतउन्मत्तवाक्यत्वा
न्मायावादोह्युपेक्षितः ॥४९॥ नचामंदसदानंदस्यंह्यनंतगुणार्णवः ॥ ईश्वरोऽष्टगुणत्वेनप्रमेयोऽ
प्रमितत्वतः ॥ ५० ॥ मय्यनंतगुणेनंतगुणतोऽनंतविग्रहे ॥ अनंतगुणमाहात्म्यशक्तिज्ञानमहा
र्णवः ॥ ५१ ॥ नारायणःपरोऽशेषचेतनेभ्यःपरंपदम् ॥ इत्यादिवेदतद्वाक्यैरनंतैश्चावसीयते
॥ ५२ ॥ अनंतगुणताविष्णोःकथमेवह्यपोह्यते ॥ यद्यनंतविशेषाश्चतज्ज्ञानादेर्निवारिता ॥५३॥
कथंतत्तद्विषयतासार्वज्ञार्थंविधीयते ॥ औपाधिकविशेषस्तुपूर्वमेवनिराकृतः ॥ ५४ ॥ स्वप्रका
शत्वमपितुयैर्ज्ञानस्यनिवारितम् ॥ कथंसर्वज्ञतातस्यस्वज्ञानाधिगमंविना ॥ ५५ ॥ ज्ञानंविश्वा
धिगंत्वेकंतज्ज्ञानविषयंपरम् ॥ इतिज्ञानद्वयंनैवसर्ववित्परमेश्वरः ॥ ५६ ॥ इतिचेदेषएवार्थस्त
ज्ज्ञानावशितोयदि ॥ स्वप्रकाशत्वमेवस्याज्ज्ञानंह्येतद्विशेषणम् ॥ ५७ ॥ ज्ञानांतरेणचेदत्रभव
देवानवस्थितिः ॥ स्वप्रकाशत्वमेतस्माद्दुर्निवारंसमापतेत् ॥ ५८ ॥ सुखवान्दुःखवांश्चस्यादिति
व्याप्तिश्चनोभवेत् ॥ निर्दुःखत्वंमहानंदःश्रुत्यैवेशस्यभण्यते ॥५९॥ योऽशनायपिपासेचशोका
दींश्चातिवर्तते ॥ आनंदंब्रह्मणोविद्वान्विपाप्मेत्यादिकाचसा ॥ ६० ॥ ईश्वरस्यतथेष्टत्वंदुःखि
त्वोपाधिरित्यपि ॥ उक्तेकिमुत्तरंब्रूयाच्छ्रुत्यनादरतत्परः ॥६१॥ नचात्मदुःखितेच्छास्यादतएत
न्निवार्यते ॥ सहृदर्शनमात्रेणश्रुतीनामपलापकः ॥ ६२ ॥ यज्ञादेरपिपापस्यहेतुत्वंहिंसयायुतेः॥
नानुमातिकथंतत्रयद्युपाधिर्निषिद्धता ॥ ६३ ॥ अदुःखित्वेनचानुक्तिःकथंनोपाधितांव्रजे
त् ॥ अदुःखमितरत्सर्वंजीवाएवतुदुःखिनः ॥ ६४ ॥ तेषांदुःखप्रहाणायश्रुतिरेषाप्रवर्तते ॥ इति

श्रुतिर्हिपरमाश्रुत्युक्तिर्यदिकारणम् ॥ ६५ ॥ किंकार्यमनुमानेनगलस्तनसमेनहि ॥ अनुमानेन
यद्यर्थःश्रुतिदृष्टोऽप्यपोद्यते ॥ ६६ ॥ पूर्वोक्तेनप्रकारेणनेश्वरोधर्मएवच ॥ स्यात्तद्बलंचतेनात्र
श्रुतिरेवप्रमाभवेत् ॥ ६७ ॥ ईशस्यानुमयासिद्धेःश्रुतिर्धर्मिप्रमाभवेत् ॥ तयासर्वगुणैःपूर्णउक्तो
ईशोयतस्ततः ॥ ६८ ॥ अनानंदानुमानस्यधर्मिग्राहिविरोधतः ॥ नप्रमाणंभवेत्तस्मान्नानुमा
त्रोपयोगिनी ॥ ६९ ॥ नित्येच्छत्वात्परेशस्यपरमाणुसदात्वतः ॥ अदृष्टकालयोश्चैवभावात्कार्यं
सदाभवेत् ॥ ७० ॥ नहिकालविभेदोऽस्तितत्पक्षेऽस्मन्मतेहरेः ॥ विशेषकालएवैतत्सृष्ट्यादी
च्छासदातना ॥७१ ॥ विशेषाश्चैवकालस्यहरेरिच्छावशाःसदा ॥ सर्वेनिमेषाइतिहिश्रुतिरेवाहसा
दरम्॥७२॥उदीरयतिकालाख्यांशक्तिरित्यस्यवागपि ॥ कालस्यकालगत्वेननविरोधोऽपिकश्चन
॥ ७३ ॥ असंख्यातविशेषत्वादिच्छायाअपिसर्वदा ॥ ईशोदेशश्चकालश्चस्वगताएवसर्वदा
॥ ७४ ॥ ईशाधीनौचतौनित्यंतदाधारौचतद्गतौ ॥ इतिश्रुतिरपिप्राहकालेस्वोद्दिष्टएवतु ॥७५ ॥
तत्कालसृष्टिमेवातोवांच्छतीशःसदैवहि ॥ स्यात्कालःसतदैवेतिकालस्यस्वगतत्वतः ॥ ७६ ॥
स्वभावादेवहीच्छैवदेवस्यैषइतिश्रुतेः ॥ स्वभावोपिपरेशेच्छावशइत्युदितःपुरा ॥ ७७ ॥ नि
त्यानित्याश्चततस्तदधीनाइतिश्रुतिः ॥ रूपस्पर्शादिहेतुभ्यःपरमाणोरनित्यता ॥ ७८ ॥ अनु
मेयाश्रुतीनांचविरुद्धत्वान्नतन्मतम् ॥ उपादेयमतश्चायमविरुद्धःसमन्वयः ॥ ७९ ॥ वैभाषि
काश्चसौत्रांताःस्वरसक्षणिकंजगत् ॥ अणूनांसमुदायंचकालकर्मनिमित्ततः ॥ ८० ॥ उत्प
त्तिकालेयुक्तानामात्मानंचक्षणस्थितम् ॥ नित्यंसंतानमेतेषांपंचस्कंधात्मनास्थितम् ॥ ८१ ॥

संस्काररूपविज्ञानसंज्ञादुःखात्मनास्थितिः॥ दुःखाभावंसुखंचाङ्कुररूपज्ञानसंततिम् ॥८२॥ मोक्ष
ससमुदायोहिनैकस्मादेवयुज्यते ॥ नोभयोश्चोभयत्वंयत्समुदायव्यपेक्षया॥८३॥ अतोऽन्योन्या
श्रयत्वेनसमुदायोनयुज्यते ॥ अन्योन्यापेक्षयापुंसःसमुदायत्ववेदनम्॥८४॥स्यात्तत्सदातनत्वेऽ
पितच्चसामीप्यहेतुकम् ॥ इतिचेत्कार्यसंभूतिमात्रव्यापृतिकारणम् ॥ ८५ ॥ नतुकार्यविशेषेषुव्या
पृतंकारणंभवेत् ॥ अतोऽर्थेंद्रियसंयोगिरूपकारणतात्मनः ॥८६॥ संयोगिरूपराहित्यान्नैवतज्ज्ञान
तापिहि ॥ विशेषकार्यजनकंयदिकारणमिष्यते ॥ ८७॥ कुतःसमानरूपत्वंकार्याणामपिसर्वशः॥
अतोनियत्यायत्किंचिद्यस्यकस्यापिकारणम् ॥ ८८ ॥ अदृष्टमपितस्यैवविशेषापादकंकुतः ॥
यस्यकस्यापियत्किंचिद्विशेषमुपपादयेत् ॥ ८९ ॥ कार्यंचकारणंचैवयत्किंचिद्यस्यकस्यचित् ॥
भवेन्नियामकाभावादिदमस्यैवकारणम् ॥ ९० ॥ इतिनित्यविनाशित्वेकेनमानेनगम्यते ॥
इदंनजायतेमुष्मादित्यत्रापिनकारणम् ॥ ९१ ॥ विनाशोत्पत्तयश्चैवनदृश्यंतेसदातनाः ॥ दृश्य
तेप्रत्यभिज्ञातःस्थिरत्वंसर्ववस्तुषु ॥ ९२ ॥ फलादीनांविशेषेणसर्वत्राप्यनुमीयते ॥ सत्वेनक्ष
णिकत्वंचेदाकाशस्याविशेषतः ॥ ९३ ॥ अविशेषोखिलस्यापिसत्वात्किंनानुमीयते ॥ यद्याका
शस्यसत्वंनकुतएवनरादिषु ॥ ९४ ॥ सधर्मिप्रतियोगित्वमभावस्यनियामकम् ॥ तौविनानह्य
भावश्चक्वचिद्दृष्टःकदाचन ॥ ९५ ॥ अधर्मिप्रतियोगित्वमाकाशस्यावगम्यते ॥ स्वीकारत्याग
तोऽदृष्टदृष्टयोःसर्ववस्तुषु ॥ ९६ ॥ गुणानुन्मत्तएवाऽसौविदधात्यधिकंपुनः ॥उत्तरोत्पत्तिमात्रेण
विनाशात्पूर्ववस्तुनः ॥ ९७ ॥ नसंस्कारार्पकत्वंचयुज्यतेकस्यचित्क्वचित् ॥ अतोज्ञातंमयेत्या

दिनज्ञेयमनुमाकुतः ॥ १९८ ॥ एकत्वमनुभूनिस्थंत्यक्तानिर्मानिकाभिधा ॥ कुतआत्मादिके
षुस्यात्बल्येवानुभवोयतः ॥ १९ ॥ कार्यकारणयोश्चैककालीनत्वंविनाकथम् ॥ पूर्वसंस्कार
योगीस्यादुत्तरोनियमेनच ॥ २०० ॥ संबद्धाएवसंस्कारमन्यत्रादधतेऽखिलाः ॥ असंबद्धःकथं
पूर्वमुत्तरेवासनाकरः॥ १॥ एककालतयायोगंविनासंस्कारतःकथम् ॥ क्षणमात्रमवस्थानंस्वीकृतं
सर्ववस्तुषु ॥ २ ॥ पूर्वमध्यापरकलारहितःक्षणइष्यते ॥ सर्वभावभवंकार्यंउततन्नाशसंभवम्
॥ ३ ॥ यौगपद्यंसतिभवेदुत्पाद्यानामशेषतः ॥ विनाशेचेन्नतत्कार्यंकार्योत्पत्तौचकाप्रमा ॥ ४॥
अभेदेपिविशेषेणदेहदीपफलादिषु ॥ विशेषदर्शनंयुक्तभस्मकिमनुभूतितः ॥ ५ ॥ विशेषदर्श
नंमानंयदिनस्थैर्यंदृक्कुतः ॥ दिक्सुखेचखदृष्टांताद्भावौसचेत्क्वचिद्भवेत् ॥ ६ ॥ विश्वंप्रत्य
क्षगंत्यक्त्वातयोर्योऽनुमितंवदेत् ॥ मायावादिवदेवासौउपेक्ष्योभूतिमिच्छता ॥ ७ ॥ सर्वप्रमाण
सिद्धंयद्बुद्धेर्भेदेनसर्वदा ॥ कथंनुतस्यबुद्धित्वंविश्वमन्यच्चकिंप्रमम् ॥ ८ ॥ सर्वलोकोबिभेत्यंजो
यस्मादनुभवात्सदा ॥ तस्यापतापिनःकिंननिष्प्रमाणकवादिनः ॥ ९ ॥ सोऽहंतदिदमेवाहसु
खीसद्गगनंदिशः ॥ सत्याद्यत्याद्यनुभवाःसदातत्प्रतिपक्षगाः ॥२१०॥अतोनिर्मानमखिलप्रमाण
प्रतिपक्षगम् ॥ दुर्मतंकोनुगृह्णीयाद्विनासुरतांतिकचित् ॥ ११ ॥ अपरःशून्यमखिलंमनोवाचा
मगोचरम् ॥ निर्विशेषंस्वयंभातंनिर्लेपमजरामरम् ॥ १२ ॥ अशेषदोषरहितमनंतंदेशकालतः ॥
वस्तुतश्चतदस्मीतिनित्योपासापरोक्षितम्॥ १३ ॥रागादिदोषरहितंतद्भावंयोगिनंनयेत् ॥तस्यैवा
नादिसंवृत्यानानाभेदात्मकंजगत् ॥१४॥ सदिवाभातिसत्यत्वंसांवृतंतत्म्यचेष्यते ॥ पारमार्थिक

सत्येत्वंशून्यादन्यस्यनकचित् ॥ १५ ॥ सांवृतेनैवसत्त्वेनव्यवहारोऽखिलोभवेत् ॥ शून्यात्संवृति
योगेनविश्वमेतत्प्रवर्त्तते ॥ १६ ॥ सृष्टिकालेपुनर्भ्रांतेस्तिमितंशून्यतांव्रजेत् ॥ इतिब्रूतेतमुद्दिश्य
जगादजगतांगुरुः ॥ १७ ॥ नासतोजगतोभावोनहिदृष्टासतोजनिः ॥ सतःक्वचित्प्रमाणंचदृष्टि
रेवाखिलाद्वरम् ॥१८॥ यद्येवंससमरसान्मधुरादिवपीनता ॥ भवेज्जनस्यमार्जारशृंगंगोरिवघा
तकम् ॥ १९ ॥ कार्यार्थीकारणंसच्चनोपादद्यात्कथंचन ॥ नप्रवर्तेतचेष्टायशून्यादेवेष्टसंभवात्
॥२२०॥देशकालादिनियमोनहिशून्यात्सतोभवेत्॥पुरुषेच्छानुसारेणयदिकिंचित्प्रजायते॥२१॥
किंनानुमीयतेतद्वद्वस्तुत्वात्पुरुषोद्भवः॥सर्वस्यापिनचाभावेविश्वंसदितिगम्यते॥२२॥यतोनुभवरो
धेतुवचनंवादिनःकुतः ॥ स्वमभ्रांतिवदेवेदंसंवृत्यैवोपलभ्यते ॥ २३ ॥ यदिमस्त्वेनकिंचात्रभ्रमा
नैवनिवर्तते ॥ अनादेरस्यविश्वस्यनिवृत्तिर्यदिचेष्यते ॥ २४ ॥निवृत्तिश्चनिवर्तेतनस्याऽभ्रांति
त्वसंभवात् ॥ दृष्टस्यभ्रांतिताचेत्स्याददृष्टेनभ्रमःकुतः ॥ २५॥ गवामशृंगिभावेननहिस्याच्छ
शशृंगिता॥अस्माकंतुप्रमाणेनप्रसादादीश्वरस्यच ॥२६॥उक्तभंग्यागमानांचप्रामाण्याद्युज्यतेऽ
खिलम् ॥ दृश्यत्वाद्विमतंमिथ्यास्वप्नवच्चेदियंप्रमा ॥२७॥ मिथ्याचेत्साध्यसिद्धिर्नव्यभिचारोन
चेद्भवेत् ॥ साधकत्वमसत्यस्यसाध्यंविप्रतिपत्तितः ॥ २८ ॥ तस्यचेत्यनवस्थास्यात्सत्त्वंचास्या
नुभूतितः ॥ अनुभूतिविरोधेनमिथ्यात्वेमानकाचन॥२९॥ अतीतानागतौकालावपिनःसाक्षिगो
चरौ ॥ तत्संबंधितयासत्त्वमपिदृष्टस्यसाक्षिगम् ॥३०॥दृढदृष्टंतुयद्दृष्टंदृष्टाभासस्ततोत्तरम् ॥भ्रां
तेःसंवृत्तिसत्यस्यविशेषोव्यभिचारवान्॥३१॥तेनाप्यंगीकृतःसम्यक्सनःसत्यत्वमेवहि ॥ विज्ञा

नाद्यभिचारोऽस्यकदाचित्स्यादितिप्रमा ॥ ३२ ॥ नैवदृष्टाप्रमासाचनभवेत्सविरोधतः ॥ भेदो
विशेष्यधर्म्यादिग्रहणापेक्षयायदि ॥ ३३ ॥ अन्योन्याश्रयताहेतोर्दुर्ग्राह्यइतियन्नतत् ॥ स्वरूपं
वस्तुनोभेदोयन्नतस्यग्रहेग्रहः ॥ ३४ ॥ अन्यथास्यामुनाभेदइतिवक्तुंनयुज्यते ॥ अगृहीतोय
दाभेदस्तदास्वस्मादितिग्रहः ॥ ३५ ॥ स्यात्प्रतीतिविरोधाच्चनहिकश्चित्तथावदेत् ॥ धर्मित्वप्रति
योगित्वतद्भेदायुगपद्यदि ॥ ३६ ॥ विशेषणंविशेष्यंचतद्भावश्चैवगृह्यते ॥ कोविरोधःस्वरूपेणगृ
हीतोभेदएवतु ॥ ३७ ॥ अस्यामुष्मादितिपुनर्विशेषेणैवगृह्यते ॥ किंचभेदःकथंग्राह्यइतियःपरि
पृच्छति ॥ ३८ ॥ धर्म्यादिभेदग्रहणात्तेनोक्तोऽन्योन्यसंश्रयः ॥ अन्यत्वाग्रहणेप्रोक्तःकथमन्यो
न्यसंश्रयः ॥ ३९ ॥ अन्यत्वंयदिसिद्धंस्यात्कथमन्योन्यसंश्रयः ॥ एतादृशस्यवक्तारौ
उभौजात्युत्तराकरौ ॥ ४० ॥ मायीमाध्यमिकश्चैवतदुपेक्ष्यौबुभूषुभिः ॥ यच्छून्यवा
दिनःशून्यंतदेवब्रह्ममायिनः ॥ ४१ ॥ नहिलक्षणभेदोऽस्तिनिर्विशेषत्वतस्तयोः ॥ अनृ
तादिविरोधित्वमुभयोश्चविलक्षणम् ॥ ४२ ॥ स्ववाक्याभावसंवादान्नकृत्यंप्रीतवादिनः ॥
तत्पक्षइतिवैधर्म्यान्नस्वमादिवदित्यजः ॥ ४३ ॥ अप्रयत्नान्निराचक्रेचेतिदृष्टिविरुद्धताम् ॥
निष्प्रमाणत्वमप्यस्यसूचयामासविश्वकृत् ॥ ४४ ॥ ज्ञानमेवैकमखिलंज्ञेयाकारंप्रभासते ॥
तत्रसंततिभेदश्चस्वभेदोभेदएवच ॥ ४५ ॥ कल्पिताःप्रतिभासंतेनानासंहृतिभूमिषु ॥
इत्येतदपिनोयुक्तंनहिज्ञानतयाजगत् ॥ ४६ ॥ भासतेऽनुभवस्यैवविरुद्धत्वादपेशलम् ॥ तन्मतं
क्षणिकत्वाच्चज्ञानस्यस्थिररूपतः ॥ ४७ ॥ ज्ञेयस्योक्तप्रकारेणसर्वश्रुतिविरोधतः ॥ अनुभूति

विरुद्धत्वादपिपक्षाइमेऽशिवाः ॥ ४८ ॥ आहक्षपणकोविश्वंसदसद्द्वयमद्वयम् ॥ द्वयाद्वयमतत्स
र्वंसप्तभंगिसदातनम् ॥ ४९ ॥ नैतत्पदार्थएकस्मिन्युक्तंदृष्टिविरोधतः ॥ भावाभावतयाविश्वं
येनरूपेणमीयते ॥ ५० ॥ तद्रूपमेवतदितिनियमःकेनवार्यते ॥ तत्तद्दोषनिवृत्त्यर्थंस्वीकृतानत्त
दात्मता ॥ ५१ ॥ यदितैरखिलैर्दोषैर्लिप्यतेचलदर्शनः ॥ अतिहायप्रमाणाप्तनियमंसदसत्तया
॥ ५२ ॥ अशेषमविरुद्धंचनिर्मानंव्याहतंसदा ॥ सर्वप्रकारंवदतोदृष्टहानिरसद्ग्रहः ॥ ५३ ॥
स्वव्याहतत्वमित्याद्यादोषाःसर्वेभवंतिहि ॥ वक्तिस्वप्रभमात्मानंदेहमानंतदप्यलम् ॥ ५४ ॥
दुष्टंनानाशरीरेषुप्रवेशादन्यथाभवात् ॥ अन्यथाभावियद्वस्तुतदनित्यमितिस्थितिः ॥ ५५ ॥
तन्मतेतदनित्यत्वंपुद्गलस्यनिवारितम् ॥ नानित्यताऽस्मत्पक्षेतुचैतन्यादेर्विशेषिणः ॥ ५६ ॥
लक्षणस्यनिवृत्तौतुस्यान्नतच्चेतनेक्वचित् ॥ ओतप्रोतात्मकत्वंतुपटेदेहेऽगसंस्थितिः ॥५७ ॥ इ
त्यादिलक्षणस्यैवनिवृत्तौस्यादनित्यता ॥ भौतिकत्वेचरूपादिव्याप्तंनाशेननोमते ॥ ५८ ॥ नैवं
तस्यान्यथाभावोयस्यानित्यत्वमीरितम् ॥ रूपादियुक्तस्यतथाजगन्नाशित्वसिद्धये ॥ ५९ ॥
न्यास्यातथान्यथाभावादात्मनोनित्यताभवेत् ॥ नित्योर्ध्वगतिरप्येषायामुक्तिरितिकथ्यते
॥ ६० ॥ अलोकाकाशमाप्तस्यकथंनविकृतिश्चसा ॥ कीदृशश्चान्यथाभावोनाशहेतुतयेष्यते
॥ ६१ ॥ संस्थानापगमश्चेत्सनहिभूसागरादिषु ॥ यःकश्चिदन्यथाभावोयदिमुक्तिश्चतादृशी
॥ ६२ ॥ देहमानेविकारःस्यादितिस्यान्नूनमात्मनः ॥ आहहस्त्यादिदेहेषुह्यपिस्यादन्यथाभ
वः ॥ ६३ ॥ अणुदेहस्यजीवस्यगतत्वेविकृतिर्हिया ॥ देहव्याप्त्यैवविशेषःकस्तस्यास्थाप्नुतनौ

चनुः ॥ ६४ ॥ गीतात्पुष्पफलावाप्तिःस्पर्शात्कार्श्यरसास्थितिः ॥ अपिवृक्षस्यदृश्यंतइतिना
नात्मलाभवेत् ॥ ६५ ॥ एवंचात्माकात्स्न्यंमितिततएवाहवेदवित् ॥ सर्वज्ञत्वादिकैःसर्वैर्गुणैर्युक्तं
सदाशिवम् ॥ ६६ ॥ जगद्विचित्ररचनाकर्तारंदोषवर्जितम् ॥ आहुःपाशुपतास्तच्चबहुश्रुतिवि
रोधतः ॥ ६७ ॥ नोपादेयंमतंह्यस्यदेवस्यस्तुतिगतंगम् ॥ उत्पिपेषशिरस्तस्यगूणीपेसत्पातिंप
दम् ॥ ६८ ॥ यद्विष्णोरुपमंहंतुंरुद्रमाकृष्यतेमया ॥ धनुर्यैकामयेनंतमुग्रमाशिश्चदेवताः ॥ ६९ ॥
यञ्छिश्चदेवानेकोऽसावासीन्नारायणःपरः॥ तस्माद्रुद्रःसंप्रसादश्चाभूतंवैष्णवंमखम् ॥७०॥ यज्ञे
नयज्ञमयजंताबध्ननपुरुषंपशुम् ॥ योभूतानामधिपतिरुद्रस्तंतीचरोद्वषा ॥ ७१ ॥ इत्यादिश्रु
तिसामर्थ्यात्पारतंत्र्यंजनिर्मृतिः ॥ पराधीनपदप्राप्तिरज्ञत्वंप्रलयेभवः ॥ ७२ ॥ प्रतीयंतेसदोष
त्वान्नेशःपशुपतिस्ततः ॥ अशरीरत्वतस्तस्यसंबंधोजगताक्वचित् ॥ ७३ ॥ कर्तृत्वेननयुज्येतदे
हिनोज्ञानदृष्टितः ॥ नचदेहादिवद्विश्वमस्यस्याद्भोगसंभवात् ॥ ७४ ॥ अधिष्ठानेस्थितःकर्ता
कार्यंकुर्वन्प्रतीयते ॥ नास्याधिष्ठानयोगोऽस्तिभूतानांप्रलयेतदा ॥ ७५ ॥ अदेहश्चेदसर्वज्ञःशि
लाकाष्ठादिवत्सदा ॥ देहीचेदंतवानेवयज्ञदत्तनिदर्शनात् ॥ ७६ ॥ नचैतदखिलंविष्णौश्रु
तिप्रामाण्यगौरवात् ॥ मनोबुद्ध्यंगितांविष्णोर्लक्षयामोयएवसः ॥ ७७ ॥ सएवदेवोविज्ञा
नमैश्वर्यंशक्तिरूर्जिता ॥ देहोविष्णोर्नतेविष्णोवासुदेवोऽग्रतोभवेत् ॥ ७८ ॥ एकोनारायण
स्त्वासीन्नब्रह्मानचशंकरः ॥ अजस्यनाभावध्येकमर्पितंमात्रयापरः ॥ ७९ ॥ सदेहःसु
खगंधश्चज्ञानभाःसत्पराक्रमः ॥ ज्ञानज्ञानःसुखसुखःसविष्णुःपरमोऽक्षरः ॥ ८० ॥ आनंदएकए

वाग्रआसीन्नारायणःप्रभुः ॥ भ्रियंतस्यशिरोमोदप्रमोदौचभुजौहरेः ॥ ८१ ॥ आनंदोमध्यतोब्र
ह्मपुच्छंनान्यदभूत्कचित् ॥ मनसोऽस्याऽभवद्ब्रह्मालल्लाटादपिशंकरः ॥८२॥ पक्षयोर्गरुडःशेषोमु
खादाससरस्वती ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ ८३ ॥ इत्यादिश्रुतिसंदर्भैर्बलान्नि
त्यगुणात्मकः ॥ विष्णोर्देहाज्जगत्सर्वमाविरासीदितीयते ॥ ८४ ॥ मानवत्त्वाद्विरोधःकोनामानंक
चिदिष्यते ॥ अविरोधोविरोधश्चमानेनैवहिगम्यते ॥८५॥ अतउक्तंसमस्तंचवासुदेवस्ययुज्यते ॥
शिवादिनामयुक्ताश्चश्रुतयोविष्णुवाचकाः ॥ ८६ ॥ नामानिसर्वाणिचयमेकोयोदेवनामधाः॥
विष्णुनामानिनान्यस्यसर्वनामाहरिःस्वयम् ॥ ८७॥ ननारायणनामानितदन्येष्वपरेहरौ ॥ इत्या
दिश्रुतयस्तत्रमानंचोक्तःसमन्वयः ॥ ८८ ॥ पुराणानिपुराणाद्यैर्विरुद्धत्वान्नतत्प्रमा ॥ तद्विरुद्धे
पुनोमानंपूर्वापरविरोधतः ॥ ८९ ॥ समब्राह्मविरोधाच्चनियमाद्वैष्णवेष्वपि ॥ मोहार्थमुक्तितश्चैव
विष्णुरेकोगुणार्णवः ॥ ९० ॥ स्कंदसूर्यगणेशादिमतानिन्यायतोऽमुतः ॥ निराकृतान्यशेषेणसि
द्धौतस्याविशेषतः ॥ ९१॥ निराकृतौविशेषस्यभावाच्छक्तिमतंपृथक् ॥ दृष्यतेमहतीदेवीह्रींका
रिसर्वकारणम् ॥९२॥ त्रिपुराभैरवीत्यादिनामभिःसमधीयते ॥ तस्याःसदाशिवाद्याश्चजायंतेदेव
मानुषाः ॥ ९३ ॥ भूतभौतिकमप्येतदितितन्नोपपद्यते ॥ दृष्वापुंभ्यःसदासृष्टिःस्त्रीपुंभ्योवावि
शेषतः ॥ ९४ ॥ केवलाभ्योनहिस्त्रीभ्यस्ततउत्पत्त्यसंभवात् ॥ नाच्यैमहावाममतंवामैरन्यदुदी
र्यते ॥९५॥ शिवोपसर्जनाशक्तिःससर्जेदंसमंततः ॥ इतितच्चोपपन्नंनशिवस्याकरणत्वतः॥९६॥
अदेहत्वादपिह्यन्येब्रूयुःसर्वज्ञमीश्वरम् ॥ अणुवामानतद्युक्तमीशवादप्रवेशनात्॥९७॥सार्वज्ञ्या

दिगुणैर्युक्तंगुरुकल्पनयाद्वयम् ॥ नयुज्यतेह्यतस्त्वीशएकएवप्रयोजकः ॥ १८ ॥ उक्तदोषश्चत
त्पक्षइतिनैवात्रदूष्यते ॥ श्रुतिस्मृतीतिहासानांसामस्त्येनविरोधतः ॥ ९९ ॥ सतांजुगुप्सित
त्वाच्चनांगीकार्यंहितन्मतम् ॥ पंचरात्रनिषेधार्थमेतान्याचक्षतेयदि॥३००॥सूत्राण्यतिविरुद्धंतद्
यतआहसभारते ॥ पंचरात्रस्यकृत्स्नस्यवक्तानारायणःस्वयम् ॥ ३०१॥ ज्ञानेष्वेतेषुराजेंद्रसर्वे
ष्वेतद्विशिष्यते ॥ पंचरात्रविदोमुख्यायथाक्रमपरानृप ॥ ३०२ ॥ एकांतभावोपगतावासुदेवंवि
शंतिते ॥ इतिगीताचतच्छास्त्रसंक्षेपतइतीरितम् ॥ ३०३॥ वेदेनपंचरात्रेणभक्त्यायज्ञेनचैवहि ॥
दृश्योऽहंनान्यथादृश्योवर्षकोटिशतैरपि ॥ ३०४ ॥ इतिवाराहवचनंश्लोकाइतिवचःश्रुतौ ॥
वेदैश्चपंचरात्रैश्चध्येयोनारायणःपरः ॥ ३०५॥ पंचरात्रंचवेदाश्चविद्यैकैवद्विधेयते ॥ इत्यादिवेद
वचनैःपंचरात्रमपोद्यते ॥ ३०६ ॥ कथमेवात्रदोषःक्वउत्पत्तिर्ज्ञानिइत्यपि ॥ इहैवोक्तानचाभूत
भावस्तत्रापिकथ्यते ॥ ३०७ ॥ अनादिकर्मणाबद्धोजीवःसंसारमंडले ॥ वासुदेवेच्छयानित्यंभ्र
मतीतिहितद्वचः ॥ ३०८ ॥ नहिसंसारसादित्वंपंचरात्रोदितंक्वचित् ॥ जीवाभिमानिशेषस्यना
म्नासंकर्षणस्यतु ॥ ३०९ ॥ वासुदेवाज्जनिःप्रोक्ताप्रद्युम्नस्यततस्तथा ॥ मनोभिमानिनःकाम
स्यैवंसाक्षाद्धरेःक्वचित्॥३१०॥ संकर्षणादिनाम्नैवनित्याचिंत्योरुशक्तितः ॥ व्यूहउक्तोऽन्यथाऽ
नूद्यकथंदुष्टत्वमुच्यते ॥ ३११ ॥ यदिविंद्याच्चतुर्वेदानितिवद्वेदपूरणम् ॥ पंचरात्रादितिकुतोद्वेषः
शांडिल्यवर्तते ॥ ३१२ ॥ अतःपरमशास्त्रोरुद्वेषादुदितमासुरैः ॥ दूषणंपंचरात्रस्यवीक्षायामपि
नक्षमम् ॥ ३१३ ॥ अतोऽशेषजगद्धातानिर्दोषोरुगुणार्णवः ॥ नारायणश्रुतिगणतात्पर्यादव

सीयते ॥ ३१४ ॥ अंधंतमःप्रविशंतियेत्वविद्यामुपासते ॥ ततोभूयइवायांतियेतस्यानैवानिंद
काः ॥ ३१५ ॥ ततोविद्यामविद्यांचयोजानात्युभयंसह ॥ दोषज्ञानादतीत्यैतांविद्ययाऽमृतमश्नु
ते ॥ ३१६ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेब्रह्मसूत्रानुव्याख्यानेद्वितीया
ध्यास्यद्वितीयःपादः ॥ २ ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीहरयेनमः ॥ ॐ ॥ अथाशेषसमाम्नायविरोधायाकृतिंप्रभुः ॥ करिष्यन्नधिदैवाधिभूतजी
वपरात्मनाम् ॥ १ ॥ स्वरूपनिर्णयायैववचनानांपरस्परम् ॥ पादेनानेनाविरोधंदर्शयत्यमितद्यु
तिः ॥ २ ॥ अनुभूतियुक्तिबहुलाविलोप्यंचततोऽधिकम् ॥ एतत्सर्वंततःसाम्यंद्वारवैय्यर्थ्यमेव
च ॥ ३ ॥ दृष्टयुक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः ॥ प्रसिद्धनामस्वीकारेबहुवाक्यानुवर्तिता
॥ ४ ॥ लोकदृष्ट्यनुसारित्वंजीवसाम्यमनादिता ॥ तत्रतत्रपरिज्ञानंगुणसाम्यश्रुतीतथा ॥ ५॥
उत्पत्तिमत्त्वंस्वगुणाननुभूत्यल्पकल्पने ॥ नानाश्रुतिश्चवैचित्र्यंयुक्तयःपूर्वपक्षगाः ॥ ६ ॥ व्यव
स्थानुपपत्तिश्चस्वातंत्र्यमनुसारिता ॥ मुख्यताशक्तिमत्त्वंचवैरूप्यंसर्वसंग्रहः ॥ ७ ॥ गत्यादिरी
शशक्तिश्चसर्वमानविरोधिता ॥ अभीष्टासिद्धिसुव्यक्तीशास्त्रसिद्धिर्विपर्ययः ॥ ८ ॥ विशेषका
रणंचेतिसिद्धांतस्यैवसाधकाः ॥ प्रकृतिःपुरुषःकालोवेदास्तदभिमानिनः ॥ ९ ॥ महदा
द्याश्चजायंतेपराधीनविशेषता ॥ इदंसर्वंससर्जेतिजनिमत्त्वमहोदितम् ॥ १० ॥ अवकाशमा
त्रमाकाशःकथमुत्पद्यतेऽन्यथा ॥ यद्यनाकाशतापूर्वंकिंमूर्तंनिबिडंजगत् ॥ ११ ॥ मूर्तसंपूर्ण
ताचैवयद्यनाकाशताभवेत् ॥ मूर्तद्रव्याणिचाकाशेस्थितान्येवहिसर्वदा ॥ १२ ॥ अतआकाश

शब्दोक्तस्तद्देवोऽत्रविनायकः ॥ देहोत्पत्त्यासमुत्पन्नइतिश्रुत्याभिधीयते ॥१३॥ भूतमप्यसितं
दिव्यदृष्टिगोचरमेवतु ॥ उत्पद्यतेऽव्याकृतंहिगगनंसाक्षिगोचरम् ॥ १४ ॥ प्रदेशइतिविज्ञेयं
नित्यंनोत्पद्यतेहितत् ॥ तथापिमूर्तसंबंधपरतंत्रविशेषयुक् ॥ १५॥ स्वमेवोत्पत्तिमन्नामश्रुतिशब्द
विवक्षितम् ॥ प्रकृतिःपुरुषःकालइत्येतेचसमस्तशः ॥ १६ ॥ ईशाधीनविशेषेणजन्याइत्येवकी
र्तिताः ॥ कालप्रवाहएवैकोनित्योनतुविशेषवान् ॥ १७ ॥ पुरुषाव्यक्तकालानांरमैवेका
भिमानिनी ॥ सिसृक्षुत्वविशेषंतत्साक्षाद्भगवदिच्छया ॥ १८ ॥ प्राप्नैवसृष्टेत्युदिताप्रधानं
प्रकृतेरपि ॥ पुमांसोदेहसंबंधात्सृष्टिमंतइतीरिताः ॥ १९ ॥ एवंप्रलयकालेऽपिप्रतिभातप
रावरः ॥ मुख्यवायुर्नित्यसमःशरीरोत्पत्तिकारणात् ॥ २० ॥ पराधीनविशेषेणजनिमाने
वशब्दितः ॥ नैवकिंचित्ततोजन्मवर्जितंपरमात्मृते ॥ २१ ॥ पराधीनविशेषत्वेजन्मनःस्थू
लताभवः ॥ पूर्वशब्दविलोपश्चयदिजन्मेतिकीर्त्यते ॥ २२ ॥ रमायानैवजन्माऽस्तिचैतन्य
स्यापिकेवलम् ॥ प्रधानस्यचवेदस्यवेदस्यापीश्वरेच्छया ॥ २३ ॥ व्यक्तिर्नामविशेषोऽस्ति
तस्मात्तद्दर्शनैवहि ॥ उत्पत्तिरत्रकथितास्वतंत्रत्वात्परात्मनः ॥ २४ ॥ नैवोत्पत्तिःकथमपि
नस्वतंत्रंततःपरम् ॥ अच्छेद्यस्यापिजीवस्यविभागंबहुधाहरिः ॥ २५ ॥ कृत्वाभोगान्प्रदाये
वचैक्यमापादयेत्पुनः ॥ अतईशवशंसर्वंचेतनाचेतनंजगत् ॥ २६ ॥ अविभागंविभागाययदान
यतिकेशवः ॥ किमशक्यंपरेशस्यतदेतिह्यभिधीयते ॥ २७ ॥ एवंस्थितेऽपिजीवैक्यंकेचिदाहुःप
रात्मनः ॥ तद्योऽहमितिपूर्वाभिःश्रुतिभिश्चानुमाबलात् ॥ २८ ॥ नतद्युक्तंयतोविष्णुःपृथगेवाभिधी

यते ॥ प्रज्ञानेत्रोलोकइतिमुक्तौभेदोभिधीयते ॥ २९ ॥ एतमानंदमित्यन्यापरमंसाम्यमित्य
पि ॥ इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः ॥ ३० ॥ सर्गेऽपिनोपजायंतेप्रलयेनव्यथंतिच ॥
उपसंपद्यतेज्योतिःस्वरूपेणाभिपद्यते ॥ ३१ ॥ तत्रपर्यैतिजक्षंश्चक्रीडन्नपिसदासुखी ॥ आच
क्ष्वमेपरंमोक्षंधीशयंप्रवदंतिताम् ॥ ३२॥ इत्युक्तआहवाग्देवीपरंमोक्षंप्रजापतेः ॥ शाखांशाखां
महानद्यःसंयांतिपरितःश्रवाः ॥ ३३ ॥ धानापूपामांसकामाःसदापायसकर्दमाः ॥ यस्मिन्नग्नि
मुखादेवाःसेंद्राःसहमरुद्गणाः ॥ ३४ ॥ ईजिरेक्रतुभिश्रेष्ठैस्तदक्षरमुपासते ॥ प्रविशंतिपरंदेवंमु
क्तास्तत्रैवभोगिनः ॥ ३५ ॥ निर्गच्छंतियथाकामंपरेशेनैवचोदिताः ॥ भेददृष्ट्याभिमानेननिःसं
गेनाऽपिकर्मणा ॥ ३६ ॥ कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभम् ॥ ससंगत्यपुनःकालेकालेनेश्व
रमूर्तिना ॥ ३७ ॥ जातेगुणव्यतिकरेयथापूर्वंप्रजायते ॥ ऋचांत्वःपोषमास्तेचपरेणप्रेरिताःसदा
॥ ३८ ॥ यत्कामस्तत्सृजत्यद्धेवात्मनातत्सृजत्यपि ॥ सहैवब्रह्मणाकामान्भुंक्तेनिस्तीर्ण
तद्गुणः ॥ ३९ ॥ दुःखादींश्चपरित्यज्यजगद्व्यापारवर्जितम् ॥ भुंक्तेभोगान्सहैवोच्चानित्या
द्यागममानतः ॥ ४० ॥ मुक्तस्यभेदावगतेःकथमेवह्यभिन्नता ॥ जीवेशयोर्नानुमाचतदभेदं
प्रमापयेत् ॥ ४१॥ मिथ्यैवभेदोविमतोभेदत्वाच्चंद्रभेदवत् ॥ इतिचेत्साध्यधर्मोयंऽसन्नसन्वानवो
भयम् ॥ ४२ ॥ यदिसन्नपसिद्धांतःसएवासन्निनीरिते॥ नोभयंचेन्नसिद्धंतदितिमानस्यदूषणम्
॥ ४३ ॥ नचमानांतरेणैवतच्छक्यंसाधितुंक्वचित् ॥अनुमानेनचेत्सैवह्यनवस्थाभविष्यति॥४४॥
नचागमस्तदर्थोऽस्तिनासदासीन्नतद्वदेत् ॥ परिशेषादनिर्वाच्यंयदिसिद्धेत्परात्मनः ॥ ४५ ॥

अनिर्वाच्यत्वमेवस्यात्परिशिष्टोह्यसौलदा ॥ नचान्यआगमस्तत्रसदसत्प्रतियोगिनि ॥ ४६ ॥
नचप्रत्यक्षमत्राऽस्तिनचार्थापत्तिरिष्यते ॥ बाधायोगात्सनइतिबाधाभावतएवहि ॥ ४७ ॥
इष्टापत्तिर्नहिभ्रांतावपिबाधोवगम्यते ॥ विषयस्यकुतोबाधोविद्यमानंहिबाध्यते ॥ ४८ ॥ नहि
वंध्यासुतोवध्योयज्ञदत्तोहिवध्यते ॥ बाधायोगात्सतइतिन्यासिरेषाकदृश्यते ॥ ४९ ॥ कश्चायं
बाधउद्दिष्टोनहिनाशोऽसतोभवेत् ॥ निवृत्तिश्चाप्रवृत्तस्यकथमेवोपपद्यते ॥ ५०॥ नासीदस्तिभ
विष्यच्चतदितिज्ञानमेयता ॥ यदिबाधस्तदासत्त्वंतैनैवांगीकृतंपुनः ॥ ५१ ॥ प्रतीतिर्नासतइतिव
दन्नांगीकरोतिताम् ॥ निषेधोह्यप्रतीतस्यकथंचिन्नोपपद्यते ॥ ५२ ॥ नचोपमाभवेदत्रप्रत्यक्षा
सत्यमेवच ॥ शास्त्रगम्यपरेशानाद्भेदःस्वात्मनईयते ॥ ५३ ॥ अनुभूतिविरोधेनकथमेकत्वमुच्य
ते ॥ किंचित्कर्ताचदुःखीतिसर्वैरेवानुभूयते ॥५४॥ सर्वज्ञोभगवान्विष्णुःसर्वशक्तिरितिश्रुतः ॥
अनुभूताद्धिभेदेनश्रुतिरेषावदत्यमुम् ॥५५॥ उपजीव्यविरुद्धंतुकथमैक्यंश्रुतिर्वदेत् ॥ अप्रामा
ण्यंयदाभेदवाचकस्यभविष्यति ॥५६॥ सएवधर्मिणोग्राहीतदभेदःकथंभवेत् ॥ यत्स्वरूपग्रहेमा
नंतद्धर्मेनकथंभवेत्॥५७॥एकविज्ञानविज्ञस्याद्द्वयंमानंभविष्यति ॥नचेदेकंप्रमाणंतद्द्वयमप्यत्रनो
भवेत्॥५८॥धर्मिग्राहिविरोधस्तुतस्मान्मानस्यदूषणम्॥ नोपजीव्योह्यभेदोऽत्रक्वचिद्भेदश्रुतेर्बला
त् ॥५९॥ नचमानांतरोपेयंब्रह्मत्वंभवतिक्वचित् ॥ येनमानेनचोपेयंभेदस्तेनावगम्यते ॥६० ॥ ॥२१॥
सर्वज्ञानुमयेवेशोयद्युपेयःकथंचन॥ सर्वज्ञत्वगुणेनैवतयाभेदोऽवगम्यते ॥६१॥नदुःखानुभवःक्वा
पिमिथ्यानुभवतांव्रजेत् ॥ नहिबाधःक्वचिद्दृष्टोदुःखाद्यनुभवस्यतु ॥ ६२ ॥ यदिदुःखानुभूतिश्च

भ्रांतिरित्यवसीयते ॥ अदुःखिताश्रुतिःकेवनभ्रांतिरितिगम्यते ॥ ६३ ॥ श्रुतिस्वरूपमर्थश्चमाने
नैवावसीयते ॥ तच्चेन्मानंगृहीतंतेकिंदुःखानुभवेभ्रमः॥ ६४ ॥ नचबाधविशेषोऽस्तियदबाधितमे
वतत् ॥ बाधोयद्यनुभूतेर्थेकथंनिर्णयईयते॥६५॥ कोऽपिह्यर्थोननिश्चेतुंशक्यतेभ्रमवादिना ॥ भ्र
मत्वमभ्रमत्वंचयदैवानुभवोपगम् ॥६६॥ एकस्यभ्रमतातत्रपरस्यभ्रमताकुतः ॥ भ्रवत्वमभ्रम
त्वंचसर्ववेद्यंहिसाक्षिणा ॥६७॥ सचेत्साक्षीकचिद्दुष्टःकथंनिर्णयईयते ॥विशेषाःसर्वएवैतेसाक्षिप्र
त्यक्षगोचराः॥६८॥ऊरीकृत्यचतान्सर्वान्व्यवहारःप्रवर्तते ॥ साक्षिणोव्यवसायीतुव्यवहारोऽभि
धीयते ॥६९॥ तस्मात्सर्वप्रसिद्धस्यव्यवहारस्यसिद्धये ॥ साक्षीनिर्दोषएवैकःसदांगीकार्यएवनः
॥७०॥शुद्धःसाक्षीयदासिद्धोदुःखित्वंवार्यतेकथम्॥उपजीव्यप्रमाणंतद्भेदग्राहकमेवहि ॥ ७१॥
अतोजीवेशयोर्भेदःश्रुतिसामर्थ्यसुस्थितः॥तथापितुचिदानंदपूर्वास्तत्सदृशागुणाः ॥७२॥सारस्व
रूपमस्यापिमुक्तावप्यवशिष्यते॥अतोभेदवदैवताःश्रुतयःप्रवदंतिहि ॥७३॥ पौराणानिचवाक्या
निसादृश्याभेदसंश्रयात् ॥ सादृश्याच्चप्रधानत्वात्स्वातंत्र्यादपिवाभिदाम् ॥७४॥ आहुरीशेनजीव
स्यनस्वरूपाभिदांकचित् ॥ स्थानैक्यमैकमत्यंचमुक्तस्यतुविशिष्यते ॥७५॥ सादृश्यंचविशेषेण
जडानांद्वयमेवतु॥भवेत्सादृश्यमत्यल्पंतृतीयंपरमात्मना ॥७६॥ईशरूपक्रियाणांचगुणानामपिस
र्वशः ॥ तथैवावयवानांतत्स्वरूपैक्यंनुमुख्यतः ॥७७॥ यथोदकंदुर्गेदृष्टंपर्वतेषुविधावति ॥एवंधर्मा
न्पृथक्पश्यंस्तानेवानुविधावति ॥ ७८॥ इतिश्रुतेर्नोभयंचभेदाभेदाख्यमिष्यते ॥ एकमेवाद्विती
यंतन्नेहनानास्तिकिंचन ॥ ७९ ॥ मृत्योःसमृत्युमाप्नोतियद्भिनानेवपश्यति ॥ इतिश्रुताविवेत्य

स्मान्द्भेदाभेदोनिराकृतः ॥ ८० ॥ इवोभयेचसादृश्यइतिवाक्शब्दनिर्णये ॥ भेदस्यमुक्तौवचना
दपितत्पक्षनिग्रहः ॥ ८१ ॥ चेतनत्वादिसादृश्यंयद्यभेदइतीष्यते ॥ अंगीकृतंतदस्माभिर्नस्वरूपै
क्यताक्वचित् ॥८२॥नकेनचिदभेदोऽस्तिभेदाभेदोथवाक्वचित् ॥ समुदायमृतेविष्णोःस्वगुणादी
न्विनापिवा ॥ ८३ ॥ इतिश्रुतेर्नतस्यास्तिभेदाभेदोऽपिकेनचित् ॥ अभेदश्रुतयोंशत्वात्सादृश्य
त्वांशताऽस्यतु ॥८४॥ अंशस्तुद्विविधोज्ञेयःस्वरूपांशोऽन्यएवच ॥ विभिन्नांशोऽल्पशक्तिःस्या
त्किंचित्सादृश्यमात्रयुक् ॥ ८५ ॥ अंशिनोयत्तुसामर्थ्यंयत्स्वरूपंयथास्थितिः ॥ सएवचेत्स्वरू
पांशःप्रादुर्भावोहरेर्यथा ॥ ८६ ॥ सूर्यमंडलमान्येकस्तत्प्रकाशाभिमानवान् ॥ सूर्योऽथसप्तमाब्धे
श्चबाह्योदस्यचवारिपः ॥८७॥ कठिनत्वेनमेवादेःपृथिव्याअपिदेवताः ॥ धरादेव्येवमेवैकोभगवा
न्विष्णुरव्ययः ॥ ८८ ॥ नानावताररूपेणस्थितःपूर्णगुणःसदा ॥ विण्मूत्राख्याभिमानिन्यो
यथापभ्रष्टदेवताः ॥ ८९ ॥ सूर्यादिभ्यस्तथैवायंसंसारीपरमाःपृथक् ॥ देहदोषैश्चदुष्टत्वाद
पभ्रष्टाख्यदेवताः ॥ ९० ॥ अन्याःसूर्यादिदेवेभ्योह्यनुग्राह्याश्चतैःसदा ॥ एवमेवपराद्विष्णोः
पृथक्संसारिणोमताः ॥ ९१ ॥ अनुग्राह्याश्चतेनैवतत्प्रसादाच्चमोक्षिणः ॥ ननुमत्स्यादि
रूपाणामनुग्राह्यत्वमिष्यते ॥ ९२ ॥ गुणैरशेषपूर्णत्वान्मुख्याभेदोऽपरैर्नच ॥ अंशाभासाश्चस
र्वेऽपिपरस्यांशानमुख्यतः ॥ ९३॥ अथैषापुरुषेच्छायाएतस्मिन्नेतदाततम् ॥ ननुपुंपादवत्पादा
जीवाएतेपरात्मनः ॥ ९४ ॥ पूर्णास्तस्यगुणाएवप्रादुर्भावतयास्थिताः ॥ एवंजगादपरमाश्रुति
र्नारायणंपरम् ॥ ९५ ॥ अक्षयोभगवान्विष्णुर्लक्ष्म्यावासोलयेस्थितः ॥ मुक्तैःसदाचिंत्यमानोब्र

ह्माद्यैस्तारतम्यगैः ॥ ९६॥ प्रकृतिः पुरुषः कालोवेदाश्चेतिचतुष्टयम् ॥ नित्यंस्वरूपतोविष्णोर्विशे
षावाप्तिमात्रतः ॥ ९७ ॥ उत्पत्तिमदितिप्रोक्तंलक्ष्मीस्तदभिमानिनी ॥ ततोजातःपुमान्नामब्र
ह्माख्योवासुदेवतः ॥ ९८ ॥ सूत्रात्माप्राणनामाचदेव्यौप्रकृतिमानिनी ॥ ततोरूपंमहन्नामाब्रह्म
णोऽहंकृतिःशिवः ॥९९॥ ब्रह्मणोबुद्धिनाम्नोमाततइंद्रोमनोभिधा ॥ स्कंदश्चततएवान्येसर्वेदेवाः
प्रजज्ञिरे ॥ १०० ॥ तत्रपूर्वतमःश्रेयान्गुणैःसर्वैःसमस्तशः ॥ तेभ्यश्चभगवान्विष्णुस्तदधीना
इमेसदा ॥ १०१ ॥ जन्मस्थितिर्लयोज्ञानंनियतिर्ज्ञानसंसृतिः ॥ मोक्षश्चतदधीनत्वमेतेषांनैवही
यते ॥ १०२ ॥ मुक्तावपिसएवैकःस्वतंत्रःपूर्णसद्गुणः ॥इतिश्रुत्युपपत्तिभ्यांपादेऽस्मिन्प्रभुणोदि
तम् ॥ १०३ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेद्वि
तीयाध्यायस्यतृतीयःपादः ॥ २ ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
॥ श्रीगुरुभ्योनमः ॥ ॥ श्रुत्यर्थःश्रुतियुक्तिभ्यांविरुद्धइवदृश्यते ॥ यत्रतन्निर्णयंदेवाःसुविशि
ष्टोपपत्तिभिः ॥ १ ॥ करोत्यनेनपादेनतत्रस्पष्टार्थवच्छ्रुतिः ॥ विशेषश्रुतिवैरूप्यंमाहात्म्यंव्यक्तस
द्गुणः ॥ २ ॥ इष्टायुक्तिःसमानत्वंकर्तृशक्तिर्विमिश्रिता ॥ युक्तयःपूर्वपक्षेषुसुनिर्णीतास्तुतादृ
शाः ॥ युक्तयोनिर्णयस्यैवस्वयंभगवतोदिताः ॥ ३ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्य
विरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेद्वितीयाध्यायस्यचतुर्थःपादःसमाप्तः ॥ २ ॥ ४ ॥ समाप्तोय
मध्यायोद्वितीयः ॥ २ ॥
श्रीलक्ष्मीवेंकटेशायनमः ॥ ॥ स्वाभाविकान्यथानामासद्भावोन्यथोक्तयः ॥ अविशेषविशे

शौचसहभावोविमिश्रता ॥ १ ॥ विरुद्धोक्तिःसहस्थानंवैय्यर्थ्यंचान्यथागतिः ॥ युक्तयःपूर्वपक्ष
स्यगुणाधिक्यार्थतोभवौ ॥ २ ॥ उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपतः ॥ योग्यताबलवत्त्वंच
विभागःकारणाभवः ॥ ३ ॥ कॢप्तिरन्यागतिश्चैवसिद्धांतस्यैवसाधकाः ॥ बीजपूरुषयोनीनांसं
गतिर्नियमोज्झितिम् ॥ अथशब्देनभगवानाहकारणतश्चताम् ॥ ४ ॥ इतिश्रीमदानंदतीर्थभग
वत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेतृतीयाध्यायस्यप्रथमपादः ॥ ३ ॥ १ ॥
श्रीहरयेनमः ॥ ॥ पश्चाददृष्टिविज्ञानकालदुःखपृथग्भवाः ॥ स्थानभेदोविरुद्धत्वंन्यायसाम्यं
सतोभवः ॥ १ ॥ गुणसाम्यप्रयोगश्चतर्कबाधोविलोमता ॥ नानाभावप्रलोभश्चयुक्तयःपूर्वपक्ष
गाः ॥ २ ॥ अशक्यकर्तृकाःशक्तिःस्वतोबोधस्तदेवच ॥ अमानकॢप्तिसन्मानव्यवस्थात्वल्पताभ
वाः ॥ ३ ॥ विशेषदृष्टिवाक्येचपुंशक्तिःश्रुनिदर्शनम् ॥ अलौकिकत्वमाधिक्यंस्वातंत्र्यंनिर्णय
प्रभाः ॥ ४ ॥ वासनाःसर्ववस्तूनामनाद्यनुभवागताः ॥ संत्येवाशेषजीवानामनादिमनसि
स्थिताः ॥ ५ ॥ त्रिगुणात्मकंमनोऽस्त्येवयावन्मुक्तिसदातनम् ॥ तत्रैवाशेषसंस्काराःसंचीयंते
सदैवच ॥ ६ ॥ सूक्ष्मत्वेनलयेसच्चप्राक्तैरुपचीयते ॥ सृष्टिकालेयदातत्कृतःसंसारसंस्थितिः
॥ ७ ॥ संस्कारैर्भगवानेवसृष्ट्वानानाविधंजगत् ॥ स्वप्नकालेदर्शयतिभ्रांतिर्जाग्रत्वमेवहि ॥ ८ ॥
अदृष्टेचाश्रुतेभावेनभावउपजायते ॥ अदृष्टादश्रुताद्भावान्नभावउपजायते ॥ ९ ॥ इतिश्रुति
पुराणोक्तिरनादित्वात्तुयुज्यते ॥ कदाचिद्दर्शनायोग्यंयत्तत्रापिविभागतः ॥ १० ॥ दृष्टंसमा
धिकरणंदृश्यतेऽत्रसचभ्रमः ॥ वासनामात्रमूलत्वाज्जाग्रद्वत्स्पष्टतानच ॥११॥ भेदोभेदोऽथवाहं

द्गमितिप्रश्नोनयुज्यते ॥ द्रष्टुःस्वप्नस्यद्रष्टृत्वाच्छेदस्यैवाखिलैर्जनैः ॥ १२ ॥ प्रश्नदोषाहिचत्वारः
स्वव्याहतिरसंगतिः ॥ सिद्धार्थताचवैफल्यंनतैःस्यात्तत्त्वनिर्णयः ॥१३ ॥ तत्त्वनिर्णयवैलोम्यंस्या
द्वादेऽपिहिनिग्रहः ॥ उद्भावनीयमेवस्यान्नकथावसितिर्भवेत् ॥१४॥ विजिगीषुकथायांतुकथाव
सितिकारणम् ॥ परिहारेऽपिसिद्धत्वंदूषणंप्रतिवादिनः ॥ १५ ॥ प्रतिज्ञायांतदन्यस्यसिद्धतैव
हिसाधिका ॥ आश्रयव्याश्रयासिद्धीसाध्यासिद्धिश्चदूषणम् ॥ १६ ॥ केषांचिन्नचतेदोषाव्या
सौसत्यांकथंचन ॥ दोषोव्याहतिरेवाऽस्तिनृश्रृंगास्तित्वसाधने ॥ १७॥ यत्रव्याहतानास्ति
कोऽतिसंगोऽस्तिसाधने ॥ प्रत्यक्षागममूलास्तुन्यायाःसर्वेभवंतिहि॥१८॥ न्यायाभासाअमूलाः
स्युर्न्यायस्यान्यस्यतोपुनः ॥ अदृष्टेव्यभिचारेतुसाधकंतदितिस्फुटम् ॥ १९ ॥ ज्ञायतेसाक्षि
णैवाद्धामानबाधेनतद्भवेत् ॥ यत्साक्षिणैवमानत्वंमानानामवसीयते ॥ २० ॥ अमानस्यतुमान
त्वंमानसत्वाच्चलंभवेत् ॥ उत्सर्गतोपियत्प्राप्तमपवादविवर्जितम् ॥ २१ ॥ व्यभिचार्यपवादेन
मानमेवभविष्यति ॥ अतोहिभोजनादीनामिष्टसाधनतानुमा ॥ २२ ॥ मानंव्यवहृतौनित्यंव्य
भिचारोहितत्रच ॥ व्याप्तत्वेव्याश्रयत्वंतुकथमेवहिदूषणम् ॥ २३ ॥ रोहिण्युदयआसन्नःकृत्ति
काभ्युदितायतः ॥ इत्युक्तेसाधनंनोकिंनह्याज्ञैवात्रसाधिका ॥ २४ ॥ अन्यत्सदसतोर्विश्वमिति
चव्याहतेरमा ॥ असिद्धसाधनेदोषःकोव्याप्तिर्यदिविद्यते ॥ २५ ॥ व्याप्तिश्चव्यतिरेकेणतत्रतै
श्चावगम्यते ॥ अप्रसिद्धस्यसाध्यस्यसाधकत्वंयदेष्यते॥ २६ ॥ लिंगस्योक्तौविशेषोऽयंकेनमाने
नगम्यते ॥ साधनंपरमाणवादेर्यदासिद्धस्यचेष्यते॥२७॥ यथानुभवमेवैतन्नांगीकार्यंकुतस्तदा॥

यत्रनातिप्रसंगोऽस्तिमानंनचविपर्यये ॥ २८ ॥ क्लिष्टकल्पनयैवात्रसाध्यमित्यतिदुर्वचः ॥ परिशेषोमिथःसिद्धिश्चक्रकस्वाश्रयादयः ॥ २९ ॥ असिद्धसाधकत्वेनपंचावयवितांविना ॥ अंगीकार्यासमस्तैस्तन्नियमःकिंनिबंधनः ॥ ३० ॥ सिद्धसाधनतायांचनकथावसितिर्भवेत् ॥ व्यभिचारोहेत्वसिद्धिरेकपक्षेऽपिदूषणम्॥३१॥ साध्यसाधनवैकल्यंदृष्टांतस्यविशेषणे ॥ वैध्यर्थ्यमेकासिद्धौचविशिष्टिसिद्धिरेवहि ॥३२॥ अप्रयोजनतातत्रप्रथमप्रश्नदूषणम् ॥ सिद्धप्रश्नादिकंयत्तदाधिक्यांतर्गतंभवेत् ॥ ३३ ॥ अर्थापत्त्युपमाभावाअनुमांतर्गताःक्वचित् ॥ प्रत्यक्षांतर्गतोभावोदुःखादेर्नियमेनच॥३४॥ अन्यत्रझटितिप्राप्ताःप्रारंभाद्याश्चयुक्तयः ॥ आगमार्थावसित्यर्थाःनियतव्यासयोऽखिलाः ॥ ३५॥ वाक्यंप्रकरणंस्थानंसमाख्याचतथाविधाः ॥ कुरुपांडववत्तेषामुपपत्तेःपृथग्वचः ॥ ३६ ॥ स्वन्यायैःसाधनंकार्यंपरन्यायैश्चदूषणम् ॥ स्वन्यायैर्दूषणंचस्यात्साधितैःप्रतिवादिनः ॥ ३७ ॥ प्रसंगार्थतयाप्रोक्तानसिद्धांतस्यदूषकाः ॥ छलंजातिरितिद्वेधाव्याहत्यंतरमिष्यते ॥३८॥ जातिस्वव्याहतिर्ज्ञेयाछलमर्थांतरोत्तरम् ॥ एवंसंशोधितन्यायसदागमविरोधतः ॥३९॥ नानिर्वाच्यमिहप्रोक्तंमायामात्रपदेनहि ॥ विलक्षणंसदसतोरितिहिव्याहतंस्वतः ॥४०॥ प्रतियोगित्वमप्यस्यब्रह्मणोऽगीकृतंभवेत् ॥ मिथ्याचेत्प्रतियोगित्वंवैलक्षण्यंततोनहि ॥ ४१ ॥ अविलक्षणत्वंसत्यंस्यान्मिथ्यात्वंब्रह्मणस्ततः ॥ अनिर्वाच्यस्यसत्त्वंवायदिधर्मानकेचन ॥४२॥ ब्रह्मणोनैवजिज्ञास्यंजिज्ञासाधर्मनिर्णयः ॥ इदमित्थमितिज्ञानंजिज्ञासायाःप्रयोजनम् ॥४३ ॥ इत्थंभावोहिधर्मोऽस्यनचेन्नप्रतियोगिता ॥ इत्थंभावात्मकान्धर्मानाहुश्चश्रुतयोऽखिलाः॥४४॥

अदृश्यत्वादयोऽप्यस्यगुणाहिप्रभुणोदिताः ॥ यदिस्युस्तादृशाधर्माःसर्वज्ञत्वादयोनकिम्॥४५॥
अन्यापेक्षायदिस्युस्तेसत्त्वैवंदेशकालगा ॥ देशकालानपेक्षाहिनसत्ताकाऽपिदृश्यते॥ ४६ ॥ सर्व
धर्मोज्झितस्यास्यकिंशास्त्रेणाधिगम्यते ॥ मिथ्याधर्मविधातुश्चवेदस्यैवप्रमाणता ॥ ४७ ॥
अप्राप्तांभ्रांतिमापाद्यकिंवेदोमानतांव्रजेत् ॥ नहिवेदंविनाब्रह्मवेद्यंधर्माश्चतद्गताः ॥ ४८ ॥
वेदवेद्यस्यामिथ्यात्वंयदिनैक्यस्यतत्कथम् ॥ धर्मारोपोपिसामान्यधर्मादीनांहिदर्शने ॥ ४९ ॥
इदंतदादिधर्मत्वधर्मोऽन्यःकल्प्यतेऽत्रहि॥ सर्वधर्मविहीनस्यधर्मारोपःक्वदृश्यते ॥ ५० ॥ तदर्थं
यदिधर्माणामारोपःसानवस्थितिः ॥ ईशतज्ज्ञानवेदाक्षजानुमामातृपूर्विणः ॥ ५१ ॥ भ्रांतिर्वि
श्वस्ययेनैवमानाभासेनकल्प्यते ॥ तन्मात्रस्यान्यथाभावेकिंनस्याद्विश्वसत्यता ॥ ५२ ॥ ये
नेदंकल्प्यतेभ्रांतंभ्रांतिस्तस्यैवकिंनसा ॥ भ्रांतत्वेतस्यविश्वारेरीशाद्यभ्रांतमेवहि ॥ ५३ ॥ भ
वेयुर्भ्रांतयोनॄणांनैवेशादेःकथंचन ॥ सत्यत्वमक्षजप्राप्तंयदिभ्रांतमितीष्यते ॥ ५४ ॥ प्रामाण्य
मागमस्यापिप्रत्यक्षादन्यतःकुतः ॥ साक्षिप्रत्यक्षतोत्वेवंमानानांमानतेयते ॥ ५५॥ साक्षिणःस्व
प्रकाशत्वमनवस्थाततोनहि ॥ तत्कालिकंप्रमाणत्वमक्षजस्ययदाभवेत् ॥ ५६ ॥ ऐक्यागम
स्यकिंनस्यात्तस्याप्येतादृशंयदि ॥ ऐक्यप्रमाणमिथ्यात्वंयदाविश्वस्यसत्यता ॥ ५७॥ ऐक्यवा
क्यस्यमानत्वंयद्यबाध्यमितीष्यते ॥ अक्षजस्यापिमानत्वंनबाध्यंकिमितीष्यते ॥ ५८ ॥ अद्वैत
हानिसामान्यान्नविशेषश्चकश्चन ॥ यदिस्वतस्त्वंप्रामाण्येविश्वसत्ताकथंनयेत् ॥ ५९ ॥ प्रामा
ण्यस्यचमर्यादाकालतोव्याहताभवेत् ॥कालांतरेप्यमानंचेदिदानींमानताकुतः ॥६०॥मिथ्यात्व

मानंमोक्षेऽपिमानंकिंनेतिभण्यताम् ॥ मानत्वेद्वैतहानिःस्यादमानत्वेप्यमोक्षता॥६१॥ विश्वस्य
पुनरापत्तिर्मिथ्यामानंयदानुमा ॥ अस्तिचेन्मुक्त्यवस्थाचद्वैतापत्तिरतोऽन्यथा ॥६२ ॥ अमुक्त
त्वंतथाकालेकालाधीनाहिमुक्तता ॥ कालएवागमोग्राह्यमुक्तिकालनिवर्तने ॥६३ ॥ मुक्तेरपिनि
वृत्तिःस्यात्संसारित्वमतोभवेत् ॥ क्वचप्रत्यक्षतःप्राप्तमनुमागमबाधितम् ॥ ६४ ॥ देहात्मत्वंयदि
नतत्प्राप्तंप्रत्यक्षतःक्वचित् ॥ ममदेहइतिह्येवनदेहोऽहमितिप्रमा ॥ ६५ ॥ उपचारश्चकृष्णोऽ
हमितिकर्दमलेपने ॥ वस्त्रस्ययद्वदेवंस्याद्युपाधिकृतंतदा ॥ ६६ ॥ स्वतःशुक्लत्ववत्कार्ष्ण्यं
नममेतिप्रतीयते ॥ कथंभेदोचदेहादेरात्मनोनप्रतीयते ॥ ६७ ॥ जातमात्रामृगागावोहस्तिनःप
क्षिणोझषाः ॥ भयाभयस्वभोगादौकारणानिविजानते ॥ ६८ ॥ अस्मृतौपूर्वदेहस्यविज्ञानंत
त्कथंभवेत् ॥ अन्वयव्यतिरेकादेरनुसंधानविस्मृतौ ॥ ६९ ॥ यदादेहांतरज्ञानंदेहैक्यावसितिः
कुतः ॥ व्यासत्वादात्मनोदेहेव्यवहारेष्वपाटवात् ॥ ७० ॥ भेदज्ञानेऽपिचांगारवह्निवत्स्वाविविक्त
वत् ॥ भवंतिव्यवहाराश्चनहिप्रत्यक्षगानपि ॥ ७१ ॥ अर्थान्यथानुभवतःप्रतिपादयितुंक्षमा ॥ लो
कास्ततोहिप्रत्यक्षसिद्धंनान्येनकेनचित् ॥ ७२॥ शक्यंवारयितुंकापितच्चेन्नोत्तरगोचरम् ॥ कथमे
वोत्तरःकालतद्वोमोक्षश्चगम्यते ॥ ७३ ॥ आगमोऽपिहिसामान्येसिद्धेप्रत्यक्षतःपुनः ॥ विशेषं
गमयेदेकःकथंशक्तिग्रहोऽन्यथा॥७४॥अतीतानागतार्थेषुजातेशक्तिग्रहेऽखिलम्॥ विशेषंज्ञापये
द्वाक्यंनतदज्ञातशक्तिके ॥ ७५ ॥ शक्तिश्चेद्वर्तमानेस्यान्नातीतानागतंवदेत् ॥ यदिशक्तिग्रहोऽ
न्यत्रकथंसस्यात्तदग्रहे ॥ ७६ ॥ सामान्यंदृष्टमेवासावन्यत्रगमयेद्यदि ॥ सामान्यवर्जितंव

स्तुस्वरूपंगमयेत्कथम् ॥ ७७ ॥ नस्वरूपत्वसामान्यंकेनाप्यंगीकृतंक्वचित् ॥ स्वरूपंचेदनुगतं
व्यावृत्तंतत्रकिंभवेत् ॥ ७८ ॥ सर्वानुगतधर्माणामंतेहिस्वत्वमिष्यते ॥ किंव्यावृत्तमितिप्रश्नेस्व
रूपमितिकेवलम् ॥७९॥ स्यादुत्तरंततोऽन्यच्चेत्तदेवस्वयमेवनः ॥ एवंव्यावृत्तरूपेऽपियदाशक्ति
ग्रहोभवेत् ॥ ८० ॥ तस्यसामान्यतोज्ञानंविनासचभवेत्कुतः ॥ अतोविशेषसामान्यरूपंसर्वम
पीष्यते ॥ ८१ ॥ व्यावृत्तंयच्चसामान्यंतदेवस्याद्विशेषतः ॥ नचैकधर्मतातेनपदार्थानांपरस्परम्
॥ ८२ ॥ धर्माणांभेददृष्टचैवतत्सादृश्यस्यदर्शनात् ॥ अतःसर्वेपदार्थाश्चसामान्यात्साक्षिगोच
राः ॥ ८३ ॥ सर्वमित्येवविज्ञानंसर्वेषांकथमन्यथा ॥ किंचित्सादृश्यविज्ञानादखिलस्यापि
वस्तुनः ॥ ८४ ॥ शब्दशक्तिग्रहश्चस्यात्तत्तत्सादृश्यमानतः ॥ प्रत्यक्षंमानसंचैवयदातीतार्थ
गोचरम् ॥ ८५ ॥ तदास्मृतिप्रमाणत्वमतीतत्वविशेषितम् ॥ आधिक्यमनुभूतात्तुयदातीत
त्वमिष्यते ॥ ८६ ॥ मानताचकथंनस्यात्स्मृतेर्बाधश्चनात्रहि ॥ मानत्वंप्रत्यभिज्ञायाअपि
सर्वानुभूतिगम् ॥ ८७ ॥ अतीतवर्तमानत्वधर्मिणीसाचदृश्यते ॥ नचसास्मृतिमात्रार्था
तदिदंत्वग्रहैकतः ॥ ८८ ॥ अतोनवर्तमानैकनियमःस्याद्ग्रहेऽक्षजे ॥ नचप्रमाणतोऽन्यास्या
त्प्रमितिर्नामकुत्रचित् ॥ ८९ ॥ मानाभावाद्गौरवाच्चकल्पनायाःकिमेतया ॥ मयैतज्ज्ञातमिति
तुसाक्षिगंज्ञानगोचरम् ॥ ९० ॥ ज्ञानमेवततोज्ञानप्रमितिर्नामदृश्यते ॥ मानमातृप्रमेयानांत
दुच्छित्तिर्नहिक्वचित् ॥ ९१ ॥ स्वमानामपिचैतेषांनबाधोदृश्यतेक्वचित् ॥ जाग्रत्स्वमात्रमत्रैक
मन्यथादृश्यतेस्फुटम् ॥ ९२ ॥ अतोमिथ्यानचस्वमोजाग्रद्वज्जाग्रदेवच ॥ आत्मवत्क्वचिदात्मा

चस्यादेवभ्रमगोचरः ॥ ९३ ॥ एतावतानमिथ्याऽसौस्वप्नेजागरितेतथा ॥यद्यात्मन्यन्यथादृश्यं
भ्रांतमत्रापितद्भवेत् ॥ ९४ ॥ अबाधितानुवृत्तेश्चस्वप्नादेर्भ्रांतिताकुतः ॥ नचकाचित्प्रमावि
श्वभ्रांतत्वेसर्वमेवच ॥ ९५ ॥ अभ्रांतत्वेप्रमाणंतुकथंतद्भ्रांतताभवेत् ॥ किंचभ्रातत्ववादीसः
भ्रांतत्वंस्वमतस्यच ॥ ९६ ॥ अंगीकरोतिनियतंतत्रसंप्रतिपन्नता ॥ वादिनोस्तेनचभ्रांतंवि
श्वमेवभविष्यति ॥ ९७ ॥ भ्रांतत्वंभ्रांतताचेत्स्यात्कथंनाऽभ्रांतिसत्यता ॥ अशेषदोषदुष्टंतन्म
तंहेयंबुभूषुभिः ॥ ९८ ॥ येनस्वमतहेयत्वंस्वयमंगीकृतंसदा ॥ भ्रांतत्वाद्दुर्घटत्वस्यभूषणत्वाच्च
केवलम् ॥ ९९ ॥ उन्मत्तोऽपिकथंतस्यमतंस्वीकर्तुमिच्छति ॥ ईशशक्तेरचिंत्यत्वान्महोन्मत्तैःप्र
वर्तितम् ॥ १०० ॥ अतःप्रज्ञाऽत्रमायोक्ताजैव्युपादानमेवसा ॥ निमित्तमैश्वरीमुख्यानिर्मितं
त्रातमेवच ॥ १ ॥ ताभ्यांसहपृथक्चैवमायामात्रमितीयते ॥ उभाभ्यांमानमैश्वर्यात्रातंसहपृ
थक्कृतः ॥ २ ॥ प्रज्ञात्मकंमनोयेनमनोरूपाश्चवासनाः ॥ धीर्ह्रीर्भीरितिमनोस्त्वेवेत्याहचश्रुतिरंजसा
॥ ३ ॥ चिदचिन्मिश्रमेवैतन्मनोयावच्चसंसृतिः ॥ तेनावस्थाइमाःसर्वाःजीवःपश्यतिसर्वदा ॥४॥
मनोविकाराविषयाःस्वामायद्वाह्यवन्नते ॥ स्थूलाभवंत्यतस्तेषांस्पष्टताननथाक्वचित् ॥ ५ ॥ क्व
चित्स्पष्टाअपिस्पष्टेवासनामानसीचसा ॥ ईशेच्छयांतर्दधतिव्यज्यतेचपुनस्तथा ॥६॥ सृष्ट्वैववा
सनाभिश्चप्रपंचंस्वाप्नमीश्वरः ॥ वासनामात्रतांतस्यनीत्वांतर्धापयत्यजः ॥७॥ सुषुप्तिबोधमोहां
श्चस्ववशस्तद्वशंसदा ॥ जीवंनयतिदेवेशोनान्यःकर्तास्तिकश्चन ॥८॥नस्थानभेदतोऽप्यस्यभेदःक
श्चित्परेशितुः॥सर्वत्राशेषदोषोज्झःपूर्णकल्याणचिद्गुणः ॥९॥ तद्विरुद्धंतुयत्तत्रमानंनैवभवेत्क्वचि

त्॥महातात्पर्यरोधेनकथंतन्मानमत्रतु॥१०॥दुःखाप्ययसुखावाप्तिहेतुत्वेनैववेदवाक् ॥ भवेन्मानं
नदीशानात्प्रसन्नादेवनान्यथा ॥११॥प्रसन्नतागुणोत्कर्षज्ञानादेवहिकेवलम् ॥निर्दोषतापरिज्ञाना
दऽपिनान्येनकेनचित्॥१२॥योमामशेषदोषोज्झंगुणसर्वस्वबृंहितम्॥ जानात्यस्मैप्रसन्नोऽहंदद्यां
मुक्तिंचनान्यथा ॥ १३ ॥ योमामशेषाभ्यधिकंविजानातिसएवमाम् ॥ विजानात्यखिलांस्तस्य
दद्यात्कामान्परंपदम् ॥ १४ ॥ योमामेवमसंमूढःकिंमांनिंदंतिशत्रवः ॥ इत्यादिवेदस्मृतिगवा
क्यैरेवावसीयते ॥ १५ ॥ लोकतश्चप्रसादेनमुक्तिःसगुणवेदनात् ॥ महातात्पर्यमुख्यस्यविरो
धादतएवहि ॥ १६ ॥ दोषित्वनिर्गुणत्वाल्पगुणत्वादिकथंचन ॥ नार्थश्रुतिपुराणादेस्तद्विरुद्धोऽ
खिलस्यच ॥ १७ ॥ अर्थःस्वयंविनिर्णीतोवासुदेवेनसादरम् ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंमयाऽ
नघ ॥१८॥ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत ॥ इत्यतोखिलसच्छास्त्रविरुद्धत्वेननानु
मा ॥ १९ ॥ वर्तनेतत्रतेनेशोनिर्णीतोऽखिलसद्गुणः ॥ नचचित्त्वादभिन्नत्वंजीवस्येशवदाप्यते
॥२०॥यतआभासनामेवश्रुतिरस्यवदत्यलम्॥यथैषापुरुषेच्छायाएतस्मिन्नेतदाततम्॥२१॥अ०
छायायथापुंसदृशीपुमधीनाचदृश्यते ॥ एवमेवात्मकाःसर्वेब्रह्माद्याःपरमात्मनः ॥ २२ ॥ सत्ताप्र
तीतिकार्येषुपुमधीनोयथेयते ॥ आभासएवंपुरुषामुक्ताश्चपरमात्मनः ॥ २३ ॥ छायाविष्णो
रमातस्याश्छायाधाताविशेषकौ ॥ तस्येंद्रकामौचतयोस्तयोरन्येऽखिलाअपि ॥२४॥ हरब्रह्मास्य
गीस्तस्याविशेषावींद्रएतयोः ॥ मारश्चाभासकाःसर्वेएतयोस्तदधीनतः ॥ २५ ॥ सर्वेऽल्पश
क्तयश्चैवपूर्णशक्तिःपरोहरिः ॥ चेतनत्वेऽपिभिन्नास्तेतस्मादेतेनसर्वदा ॥ २६ ॥ इत्यादिश्रुति

वाक्येभ्योज्ञायतेभेदएवहि ॥ आभासत्वंहिनिर्णीतंजीवस्यपरमात्मनः ॥ २७ ॥ तन्नयु
क्तंयदाभासउपाध्यायतईयते ॥ उपाध्यायत्तताभावादाभासत्वविरोधतः ॥ २८ ॥ चेतन
त्वेनचांशत्वात्समुदायैक्यमापतेत् ॥ अतःपृथक्त्वमुदितंसमुदायांशयोर्भवेत् ॥ २९ ॥ ईशा
ख्यासमुदायेस्यादीशरूपेष्विवोदिता ॥ अतोदेहाद्युपाधीनामपायेसमताभवेत् ॥ १३० ॥
ईशरूपैरथाभासामुख्यतःसूर्यकादिवत् ॥ यदातदोपाध्यायत्तरूपाणांनाशिताभवेत् ॥ ३१ ॥
इत्याशंकानिवृत्त्यर्थमाहवेदाधिपःप्रभुः ॥ अतएवोपमेत्येवचान्याभासविशेषिताम् ॥ ३२ ॥
यदुक्तंतदधीनत्वंसर्वावस्थास्वशेषतः ॥ जीवस्यसदृशत्वंचचित्त्वमात्रंनचापरम् ॥ ३३ ॥ ताव
न्मात्रेणचाभासोरूपमेषांचिदात्मनाम् ॥ नोपाध्यधीनतायैश्वनातिसाम्यंनिदर्शने ॥ ३४ ॥
किंचित्सुखादिसादृश्यमपीशेनासुरानृते ॥ ततआभासतेनित्यंतद्वदाभासतेऽपिच ॥ ३५ ॥
भानमस्तित्वमपिचैवासमंताद्यतस्ततः ॥ जीवआभासउद्दिष्टःसदैवपरमात्मनः ॥ ३६ ॥ नजा
त्यतसूर्यादिप्रतिबिंबोपमत्वतः ॥ तदधीनत्वमेवेतिकिंचित्सादृश्यमेवच ॥ ३७ ॥ संप्रका
शयतःसूत्रगतावखिलमानतः ॥ जीवेशभेददृष्टैवसमुदायैकताकुतः ॥ ३८ ॥ अशेषदोषराहित्यं
सर्वशक्तित्वतोहरेः ॥ सर्वोपेतेतिकथितमतएैक्यंकदोषिणा ॥ ३९ ॥ अशेषशक्तियुक्तश्चेत्स्वातं
त्र्याद्दोषवान्कथम् ॥ अनुसंधानरहितंसमुदायैक्यमेवचेत् ॥ ४० ॥ चेतनेष्वस्तुतन्नाममात्रमेवय
तस्ततः ॥ मुक्तौस्यादनुसंधानमित्यपिस्यात्सुदुष्करम् ॥ ४१ ॥ सर्वज्ञएकतांनानुसंधत्तेनैवसाय
तः ॥ पश्चात्स्यादनुसंधानंचेन्मिथ्याज्ञानिताभवेत् ॥ ४२ ॥ विद्यमानानुसंधानंनचेदज्ञत्वमा

पतेत् ॥ असदैक्यंभवेत्पश्चाद्यदिस्यात्समोरसः ॥ ४३ ॥ समुदायैक्यमेतस्माद्दूरतोपाकृतंस
दा ॥ अतोऽशेषगुणोन्नद्धंनिर्दोषंयावदेवहि ॥४४॥ तावदेवेश्वरोनामतत्रभेदोऽपिनक्वचित् ॥
नेहनानास्तिकिमपिहरयोऽयमर्यंहिसः ॥ ४५ ॥ इत्यादिश्रुतिमानेनजीवांशाःसर्वएवच ॥ निय
मेनानुसंधानवंतोयद्येकतास्वतः ॥४६॥ अंशिनोऽशेषसंधानमत्यल्पस्यापिविद्यते ॥ भुविजाते
नचांशेनसुखदुःखादितद्गतम् ॥ ४७ ॥ अनुभूयतेविशेषस्तुकश्चिदीशकृतोभवेत् ॥ ईशः
स्याचिंत्यशक्तित्वान्नाशंक्यंकापिविद्यते ॥ ४८ ॥ सेशतानुपपन्नैवयदिजीवैकताऽस्यहि ॥
अनीशस्यैकतेत्येवविरुद्धंसर्वमानतः ॥ ४९ ॥ ईशत्वेनैवविज्ञातमनीशत्वेनचेच्छ्रुतिः ॥ अनीश
त्वेनविज्ञातमीशत्वेनाथवादिशेत् ॥ ५० ॥ उपजीव्यविरोधेननैवमानत्वमेष्यति ॥ अतएवे
शताऽसिद्धेर्नकिंचिच्छक्यमस्यच॥५१॥ ईशत्वेऽनीशभेदेनश्रुत्यासम्यक्प्रकाशिते ॥ अयुक्तम
पिचान्यत्रयुक्तंभवतितद्बलात् ॥५२॥ अतोऽन्यत्रापियद्दृष्टंतदीशेनैवकल्प्यते ॥ श्रुत्याभासाप्र
मपिनहीशत्वपरिपंथियत् ॥५३॥ ईशोऽनीशोजगन्मिथ्यादुःखीमुक्तोभिदानहि ॥ इतिप्रतिज्ञा
व्याघातःसर्वदोषाधिकाधिकः ॥ ५४ ॥ इतिहिब्रह्मतर्कोक्तिरतिहेयमतोऽखिलैः ॥ बुभूषुभिर्म
तमिदंजीवेशाभेदवादिनः ॥ ५५ ॥ नायुक्तमीशितुःकिंचिदीशत्वस्यविरोधियत् ॥ यदीशत्व
विरोधिस्यात्तदेवायुक्तमंजसा ॥५६॥ ईशत्वस्याविरोधेनयोजयित्वाऽखिलाःप्रमाः॥सिद्धेशत्वेन
चायुक्तमपिहीशेनयोजयेत् ॥ ५७ ॥ मानतःप्राप्तमखिलंनामानंयोजयेत्क्वचित् ॥ इतिहिब्रह्म
तर्कोक्तिरतोयुक्तमिहोदितम् ॥ ५८ ॥ अ०॥ सचाप्राकृतरूपत्वादरूपःस्वगुणात्मकम् ॥ रू

पमस्यशिरःपाणिपादाद्यात्मकमिष्यते ॥ ५९ ॥ अतोनानित्यतानैवश्रुतिद्वयविरोधिता ॥ यथा
हितैजसस्यैवप्रकाशस्योज्झितावपि ॥६०॥ आत्मैवज्योतिरित्याहजीवस्येशंश्रुतिस्तथा ॥ तद्भ
क्तितारतम्येनतारतम्यंविमुक्तिगम् ॥ ६१ ॥ ब्रह्मादीनांचसर्वेषामानंदादेर्यथाक्रमम् ॥ प्रतिबिंब
वदप्येषामानंदोऽन्यगुणोयथा ॥६२॥ नारायणगुणाधीनश्चात्यल्पस्तदपेक्षया ॥ यस्माद्भिन्नश्च
सततमन्यज्ज्ञानंपरस्यच ॥६३॥ अन्यज्ज्ञानंतुजीवानामन्यआनंदईशता ॥ मुख्येशतापरेशस्य
गौणीजीवस्यसायतः ॥६४॥ इतिश्रुतेःसृष्टिनाशौतदधीनावितीरिते ॥ स्वभावत्वात्स्थितेनैतदपे
क्षेतिनयुज्यते ॥ ६५ ॥ यतःस्वभावोऽप्यखिलईशायत्तोऽखिलस्यच ॥ अव्यक्तोऽपिस्वश
क्त्यैवभक्तानांदृश्यतेहरिः ॥ ६६ ॥ तदभिन्नागुणानित्यमपिसर्वेपिशेषतः ॥ गुणत्वेनगुणित्वे
नभोक्तृभोग्यतयास्थिताः ॥ ६७ ॥ विशेषात्मतयातेषांनित्यशक्त्यात्मनातथा ॥ नित्यंस्थि
तेर्नधर्माणांक्रियादीनामनित्यता ॥ ६८ ॥ नविशेषात्मताचेयमनित्याशक्तिरूपता ॥ सैव
यत्सविशेषास्याद्विशेषोऽन्योनचाप्ययम् ॥ ६९ ॥ स्वस्यनिर्वाहताहेतोस्तथापिस्याद्विशेषता ॥
विशेषत्वेनविज्ञातेप्रमाणैरखिलैरपि ॥ ७० ॥ ससर्जसंजहारेतिविशेषोह्यवगम्यते ॥
श्रुत्यैवससएवेतितदभेदश्चगम्यते ॥ ७१ ॥ भेदोयदिविशेषस्यसभेदोभेदिनाकथम् ॥ भि
न्नश्चेदनवस्थास्यादभिन्नश्चेत्पुरानकिम् ॥ ७२ ॥ विशेषोभिन्नएवेतितेननाभ्युपगम्यते ॥
अभिन्नोनिर्विशेषश्चेद्भेदस्तद्भेदताकुतः ॥७३ ॥ अनेनानेनभिन्नोऽयमितियत्सविशेषतः ॥ भेद
एवैषबहुधादृश्यतेतत्किमुत्तरम् ॥ ७४ ॥ अभेदभेदयोश्चैवस्वरूपत्वंहिभेदिनः ॥ तयोरप्यविशे

षत्वेपर्यायत्वंहिशब्दयोः ॥ ७५ ॥ अभेदभेदशब्दौचपर्यायावितिकोवदेत् ॥ भेदोऽन्योन्यमभेद
श्वभेदिनाचेद्विशेषिता ॥ ७६ ॥ अविशेषेकथंभेदोभेदैनैकस्तथाभिदा ॥ पुनस्तयोर्विभेदश्चभे
दिमात्रत्वतोभवेत् ॥ ७७ ॥ भेदिनश्चैवभेदस्यविशेषोयदिगम्यते ॥ अभेदाभेदिनश्चैवकिंभेदोऽ
भेदभेदयोः ॥ ७८ ॥ विशेषणैवसर्वत्रयदिव्यवहृतिर्भवेत् ॥ कल्पनागौरवायैवकिंभेदःकल्प्य
तेनदा ॥ ७९ ॥ ऐक्यप्रतीत्यभावेनभेदएवगवाश्वयोः ॥ सएवेतिप्रतीतौहिविशेषोनामभण्यते
॥ ८० ॥ सच्चिदादेरपर्यायसिद्ध्यर्थंमायिनाऽपिहि ॥ अंगीकार्योविशेषोयंयद्यसत्यविशेषणम्
॥ ८१ ॥ पृथक्पृथग्वारयितुंशब्दांतरमितीष्यते ॥ मायाविशेषराहित्यविशेषणविशेषिता
॥८२॥ सत्यस्यापिभवेत्साचतथाचेदनवस्थितिः ॥ यदिसत्याविशेषोननतदुक्तिर्भवेत्तदा ॥८३॥
अलक्ष्यंचेत्तेनलक्ष्यमित्यपिस्याद्विशेषिता ॥ पुनःपुनर्लक्षणायामपिस्यादनवस्थितिः॥८४॥यद्य
भावविशेषित्वंस्यादंगीकृतमेवते ॥ असार्वज्ञ्यादिराहित्यमप्येवंतेभविष्यति ॥ ८५ ॥ तदासार्व
ज्ञ्यमेवस्याद्भावार्थत्वान्नञोर्द्वयोः ॥ यदिनैतादृशंग्राह्यमसुखत्वानिवर्तनात् ॥ ८६ ॥असत्त्वाज्ञा
नतादेश्चस्यादसत्त्वादिकंतदा ॥ अनृतादिविरोधित्वंयद्यस्याऽभ्युपगम्यते ॥ ८७ ॥ अनैश्वर्य
विरोधित्वमप्येवंकिंनिवार्यते ॥ अखंडखंडनादेवविशेषोऽखंडवादिना ॥ ८८ ॥ खंडितेनापिमन
सास्वीकार्योऽनन्यथागतेः ॥ अखंडखंडवादिभ्यांखंडाखंडेनचैवतत् ॥ ८९ ॥ महादरेणशि
रसिविशेषोधार्यएवहि ॥ निदर्शनत्रयेणाऽतोभगवानत्यभिन्नताम् ॥ ९० ॥ गुणानामादरेणा
हृतच्चनाभिहितान्वयः ॥ यदाऽशेषविशेषाणामुक्तिःसामान्यतोभवेत् ॥ ९१ ॥ यदैकेनाप्यु

त्तरेणविशेषावगतिर्भवेत् ॥ यतोऽशेषविशेषाणांवस्तुनास्त्येवचैकता ॥९२॥ अतःसामान्यतो
ज्ञातःपदांतरबलात्पुनः ॥ भवेद्विशेषतोज्ञातस्तेनस्यादन्वितोक्तिता ॥ ९३ ॥ स्वार्थएषा
न्वितोयस्मात्केनचित्तद्विशेषतः ॥ अनेनेतितदुक्त्यैवज्ञायतेऽनुभवेनहि ॥ ९४ ॥ यद्यनन्वित
मेवैतत्पदंस्वार्थंवदेदिह ॥ तथान्यान्यपिसर्वाणिकःकुर्यादन्वयंपुनः ॥ ९५ ॥ व्यापारोनहिश
ब्दस्यपरःस्वार्थप्रकाशनात् ॥ अन्वयस्यकथंज्ञानंशब्दार्थत्वंयदास्यन ॥ ९६ ॥ पुमानप्येकवा
रोक्त्याक्तनक्तयोयदाभवेत् ॥ यदैवानन्वितार्थस्यवचनंतैःपदैर्भवेत् ॥ ९७ ॥ अनन्वितःस्या
च्छब्दार्थोननदर्थोहिसोऽन्वयः ॥ निराकांक्ष्यपदान्येववाक्यमित्युच्यतेबुधैः ॥ ९८ ॥ तत्तदर्था
भिधानेनस्यान्निराकांक्षताचसा ॥ अपूर्तैस्तावदर्थानामाकांक्षापूर्वमिष्यते ॥ ९९ ॥ कर्मकर्तृ
क्रियाणांतुपूर्तौकोऽन्योऽन्वयोभवेत् ॥ अपूर्तिश्चेत्पदैरुक्तैःकिंनृशृंगेणपूर्यते ॥ १०० ॥ व्यापा
रश्चेत्पुनस्तेषामनुक्तावपिकिंनसः ॥ उक्तेबुद्धिस्थताहेतोर्यदिव्यापारइष्यते ॥ १ ॥ बुद्धि
स्थत्वाययत्नंनकथंकुर्युःपुरैवच ॥ पुरुषाधीनतातेषांयदिपश्चाच्चसासमा ॥ २ ॥ पुमा
नेवान्वयायैषांपश्चाद्यदिविचेष्टते ॥ अनन्विताभिधानानांसएवार्थांतरोक्तिषु ॥ ३ ॥ यत
तांशब्दशक्तिश्चेत्तत्रनैवान्वयेकथम् ॥ तत्कल्पनागुरुत्वादिदोषतोऽभिहितोन्वयः ॥ ४ ॥
अनुभूतिविरुद्धश्चत्याज्यएवमनीषिभिः ॥ कर्तृशब्देह्यभिहितेधर्मसामान्यवेदनात् ॥ ५ ॥ वि
शेषधर्ममन्विच्छन्किमित्येवहिपृच्छति ॥ गुणक्रियादिधर्माणांविशेषेकथितेपुनः ॥ ६ ॥ नि
राकांक्षोभवेद्यस्माच्छब्दाअन्वितवाचकाः ॥ अतोऽनंतगुणात्मैवभगवानेकएवतु ॥ ७ ॥ उ

च्यतेसर्वशब्दैश्वतेचाखिलविलक्षणाः ॥ सर्वेसर्वगुणात्मानःसर्वकर्तारएवच ॥ ८ ॥ तथा
पिसविशेषाश्वविद्वद्युत्पत्तितोऽपिच ॥ तैस्तैःशब्दैश्वभण्यंतेयुज्यतेचोपदेशतः ॥ ९ ॥ अ
न्यानंदादिसादृश्यमानुकूल्यादिनापरम् ॥ पूर्णत्वादिमहत्तेषांवैलक्षण्यंश्रुतौश्रुतम् ॥ २१० ॥
पूर्णोऽशेषनियंताचसुखाद्युत्तमएकलः ॥ गुणोरुसमुदायोऽयंवासुदेवःसुनिष्कलः ॥ ११ ॥ वासु
देवःश्रुतिःसैषागुणान्वक्तिहरेःपरान् ॥ सएवाशेषजीवस्थनिःसंख्यानादिकालिकान् ॥ १२ ॥ ध
र्माधर्मान्सदापश्यन्स्वेच्छयाबोधयत्यजः ॥ कांश्चित्तेषांफलंतस्यददातिस्वयमच्युतः ॥ १३ ॥
नतेविशेषंकर्मापिप्रेरणादिकमच्युते ॥ कुर्युःकदाचित्तेनायंस्वतंत्रोऽनुपचारतः ॥ १४ ॥ क
र्माणितानिचपृथक्चेतनान्येवसर्वशः ॥ अचेतनशरीराणिस्वकर्मफलभांजिच ॥ १५ ॥ प्रत्ये
कंतेषुचानंतकर्माण्येवंविधानिच ॥ तानिचैवमितीशस्यनिःसीमाशक्तिरुत्तमा ॥ १६ ॥ एकै
वब्रह्महत्याहिवराहहरिणोदिता ॥ ब्रह्मपारस्तवेनैवनिष्क्रांताराजदेहतः ॥ १७ ॥ स्तोत्रस्यत
स्यमाहात्म्याद्याधत्वंगमितापुनः ॥ प्राप्यज्ञानंपरंचापतथान्यानपिसर्वशः ॥ १८ ॥ अनंतान्यु
दितान्येवंप्रभुणाकपिलेनहि ॥ संसारेपच्यमानानिकर्माण्यपिपृथक्पृथक् ॥ १९ ॥ तस्माद
नंतमाहात्म्यगुणपूगोजनार्दनः ॥ भक्त्यापरमयाराध्यइतिपादार्थईर्यते ॥ २२० ॥ ॥ इतिश्रीम
त्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्यानेश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्य
द्वितीयःपादः ॥ ३ । २ ॥ ७ ॥ ॥ ॥ ॥ ॥
श्रीवेदव्यासायनमः ॥ ॥ वैराग्यतोभक्तिदार्ढ्यंतेनोपासायदाभवेत् ॥ आपरोक्ष्यंतयाविष्णो

रितिपादक्रमोभवेत् ॥ १ ॥ युक्तितोज्ञातवेदार्थोनिरस्यसमयान्परान् ॥ परस्परंविरोधंचप्रणु
द्याऽशेषवाक्यगम् ॥ २ ॥ अध्यात्मप्रवणोभूत्वातस्यसंनिहितत्वतः ॥ बहुयुक्तिविरोधानांभा
नात्तत्सहितश्रुतेः ॥ ३ ॥ विरोधंचनिराकृत्यश्रुतीनांप्राणतत्त्वगान् ॥ परिहृत्यविरोधांश्चतत्प्र
सादानुरंजितः ॥ ४ ॥ देहकर्तृत्वमीशस्यज्ञात्वातत्पितृतास्मृतेः ॥ विशेषस्नेहमापाद्यस्सर्वकर्तृ
त्वतोधिकम् ॥ ५ ॥ निष्पाद्यबहुमानंचतदन्यत्रातिदुःखितः ॥ उत्पाद्यास्तिक्यवैराग्यंतद्गुणाधि
क्यवेदनात् ॥ ६ ॥ सर्वस्यतादृशत्वाच्चदार्ढ्यंभक्तेरवाप्यच ॥ यतेतोपासनायैवविशिष्टाचार्यसं
पदा ॥ ७ ॥ कर्तव्याब्रह्मजिज्ञासेत्युक्तेकिमितिसंशये ॥ अतइत्युदितेऽप्यस्यविशेषानुक्तितः
पुनः ॥ ८ ॥ सृष्टिबंधनमोक्षादिकर्तृत्वस्यश्रुतत्वतः ॥ यतोमोक्षादिदाताऽसावतोजिज्ञास्य
एववा ॥ ९ ॥ इत्याहतत्परंब्रह्मन्यासाख्यंज्ञानरश्मिमत् ॥ येनैवबंधमोक्षःस्यात्सचजिज्ञा
सयोगतः ॥ १० ॥ सुप्रसन्नोभवेदीशोजिज्ञासाऽतोऽस्यमुक्तिदा ॥ मोक्षादिदत्वमीशस्यक
थमेवावगम्यते ॥ ११ ॥ इतिचेच्छास्त्रयोनित्वाच्छास्त्रगम्योहिमोक्षदः ॥ प्रत्यक्षावसिते
भ्यःस्याद्यदिमोक्षःकथंचन ॥ १२ ॥ किमित्यनादिसंसारमग्नाःसर्वाइमाःप्रजाः ॥ यस्मान्निय
मतोदुःखहानिःप्रत्यक्षतोभवेत् ॥ १३ ॥ धावंत्येवतमुद्दिश्यराजाद्यमखिलाःप्रजाः ॥ अनुमाग
म्यतोमोक्षोयदितस्यानुमैवहि ॥१४॥ दृष्टपूरुषवन्मोक्षदातृतांविनिवारयेत् ॥ सच्छास्त्रगम्यए
वैकोमोक्षदोभवतिध्रुवम् ॥१५॥ शास्त्रगम्यश्चनान्योऽस्तिमोक्षदत्वेनकेशवात् ॥ मोक्षदोहिस्वतं
त्रःस्यात्परतंत्रःस्वयंसृतौ ॥ १६ ॥ वर्तमानःकथंशक्तःपरमोक्षायकेवलम् ॥ अन्याश्रयेणयद्येष

दद्यान्मोक्षंसएवहि ॥ १७ ॥ तेनाननुसृतोमोक्षंनदद्यादन्यवाक्यतः ॥ अतस्तदर्थमपिसज्ज्ञेयो
विष्णुर्मुमुक्षुभिः ॥ १८ ॥ यमेवैषइतिश्रुत्यातमेवेतिचसादरम् ॥ शास्त्रयोनित्वमस्यैवज्ञायतेवेद
वादिभिः ॥ १९ ॥ यएनंविदुरमृताइत्युक्तस्तत्समुद्गगः ॥ तदेवब्रह्मपरममितिश्रुत्यावधारितः
॥ २० ॥ यतःप्रसूतेतिततःसृष्टिमाहततोहरिः ॥ शास्त्रयोनिर्नचान्योऽस्तिमुख्यतस्त्वितिगम्यते
॥ २१ ॥ शास्त्रयोनित्वमेतस्यज्ञायतेहिसमन्वयात् ॥ समितिह्युपसर्गेणपरमुख्यार्थतोच्यते ॥ २२ ॥
एवंपरममुख्यार्थोनारायणइतिश्रुतेः ॥ निर्धारणायनाशब्दमितिवेदपतिर्जगौ ॥ २३ ॥ कथंसमन्वयोज्ञे
यःस्वल्पशाखाविदांनृणाम् ॥ वेदाह्यनंताइतिहिश्रुतिराहाप्यनंतताम् ॥ २४ ॥ अनंतवेदनिर्णीतिर्म
हाप्रलयवारिधेः ॥ उत्तारणोमेप्यन्यस्मान्नज्ञेयोऽत्रसमन्वयः ॥ २५ ॥ इत्याशंकापनोदार्थंसआहकरु
णाकरः ॥ अशक्योत्तारणत्वेपिह्यागमोपारवारिधेः ॥ २६ ॥ निर्णीयतेमयैवायंरोमकूपल्योदिता ॥
यद्यप्यशेषवेदार्थोदुर्गमोऽखिलमानवैः ॥ २७ ॥ मज्ज्ञानाव्याक्ताकाशेप्राप्नोतिपरमाणुताम् ॥ इति
प्रकाशयन्विश्वपतिराहप्रमेयनाम् ॥ २८ ॥ निखिलस्यापिवेदस्यगतिसामान्यमंजसा ॥ कोनामग
तिसामान्यमनंतागमसंपदः ॥ २९ ॥ ज्ञानसूर्यमृतेब्रूयात्तमेकंबादरायणम् ॥ अल्पोऽप्यल्पमतिः
शाखाचतुष्टयंचगतंवस्तु ॥ ३० ॥ जानन्ननुमितत्वेनब्रूयात्तस्यप्रसादतः ॥ इतिमुख्यनयाशेषग
तिसामान्यवित्प्रभुः ॥ ३१ ॥ प्रतिजज्ञेदृढंयस्माद्देवानामपिपूर्यते ॥ अतोनिखिलवेदानांसिद्धएव
समन्वयः ॥ ३२ ॥ इतिसुज्ञापितार्थोऽपिपृथक्काहसमन्वयम् ॥ तत्रप्रथमतोऽन्यत्रप्रसिद्धानांसम
न्वयः ॥ ३३ ॥ शब्दानांवाच्यएवात्रमहामल्लेशभंगवत् ॥ इतोऽत्यभ्यधिकत्वेपितुर्यपादोदितस्य

तु ॥ ३४ ॥ महासमन्वयेतस्मिन्नाधिकारोऽखिलस्यहि॥ ब्रह्मैवाधिकृतस्तत्रमुख्यतोऽन्येयथाक्र
मम्॥३५॥दुर्गमत्वाच्चनैवात्रप्राथम्येनोदितोऽजसा ॥ अतोऽन्यत्रप्रसिद्धानांशब्दानांनिर्णयस्यतु
॥ ३६ ॥ प्रवृत्तःप्रथमंदेवस्तत्रानंदादयोगुणाः ॥ ईशस्यैवेतिनिर्णीताःश्रुतियुक्तिसमाश्रयात्
॥ ३७ ॥ देवतांतरगाःसर्वेशब्दवृत्तिनिमित्ततः ॥ विष्णुमेववदत्यद्धातत्संगादुपचारतः ॥ ३८ ॥
अन्यदेवानुवदंतीहविशेषगुणवत्कृतः ॥ विष्णुमेवपरंब्रूयुरेवमन्येप्यशेषतः ॥ ३९ ॥ इत्यन्यत्र
प्रसिद्धोरुशब्दराशेरशेषतः ॥ ज्ञातेसमन्वयेविष्णोर्लिंगैर्ह्येषसमन्वयः ॥ ४० ॥ तेषामन्यगतत्वे
तुनस्यात्सम्यक्समन्वयः ॥ इत्येवाशेषलिंगानांब्रह्मण्येवसमन्वयम् ॥ ४१ ॥ आहोभयगतत्वंच
स्यादतोलिंगशब्दयोः ॥ इतिसंशयनुत्त्यर्थमुभयत्रप्रतीतितः ॥ ४२ ॥ शब्दानांवर्तमानानांस
लिंगानांविशेषतः ॥ समन्वयोहरावेवयन्नैवान्यत्रमुख्यतः ॥ ४३ ॥ शब्दलिंगानिचयतोनैवान्य
त्रस्वतंत्रता ॥ अस्वतंत्रेषुशब्दस्यवृत्तिहेतुर्नमुख्यतः ॥ ४४ ॥ यततोयदधीनास्तेशब्दार्थत्व
मुपागतः ॥ अत्यल्पेनैवशब्दस्यवृत्तिर्हेतुगुणेनतु ॥ ४५ ॥ अयोयथादाहकत्वंसएवेशःस्वतं
त्रगः ॥ मुख्यशब्दार्थइतिहिस्वीकर्तव्योमनीषिभिः ॥ ४६ ॥ इत्याहैवंचशब्दानांनारायणसम
न्वयः ॥ सिद्धेऽप्यशेषशब्दानांनकथंचनयुज्यते ॥४७॥ अन्योवरत्वानुभवीतयोःपूर्वोऽस्तिकेश
वे ॥ द्वितीयोजीवएवास्तिस्वातंत्र्यान्नहिदूषणम् ॥ ४८ ॥ हरेरेवमशेषेणसर्वशब्दसमन्वये ॥
उक्तेविरोधहीनस्यस्यात्समन्वयतायतः ॥ ४९ ॥ अतोऽशेषविरोधानांकृतोंशेननिराकृतिः ॥
समन्वयाविरोधाभ्यांसंजातेवस्तुनिर्णये ॥ ५० ॥ किंमयाकार्यमित्येवस्याद्बुद्धिरधिकारिणः ॥

तत्रभक्तिविधानार्थमभक्तानर्थसंततौ ॥५१॥ उक्तायांभक्तिदार्ढ्यायप्रोक्तेऽशेषगुणोच्चये ॥ वक्त
व्योपासनानित्यंकर्तव्येत्यादरेणहि ॥ ५२ ॥ सोपासनाचद्विविधाशास्त्राभ्यासस्वरूपिणी ॥
ध्यानरूपापराचैवतदंगंधारणादिकम् ॥ ५३ ॥ तथोभयात्मकंचैवपादेऽस्मिन्बादरायणः ॥ आ
ह्रोपासनमद्यैवविस्तराच्छ्रुतिपूर्वकम् ॥ ५४ ॥ पृथग्दृष्टिरशक्यत्वमनिर्णीतिःसमुच्चयः ॥ वि
शेषदर्शनंकार्येल्लोपोनानोक्तिराशुता ॥ ५५ ॥ विभ्रमोपाकृतिर्लिंगमनवस्थाविशेषिता ॥ अप्र
योजनताचातिप्रसंगोदूरसंश्रयः॥ ५६ ॥ विशिष्टकारणंचेष्टादृष्टवैरूप्यमुन्नतिम् ॥ अनुक्तिरप्र
यत्नत्वंदृढबंधपराभवौ ॥ ५७ ॥ पुंसाम्यंप्राप्तसंत्यागंकारणानिर्णयोभ्रमः ॥ विशेषदर्शितालोपो
गुणसाम्यंपृथक्दृशिम् ॥५८॥ अगम्यवर्त्मसंधानमिष्टंफलमकल्पना ॥ शुद्धवैरूप्यमंगत्वमवि
शेषदृशिःक्रिया ॥ ५९ ॥ युक्तयःपूर्वपक्षस्यसुज्ञेयत्वंविधिःक्रिया ॥ माहात्म्यमल्पशक्तित्वंयथा
योग्यफलंभवः ॥ ६० ॥ फलसाम्यंविशेषश्चगुणाधिक्यंप्रधानता ॥ यथाशक्तिक्रियासंधिःप्र
माणबलभानतिः ॥ ६१ ॥ कारणंकार्यवैशेष्यंस्वभावोवस्तुदूषणम् ॥ प्रतिक्रियाविरोधश्चाप्र
तिसंधिरनूनता ॥६२॥ संस्कारपाटवंस्वेच्छानियतिर्वस्तुवैभवम् ॥ विशेषोक्तिरमानत्वंप्राधान्यमभी
तिरागमः ॥ ६३ ॥ सुस्थिरत्वंकृतज्ञप्तिरनादिगुणविस्तरः ॥ साधनोत्तमतानानादृष्टिंशिष्टिरनूनता
॥६४॥अविघ्नत्वाविरोधौचगुणवैशेष्यमागमः॥सिद्धांतनिर्णयंह्येतायुक्तयोऽव्याहताःसदा ॥६५॥
यथाशक्त्यखिलान्वेदान्विज्ञायोपासनंभवेत्॥ तत्राखिलस्यविज्ञप्तिःसम्यग्ब्रह्मणएवहि॥६६॥
तदन्येषांचयथायोगमखिलज्ञप्तिरिष्यते ॥ तावतोपासनेयोग्योभवेदेवाखिलःपुमान् ॥ ६७ ॥

महत्त्वस्यपरंपारंविदित्वैवजनार्दनः ॥ तोष्यमामेतितुष्टत्वमितिनास्त्येवनारद ॥६८॥ किंतुनिश्चल
याभक्त्याह्यात्मज्ञानानुरूपतः॥ यस्तोष्यतिसदाभक्तस्तुष्टस्तस्यसदाहरिः॥६९॥इत्यादिवाक्यसं
दर्भार्थयायोग्याखिलज्ञता ॥ आत्मज्ञानानुरूपत्वंयथाशक्तिविचारणात्॥७०॥ वेदःकृत्स्नोऽधिगं
तव्यःस्वाध्यायाध्ययनंभवेत्॥ इत्यादिवाक्यवैय्यर्थ्यमन्यथाननिवार्यते ॥७१॥ अद्यापितेनवेदा
द्याःशृण्वतोमन्वतेसदा॥ध्यायंतिचयथायोगंतथाप्यावस्तुनिर्णयात् ॥७२॥ श्रवणंमननंचैवकर्त
व्यंसर्वदैवहि ॥ मतिश्रुतिध्यानकालविशेषंगुरुसत्तमः ॥७३॥ वेत्तितस्योक्तमार्गेणकुर्वतःस्याद्धि
दर्शनम् ॥ श्रवणंदृष्टतत्त्वस्यमननंध्यानमेवच ॥७४॥ विशेषानंदसंप्राप्त्या अन्यस्यैतानिदृष्टये ॥
यदितादृग्गुरुर्नास्तिनिर्णीतश्रवणादिकम् ॥७५॥ सत्सिद्धांतानुसारेणनिर्णयज्ञात्समाचरेत्॥ श्रव
णादिविनानैवक्षणंतिष्ठेदपिकचित् ॥७६॥अत्यशक्येतुनिद्रादौपुनरेवसमाचरेत्॥अभावेनिर्णयज्ञ
स्यसच्छास्त्राण्येवसर्वदा ॥ ७७ ॥ शृणुयाद्यदिसज्ज्ञानंप्राचुर्यमुपलभ्यते ॥ महद्भ्योविष्णुभक्ते
भ्योयथाशक्तिचसंशयान्॥७८॥छिंद्यात्स्वतोऽधिकाभावेस्वयमेवसमभ्यसेत् ॥ ब्रूयादपिचशिष्ये
भ्यःसत्सिद्धांतमहापयन् ॥ ७९ ॥ अशेषगुणपूर्णत्वंसर्वदोषसमुज्झितिः ॥ विष्णोरन्यत्रतत्तंत्र
मितिसम्यग्विनिर्णयः ॥ ८० ॥ स्वतंत्रत्वंसदातस्यतस्यभेदश्चसर्वतः ॥ अदोषत्वस्यसिद्ध्यर्थंय
दभेदेतदन्वयः ॥ ८१ ॥ तत्तंत्रत्वंचमुक्तानामपितद्गुणपूर्तये ॥ मुक्तानामपिभेदश्चनहिभिन्नम
भिन्नताम् ॥ ८२ ॥ गच्छेद्दृष्टंकचित्तस्याप्यभावोऽनुभवोपगः ॥ पूर्वाभेदोदोषवत्त्वमीशस्येत्य
तिभिन्नता ॥ ८३ ॥ नारायणेनमुक्तानामपिसम्यगितिस्थितिः ॥ भेदोभेदेप्यभेदेनदोषाणाम

पिसंभवः ॥ ८४ ॥ निर्दोषत्वंरमायाश्चतदनंतरतातथा ॥ ब्रह्मासरस्वतीवींद्रशेषरुद्राश्चतत्स्त्रियः
॥८५॥ शक्रकामौतदन्येचक्रमान्मुक्तावपीतिच ॥ सत्सिद्धांतइतिज्ञेयोनिर्णीतोहरिणास्वयम्
॥८६॥ एतद्विरोधियत्सर्वंतमसेऽधायकेवलम् ॥ अंधंतमोविशंतीतिप्राहश्रुतिरितिस्फुटम्॥८७॥
इत्येवश्रुतयोऽशेषाःपंचरात्रमथाऽखिलम् ॥ मूलरामायणंचैवभारतंस्मृतयोऽखिलाः ॥८८॥ वै
ष्णवानिपुराणानिसांख्ययोगौपरावपि ॥ ब्रह्मतर्कश्चमीमांसेत्यनंतःशब्दसागरः ॥ ८९ ॥ अ
नंतायुक्तयश्चैवप्रत्यक्षागममूलकाः ॥ प्रत्यक्षमैश्वरंचैवरमादीनामशेषतः॥९०॥मुक्तानामप्यमुक्ता
नामितमेकार्थमुत्तमम् ॥ अन्यावकाशरहितंप्रकाशयतिसादरम् ॥९१॥ एतदेवचसच्छास्त्रंदुःशा
स्त्रंतुनतःपरम् ॥ सच्छास्त्रमभ्यसेन्नित्यंदुःशास्त्रंतुपरित्यजेत् ॥ ९२ ॥ असंशयेनतत्त्वस्यनिर्णये
ब्रह्मदर्शनम् ॥ सम्यग्विषमविज्ञाततारतम्यानुसारतः ॥ ९३ ॥ फलंभवेत्तारतम्यात्सुखदुःखा
त्मकंनृणाम् ॥ सम्यक्काधिकविज्ञानात्सुखाधिक्यंभवेन्नृणाम् ॥ ९४ ॥ अतोयथात्मशक्त्यै
वश्रवणंमननंतथा ॥ कृत्वाऽथकुर्वन्नपिवानिदिध्यासनमाचरेत् ॥ ९५ ॥ विषयेषुचसंसर्गाच्छाश्व
तस्यचसंश्रयात् ॥ मनसाचान्यदाकांक्षात्परंनप्रतिपद्यते ॥ ९६ ॥ इतिभारतवाक्यंहितेनैतद्दो
षवर्जितः ॥ सदैवोपासनयायुक्तोवासुदेवंप्रपश्यति ॥९७॥ दोषाअनादिसंबद्धास्तेमुक्तिपरिपंथि
नः ॥ संत्येवप्रायशःपुंसुतेनमोक्षोनजायते ॥ ९८ ॥ सर्वेलएतेजीवेषुदृश्यंतेतारतम्यतः ॥ ऋजू
नामेकएवास्तिपरमोत्साहवर्जनम् ॥ ९९ ॥ सगुणाल्पत्वमात्रत्वान्नर्जुत्वेनविरुध्यते ॥ अतोवि
ष्णौपराभक्तिस्तद्भक्तेषुरमादिषु॥१००॥ तारतम्येनकर्तव्यापुरुषार्थमभीप्सता ॥ सादरःसर्वजंतू

नांसंसिद्धौहिस्वभावतः ॥ १ ॥ ततोऽधिकःस्वोत्तमेषुलदाधिक्यानुसारतः ॥ कर्तव्योवासुदेवांतं
सर्वथाशुभमिच्छता ॥ २ ॥ नकदाचित्त्यजेत्तंचक्रमेणैनंविवर्धयेत् ॥ समेपुत्वात्मवत्स्नेहःस
त्स्वन्यत्रततोदया॥ ३॥ कार्यैवमापरोक्ष्येणदृश्यतेक्षिप्रमीश्वरः ॥ तत्तमोऽधंव्रजेद्विष्णुंसमत्वेयोऽ
नुपश्यति ॥ ४ ॥ रमाब्रह्मशिवादीनामपिमुक्तौकथंचन ॥ किमुताधिक्यदृष्टेस्तद्गुणाभावमतेरपि
॥ ५ ॥ दोषवेत्तुरभेदस्यद्रष्टुर्द्वेष्टुस्तथोभयोः ॥ इत्याहमच्छ्रुतिस्तेनसंप्रोक्तगुणसंयुतः ॥
॥ ६ ॥ उपासीतहरिंदृष्ट्वामुक्तिस्तेनैवजायते ॥ द्वेषाद्यन्मुक्तिकथनंश्रुतिवाक्यविरो
धितत् ॥ ७ ॥ शिपवोयेतुरामस्यविमुखत्वान्निरामिणः ॥ अभिद्रुहस्पदेनित्यमंधेतम
सितेस्थिताः ॥ ८ ॥ हरिद्विषस्तमोयांतियेचैवतदभेदिनः ॥ तेनिर्गुणत्ववेत्तारस्तस्यदो
षविदोपिच ॥ ९ ॥ इत्यादिश्रुतिसंदर्भाद्द्वेषिणस्तमईयते ॥ हिरण्यकशिपुश्चापि
भगवन्निंदयातमः ॥ १० ॥ विविक्षुरत्यगात्सूनोःप्रह्लादस्यानुभावतः ॥ यदनिंदत्पितामे
ह्यंत्वद्भक्तेमयिचाघवान् ॥ ११ ॥ तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघात् ॥ निंदांभगवतः
शृण्वन्तत्परस्यजनस्यवा ॥ १२ ॥ ततोनापैतियःसोऽपियात्यधःसुकृताच्च्युतः ॥ अवजा
नंतिमांमूढामानुषींतनुमाश्रितम् ॥ १३ ॥ परंभावमजानंतोममभूतमहेश्वरम् ॥ मोघाशा
मोघकर्माणोमोघज्ञानाविचेतसः ॥१४॥ राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः॥मामात्मपरदेहे
षुप्रद्विषंतोऽभ्यसूयकाः ॥१५॥ तानहंद्विषतःक्रूरान्संसारेषुनराधमान्॥ क्षिपाम्यजस्रमशुभाना
सुरीष्वेवयोनिषु ॥ १६॥ आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि ॥ मामप्राप्यैवकौंतेयततोयां

त्यधमांगतिम् ॥१७॥ योद्विष्याद्विबुधश्रेष्ठंदेवंनारायणंप्रभुम् ॥ कथंसनभवेद्वेष्यआलोकांस्यत
कस्यचित् ॥ १८ ॥ योद्विष्याद्विबुधश्रेष्ठंदेवनारायणंप्रभुम् ॥ मज्जंतिपितरस्तस्यनरकेशाश्व
तीःसमाः ॥ १९ ॥ इत्यादिवाक्यसंदोहाद्वेषिणस्त्वमएवतु ॥ नैवमोक्षइतिप्राहुर्लौकायतमतेस्थि
ताः ॥२०॥ भोगंशरीरपर्यंतंभस्मीभावस्ततोभवेत् ॥ इतितत्केनमानेनदृष्टंप्रत्यक्षवादिना॥२१॥
नहिप्रत्यक्षमानेनमोक्षाभावोऽवसीयते ॥ घटतेयुक्तिदृष्टिस्तुपुरुपेणमहीयसा ॥२२॥ नेतिवक्तुमं
हत्वंतुकथंचननविद्यते ॥ साधयन्सर्वसामान्यंकथमेवविशेषवान् ॥ २३ ॥ दृश्यंतेपुरुपालोकेप
रावरविदोऽपिच ॥ अपरोक्षदृशोयोगनिष्ठाश्चामलचक्षुपः ॥२४॥ प्रत्यक्षदेवतांदृष्ट्वातत्प्रसादा
त्प्रभूतयः ॥ ज्ञानविज्ञानपारज्ञानिषिध्यंतेकथंनृभिः ॥ २५ ॥ दृश्यंतेचातिमाहात्म्यंतेषामतिम
हौजसाम् ॥ यदितेऽपिनिषिध्यंतेकिंनोक्तिस्तेनिषिध्यते ॥ २६ ॥ यदुक्तवाक्यप्रामाण्यंप्र
त्यक्षेणोपलभ्यते ॥ वरादयोऽपितद्दत्ताःसदासत्याभवंतिहि ॥ २७ ॥ अप्रामाण्यंतदुक्तेश्च
वृथावाचावसीयते ॥ नहिप्रयोजनंकिंचित्परलोकनिवारणात् ॥ २८ ॥ वृथावाचाद्वथाह
न्याद्यदितस्यकिमुत्तरम् ॥ स्वजीवनविरोधायवदेत्किंनामबुद्धिमान् ॥ २९ ॥ प्रामाण्येसंशयः
किंस्यात्तयोःपुरुषयोरपि ॥ स्वजीवनविरुद्धोक्तिरज्ञोदृष्टस्यचाप्रियः ॥ ३० ॥ यश्चातींद्रियदेवो
क्तिःश्रोतादृष्टपरावरः ॥ अतीतानागतंसर्वंलोकानुभवमापयन् ॥ ३१ ॥ अतःप्रत्यक्षगम्य
त्वाद्देदमात्वस्यचस्फुटम् ॥ यद्यागमस्यनोमात्वमक्षजस्यतथाभवेत् ॥ ३२ ॥ यद्यक्षजस्य
मात्वंस्यादागमस्यकथंनतत् ॥ लोकवाक्याद्विशेषश्चव्यभिचारेणसिध्यति ॥ ३३ ॥ अस्तिमो

क्षोऽपिधर्मेणयथार्थज्ञानतोऽपिच ॥ प्रामाण्यमनुमायाश्च जिनस्याप्तत्वसाधने ॥ ३४॥ तद्वाक्या
द्धर्मसज्ज्ञानविज्ञप्तिर्भवतीतिच ॥ धर्मोऽहिंसापरोनान्योज्ञानंपुद्गलदर्शनम् ॥ ३५ ॥ इतिजैनाःक
थंतत्स्यात्प्रमाणमनुमानतः ॥ विषयान्प्रतिस्थितंह्यक्षंप्रत्यक्षमितिगीयते ॥ ३६ ॥ प्रत्यक्षश
ब्दानुसारादनुमेतिप्रकीर्तिता ॥ आसंमताद्गमयतिधर्माधर्मौपरंपरम् ॥३७॥ यच्चाप्यतींद्रियंत्वन्य
त्तेनासावागमःस्मृतः ॥ एतेनकारणेनैवतत्तन्मानत्वमिष्यते ॥ ३८ ॥ स्वरूपंहितदेतेषामन्यथा
सिद्धिमानतः ॥ अतोऽनुमाकथंधर्मंपुद्गलंचापिदर्शयेत् ॥ ३९॥ स्वरूपेपुद्गलस्योक्तादोषानंदमये
वच ॥ नमन्यतेपुद्गलंसदुःखाभावंसुखंत्विति ॥ ४० ॥ मात्राभोगातिरेकेणसुखाधिक्यस्यदर्श
नात् ॥ सुखस्याभावताकेननचस्यात्किंविपर्ययः ॥ यदिभावोऽपिकश्चित्स्यात्तस्यैवाभावताकु
तः ॥ ४१ ॥ यदिसर्वेऽप्यभावाःस्युरन्योन्यमितिभावना ॥ अभावाभावतैवस्यात्किंनश्छिन्नंत
दाभवेत् ॥ ४२ ॥ भावत्वंविधिरूपत्वंनिषेधत्वमभावता॥ निषेधस्यनिषेधोऽपिभावएवबलाद्भवेत्
॥४३॥ प्रथमप्रतिपत्तिस्तुभावाभावनियामिका॥नचपुद्गलविज्ञानंमोक्षदंभवतिक्कचित् ॥ अस्वा
तंत्र्यात्पुद्गलस्यज्ञानोऽपिसुखदोनहि ॥ ४४॥ नहिदुःखिपरिज्ञानाद्दुःखित्वंविनिवर्तते ॥ यदिपुद्ग
लविज्ञानाददुःखीस्यात्कथंचन ॥ ४५ ॥ देहवानपिनादुःखीकिंज्ञानादुत्तरंसदा ॥ ईशक्त्य
नुसारेणस्यात्कालादीशवादिनः ॥ ४६ ॥ कर्महेतुत्वमपितुनिश्चेतव्यान्नहिक्कचित् ॥ अशेषदुःख
विलयेनेदानींकारणंयथा ॥ ४७ ॥ तथोत्तरंनचैवस्याद्दृष्टपूर्वानुमायतः ॥ शक्तस्यान्यस्यविज्ञा
नंतत्प्रीनिजनकंयदि ॥ ४८ ॥ तथैवबंधहानिःस्यादितिकिंनामदूषणम् ॥ स्वज्ञानादेवहानिस्तुट

श्यतेकस्यकुत्रचित् ॥ ४९ ॥ अहिंसायाश्चधर्मत्वंकेनमानेनगम्यते ॥ हिंसायाएवधर्मत्वमित्युक्ते
स्यात्किमुत्तरम् ॥ ५० ॥ धर्मस्यसुखहेतुत्वमपिकेनावगम्यते ॥ हत्यायांमोक्षहेतुत्वंकुतोमानान्नि
वार्यते ॥ ५१॥ नचशून्यपरिज्ञानाच्छून्यभावनयाऽपिच ॥ मोक्षःकथंचनभवेद्यदिदानींकथंनसः
॥५२॥परप्रसादनेच्छास्तुविलंबोनामयुज्यते॥पुमिच्छाधीनतानोचेद्विलंबःकिंकृतोभवेत्॥५३॥
अन्यत्रापिविलंबास्तुस्युरीशेच्छानिमित्ततः॥ अन्यथाकारणंचेत्स्यात्किंकार्यंनोपजायते॥५४॥
कारणेसतिकार्यस्यभावःसुनियतोऽस्यहि॥ विज्ञानवादिनश्चैवविज्ञानाद्वैतवेदनात् ॥५५॥ विज्ञान
भावनाच्चैवमोक्षोनघटतेक्वचित् ॥ अंतर्ज्ञानस्यबाह्येचक्षणिकत्वस्यवेदनात् ॥ ५६ ॥ भावनाच्चो
क्तमार्गेणहानाभावान्नमुच्यते ॥ प्रकृतेःपुरुषस्यापिविवेकोमुक्तिसाधनम् ॥५७॥ इतिसांख्यानचै
तस्मिन्मानमीशप्रसादतः ॥ श्रुतयःस्मृतयश्चैवयदेशस्यप्रसादतः ॥ ५८ ॥ वदंतिनियमा
न्मुक्तिंतमृतेऽतःकुतोभवेत् ॥ कणादयोगाक्षपादाअपीशस्यप्रसादतः ॥ ५९ ॥ मुक्तिंब्रुवाणाअ
प्याहुर्भोगादेवचकर्मणाम् ॥ क्षयंप्राहुःकुतश्चेतत्प्रसन्नेजगदीश्वरे ॥ ६० ॥ भिद्यतेहृदयग्रंथि
श्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे ॥६१॥ भिद्यतेहृदयग्रंथिश्छिद्यं
तेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणिदृष्टएवात्मनीश्वरे ॥ ६२ ॥ इतिश्रुतिपुराणादिवचनेभ्योऽ
न्यथामतेः ॥ नचपाशुपताद्युक्तशिवादीनामनुग्रहात् ॥ ६३ ॥ नान्यःपंथाइतिह्युक्तंपुरुषज्ञान
तांश्रुतौ ॥ सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि ॥६४ ॥ एवंपुरुषशब्दश्चप्रयुक्तोऽधिशयेहरौ ॥ न
तस्येशेकश्चनतस्यनाममहद्यशः ॥ ६५ ॥ इतिचाधिपतिस्तस्यप्रतिषिद्धःस्वयंश्रुतौ ॥

विश्वतःपरमंनित्यंविश्वंनारायणंहरिम् ॥ ६६ ॥ इतिसर्वाधिकत्वोक्त्यासमोऽपिविनिवारितः ॥
समाधिकस्यराहित्यान्नोपचारप्रमानसौ ॥ ६७ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यम् ॥ उतामृत
त्वस्येशानोयदन्नेनातिरोहति ॥ ६८ ॥ मुक्तामुक्तपरेशत्वमितितस्याहसाश्रुतिः ॥ अमृते
शानवचनात्सर्वस्येशानतोदिता ॥ ६९ ॥ यदिसर्वत्वमुदितमुतेशइतितद्वृथा ॥ उतशब्दोवदेदेव
हीशत्वस्यसमुच्चयम ॥७०॥ पुरुषेणैवेदंव्याप्तमितिब्राह्मणंचाहतंप्रति ॥ एतावानस्यमहिमेतिम
हिम्नोहवचोहितत् ॥ ७१ ॥ सोऽमृतस्याभयस्येशोमर्त्यमन्नंयदत्यगात् ॥ इत्यमुक्ताधिपत्यं
तुपूर्वार्धोक्तमनूद्यच ॥ ७२ ॥ उतामृतत्वस्येशइतिविधत्तेमुक्तिगेशताम् ॥ अतोविष्णुपरिज्ञाना
देवमुक्तिर्नचान्यतः ॥७३॥ तद्यथेतिश्रुतेश्चैवंततःकर्मक्षयोभवेत् ॥ यथैधांसिसमिद्धोऽग्निर्भस्म
सात्कुरुतेऽर्जुन ॥ ७४ ॥ ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथा ॥ सर्वधर्मान्परित्यज्यमामे
कंशरणंव्रज ॥ ७५ ॥ अहंत्वांसर्वपापेभ्योमोक्षयिष्यामिमाशुचः ॥ इत्यादिभगवद्वाक्यैरुक्तार्थ
श्चावसीयते ॥ ७६ ॥ नित्यंनैमित्तिकंकर्मकुर्वन्नन्यत्परित्यजेत् ॥ मुच्यतेसंस्रतेश्चैतदप्येतेनन
राकृतम् ॥ ७७ ॥ विद्यैवेतीममेवार्थंस्वयमेवाहवेदराट् ॥ विनाकर्मनमोक्षःस्याज्ज्ञानेनेत्यपिसा
श्रुतिः ॥ ७८ ॥ नान्यःपंथाइतिह्येवनिवारयतिसादरम् ॥ अन्यथोपासनमपितमेवमितिवादिनी
॥ ७९ ॥ निवारयत्यादरेणनप्रतीकइतिप्रभुः ॥ अंधंतमःप्रविशंतियेत्वविद्यामुपासते ॥ ८० ॥
इतिश्रुतिविरोधाच्चनान्यथोपासनंभवेत् ॥ नचाप्येकत्वविज्ञानादुक्तन्यायेनमुच्यते ॥ ८१ ॥
इतिसर्वंप्रतिज्ञायसर्वैस्तर्कैसदागमैः ॥ उपासीतहरिंनित्यंगुणैरेवस्वयोग्यतः ॥ ८२॥ ब्रह्मासर्वै

गुणैश्चैवक्रियासामान्यतश्चगीः ॥ गुणसामान्यतोरुद्रोद्रव्यसामान्यतःपरे ॥ ८३ ॥ अधिकारवि
शेषेणभक्तिज्ञानसुखादिभिः ॥ विशेषोदेवतादीनांमोक्षेचैवविशेषतः ॥८४ ॥ नतावताविरोधोऽ
स्तिनिर्दोषत्वात्समस्तशः ॥ आभासत्वात्परेषांतदवराणांचसर्वशः ॥८५॥ यतोऽवराणांसर्वेऽपि
गुणाःसर्वाःक्रियाअ... ॥ नियमेनैवपूर्वेषांसुप्रसादनिबंधनाः ॥ ८६ ॥ अतःसच्छिष्यवत्तेषांनैवे
र्ष्यादिकथंचन ॥ नचसंसारिदेवानांकालेयत्तापरेइमे ॥ ८७ ॥ सूत्रेह्यारब्धमात्रस्यभोगेनैवक्षयो
ध्रुवः ॥ आरब्धकार्यंभोगेनत्वितरेइतिचोदितः ॥ ८८ ॥ पौनरुक्तेनतेनैवउक्तार्थइतिनिश्चयः ॥
उषास्वाहाचपर्जन्योमित्रोऽग्निर्वरुणोविधुः ॥ ८९ ॥ प्रवहोऽनिरुद्धइंद्रोमेरुद्रोवाणीचमारुतः ॥
उत्तरोत्तरतस्त्वेतेगुणैःसर्वैश्चमुक्तिगाः ॥ ९० ॥ सूर्यधर्मौयथासोमोमनुर्दक्षोबृहस्पतिः ॥ श
चीरतिश्चानिरुद्धासमार्त्रासचामित्रवत् ॥ ९१ ॥ सोमवच्छतरूपातुप्रसूतिर्वह्निवद्विराट् ॥
पर्जन्यवद्वारुणीचतथासंज्ञाचरोहिणी ॥ ९२ ॥ धर्मीचमित्रावत्स्वेवप्रावहीपरिकीर्तिता ॥ मित्रप
र्जन्यमध्यस्थावाश्विनौविघ्नवित्तपौ ॥ ९३॥ भृगुरङ्गिसमोमित्रस्तन्मध्येब्रह्मपुत्रकाः ॥ वरुणाग्न्यं
तरातत्रनारदःप्रायइंद्रवत् ॥ ९४ ॥ कामःसुपर्णीचोमावद्वींद्रोरुद्रवदीरितः ॥ निर्ऋतिर्मित्रसदृ
शोविश्वामित्रःस्वसूनुवत्॥९५॥ वैवस्वतोमनुश्चाश्विपश्चादन्येततोवरः ॥ च्यवनोचथ्यवैन्याश्चश
शबिंदुश्चहैहयः ॥ ९६॥ तद्वच्चविप्रराजन्यविशेषोत्रापिकश्चन ॥ तद्वत्प्रियव्रतश्चापितदन्याःशत
देवताः ॥९७॥पर्जन्यमित्रांतरालेनदन्येचततोवराः ॥ एतेभ्योऽभ्यधिकाश्रीस्तुसदामुक्ताविशेष
तः ॥९८॥ तत्समोनास्तिपरमो हरिरेवनचापरः ॥ संहितायांबृहत्यांतुस्वयंभगवतोदितम्॥९९॥ त

देतदखिलंप्राणअहंकारिकएवच॥ इंद्रादनंनरोदृष्टिरपियोग्यानुसारतः ॥२००॥ सम्यक्गुरुप्रसा
दश्चमुख्यतोदृष्टिकारणम् ॥ श्रवणादिचकर्तव्यंनान्यथादर्शनंक्वचित् ॥१॥ गुणाधिकंगुरुंप्राप्यत
द्धीनंनाश्रुयात्क्वचित् ॥ विपर्ययस्तुकर्तव्यःसर्वथाशुभमिच्छता ॥ २ ॥ समेविकल्पएवस्यात्पू
र्वानुज्ञाचसर्वथा ॥ तदुत्तमगुरुप्राप्तौपूर्वानुज्ञानमृग्यते ॥ ३ ॥ गुरुर्ब्रह्माखिलानांचविद्याचैवसर
स्वती ॥ देवताभगवान्विष्णुःसर्वेषामविशेषतः ॥ ४ ॥ तत्प्रसादेनमुक्तिःस्यात्नान्यथातुकथं
चन ॥ स्वोत्तमास्तुक्रमणैवसर्वेषांगुरवःस्मृताः ॥ ५ ॥ उपदेशोब्रह्मणस्तुसर्वेषामेवमुक्तये ॥
साधनेभ्योऽधिकाभक्तिर्नैवान्यत्तादृशंक्वचित् ॥ ६ ॥ भक्तिश्चैवहरावेवमुख्यान्यत्रयथाक्रम
म् ॥ स्वाधिकत्वेनसर्वत्रस्वोत्तमेषुक्रमेणच ॥ ७ ॥ अनुवर्ततेचसाभक्तिर्मुक्तावानंदरूपिणी ॥
तत्पूर्वकोपासनैवंकर्तव्यामुक्तयेगुणैः ॥ २०८ ॥ ॥ ५ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेतृतीयाध्यायस्यतृतीयःपादः ॥३।३॥ ५ ॥
॥ श्रीवेदव्यासायनमः ॥ ॥ एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा॥अपेक्षितफलप्राप्तिरारब्धस्यान
तिक्रमात् ॥१॥ देवर्षिमानुषादीनांतत्तज्ज्ञात्यनुसारतः॥जैमिन्युक्तंमानुषाणांतद्विशेषाश्चकेचन॥
॥२॥सामान्यंभगवत्प्रोक्तंदेवादीनांविशेषतः॥बलवद्विरोधिसद्भावेजैमिन्याद्युक्तिरिष्यते ॥३॥वि
कर्मलेपोनैवास्तिसम्यग्दृष्टिमतांक्वचित्॥गुणहानिश्चनैवास्तिब्रह्मणस्त्वविकर्मतः॥४॥देवानामपि
नप्रायःक्लृप्तस्यतुकथंचन॥प्राप्तह्रासोभवेत्क्वापिमहतानुविकर्मणा ॥५॥ तथापितत्क्लृप्तमेवतस्मान्न
नियमोज्झितिः॥चंद्रसुग्रीवयोश्चैवस्वोच्चदारपरिग्रहात्॥६॥प्राप्तहानिरभून्नैवक्लृप्तहानिःकथंचन॥

ह्रासोऽपिमानुषादीनांआनंदस्यविकर्मणा ॥७॥ भवेन्मुक्तौविशेषेणस्तोच्चानामपराधनः ॥ ज्ञानो
त्तरस्यपापस्यचतुर्थेलेपउच्यते॥८॥अशुचित्वादिकंचास्यनभवेदितितत्फलम् ॥ अत्रज्ञानफल
स्यैवमुक्तेर्नियततोच्यते॥९॥प्रारब्धकर्मजस्यैवविषभक्षान्मृतेरिव ॥ प्राप्तस्याप्यनिवर्त्यस्यकिंचि
द्भुक्तस्यसंविदा॥१०॥उपमर्दइहप्रोक्तोदेवादीनांयथाक्रमम्॥सर्वात्मनाचभोगोहिप्रारब्धस्यैवकर्म
णः ॥ ११॥ नब्रह्मदर्शिनोऽपिस्यात्फलह्रासस्तुविद्यते ॥ सर्वात्मनाफलह्रासोयदिनारब्धकर्मणः
॥ १२ ॥ स्यात्काम्यविधिवैयर्थ्यमित्युक्तनियमोभवेत् ॥ एवमाद्यपिसंप्रोक्तंतंत्रभागवतेस्फुटम्
॥ १३ ॥ तारतम्यंफलेनोचेद्ब्रह्मादीनांकथंश्रुतिः ॥ अवृजिनोकामहतइतिमुक्तिंनिगद्यच
॥ १४ ॥ आनंदतारतम्यंचतेषांब्रूयात्पृथक्पृथक् ॥ संसारएवचेदेतत्तारतम्यंनमुख्यतः
॥ १५ ॥ अकामहतशब्दार्थोवृजिनत्वंचनोभवेत् ॥ कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधि
॥ १६ ॥ इतयिल्लक्षणंमुक्तेःश्रुतिराहबलीयसी ॥ कामाहति.कुतोऽन्यत्रप्राप्तकामस्यसाभवेत्
॥ १७ ॥अप्रयत्नेनकामानामवाप्तिःसायदाभवेत् ॥ तदैवाकामहतताकुतएवान्यथाभवेत्॥१८॥
चेतनस्यत्वसुप्तस्यकुत्रदृष्टाह्यकामता ॥ अव्यक्तिरेवकामानांननाशोमोहसुप्तयोः ॥१९॥ यत्का
मस्वापमाप्नोतितदेवोत्थापितःपुनः ॥ अवशोपिह्याहरतिकुतःसुप्तावकामता ॥ २० ॥ सर्वकामा
नवाप्नोतिब्रह्मणासहमुक्तिगः॥पर्येतितत्रजक्षंश्चक्रीडन्रतिमवाप्नुयात् ॥२१॥ कामान्नीकामरूपी
सन्निमाँल्लोकांश्चसंचरन् ॥ आस्तेगायन्सामयुक्तइत्यादिश्रुतिसद्बलात् ॥२२॥ अकामःस्यात्क
थंमुक्तःकामायस्यहृदिश्रिताः ॥ इत्यंतःकरणस्थानांकामानांमोक्षमेवहि॥२३॥प्राहश्रुतिर्हृदीत्ये

वनचेद्यर्थंविशेषणम् ॥ ह्येवतेषांश्रवणमितिपक्षोनभासते ॥ २४ ॥ मुक्तानांकामितामाहपृ
थक्शाखासुयच्छ्रुतिः ॥ अतोऽकामहतत्वंतुमुक्तानामेवमुख्यतः ॥ २५ ॥ मुख्यार्थस्यप्टथात्या
गोमायिनामेवभूषणम् ॥ अपापत्वमदुःखत्वंचाप्टजिनत्वमिहोदितम् ॥ २६ ॥ अप्रियंप्टजिनं
दुःखमकंतोदमितीयते ॥ तत्कारणत्वात्पापंवाप्टजिनंनामकथ्यते ॥ २७ ॥ इत्युक्तःस्वयमीशेन
नामार्थःशब्दनिर्णये ॥ अपापत्वंचनैवास्तियावत्संसारमस्यहि ॥ २८ ॥ आरब्धपापमस्त्येव
दुःखंचज्ञानिनोऽपिहि ॥ तस्मात्तस्मादकामत्वमितिचाश्रुतकल्पना ॥ २९ ॥ अकामहतइत्यु
क्तेःश्रुतहानिरपिस्फुटम् ॥ कुत्रचित्कामिनःपुंसःकामाभावात्क्वचित्क्वचित् ॥ ३०॥ इंद्रादिसुख
भोगोऽस्तीत्यनुभूतिर्हिकुप्यति ॥ तस्मादमुक्तसुखगंतारतम्यंपृथक्पृथक्॥३१॥ उक्त्वायश्चेति
मुक्तानांतारतम्यंसुखश्रुतिः ॥ आहेतिपेशलंतच्चचशब्दादेवगम्यते ॥ ३२ ॥ साद्धःसंसिद्धइत्ये
वमुक्तएवावगम्यते ॥ साधुनाविष्णुनायुक्तोमुक्तःसाधुयुवामतः ॥ ३३ ॥ यौवनंनित्यमेतस्यमु
क्तस्येतियुवासच ॥ फलमध्ययनस्याप्तंतेनाध्यायकईरितः ॥ ३४ ॥ निह्रासानंदसंप्राप्त्याचा
शिष्टइतिगीयते ॥ स्थितस्यानन्यथाप्राप्तेर्दृष्टधीरितिचोदितः ॥३५॥ बलिष्ठश्चस्वभावेनमुक्तोभव
तिकेवलम् ॥ तस्येयंपृथिवीत्यादिपूर्वभावव्यपेक्षया ॥ ३६ ॥ सएकइतिसंसारगतमुक्तासुखंपु
नः ॥ श्रोत्रियस्येतिवदतिमुक्ताच्छतगुणात्मताम् ॥३७॥ संसारगाच्चसंसारगतस्यैवशताधिकम् ॥
मुक्तान्मुक्तस्ययुक्तंस्याच्छ्रुत्युक्तमभिवीक्षितः ॥३८॥युक्तंचसाधनाधिक्यात्साध्याधिक्यंसुरादि
षु ॥ नाधिक्यंयदिसाध्येस्यात्प्रयत्नःसाधनेकुतः ॥ ३९ ॥ यत्नश्चदृश्यतेतेषांमहानेवमहात्म

नाम् ॥ यत्रसाधनबाहुल्यंसाध्यबाहुल्यमत्रच ॥ ४० ॥ दृष्टंनियमतोनोचेन्नयत्नंकुर्युरं
जसा ॥ कृच्छ्रेणसाधनादेवनमुक्तवदुदीर्यते ॥ ४१ ॥ दशकल्पंतपश्चीर्णंरुद्रेणलवणार्णवे ॥ त्य
क्त्वासुखानिसर्वाणिक्लिष्टेनलवणांभसा ॥ ४२॥ शक्रेणवर्षकोटीश्चधूमःपीतोऽतिदुःखतः ॥ वर्षा
युतंतुसूर्येणतपोवाक्शिरसाकृतम् ॥ ४३ ॥ सुदुःखेनसुखंत्यक्त्वाधर्मेणाकाशशायिना ॥ पीता
मरीचयोवर्षसहस्रमतिसादरम् ॥ ४४ ॥ अतिकृच्छ्रेणकुर्वंतियत्नंब्रह्मविदोऽपिच ॥ इत्येतदखि
लंमोक्षेविशेषाभावतःकथम् ॥४५॥ दैवीसंपद्विमोक्षायनिबधायासुरीमता ॥ इतिमोक्षविशेषश्च
स्वयंभगवतोदितः ॥ ४६ ॥ तमेवयूयंभजतात्मवृत्तिभिर्मनोवचःकायगुणैःस्वकर्मभिः ॥ अमा
यिनःकामदुघांघ्रिपंकजंयथाधिकारावसितार्थसिद्धये ॥ ४७ ॥ अक्षण्वंतःकर्णवंतःसखायोमनो
जवेष्वसमाबभूव ॥ आदघ्नासउपकक्षासउत्वेहदाइवस्नात्वाउत्वेददृश्रे ॥ ४८ ॥ इत्यादीनिच
वाक्यानितारतम्यंविमुक्तिगम् ॥ व्यक्तंवदंतितत्केनसाम्यंमुक्तेषुगम्यते ॥ ४९ ॥ दुःखाद्यभाव
साम्यंचसाम्यवाक्यार्थईयते॥भक्त्यादिगुणसद्भावेह्यतुल्यत्वंचभारते॥ उक्तंसाधनवैचित्र्यमपिस
र्वत्रकथ्यतेदुर्ज्ञेयंघोररूपस्यत्रैलोक्यध्वंसिनःप्रभो॥५०॥ दैवतैर्मुनिभिःसिद्धैर्महायोगिभिरेवच॥
नित्ययुक्तैर्महाभोगैर्विमोहःक्लेशसाध्वसैः ॥ ५१ ॥ महोत्साहैर्महाधैर्यैःसत्वस्थैर्व्यवसायिभिः ॥ अ
तीतानागतज्ञानप्रभवाप्ययवेदिभिः ॥ ५२ ॥ शौचस्वाध्यायसंतोषतपःसत्यदयान्वितैः ॥किमु
मर्त्यैर्भयभ्रांतिध्वंसमोहरुजान्वितैः ॥ ५३ ॥ अल्पायुर्वीर्यधीसत्त्वव्यवसायश्रुतिव्रतैः ॥कस्तंक
दामदंदेवंमदन्योज्ञातुमर्हसि ॥५४॥ ब्रह्मैवाकिंचिज्जानातिनतदन्योहिकश्चन ॥ मुक्तानामपिसि

द्धानांनारायणपरायणः ॥ सुदुर्लभःप्रशांतात्माकोटिष्वपिमहामते ॥ ५५ ॥ इयंविसृष्टिर्यतआब
भूवयदिवादधेयदिवान ॥ योअस्याध्यक्षःपरमेव्योमन्त्सोअंगवेदयदिवानवेद ॥५६ ॥ यःस्वात्म
मायाविभवंस्वयंगतोराहंनभःस्वांस्तमथापरेकुतः ॥ ब्रह्मापियंवेत्तिनचेहसम्यगन्येकुतोदेवमुनींद्रम
र्त्याः ॥ ५७ ॥ नमस्तेऽमिततत्त्वायब्रह्मादीनांचसूतये ॥ निर्गुणायचसत्काष्टांनाहंवेदापरेकुतः
॥ ५८ ॥ नाहंपरायुर्नमरीचिमुख्याजानंतियद्विरचितंखलुसत्त्वसंघाः ॥ यन्माययामुषितचेतस
ईशदैत्यमर्त्यादयःकिमुतशश्वदभद्रवृत्ताः ॥ ५९ ॥ अहंमहेंद्रोनिर्ऋतिःप्रचेताःसोमोऽग्निरीशः
पवनोऽर्कोविरिंचः ॥ आदित्यविश्वेवसवोऽथसाध्यामरुद्गणाःरुद्रगणाःससिद्धाः ॥ ६० ॥ अ
न्येचयेविश्वसृजोऽमरेशाभृग्वादयोऽस्पृष्टरजस्तमस्काः॥यस्येहितंनविदुःस्पृष्टमायाःसत्त्वप्रधाना
अपिकिंततोऽन्ये ॥ ६१ ॥ सर्वस्यादौस्मृतोब्रह्मातस्माद्देवादनंनरः ॥ जानातिदेवप्रवरंभूयश्चाऽ
तोऽधिकंनृप ॥ ६२ ॥ नत्वामतिशयिष्यंतिमुक्तावपिकथंचन ॥ मद्भक्तियोगाज्ज्ञानाच्च
सर्वानतिशयिष्यति ॥ ६३ ॥ यथाभक्तिविशेषोऽत्रदृश्यतेपुरुषोत्तमे ॥ तथामुक्तिविशेषोऽपि
ज्ञानिनांलिंगभेदने ॥ ६४ ॥ सायुज्यंसमनुप्राप्ताअपिदेवादयोऽखिलाः ॥ तारतम्याद्धिति
ष्ठंतितारतम्यंहिसाधने ॥ ६५ ॥ मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये ॥ यततामपिसिद्धा
नांकश्चिन्मांवेत्तितत्त्वतः ॥ ६६ ॥ यइमंपरमंगुह्यंमद्भक्तेष्वभिधास्यति ॥ भक्तिमधिपरांकृत्वा
मामेवैष्यत्यसंशयः ॥ ६७ ॥ नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः ॥ भवितानचमेतस्माद
न्यप्रियतरोभुवि ॥ ६८ ॥ अध्येष्यतेचयइमंधर्म्यंसंवादमावयोः ॥ ज्ञानयज्ञेनतेनाहमिष्टःस्या

मितिमेमतिः ॥ ६९ ॥ श्रद्धावाननसूयश्चशृणुयादपियोनरः ॥ सोऽपिमुक्तःशुभाँल्लोकान्प्राप्नु
यात्पुण्यकर्मणाम् ॥ ७० ॥ ध्यानेनात्मनिपश्यंतिकेचिदात्मानमात्मना ॥ अन्येसांख्येनयोगेन
कर्मयोगेनचापरे ॥ ७१ ॥ अन्येत्वेवमजानंतःश्रुत्वाऽन्येभ्यउपासते ॥ तेऽपिचातितरंत्येवमृत्युं
श्रुतिपरायणाः ॥ ७२ ॥ सुसूक्ष्मैरप्यशेषैश्चविशेषैःसहपश्यति ॥ स्वात्मानंभगवान्विष्णुःसर्वरू
पोऽपिसर्वदा ॥ ७३ ॥ सर्वत्रचान्यदप्येवंतेनादृष्टंनहिकिंचित्॥सर्वत्रसर्वदेवेशंपश्यत्येवरमाऽपितु
॥ ७४ ॥ नतुसर्वविशेषैस्तंपश्यंत्यप्यन्यतोऽधिकम् ॥ स्वात्मानमन्यच्चाशेषंपश्यत्येवंहिसर्वदा
॥ ७५ ॥ ब्रह्मातुसर्वगंपश्येद्गुणानप्यन्यतोऽधिकम् ॥ नतुसर्वेषुकालेषुतथापश्यत्यमुक्तिगः॥७६॥
मुक्तस्तुसर्वदापश्येत्सर्वगत्वेनचापितु ॥ नरमावद्विशेषाणांदर्शनंशक्नुयात्कचित् ॥ ७७ ॥ स्वात्मा
नमन्यच्चसदाविशेषैरखिलैरपि ॥ पश्यत्यंजस्तथावाणीविशेषांस्तावतोनतु ॥ ७८ ॥ त्रैगुण्यात्पर
तःपश्येद्व्यासंशलगुणंहरिम्॥७९॥गिरिशोगरुडश्चैवतमोमात्रगतंहरिम्॥पश्येद्विशेषानपिहिवाणीदृ
ष्टान्नपश्यति॥८०॥ उमासुपर्णीचमहत्तत्वंयावत्प्रपश्यति ॥ रुद्रदृष्टान्विशेषांश्चनैवपश्येत्कदाच
न ॥ ८१ ॥ स्वरूपमन्यरूपंचमुक्तादेवाःसमस्तशः ॥ जानंतींद्रश्चकामश्चब्रह्मयावदहंकृतिः
॥८२॥ पश्यंतोमनुदक्षाद्याबुद्धितत्त्वस्थितंहरिम् ॥ पश्यंतिसोमसूर्यौचमनःस्थंपरमेश्वरम्॥८३॥
अन्येभूतस्थितंविष्णुंदेवाःपश्यंतिसर्वदा ॥ बहुसाहस्रवर्षेणमहत्तत्त्वेकचित्कचित् ॥ ८४ ॥
अन्येचैवयथायोगमंढांतर्वर्तिनंहरिम् ॥ श्वेतद्वीपपतिंचैवहृद्येवान्येतुकेचन ॥८५॥ कदाचिदेव
तत्रापिकेचित्पश्यंतिकेशवम् ॥ उमायावदनंतांशान्पूर्वदृष्टेभ्यएवतु ॥ ८६ ॥ विशेषान्वासुदेव

स्यपश्चादुक्तान्विचक्षते॥शक्रकामादयश्चैवविशेषान्ब्रह्मणिस्थितान् ॥८७॥उमादिभिःप्रबुद्धेभ्यः
शतांशानेवचक्षते॥इत्यादिवेदस्मृतिगवचनेभ्योयथार्थतः॥८८॥तारतम्यंचमुक्तानांसाधनानांचदृ
श्यते ॥ साध्यसाधनवैरूप्यमदृष्टंकेनकल्प्यते॥८९॥वैषम्यंनिर्घृणत्वंचतेनस्यातांपरस्यच ॥सापे
क्षत्वादितिचतौविद्याधीशेनवारितौ ॥९०॥ तारतम्यात्साधनानांसाध्यतादृक्क्रमीशितुः ॥ अवै
षम्यादिहेतुःस्यात्सदैवपरमेश्वरे ॥ ९१॥ स्वातंत्र्येविद्यमानेऽपिसाधनादौपरेशितुः ॥ अपेक्ष्याना
दिवैचित्र्यंनदोषइतितद्वचः ॥ ९२ ॥ नानादित्वादितिह्युक्तमुपपद्यतइत्यपि ॥ अपेक्ष्योपायवैष
म्यमुपेयस्ययथास्थितिः ॥ ९३ ॥ मयाकार्याविरुद्धास्याद्राजादावपिदृश्यते ॥ त्यागोदृष्टस्य
चादृष्टकल्पनेतिसुदुष्करौ ॥ ९४ ॥ मायिभ्योऽन्येनकेनापितत्किमन्यैश्चवादिभिः ॥ मायिनो
ऽत्रानुगम्यंतेश्रुतहान्यश्रुतग्रहौ ॥ ९५ ॥ अप्यत्रमायिनांलिंगेतत्केदोषास्ततोऽधिकाः ॥
विशेषगतदोषाणांबहुभिर्जन्मभिःपुनः ॥ ९६ ॥ स्यादापरोक्ष्यंहिहरेर्द्वेषेर्ष्यादिस्ततःकुतः ॥ भ
वेयुर्यदिचेर्ष्याद्याःसमेष्वपिद्रुतोनते ॥ ९७ ॥ तप्यमानाःसमान्दृष्ट्वाद्वेषेर्ष्यादियुताअपि ॥ दृ
श्यंतेबहवोलोकेदोषाएवात्रकारणम्॥९८॥यदिनिर्दोषतातत्रकिमाधिक्येनदुष्यते ॥ यद्यन्यदर्श
नाभावादीर्ष्यादिर्विनिवार्यते ॥ ९९ ॥ अदर्शनादरत्यादिःकथंतेननिवार्यते ॥ ब्रह्मणोप्यरतिर्दृ
ष्टापूर्वमेकाकिनःश्रुतौ ॥१००॥ नैवरेमेसचैकाकीतस्मान्नरमतेकचित् ॥ द्वितीयमैच्छत्तेनासावि
तिश्रुतयऊदिरे ॥ १ ॥ यदीच्छानैवतत्रास्तीत्येवतत्कल्प्यतेमृषा ॥ श्रुत्युक्तनिर्दोषतैवाकिंनांगी
क्रियतेस्वयम् ॥ २ ॥ तारतम्यंचकामंचश्रुतमेवातिहायतु ॥ अश्रुतासमताकेनकल्प्यतेयुक्ति

मानिना ॥ ३ ॥ किंतन्मानंसमत्वेतेमुक्तानामुपलभ्यते ॥ वृथाममाग्रहःकेनश्रुताहान्यश्रुतग्र
हे ॥ ४ ॥ मोक्षेऽपितारतम्येनचेतनत्वात्पुरायथा ॥ इत्युक्तउत्तरंकिंतेकल्पनामात्रवादिनः
॥ ५ ॥ नचदुःखादिकंकल्प्यंनिर्दुःखत्वश्रुतेर्बलात् ॥ शोकंतरत्यात्मवेत्तातीर्णसर्वानदुःखभा
क् ॥ ६ ॥ येनानंद्येवभवतिनशोचतिकदाचन ॥ किल्बिषस्पृत्पितुषणिरर्हितइहेश्वरः
॥ ७ ॥ यंयमंतमभिप्रेप्सुःससंकल्पाद्भवेदिह ॥ इत्यादिश्रुतयोमानंनिर्दुःखत्वादिसंपदि
॥ ८ ॥ अतोदुःखाद्यनुमयानावकाशोऽत्रलभ्यते ॥ तारतम्यानुमातस्माद्भवेन्नातिप्रसंगिनी
॥ ९ ॥ श्रुतियुक्तिबलादेवतारतम्यंविभाव्यते ॥ मुक्तावपिततःकोऽत्रविरोधंकर्तुमीशते
॥ ११० ॥ अनादियोग्यतांचैवकलिवाणीश्वरावधिम् ॥ कोनिवारयितुंशक्तोयुक्त्यागमबलोद्ध
ताम् ॥ ११ ॥ ब्रह्मणोन्यतमाधिक्ययुक्तःकालोविवादवान् ॥ कालोह्ययंयथेत्यादिनानुमामा
निनोभवेत् ॥ १२ ॥ अन्यशब्दोहरिःश्रीस्वसमेभ्योन्यविवक्षया ॥ प्रयुक्तोनैवदोषायरुद्रादि
षुचयुक्तितः ॥ १३ ॥ उत्तमत्वंतुमुक्तानामपिनब्रह्मणोभवेत् ॥ व्यक्तिःसुखस्यतुभवेन्नत्वा
धिक्यंसुखस्यच ॥ १४ ॥ बलज्ञानाधिकत्वंचतेभ्योपिब्रह्मणःसदा ॥ आधिक्यस्यत्वनि
त्यत्वेनकिंचिन्मानमीयते ॥ १५ ॥ शृण्वेवीरउग्रमुग्रंदमायंनन्यमन्यमतिनेनीयमानः ॥ एधमा
नद्विळुभयस्यराजाचोष्कूयतेविशइंद्रोमनुष्यान् ॥ १६ ॥ परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअ
परेभिरेति ॥ अनानुभूतीरवधून्वानःपूर्वीरिंद्रःशरदस्तर्तरीति॥१७॥ दिवेदिवेसदृशीरन्यमर्धंकृष्णा
असेधदपसद्मनोजाः ॥ अहन्दासावृषभोवस्नयंतोदव्रजेवर्चिनंशंबरंच ॥ १८ ॥ तंभूतिदेवाउपा

सांचक्रिरेतेबभूवुस्तस्माद्धाप्येतर्हिसुमोभूभूरित्येवप्रश्वसित्यभूतिरित्यसुरास्तेपराबभूवुः ॥१९॥
तद्यथापेशस्करीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरंरूपंतनुतएवमेवायमात्मेदंशरीरंनिह
त्याविद्यांगमयित्वान्यंनवतरंकल्याणतरंरूपंकुरुतेपित्र्यंवागांधर्वंवादैवंवाप्राजापत्यंवाब्राह्मंवाऽन्ये
षांभूतानाम् ॥ २०॥ प्रयांतिपरमामृद्धिमैहिकामुष्मिकींद्रुतम् ॥ यानप्राप्यासुरैःसर्वैरक्षयाक्ले
शवर्जिता ॥ २१ ॥ नतांगतिंप्रपद्यंतेविनाभागवतान्नरान् ॥ अवजानंतिमांमूढामानुषींतनुमाश्रि
तम् ॥२२॥ परंभावमजानंतोममभूतमहेश्वरम्॥मोघाशामोघकर्माणोमोघज्ञानाविचेतसः॥२३॥
राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः ॥ महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः ॥ २४ ॥
भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययम् ॥ अभयंसत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥ २५ ॥
दानंदमश्चयज्ञश्चस्वाध्यायस्तपआर्जवम् ॥ अहिंसासत्यमक्रोधस्त्यागःशांतिरपैशुनम् ॥ २६ ॥
दयाभूतेष्वलोलुप्त्वंमार्दवंह्रीरचापलम् ॥ तेजःक्षमाधृतिःशौचमद्रोहोनातिमनिता ॥ २७ ॥ भ
वंतिसंपदंदैवीमभिजातस्यभारत ॥ दंभोदर्पोभिमानश्चक्रोधःपारुष्यमेवच ॥ २८ ॥ अज्ञानंचा
भिजातस्यपार्थसंपदमासुरीम् ॥ मामात्मपरदेहेषुप्रद्विषंतोऽभ्यसूयकाः ॥ २९ ॥ तानहंद्विषतः
क्रूरान्संसारेषुनराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु ॥ ३० ॥ आसुरींयोनिमाप
न्नामूढाजन्मनिजन्मनि ॥ मामप्राप्यैवकौंतेयततोयांत्यधमांगतिम् ॥ ३१ ॥ द्विविधोभूतसर्गोत्र
दैवआसुरएवच ॥ विष्णुभक्तिपरोदेवोविपरीतस्तथासुरः ॥ ३२ ॥देवानांपरमोधर्मःसदायज्ञादि
काःक्रियाः ॥ स्वाध्यायस्तत्त्ववेदित्वंविष्णुपूजारतिःस्मृतिः ॥ ३३ ॥ दैत्यानांबाहुशालित्वंमात्स

यैयुद्धसत्क्रिया ॥ नीतिशास्त्रप्रवेदित्वंशिवपूजारतिःस्मृतिः ॥ ३४ ॥ वर्णाश्रमाचारवत्वंस्वाध्या
योभक्तिरच्युते ॥ शिवेसूर्येतथादेव्यांस्वभावोमानुषःस्मृतः ॥ ३५ ॥ अनादिवैष्णवाएवदेवता
स्तुस्वभावतः ॥ विपरीतास्तथादैत्याःसदैवानादिकालतः ॥ ३६ ॥ मानुषामिश्रमनयोविमिश्र
गतयोपिच ॥ इत्यादिवाक्यसंदर्भैर्ज्ञायतेनादियोग्यता ॥ ३७ ॥ यद्यनादिर्विशेषोनसांप्रतंकथ
मेवसः ॥ अदृष्टादेवचादृष्टंस्वीकृतंसर्ववादिभिः ॥ ३८ ॥ आकस्मिकोविशेषश्चेददृष्टेकचिदिष्य
ते ॥ सर्वत्राकस्मिकत्वंस्यान्नदृष्टापेक्षताभवेत् ॥ ३९ ॥ अदृष्टाच्चेद्विशेषोयमनादित्वंकुतोनत
त् ॥ नचान्यभेदवद्विष्णोभेदस्तद्दर्शिनामपि ॥ ४० ॥ दृश्यतेप्रत्यभिज्ञैवबहुरूपेषुदृश्यते ॥ बहु
त्वंचविशेषेणनभेदेनकथंचन ॥ ४१ ॥ कृत्यभिज्ञाचयेषांनतेपितन्मुष्टदृष्टयः ॥ भेदंनैवप्रपश्यं
तिभेदमन्येभ्यएवच ॥ ४२ ॥ पश्यत्येषहरिस्तेषांसंदर्शयतिनान्यथा ॥ एवंब्रह्मसंहितायांवच
नंनपुराणगम् ॥ ४३ ॥ लोकदर्शनबाध्येववेदवेद्यस्यशक्नुयात् ॥ अपरीक्षितदृष्टिश्चपरीक्षापूर्व
दर्शनम् ॥ ४४ ॥ निषेद्धुंशक्नुयात्कापिदेवदत्तादिदृष्टिवत् ॥ नचनिश्चितभेदस्यदर्शनेऽस्तिपुरा
णगम् ॥ ४५ ॥ वाक्यंक्वचिद्विसंमुग्धंदर्शनंतत्रगम्यते ॥ अपरीक्षितमेवात्रवेधादिकमधीशितुः
॥ ४६ ॥ परीक्षादर्शनेनैवदृश्यतेकेनचित्क्वचित् ॥ निर्दोषमेवतंब्रह्मादददर्शाशेषरूपिणम् ॥ ४७॥
निर्दोषमेवरुद्रेंद्रोग्निर्दोषंतंपुरंदरः ॥ निर्दोषाण्यस्यरूपाणिदृष्टान्येवंसुरोत्तमैः ॥ ४८ ॥ अन्येस
दोषाःसर्वेऽपिनिर्दोषोहरिरेकलः ॥ इतिबर्कुश्रुतिश्चैवसदोषंनास्यदर्शनम् ॥ ४९ ॥ अविद्धोविद्ध
वद्विष्णुरजातोजातवन्मृषा ॥ अबद्धोबद्धवच्चैवदर्शयत्यमितद्युतिः ॥ ५० ॥ इतिपैंगिश्रुतिश्चै

वप्राह निर्दोषतांहरेः ॥ अपरीक्षितदृष्टेचैवसदोषोदृश्यतेहरेः ॥ ५१ ॥ परीक्षादर्शनेनैवदृश्योदो
षोहरेःक्वचित् ॥ इतिपैंगिश्रुतिश्चाहप्रमाणंहिपरीक्षितम् ॥ ५२ ॥ नपरीक्षानवस्थास्यात्साक्षि
सिद्धत्वसंशयात् ॥ मानसेदर्शनेदोषाःस्युर्नैवसाक्षिदर्शने ॥ ५३ ॥ सुदृढोनिर्णयोयत्रज्ञेयंतत्सा
क्षिदर्शनम् ॥ इच्छाज्ञानंसुखंदुःखंभयाभयकृपादयः ॥५४॥ साक्षिसिद्धानकश्चिद्धितत्रसंशयवा
न्क्वचित् ॥ यत्कचिद्व्यभिचारिस्याद्दर्शनंमानसंहितत् ॥ ५५ ॥ मनश्चक्षुर्दर्शनादेरपियत्रैवसाक्षि
णा ॥ प्रामाण्यंसुगृहीतंस्यात्तत्परीक्षितदर्शनम् ॥ ५६ ॥ नज्ञानदृष्टिमात्रेणप्रामाण्यंतस्यदृ
श्यते ॥ नियमेनसुखाद्येषुप्रामाण्यंसाक्षिगोचरम् ॥ ५७ ॥ स्वप्रामाण्यंसदासाक्षीपश्यत्येवसु
निश्चया ॥ ज्ञानस्यग्रहकेणैवसाक्षिणामानतामितेः ॥ ५८ ॥ दोषाभावेप्रमाणत्वंदोषाभावस्य
साक्षिणा ॥ निश्चितत्वंकचिच्चैवस्वतःप्रामाण्यमिष्यते ॥ ५९ ॥ अतोनसर्वमानानांप्रा
माण्यंनिश्चितंभवेत् ॥ साक्षिणानिश्चितंयत्रतत्प्रामाण्यस्वलक्षणम् ॥ ६० ॥ नहिकश्चित्सु
खाद्येषुसंशयंकुरुतेजनः ॥ नचैवाखिलमानानिनिश्चिनोत्यखिलोजनः ॥ ६१ ॥ तस्मादनुभवा
रूढंकिमर्थमपलप्यते ॥ दोषाभावादिकंचैवसाक्षीसम्यक्प्रपश्यति ॥ ६२ ॥ तत्परीक्षितमानेन
नदोषोविष्णवेक्वचित् ॥ अपरीक्षितदृष्टिस्तुकस्मिन्नर्थेनैविद्यते ॥ ६३ ॥ तत्प्रत्यक्षविरुद्धार्थैना
गमस्यापिमानता ॥ उपजीव्यमक्षजंयत्तदन्यत्रविपर्ययः ॥ ६४ ॥ लौकिकेव्यवहारेऽत्रप्रत्य
क्षस्योपजीव्यता ॥ अवतारादिदृष्टौस्यादागमस्योपजीव्यता ॥ ६५ ॥ आगमेनहिविष्णुत्वं
ज्ञात्वादोषोऽत्रकल्प्यते ॥ नचेत्स्याद्दोषवानन्यःशास्त्रसिद्धंहिलक्षणम् ॥ ६६ ॥ कस्यचिद्दोषव

त्वंस्यादितिमात्रेऽक्षजंभवेत् ॥ नविष्णोर्दोषवत्वेहिप्रत्यक्षंवर्ततेस्वतः ॥ ६७ ॥ केचित्पश्यंतिदो
षानित्यत्रापिस्यान्नचाक्षजम् ॥ पौराणंवाक्यमेवात्रतच्छ्रुत्यैवविरुध्यते ॥ ६८ ॥ पुराणस्योप
जीव्यश्चवेदएवनचापरः ॥ तद्विरोधेकथंमानंतत्तत्रचभविष्यति ॥ ६९ ॥ अपरीक्षितदृ
ष्टिश्चकथमेवाक्षजंभवेत् ॥ यद्येवंदेवदत्तादिभ्रमःकिंनाक्षजंभवेत् ॥ यावच्छक्तिपरीक्षायामुपजी
व्यस्यबाधने ॥ ७० ॥ दोषोनाशोधितेदोषमुपजीव्यत्वमस्त्वलम् ॥ अमेध्यभ्रमभागोस्तित
न्मात्रमुपजीव्यहि ॥ ७१ ॥ बाधकज्ञानवृत्तिःस्यान्नचैवंसुपरीक्षिते ॥ सर्वंतदुपजीव्यैवप्र
माणंवर्ततेयतः ॥ ७२ ॥ कथंब्रह्मेतितज्ज्ञेयंसर्वज्ञत्वादिलक्षणम् ॥ विहाययस्मात्कस्मा
च्चित्स्वरूपस्यैवचेद्यदि ॥ ७३ ॥ उपजीव्यत्वमेनस्माद्व्यावृत्तंयवताभवेत् ॥ तावतैवोपजी
व्यत्वंस्वरूपस्यैवनकचित् ॥ ७४ ॥ सर्वलक्षणयुक्तंचस्वरूपंयदिभण्येत ॥ अस्तुनोनैवहानिःस्या
त्स्वपक्षश्चायमंजसा ॥ ७५ ॥ यस्मादन्वितएवार्थःशब्दानामपिसर्वशः ॥ विशेषसामान्यतया
स्वरूपमखिलंभवेत् ॥ ७६ ॥ पुरोवर्तित्वपूर्वाणिदेवदत्तादिकभ्रमे ॥ व्यावर्तयंतितद्रूपंचैत्रमा
त्राद्विनैवहि ॥७७॥ ब्रह्मणोनिर्विशेषत्वाद्व्यावर्तयतिकिंपुनः ॥ यस्मात्कस्माच्चिदप्यर्थात्तावच्चे
त्सिद्धसाधनम् ॥७८॥ चिन्मात्रत्वंचनैवेष्टमविशेषत्ववादिनः ॥ तावन्मात्रंयदीष्टंस्यात्सर्वज्ञत्वंकु
तोनतत्॥७९॥चिन्मात्राभेदसाध्येऽपिसिद्धंतत्प्रतिवादिनः ॥ स्वाभेदांगीकृतेनैवाचित्वंस्वस्यापिय
न्मतम्॥८०॥सर्वापेक्षतयासर्वज्ञत्वमित्येवतन्नहि ॥ इतिचेच्चेतनत्वंचज्ञत्वंनज्ञेयवर्जितम्॥८१॥
स्वज्ञेयत्वंचनैवासौमन्यतेसविशेषतः ॥ स्वशब्दोपिपरापेक्षस्तस्माद्व्यावृत्तिरेवहि ॥ ८२ ॥ स्वश

ब्दार्थइतिप्रोक्तःस्वरूपंनामकिंनचेत् ॥ नस्वरूपाभिधायित्स्याद्वैयर्थ्यंस्वरवस्ययत् ॥ ८३ ॥
रूपशब्देनपूर्णत्वात्तच्चसामान्यतावचः ॥ चेतनस्यस्वभावोहिचैतन्यमितिगीयते ॥ ८४ ॥ त
स्माद्विशेषबाहुल्यंचैतन्यस्यविशेषतः ॥ नज्ञेयज्ञातृहीनंहिज्ञानंनामकचिद्भवेत् ॥ ८५ ॥ ज्ञेय
ज्ञानविहीनश्चज्ञइत्यत्रनचप्रमा ॥ ज्ञातृज्ञेयविहीनंचज्ञानंचेद्भोक्तृभोग्यतः ॥ ८६ ॥ हीनंभो
जनमेवस्यात्ताडनंकर्तृताड्यतः ॥ नित्यत्वात्तादृशंचस्यादितिचेन्नित्यवागपि ॥ ८७ ॥ वाच्य
वक्तृविहीनास्यान्नहिसाचैवतादृशी ॥ द्रष्टारोवेदवाचोहिसंतिवाच्यानिचांजसा ॥ ८८ ॥ नित्यो
द्रष्टाचवाच्यश्चभगवानेवचस्वयम् ॥ नहिवक्तृविहीनाचवाच्यहीनापिवाक्कचित् ॥८९॥ ज्ञातृ
ज्ञेयविहीनंचज्ञानमेवनतद्भवेत् ॥ नहिनित्योपिवक्तास्तिवाक्यवाच्यविवर्जितः ॥ ९० ॥ ज्ञानज्ञे
यविहीनश्चज्ञोप्येवंनैवविद्यते ॥ किंचसर्वविलोपश्चकेनमानेनगम्यते ॥ ९१ ॥ सर्वेणसहतद्वाक्य
मर्थश्चयदिगृह्यते ॥ तदभावेनसर्वस्यनापलापोभवेत्तदा ॥ ९२ ॥ नगृह्यतेचेत्तन्न्यायादपलापोन
हिकचित् ॥ उपपत्तिविहीनस्यवाक्यस्यार्थोनगम्यते ॥ ९३ ॥ उपक्रमादिलिंगानांबलीयोह्युत्त
रोत्तरम् ॥ श्रुत्यादौपूर्वपूर्वंचब्रह्मतर्कविनिर्णयात् ॥९४॥ प्रत्यक्षमुपपत्तिश्चप्रत्यक्षश्चागमायदा॥
विरुध्यंतेनचार्थोऽस्तियत्रलिंगविरोधिता ॥९५॥ सएवार्थःकथंग्राह्यउपपत्त्येविरोधिनि ॥ मुख्या
र्थोविद्यमानेतुक्कसार्वज्ञंनिषिध्यते ॥९६॥ अतःसर्वगुणैर्युक्तंब्रह्मांगीकार्यमेवहि ॥ अपलापोऽपि
सर्वस्यनकथंचनयुज्यते ॥ ९७ ॥ अमादियोग्यताचोक्तातेनग्राह्यैवसर्वथा ॥ मुक्तानांतारतम्यं
चमानैरुक्तैर्नचाल्यते ॥९८॥ ज्ञानिनोपिध्रुतोनित्यंकुर्वंतिशुभमेवहि ॥ तारतम्यंतुमुक्तौचतेनैवा

ध्यवसीयते ॥ ९९ ॥ तारतम्यंनचेन्मुक्तौकुतःकुर्युःशुभंपुनः ॥ कृच्छ्रेणापितपोज्ञानंकर्मण्येतेच
रंतिहि ॥ २०० ॥ बिभ्यतिस्माशुभान्नित्यंसकामाश्चशुभेसदा ॥ नचस्वभावएवायंभयपूर्वप्रवृ
त्तितः ॥ १ ॥ कृत्स्नेनाचरणाच्चैवशुभस्यैवपुनःपुनः ॥ तादृशोपिस्वभावश्चेदज्ञश्चापिभवेत्तथा
॥ २ ॥ फलवत्वेप्रमाणंचेत्तत्रज्ञस्यसमंहितत् ॥ निष्कामंज्ञानपूर्वंचनिवृत्तमिहचोच्यते ॥ ३ ॥
निवृत्तंसेव्यमानस्तुब्रह्माभ्येतिसनातनम् ॥४॥ शुभेनानंदवृद्धिःस्याह्रासश्चैवाशुभेनहि ॥ ज्ञानि
नोऽपियलस्तेनकर्तव्यंशुभमेवतैः ॥५॥ उपास्तेसद्यआत्मानंक्षीयतेनास्यकर्महि ॥ अस्मादेवात्म
नोयद्यत्कामयेत्सृजतेचतत् ॥ ६ ॥ अविद्वान्बहुकर्मापिध्रुवंतवत्फलमाप्नुयात् ॥ यदेवविद्ययाकु
र्यात्तदेवह्यतिवीर्यवत् ॥ ७ ॥ इत्यादिवाक्यसामर्थ्यात्तारतम्यंविमुक्तिगम् ॥ नचात्रोपासकस्यैव
फलमक्षयमुच्यते ॥ ८ ॥ नहिज्ञानंविनाक्वापिफलस्याक्षयताभवेत् ॥ ज्ञानद्वारेणचेत्तस्यनास्म
त्पक्षप्रतीपता ॥९॥ ज्ञानोत्तरस्यैवमपिह्यक्षयत्वंनचान्यथा ॥ पूर्वभाविशुभानांहिज्ञानेनैवकृता
र्थता ॥१०॥ प्रारब्धानांतुभोगेनतज्ज्ञानोत्तरकर्मणाम् ॥ मुक्तावनुप्रवेशःस्यादन्यथातत्कृतिर्नहि
॥ ११ ॥ ज्ञानात्पूर्वाणिकर्माणिशुभानिज्ञानसिद्धये ॥ अकाम्यानिनिषिद्धानिज्ञानरोधायमु
क्तये ॥ १२ ॥ योग्यतायाबलाद्यच्चशुभबाहुल्यमादितः ॥ ज्ञानबाहुल्यमेवैतत्कुर्यान्नान्यस्य
कारणम् ॥ १३ ॥ ज्ञानस्यभक्तिभागत्वाद्भक्तिज्ञानमितीर्यते ॥ ज्ञानस्यैवविशेषोयद्भक्तिरित्य
भिधीयते ॥१४॥ परोक्षत्वापरोक्षत्वेविशेषौज्ञानगौयथा ॥ स्नेहयोगोऽपितद्वत्स्याद्विशेषोज्ञानगो
यतः ॥ १५ ॥ इत्यभिप्रायतःप्रायोज्ञानमेवविमुक्तये ॥ वदंतिश्रुतयःसोयंविशेषोऽपिह्युदीर्यते

॥ १६ ॥ भक्तिर्ज्ञानमिति कापि नहि द्वेषयुता दृशिः ॥ पुरुषार्थाय भवति सर्वश्रुतिविरोधतः ॥१७॥
चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेवच॥ संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा॥ १८॥ मुक्तिश्च द्विवि
धा तत्र सुखं नित्यं तथापरम्॥ नित्यदुःखमिति ज्ञेयं साधनं संसृतावपि ॥१९॥ काम्यं कर्म निषिद्धं च सा
ज्ञानमिति निश्चयः ॥ द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम् ॥२०॥ इति पैंगिश्रुतेर्द्वेषो नैव सन्मु
क्तिकारणम् ॥ असन्मुक्तेः कारणं च मुक्तावित्यत्र केशवः ॥ २१ ॥ मुक्तिशब्दोदितो मोक्षं स्वभक्ता
नां करोति यत् ॥ द्वेषतोपि विमुक्तिश्चेन्महातात्पर्यरोधनम् ॥ २२ ॥ भक्त्या प्रसन्नतो देवान्मुक्तिरि
त्येव तद्गुणात् ॥ वदंति श्रुतयः सर्वा पुराणान्यागमा अपि ॥ २३ ॥ यदि द्वेषेण मुक्तिः स्याद्भक्तव्यो
दोषसंचयः ॥ स्मर्तव्यो भगवान्नित्यमित्यर्थे नैव हि किंचित् ॥२४॥ द्वेषादिवगुणानाह पुराणे कुद्धवा
क्यवत् ॥ यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् ॥ २५ ॥ प्रोक्तस्यान्यस्य कृत्यर्थं वदंत्येव पुराणग
म् ॥ वाक्यं श्रुतिविरोधेन स्वविरोधेन चांजसा ॥ २६ ॥ बव्हागमविरोधाच्च न द्वेषान्मुक्तिवाचकम् ॥
तमो द्वेषेण संयांति भक्त्या मुक्तिं तथैव च ॥२७॥ विष्णौ विष्णुप्रसादेन विलोमत्वेन चांजसा ॥ इति
षाड्गुण्यवचनमप्युक्तार्थनियामकम् ॥ २८ ॥ महातात्पर्यरोधेन कथं वाक्यं प्रमाणताम् ॥ या
ति सर्वार्थरूपं हि महातात्पर्यमिष्यते ॥ २९ ॥ वाचकत्वं हि तात्पर्यं यथार्था अखिला रवाः॥ सोर्थः कथं
परित्याज्य एकशब्दस्य संशये ॥ ३० ॥ अतो विज्ञानभक्तिभ्यां पुरुषार्थः परो भवेत् ॥ यस्य देवे प
रा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥ ३१ ॥ भक्त्या ज्ञानं ततो
भक्तिस्ततो दृष्टिस्ततश्च सा ॥ ततो मुक्तिस्ततो भक्तिः सैव स्यात्सुखरूपिणी ॥३२॥ भक्त्या प्रसन्नो

भगवान्दद्याज्ज्ञानमनाकुलम् ॥ तयैवदर्शनंयातःप्रदद्यान्मुक्तिमेतया ॥ ३३ ॥ नाहंवेदैर्नतपसान
दानेननचेज्यया ॥ शक्यएवंविधोद्रष्टुंदृष्टवानसिमांयथा ॥ ३४ ॥ भक्त्यात्वनन्ययाशक्यअह
मेवंविधोऽर्जुन ॥ ज्ञातुंद्रष्टुंचतत्वेनप्रवेष्टुंचपरंतप ॥ ३५ ॥ इत्यादिवाक्यतश्चैवसोयमुक्तार्थइर्यते
॥ नचप्रसादमाप्नोतिद्वेषाद्भक्त्यातमाप्नुयात् ॥ ३६ ॥ इतिदृष्टानुसारित्वमप्यस्मिन्नर्थईर्यते ॥
येपृथग्विहिताविष्णोर्गुणावेदेनसादरम् ॥ ३७ ॥ तएवदृष्टवैलोम्यादंगीकार्यानचापरम् ॥ अ
न्यदृष्टानुसारेणवासुदेवेऽपिगृह्यते ॥ ३८ ॥ दोषाभावाश्चयेवेदैरुदिताअविहायतान् ॥ अ
नुक्ताअपिचग्राह्यामहातात्पर्यशक्तितः ॥ ३९ ॥ एवंबृहत्संहितावाक्सिद्धांतोहितदीरितः ॥
तारतम्येनतद्भक्तेष्वपिभक्तिर्विनिश्चयात् ॥ ४० ॥ कर्तव्यैषापितद्भक्तिर्लोकवेदानुसारतः ॥ यो
हिभक्तःप्रधानेस्यात्तदीयेष्वपिभक्तिमान् ॥ ४१ ॥ दृश्यतेसौनियमतोविपरीतोविपर्यये ॥ व्य
भिचारोयदिक्वापिभक्तिह्रासोऽत्रकल्प्यते ॥ ४२ ॥ भक्तिदोषोह्यसौतत्रतद्भक्तेष्वपिभक्तिमा
न् ॥ तारतम्येनतेष्वद्धाभक्तिर्दृष्टानुसारतः ॥ ४३ ॥ विष्णुप्रसादानुसारात्कार्यदोषस्तदन्यथा ॥
स्वप्रीत्यनुसृतौप्रीतिर्लोकेप्यद्धैवदृश्यते ॥ ४४ ॥ तारतम्यपरिज्ञानमप्येतेनैवसाधनम् ॥
लक्ष्मीविरिंचवाणीशगिरिजेंद्रागिरांपतिः ॥ ४५ ॥ सूर्यादयश्चक्रमशोभगवत्प्रीतिगोचराः ॥
तेषुमुक्तिक्रमेणैवकार्यानित्यंमुमुक्षुभिः ॥ ४६ ॥ सर्वेऽपिगुरवश्चैतेपुरुषस्यसदैवहि ॥ तस्मात्पू
ज्याश्चनम्याश्चध्येयाश्चपरितोहरिम् ॥ ४७ ॥ इतिषाड्गुण्यवचनादप्येषोऽर्थोवसीयते ॥ ह
रिभक्तिक्रमेणैवतदीयेषुहरिःस्मृतिः ॥ ४८ ॥ हरिस्तुतिस्तत्स्मृतिश्चतत्स्तुतिर्हरिपूजनम् ॥ त

त्पूजाविहितत्यागइतिमुक्तःक्रमेणहि ॥ ४९ ॥ नियमात्साधनान्येवनित्यसाध्यानिचाखिलैः ॥
इतिप्रवृत्तवचनंसाधनस्यविनिर्णये ॥ ५० ॥ प्रवृत्तंपंचरात्रेहिसाधनस्यविनिर्णयः ॥ हरिद्वे
षोनशुभदःसद्वेषत्वाद्यथागुरोः ॥ ५१ ॥ क्रमाद्भक्तिर्हरिप्रीतिकारणंतत्प्रियोपगा ॥ भक्तिर्य
तोयथास्वस्मिन्नित्याद्यायुक्तिरेवच ॥ ५२ ॥ प्राधान्यतारतम्यानुसारिणीभक्तिरुत्तमा ॥ प्री
तिर्देवेहरेर्यस्माद्भक्तिःसाम्योपगायथा ॥ ५३ ॥ इतिवाज्ञानकर्मादिफलंचैषुक्रमोपगम् ॥ स्वातं
त्र्यतारतम्येनफलंहिफलिनोभवेत् ॥ ५४ ॥ अशुभंत्वशुभेष्वेषांस्वातंत्र्यात्प्रीतितोहरेः ॥ आज्ञा
याचाल्पगंनैवभोगायभवतिकचित् ॥ ५५ ॥ पुण्यमेवाप्नुयामोतिनदेवान्पापमाप्नुयात् ॥ इत्या
दिश्रुतयोमानमुक्तेर्थेयुक्त्योपराः ॥ ५६ ॥ उपासनाधर्मफलंयतोदेहांतरेस्थितिः ॥ वासुदेवाज्ञ
याचैवपूर्वकर्मानुसारतः ॥ ५७ ॥ प्रेरयंनिहितेजीवान्पुण्यपापेषुनित्यशः ॥ अरागद्वेषतश्चैवकथं
दोषानवाप्नुयुः ॥ ५८ ॥ हर्याज्ञाकरणादेवपुण्यमेभिरवाप्यते ॥ हरिपूजेतिचोद्देशात्कथंनशुभमा
प्नुयुः ॥ ५९ ॥ अतोयथाक्रमंधर्मज्ञानयोःफलमंजसा ॥ सर्वप्राणिगतंदेवाःप्राप्नुवंत्याविरिंचतः
॥ ६० ॥ देवाएवहिदेवानांविशिष्टाविनियामकाः ॥ ब्रह्मात्वखिलदेवानांनराणांचनियामकः
॥ ६१ ॥ अतःसर्वगुणानेषप्राप्नोत्यधिकमन्यतः ॥ इत्यस्वातंत्र्यविज्ञानप्रयत्नैरखिलंफलम् ॥ ६२ ॥
देवानामन्यगंचापितेषुहिब्रह्मणोधिकम् ॥ बृहत्तंत्रोदितंवाक्यंहरिणाफलनिर्णये ॥ ६३ ॥ लो
केप्येतादृशगुणैःफलाधिक्यंहिदृश्यते ॥ एवंचेत्कलिपूर्वाणामसुराणांमहत्फलम् ॥ ६४ ॥ अशु
भेषुसदैवस्यान्मिथ्याज्ञानादिकेषुहि ॥ शुभाशुभफलंदेवाअसुराश्चसमाप्नुयुः ॥ ६५ ॥ क्रमेणैव

यथाशक्तियथायेयेप्रयोजकाः॥ प्रेरकाअपिपापानांनदेवाःपापमाप्नुयुः॥६६॥ इतिप्रकाशिकायां
हिप्रोवाचहरिरंजसा ॥ यद्यप्येवंसुराणांचदैत्यानांचमहत्फलम् ॥ ६७ ॥ शुभाशुभेभ्यएवंचक
र्तुश्चस्याद्यथोदितम् ॥ तस्मान्निरयमानुष्यस्वर्गमुक्त्युपभोगिनः ॥ ६८ ॥ मनुष्योत्तममा
रभ्यदेवास्तुनिरयंविना ॥ असुरास्तुविनामुक्तितमोंधमपिचाप्नुयुः ॥ ६९ ॥ इतितत्त्वविवेकोक्तंस्व
यंभगवतावचः ॥ ज्ञानदाअपिचाचार्याविशेषात्फलमाप्नुयुः ॥ ७० ॥ मुक्तावष्टगुणंशिष्याद्गु
रुराप्नोतिशोभनम् ॥ तद्गुरुर्द्विगुणंतस्थात्सार्धंतावत्ततोपरे॥७१॥देवाःसहस्रगुणितंक्रमात्तस्माद्य
थोत्तरम्॥ ब्रह्मामहौघगुणितमेवंफलविनिर्णयः॥७२॥इत्याहभगवाञ्छास्त्रेगुरुदत्ताभिधेस्वयम्॥
उक्तंचतन्नगोदातागोमात्रफलमाप्नुयात् ॥ ७३ ॥ यइदंपरमंगुह्यंमद्भक्तेष्वभिधास्यति ॥ भक्तिं
मयिपरांकृत्वामामेवैष्यत्यसंशयः ॥ ७४ ॥ नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः ॥ भविता न
चमेतस्मादन्यःप्रियतरोभुवि ॥ ७५ ॥ इत्याहभगवानेवमपिमात्रमपेक्षते ॥ एवमेवाविरोधेनप्रार
ब्धस्यैवकर्मणः ॥ ज्ञानदृष्टफलंप्रोक्तंमुक्तिश्चेहैवलभ्यते ॥ ७६ ॥ ॥ ४ ॥ इतिश्रीमदानंदती
र्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेतृतीयाध्यायस्यचतुर्थःपादःसमाप्तः ॥ ॥
समाप्तोयमध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ४ ॥
श्रीगुरुभ्योनमः॥ ॥ समन्वयाविरोधाभ्यांसिद्धेवस्तुनिसाधने ॥ विचारितेष्वशेषेषुसाधनेषुवि
शेषतः ॥ १ ॥ नित्यशःकार्यमत्यंतमवश्यंभाविसाधनम् ॥ चिंत्यतेप्रथमंतत्रश्रवणादिसकृत्क्रिया
॥ २ ॥ आवृत्तिर्वेतिसंदेहेकर्तव्यावृत्तिरेवहि ॥ उपदेशोतत्त्वमसीत्यादिर्ह्यसकृदेवयत् ॥३ ॥ लिं

गाह्यातव्यतःपूर्वंमृजोर्ब्रह्मत्वतःशतात् ॥ शुश्रावोग्रतपानामयोग्योरुद्रपदस्ययः ॥ ४ ॥ सार्धंप
रार्थंविष्णोस्तुगुणान्भक्त्यासदोद्यतः ॥ तत्त्रिभागमुपासांचचक्रेसंभूतमानसम्॥५॥दशमन्वंतरं
शक्रपदयोग्योगरुत्मतः ॥ पदयोग्यात्सुमनसःसुनंदोनामचाशृणोत् ॥ ६ ॥ उपासांचकउद्युक्तोम
न्वंतरचतुष्टयम् ॥ सूर्याचंद्रमसोश्चैवपदयोग्यौसुतेजसौ ॥ ७ ॥ सुरूपःशांतरूपश्चमन्वंतरचतुष्ट
यम् ॥ अशृण्वतांसुमनसोमन्वंतरमुपसताम्॥८॥ ततःप्रोक्तास्तुतेसर्वैभक्त्योग्रतपआदयः ॥ अ
पश्यन्परमंविष्णुंतत्प्रसादेधिताःसदा ॥ ९ ॥ इत्युक्तंविष्णुनासाक्षाद्ग्रंथेसत्तत्त्वसंज्ञिके ॥ आत्मेति
नामकथितंसाक्षान्नारायणस्यहि ॥ १० ॥ आत्माब्रह्ममहास्तारःपरमेशःशुचिश्रवाः ॥ विष्णुर्ना
रायणोनंतइतिश्रीपतिरीर्यते ॥ ११ ॥ इतिपैंगिश्रुतिश्चैवतथैवपरमश्रुतिः ॥ ॥ ओमात्माभग
वान्विष्णुरात्मानंदोक्षरःस्वराट् ॥ १२ ॥ विश्वत्रातानृसिंहोजोनारायणउरुक्रमः ॥ अनसूयातथै
वात्रेर्जज्ञेपुत्रानकल्मषान् ॥ १३ ॥ दत्तंदुर्वाससंसोममात्मेशब्रह्मसंभवान् ॥ इतिभागवतेचै
वतस्मादात्माजनार्दनः ॥ १४ ॥ तस्मादुपास्योविष्णुरितिज्ञातव्यःसज्जनैःसदा ॥ तथैवो
पासतेसंतस्तथैवोपदिशंतिच ॥ १५ ॥ आदानार्थत्वतश्चायमात्मशब्दःपतिंवदेत् ॥ स्वामी
मेविष्णुरित्येवनित्यदोपास्यमंजसा ॥ १६ ॥ स्वामीविष्णुरितिध्यानंविशेषणविशेष्यतः ॥
कर्तव्यंसर्वथैवैतंनकथंचनविस्मरेत् ॥ १७ ॥ इतिसत्तत्त्ववचनंषाड्गुण्यवचनंपरम् ॥ ममस्वा
मीहरिर्नित्यंसर्वस्यपतिरेवच ॥ १८ ॥ इतिध्येयःसर्वदैवभगवान्विष्णुरव्ययः ॥ प्रतीक
विषयत्वेननकार्याविष्णुभावना ॥ १९ ॥ प्रतीकंनैवविष्णुर्यन्मिथ्योपासाह्यनर्थदा ॥ योऽ

न्यथासंतमात्मेशमन्यथाप्रतिपद्यते ॥ २० ॥ किंतेननकृतंपापंचोरेणात्मापहारिणा ॥ योऽ
न्यथासंतमात्मानमन्यथाप्रतिपद्यते ॥ २१ ॥ किंतेननकृतंपापंचोरेणेशापहारिणा ॥ योऽन्य
थैवस्थितंविष्णुमन्यथाप्रतिपद्यते ॥ २२ ॥ किंतेननकृतंपापंचोरेणब्रह्महारिणा ॥ स्वात्मानंप्र
तिमांवापिदेवतांतरमेवच ॥ २३ ॥ चेतनाचेतनंवान्यद्ध्यायेद्यःकेशवस्त्विति ॥ किंतेननकृतं
पापंचोरेणेशापहारिणा ॥ २४ ॥ योन्यद्विष्णुरितिध्यायेज्जानीयाद्वाहरिंतथा ॥ अंधेतमसिमज्जे
त्सयत्रनैवोत्थितिःक्वचित् ॥ २५ ॥ योन्यद्विष्णुरितिध्यायेद्विष्णुरन्यदितिस्मवा ॥ अन्यथा
ध्यानदोषेणसोंधेतमसिमज्जति ॥ २६ ॥ योन्यद्विष्णुरितिध्यायेद्विष्णुरन्यदितिस्मवा ॥ महात
मसिमग्नस्यतस्यनैवोत्थितिःक्वचित् ॥ २७॥ यत्किंचिदन्यथासंस्थमन्यथाध्यातमंजसा ॥ ध्यातु
र्महादोषकरंकिमुसर्वेश्वरोहरिः ॥ २८ ॥ यत्किंचिदन्यथासंस्थमन्यथाज्ञानमंजसा ॥ महादोष
करंविष्णुःकिमुसर्वेश्वरोहरिः ॥ २९ ॥ यत्किंचिदन्यथासंस्थमन्यथाज्ञानमंजसा ॥ अनर्थकार
णंलोकेकिमुसर्वेश्वरेश्वरः ॥ ३० ॥ नकिंचिदन्यथाज्ञेयंध्येयंवानेनकुत्रचित् ॥ किमुसर्वोत्तमो
विष्णोर्ज्ञेयोनचतयाक्वचित् ॥ ३१ ॥ तस्माद्वस्तुयथारूपंज्ञेयंध्येयंचसर्वदा ॥ कारणंपुरुषार्थस्य
नान्यथाभवतिक्वचित् ॥ ३२ ॥ इतिश्रुतिपुराणोक्तिबलतोनप्रतीकता ॥ ध्येयोविष्णोःक्व
चिद्यस्मान्मिथ्याज्ञानमनर्थदम् ॥ ३३ ॥ इत्यभिप्रेत्यनहिसइत्याहभगवान्प्रभुः ॥ प्रतीकसं
स्थितत्वेनध्येयो विष्णुर्नचान्यथा ॥ ३४ ॥ ब्रह्मेतिचसदाध्येयोभगवान् विष्णुरंजसा ॥ उ
त्कृष्टोब्रह्मशब्दार्थःपूर्णत्वंब्रह्मतायतः ॥ ३५ ॥ आधिव्याधिनिमित्तेनविक्षिप्तमनसोपितु ॥

ध्येयैवब्रह्मतानित्यंविष्णोर्भक्तैर्निरंतरं ॥ ३६ ॥ इतिप्रकाशिकायांचवचनंविष्णुनेरितम् ॥
नात्मेतिसूत्रमीशस्यजीवत्वप्रतिपादकम् ॥ ३७ ॥ आत्मशब्दंयतोहेतुंकृत्वाजीवंन्यवारय
त् ॥ स्वशब्दात्प्राणभृच्चैवनोक्तइत्येववेदराट् ॥ ३८ ॥ यद्यात्मशब्दोजीवेपिकथंसविनि
वारयेत् ॥ आत्मशब्दोदितस्तस्माद्विष्णुरेवनचापरः ॥ ३९ ॥आत्मब्रह्मादयःशब्दास्तमृतेवि
ष्णुमव्ययम् ॥ नवदंतियतोनात्माक्वापितैर्गुणपूरिता ॥ ४० ॥ नारायणाध्यात्मगतमितियद्वैष्णवं
वचः ॥ यदिजीवेशयोर्वेदपतिरैक्यंचमन्यते ॥४१॥ आत्मशब्दंकथंतस्मान्निवारयतियुक्तितः ॥
भेदस्यव्यपदेशंचस्थितिंचादनमेवच ॥ ४२ ॥ भेददार्ढ्यैहेतुमाहसतात्पर्यंजगत्पतिः ॥ व्यावहा
रिकभेदश्चेत्क्वासावव्यावहारिकः ॥४३॥ व्यावहारिकमित्येववचनंव्यावहारिकम् ॥ उत्तरेतुविक
ल्पेतुयदिस्याद्व्यावहारिकम् ॥ ४४ ॥ तस्यापिबाध्यताचेत्स्याद्भेदःस्यात्पारमार्थितः ॥ अव्याव
हारिकत्वंचेद्भेदोऽयंसत्यतांगतः ॥ ४५ ॥ एकस्यासत्यतायांतुद्वयोरेवविरुद्धयोः ॥ अन्यस्यस
त्यतैवस्यादितिकेननिवार्यते ॥ ४६ ॥ असत्यंनोक्तमित्युक्तेसत्यमुक्तमितिप्रजाः ॥ जानंत्युक्तं
तुनोसत्यमित्युक्तेसत्यतामपि ॥४७॥ नस्वमेऽपिद्वयंमिथ्यातत्रैकंसत्यमेवहि ॥ भावाभावावुभौ
तत्रद्वयंमिथ्याभविष्यतः ॥४८॥ भावस्यहिनिषेधेतुनाभावस्यनिषेधनम् ॥ स्ववाचासत्यताचे
त्स्यात्तस्माद्भेदस्यसत्यता॥४९॥तस्माज्जीवेशयोर्भेदउक्तन्यायेनगम्यते ॥एतस्मादात्मशब्दोऽयं
परमात्माभिदाभवेत्॥५०॥प्रतीकविषयत्वेनविष्णुदृष्टिर्नतद्भवेत् ॥ प्रतीकेविष्णुरित्येवतस्मात्का
र्याह्युपासना॥५१॥नचविष्णुःप्रतीकंयत्तस्मान्नात्मेत्युपासना ॥इतिपक्षोयदाब्रह्मादृष्टिश्चात्रविरु

ध्यते॥५२॥ सनेतियुक्तस्तत्रापिसमेत्युक्तविरुद्धता ॥ यद्यप्युत्कर्षमात्रेणह्यतद्भावेह्युपासना५३
उत्कर्षआत्मनोपिस्याच्चेतनत्वादचेतनात्॥तस्मादतत्वंनोपास्यमितिवेदविदोमतम्॥५४॥उत्कर्षा
द्ब्रह्मताध्यानेयदिस्यात्फलमंजसा॥ब्रह्मणोनीचताज्ञानादनर्थःकिन्नजायते॥५५॥अचेतनस्यब्रह्म
त्वध्यानेतुष्टिर्नहिकिंचित्॥नीचस्यस्वात्मताध्यानेकुप्यतिब्रह्मलोकवत् ॥५६॥ चंडालोनृपइत्युक्ते
नृपश्चंडालइत्यपि॥कोविशेषपरिज्ञानेनृपेणस्यात्कथंचन ॥५७॥ पुरतोनरदेवस्यचंडालोयदिपूज्य
ते ॥ राजवत्किंनकोपःस्याद्राज्ञोलोकेभिपश्यति ॥५८ ॥ राज्ञस्तुपुरतःप्रोक्तेचंडालोनृपइत्यपि ॥
आत्मानंसइतिप्रोक्तमितिवद्धेवकुप्यति ॥ ५९ ॥ अभेदेनैतयोर्ध्यानेकोविशेषोवचस्यपि ॥
अयंराजात्वमित्युक्तेचंडालेथनृपेपिच ॥ ६० ॥ चंडालइतितुप्रोक्तंसममेवहिदूषणम् ॥ ध्याते
त्वेकस्यतद्भावेतद्भावोन्यस्यकिंनतत् ॥ ६१ ॥ नचैवतदविज्ञातंसर्वज्ञब्रह्मणांकचित् ॥ तस्माद
पेशलंसर्वमन्यस्यब्रह्मतावचः ॥ ६२ ॥ तस्माद्यथोक्तमार्गेणब्रह्मोपास्यंमुमुक्षुभिः ॥ तथोपास्यां
जसादृष्टंब्रह्मपापंचभस्मसात् ॥ ६३ ॥ करोतिनिखिलंपूर्वंपाश्चात्यस्याप्यसंगताम् ॥ करोतित
द्विषश्चैवंपुण्यनाशोप्यसंगता ॥ ६४ ॥ यदेवविद्ययेत्यत्रपूर्वोक्ताद्विविशिष्यते ॥ पूर्वंस्वर्गादिल
ब्धयर्थंवीर्यवत्वेनचोदितम् ॥ ६५ ॥ कर्मविद्यायुतंपश्चान्मोक्षेवीर्यप्रदंत्विति ॥ ततोभो
गेनपुण्यंचक्षपयित्वेतरत्तथा ॥ ६६ ॥ ब्रह्मविद्ब्रह्मदर्शीचतमोमोक्षाववान्युतः ॥ ब्रह्मणां
शतकालात्तुपूर्वमारब्धसंक्षयः ॥ ६७ ॥ ब्रह्मणस्त्वेवतावत्वंपंचाशद्ब्रह्मणस्तथा ॥ रुद्रस्यविं
शदेवस्यादिंद्रस्यार्कादिकेदश ॥ ६८ ॥ अन्येषांब्रह्ममात्रस्यत्वंतआरब्धसंक्षयः ॥ ब्रह्म

णैवसहातश्चपरंनारायणंव्रजेत् ॥ ६९ ॥ इतिसत्तत्त्ववचनंस्वयंभवतोदिगतम् ॥ ७० ॥
॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेचतुर्थाध्यायस्य
प्रथमःपादः ॥ ॥ श्रीरस्तु॥श्रीगुरुभ्योनमः॥ ॥ देवानांचमनुष्याणामेतावत्सममेवहि
उत्क्रांतिमार्गैर्देवानांनप्रायेणभविष्यतः ॥ १ ॥ कर्मक्षयस्तथोत्क्रांतिर्मार्गोभोगश्चतुष्टयं ॥ फ
लंमोक्षइतिप्रोक्तंक्रमात्पादेषुचोदितः ॥ २ ॥ स्त्रष्टुश्चैवचसृज्यानांप्रवेशोब्रह्मणोलये ॥ देवानां
मार्गउद्दिष्टोनार्चिरादिर्नचोत्क्रमः ॥३ ॥ स्त्रष्टुस्तुग्रासभूतस्यदेहस्तत्रलयंव्रजेत्॥ यतःसृज्यस्यदे
वस्यनैवोत्क्रांतिस्ततोभवेत् ॥ ४ ॥ लयाच्चैवार्चिरादीनांलोकानामपिसर्वशः ॥ कथमार्गैर्भवेत्ते
षांविशतामुत्तरंस्वतः ॥ ५ ॥ जातानांमानुषेलोकेदेवानांचकदाचन ॥ उत्क्रांतिमार्गौभवतोनत
दामुक्तिरिष्यते ॥ ६ ॥ अन्येषामपिसाक्षात्तुमुक्तिःप्राप्यापितंहरिम् ॥ सहैवब्रह्मणाभूयादिति
शास्त्रस्यनिर्णयः ॥७॥ क्ष्मांभोनलानिलवियन्मनइंद्रियार्थभूतादिभिःपरिवृतःप्रतिसंजिघृक्षुः ॥
अव्याकृतंविशतियर्हिगुणत्रयात्माकालंपरंस्वमनुभूयपरःस्वयंभूः ॥ ८ ॥ एवंपरेत्यभगवंतमनुप्र
विष्टायेयोगिनोजितमरुन्मनसोविरागाः॥ तेनैवसाकममृतंपुरुषंपुराणंब्रह्मप्रधानमुपयांत्यगताभि
मानाः ॥ ९ ॥ भगवंतमनुप्राप्ताअपितुब्रह्मणासह ॥ परमंमोक्षमायांतिलिंगभंगेनयोगिनः ॥१०॥
प्राप्ताअपिपरंदेवंसहैवब्रह्मणापुनः ॥ आनंदव्यक्तिमायांतिपूर्णांलिंगस्यभंगतः ॥ ११ ॥ इति
स्तुतिपुराणोक्तिबलाद्विज्ञायतेचतत् ॥ भोगस्तुसर्वदेवानांनरादीनांचविद्यते ॥१२॥ तत्रप्रवेशोदे
वानामुत्तरोत्तरतःक्रमात् ॥ उच्यतेदेहगानांचवृत्तीनामेवमेवतु ॥ १३ ॥ तत्रमोक्षस्वरूपं

तुवादिनःप्रतिभाश्रयात् ॥ नानावदंतिपुंसांहिमतयोगुणभेदतः ॥ १४ ॥ पृथक्पृथक्प्रजायंतेत
मसैवान्यथामतिः ॥ रजसामिश्रबुद्धित्वंसत्वेनैवयथामतिः ॥ १५ ॥ गुणातीताविमुक्तानांमतिः
शुद्धचितिर्यतः ॥ सम्यगेवाथनित्याचतत्तन्माहात्म्ययोगतः ॥ १६ ॥ बहुलाचातिविशदास्पष्टा
चैवश्रियोमतिः ॥ महाशुद्धचितित्वेनततोप्यतिमहाचितिः ॥१७॥ अशेषोरुविशेषाणामतिस्पष्टत
याद्दशिः ॥ नित्यमेकप्रकाराचनारायणमतिःपरा ॥ १८ ॥ सूर्यप्रभावादखिलंभासयंतिनिरंत
रा ॥ निर्लेपावीतदोषाचनित्यमेवाविकारिणी ॥ १९ ॥ विशेषांस्तद्गतांस्त्यक्त्वाप्रायस्तल्लक्षणाः
श्रियः ॥ तथैवस्पष्टताभावात्तत्त्वत्वाचकेवलम् ॥ २० ॥ मनाद्दशिब्रह्मणस्तुप्रायएवंश्रियोय
था ॥ मुक्तानांतुतदन्येषांसमुद्गतरलोपमा ॥ २१ ॥ अग्निज्वालावदेवस्यात्स्तुतिगानांद्दशोभवः ॥
एवंविधेषुज्ञानेषुतमसामुष्टद्दष्टयः ॥ २२ ॥ खद्योतसद्दशात्यल्पज्ञानत्वादन्यथाद्दशः ॥ वदंतिवा
दिनोमोक्षंनानामतसमाश्रयात् ॥ २३ ॥ आश्रित्यप्रतिभामाहजिनस्तत्रानितामसीं ॥ ज्ञा
नात्कर्मक्षयान्मोक्षोभवेद्देहाख्यपंजरात् ॥ २४ ॥ पंजरोन्मुक्तखगवदलोकाकाशगोचरः ॥ नि
त्यमूर्ध्वंव्रजत्येवपुद्गलोहस्तपादवान् ॥ २५ ॥ इतितत्केनमानेनमोक्षरूपंप्रदर्श्यते ॥ गतिरूर्ध्वा
चदुःखेतागतित्वाल्लौकिकीयथा॥२६॥ इत्युक्तेचानुमानैकशरण्यस्यकिमुत्तरम् ॥ अनूर्ध्वगतिता
तत्रयद्युपाधिखगस्यच ॥ २७ ॥ दूरोर्ध्वगमनेदुःखमितिसाध्यानुगोनसः ॥ प्रतिसाधनरूप
स्यनानुमानस्यदूषणम् ॥ २८ ॥ उपाधिप्रतिरूपंहिसाधनंतन्नचापरम् ॥ अथापिसशरीर
त्वंचात्रोपाधिर्नैवभवेत् ॥ २९ ॥ गतित्वंयत्रदेहित्वमितियत्साधनानुगम् ॥ आगमानुसा

रित्वेप्रसंगोऽयंयतस्ततः ॥ ३० ॥ नापसिद्धांतनादोषःप्रसंगेयदिसाभवेत् ॥ ३१ ॥ तदै
वातिप्रसंगस्यान्नप्रसंगःक्वचिद्भवेत् ॥ लोकाकाशगतित्वंचेदुपाधिःसाधनानुगः ॥ ३२ ॥ सोऽ
पीत्युक्तेवदेत्किंसतस्माद्देदोदितोभवेत् ॥ मोक्षएवंस्वयंविष्णुर्यद्यपीशोह्यशेषवित् ॥ ३३ ॥
चकारसौगतमतंमोहायैवचकारयत् ॥ असुराणामयोग्यानांवेदमार्गेप्रवर्तताम् ॥ ३४ ॥ अतोऽ
सुराधिकारत्वान्नग्राह्यंतन्मतंक्वचित् ॥ चतुःप्रकारंतच्चोक्तंशून्यंविज्ञानमेकलम् ॥ ३५ ॥
अनुमेयबहिस्तत्त्वंतथाप्रत्यक्षबाह्यगम् ॥ इतितत्रतुयेशून्यंवदंत्यज्ञानमोहिताः ॥ ३६ ॥ ते
मोक्षंतादृशंब्रूयुर्निःशंकंमायिनोयथा ॥ नकिंचिन्मुक्त्यवस्थायामात्मात्मीयमथापिवा ॥ ३७ ॥
एकस्मिन्संसृतेर्मुक्तेनकिंचिदवशिष्यते ॥ तत्संगत्यैवभेदोऽयंचेतनाचेतनात्मकः ॥३८॥ दृश्यते
संसृतेर्ध्वंसेनिर्विशेषैवशून्यता ॥ नसत्त्वंनैवचासत्त्वंशून्यतत्त्वस्यविद्यते ॥ ३९ ॥ नसुखत्वंनदुःख
त्वंनविशेषोऽपिकश्चन ॥ निर्विशेषंस्वयंभातंनिर्लेपमजरामरम् ॥ ४० ॥ शून्यंतत्वमसंबंधनानासंवृ
तिवर्जितम् ॥ अशेषदोषरहितंमनोवाचामगोचरम् ॥४१॥ मोक्षइत्युच्यतेसद्भिर्नानासंवृतिदूषित
म् ॥ संसृत्यवस्थाविज्ञेयासंवृत्यैवविशिष्यते ॥ ४२ ॥ स्थितयाध्वस्तयाचैवसंसृतिर्मोक्षइत्यपि ॥
केचित्तेष्वन्यथाप्राहुःसंवृत्यैवत्वनेकधा ॥ ४३ ॥ अवच्छिन्नंमहाशून्यंनानापुद्गलशब्दितम् ॥
यस्यशून्यैकरसताज्ञानात्सात्वपगच्छति ॥ ४४ ॥ सपुद्गलत्वान्निर्मुक्तोमहाशून्यत्वमेष्यति ॥
संवृत्यायस्त्ववच्छिन्नोदुःखान्यनुभवत्यलम् ॥ ४५ ॥ इत्येवमायिनश्चाहुरेकजीवत्ववादिनः ॥
बहुजीवमताश्चेतिमायातेषांतुसंवृतिः ॥ ४६ ॥ निर्विशेषत्ववाचैवशून्यंब्रह्मेतिनोभिदा ॥

सच्चित्सुखादिकंचैवकिंकुतोऽखंडवादिनः ॥ ४७ ॥ यावत्प्रमात्रभेदस्तुविद्यतेशून्यवादि
नः ॥ अनृतादेरपोहंतुस्वयमेवहिमन्यते ॥ ४८ ॥ निर्विशेषत्वतोनैवविशेषोब्रह्मशून्ययोः ॥
प्रामाण्यादिचवेदस्यफलतःसममेवहि ॥ ४९ ॥ अतत्वावेदकंयस्मात्प्रमाणंतेनकथ्यते ॥
अतत्वावेदकत्वंयदप्रामाण्यंसतांमतम् ॥ ५० ॥ दीर्घभ्रांतिकरीचेत्स्यादतत्वावेदकप्रमा ॥
रज्जुसर्पादिविज्ञानादप्याधिक्यादिमानता ॥ ५१ ॥ स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः ॥
तलनैल्यादिविज्ञानमाकाशेमानतांव्रजेत् ॥ ५२ ॥ छत्राकारत्वविज्ञानंचंद्रप्रादेशतामतिः ॥
निर्भेदत्वंतुशून्यस्यतेनाप्यंगीकृतंसदा ॥ ५३ ॥ सत्वासत्वादिधर्माणामभावउभयोर्मतः ॥
नहिसत्प्रतियोगत्वंशून्यत्वंतेनचेष्यते ॥ ५४ ॥ नचदुःखविरोधित्वादन्याद्यानंदतेष्यते ॥ मायि
नाशून्यपक्षेऽपिज्ञानंजाड्यविरोधिच ॥ ५५ ॥ धर्माःकेपिनसंत्येवकोविशेषस्ततस्तयोः ॥ एताह
शानांपक्षाणांदूषणंप्रभुणाकृतम् ॥५६॥स्वपक्षसाधनेनैवनाभावइतिचोक्तितः ॥ आत्माभावेपुम
र्थःकइष्टस्यात्मावधिर्यतः ॥ ५७ ॥ यदिनात्मावधिर्मोक्षोमोक्षस्याद्घटशून्यता ॥ कल्पितत्वाद्वि
शेषाणांमायिनोपिसमंहितत् ॥ ५८ ॥ दृश्यमानेविशेषेऽपियदिचेदविशेषिता॥घटाभावोविशेषः
स्यात्पाश्चात्यश्चेदनागतः ॥ ५९ ॥ नमोक्षोविमलोयस्माददेहोघटशून्यता॥यथेत्युक्तेवदेत्किंसयो
नुमामात्रमानकः॥६०॥नचमायिवदेदत्रपूर्वोक्तेनैववर्त्मना ॥ आमानत्वाच्छ्रुतेस्तस्यनचादेहत्ववा
दिनी ॥ ६१ ॥ श्रुतिःकाचिददेहत्वमप्राकृतशरीरता॥ मोक्षोभोगंयनोब्रूतेजक्षन्क्रीडन्नितिश्रुतिः
॥६२॥निर्दुःखत्वान्नतंमोक्षःप्रतिपन्नयथेतिच॥अनुमादूषणंकिंस्याद्वादिनोःशून्यमायिनोः॥६३

दुःखंदुःखादभिन्नत्वान्मोक्षोऽपिस्यादसंशयम्॥भेदेसद्वैततैवस्यादित्याद्यमितिदोषतः॥६४॥हेयं मायामतेनैवसद्दशूून्यमतंबुधैः ॥ एवंविज्ञानवादोऽपिज्ञानमात्रविशेषतः ॥६५॥ तस्यापिभंगुरत्वा दविशेषमपहायहि ॥ अद्वैततामतंसाक्षादुक्तदोषस्ततोभवेत् ॥६६॥ कालोनकेवलज्ञानीकालत्वा त्प्रतिपन्नवत् ॥ येतयानुमयारोधान्नताद्दङ्मोक्षरूपता ॥६७॥यदिकालोऽपिनेत्याहकदेतिप्रश्नउ त्तरम् ॥ किंवक्ष्यतियदावस्थांवदेत्सापक्षतांव्रजेत् ॥६८॥ अवस्थत्वादितिह्येवहेतुस्थादिकदेति च ॥ पृष्टेकालश्चवक्तव्योनाकालत्वंततोभवेत् ॥ ६९ ॥ नकालइतिसामान्यनिषेधेकालगप्रमा ॥ विरुणद्धिसमश्चायंत्रयाणामुक्तवादिनां ॥ ७० ॥ एकजीवत्वपक्षेतुकालाभावादियंप्रमा ॥ कुपि ताकालमाबाधद्वैतमेवोपपादयेत्॥ ७१॥ विमतःप्रपंचवान्कालःकालत्वात्प्रतिपन्नवत् ॥ इतिचे न्नानुमैकत्वंजीवस्यविनिवारयेत् ॥७२॥ कालशब्देश्वरैकत्वंमतान्यप्येवमेवहि॥निराकृतानितेषां चसमत्वात्पक्षदोषयोः॥७३॥ज्ञानंस्वरसभोग्येवनित्यंसंतानमिष्यते॥ बौद्धाभ्यामपराभ्यांतुतत्रा प्युक्तानुमारिपुः ॥ ७४ ॥ मोक्षोनशुद्धविज्ञानसंतानीकालगत्वतः ॥ प्रतिपन्नोयथेत्येतदनुमा नंतदुत्तरम् ॥७५॥ अनुमानानिसर्वाणिप्रतिसाधनयोगतः ॥ निषिद्धान्युक्तभंग्यैवश्रुतयश्चास्मदु क्तिगाः ॥ ७६ ॥ सांख्यनैय्यायिकाद्याश्चप्राहुर्मोक्षंचनिःसुखम्॥इच्छाद्वेषप्रत्नादेरपिसर्वात्मनाल यम्॥७७॥ तत्राहुर्नैतदप्यत्रशोभनंश्रुतयोयतः ॥ महानंदंचभोगंचनियमेनवदंतिहि ॥७८॥प्रा कृतःप्रियहानिस्तुप्रियास्पृष्टिरितीर्यते॥अप्रियंप्रतिकूलंतदविशेषेणशब्दितम् ॥७९॥ नास्तिह्यप्रा कृतंदुःखंसतोजीवस्यकुत्रचित्॥प्रियंस्वरूपमेवास्यबलानंदादिवाक्यतः॥८०॥हेयत्वादप्रियस्यैव

प्रियहानेरनिष्टतः ॥ नसमस्तप्रियाभावोमोक्षेप्रोक्तेतुयुज्यते ॥ ८१ ॥ अप्रियस्यस्वरूपत्वमसुरे
ष्वेवहिश्रुतं॥ असुरानैवमेवंचनैवंचखिलमानुषाः ॥८२॥ इत्यात्मप्रियहानायकोयतेतचबुद्धिमा
न् ॥ संज्ञानास्तीत्यपिह्यस्यनामुक्तज्ञेयतेतिहि ॥ ८३ ॥ धर्मानुच्छित्तिमेवास्ययतोवक्त्युत्तरश्रु
तिः ॥ आशंक्यास्यज्ञानहानिंमैत्रेय्योमाहमाहमाम् ॥८४॥ भवानित्युक्तवत्याहिनाहंमोहोवदा
मिते ॥ इत्युक्त्वायाज्ञवल्क्योहिस्वरूपानाशमूचिवान्॥८५॥ज्ञानरूपस्यविज्ञाननाशस्तन्नाशएव
नत् ॥ इतिशून्यमतोच्छित्यैपुनरानंदपूर्वकान् ॥ ८६ ॥ धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनि
वारितान् ॥ मात्रासंसर्गमप्याहनथामाध्यंदिनश्रुतिः ॥ ८७ ॥ आचिक्षेपमतंतच्चयस्मिन्न
विषयादनम् ॥ घ्राणादिभोगाभावस्यत्वनिष्टत्वद्वदाश्रुतिः ॥ ८८ ॥ येनेदमखिलंवेदविज्ञा
तारंत्वमेवच ॥ केनतंचविजानीयादित्यनिष्टंहिसर्वथा ॥ ८९ ॥ नाखिलज्ञापकोविष्णुरज्ञेयोनि
यमेनहि ॥ तज्ज्ञानार्थंहिवेदानामखिलानांप्रवर्तते ॥ ९० ॥ प्रत्यक्षमात्मविज्ञानाविरोधानुभ
वादपि ॥ नस्वविज्ञानितायांचविरोधःकश्चनेयते ॥ ९१ ॥ कर्तृकर्मविरोधश्चनित्यानुभवरोध
तः ॥ कथमेवपदंगच्छेद्विरोधोदृष्टबाधनम् ॥ ९२ ॥ सोऽश्नुतेसर्वकामांश्चकामान्नीकामरूप्य
थ ॥ इत्यादिश्रुतयोप्युक्तमर्थमेववदंतिहि ॥ ९३ ॥ अस्वातंत्र्यादिवेत्युक्तंनद्वैताभावतःक्वचि
त् ॥ अत्मैवाभूदितिह्यस्मादविशेषःप्रसंगतः ॥ ९४ ॥ अस्वातंत्र्योपमाभेदभेदेष्विवउदीरि
तः ॥ शब्दतत्त्वइतिप्रोक्तंमैत्रेत्युक्तोत्तरंचकिम्॥९५॥ सुखादिधर्महानौतुमुक्तेःकिंचप्रयोजनम् ॥
यद्यर्थोदुःखहानिःस्यादनर्थःसुखनाशनम् ॥ ९६ ॥ नयोश्चदुःसहानाद्धिसुखंनाशोऽधिकोभवे

त् ॥ प्राप्यापिदुःखंसुमहत्सुखलेशात्ययेजनः ॥ ९७ ॥ यततोसुखहानौहिकोमोक्षाययतेत्पुमा
न् ॥ अल्पाच्चसुखनाशाद्धिबिभेत्यतितरांजनः ॥ ९८ ॥ महच्चदुःखमाप्नोतिसुखनाशनिवृत्त
ये ॥ नचरागनिमित्तंतद्वीतरागाअपिस्फुटम् ॥ ९९ ॥ नारदाद्याःसुखार्थायसहंतेदुःखमंज
सा ॥ युद्धादिदर्शनंयस्मात्सुदुःखेनापिकुर्वते ॥ १०० ॥ यदेंद्रवैरोचनयोर्ब्रह्मास्त्राभ्यांसुतापि
ताः ॥ अपिनैवाजहुर्युद्धंरसात्तेनारदादयः ॥ १ ॥ इतिस्कांदवचस्तस्मात्सुखाभावाय
कोयतेत् ॥ विमतोदुःखयुग्यस्माच्चेतनःसन्सुखोज्झितः ॥ २ ॥ प्रतिपन्नोयथेत्येवचानु
माकेनवार्यते ॥ सर्वश्रुतिपुराणेषुसुखभावोक्तितस्तथा ॥ ३ ॥ मुक्तौनग्राह्यमेवैतत्सुखाभावमतं
बुधैः ॥ सोनानंदाद्विमुक्तःसन्नानंदीभवतिस्फुटम् ॥ ४ ॥ निर्गुणेब्रह्मणिमयिधारयन्विशदंमनः॥
परमानंदमाप्नोतियत्रकामोवसीयते ॥ ५ ॥ नविष्णुसदृशंदैवंनमोक्षसदृशंसुखम् ॥ नवेदसदृशं
वाक्यंनवर्णोंकारसंमितः ॥ ६ ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते ॥ कामस्ययत्राप्ताःकामा
स्तत्रमाममृतंकृधि ॥ ७ ॥ इतिश्रुतिपुराणानितत्रतत्रवदंतिहि ॥ अतोमोक्षेसुखाभावइतिय
त्किंचिदेवहि ॥ ८ ॥ शिरःकराद्यभावश्चनमुक्तस्यभवेत्क्वचित् ॥ श्रुतयश्चपुराणानिमानमत्रबहू
निच ॥ ९ ॥ नवर्ततेयत्ररजस्तमस्तयोःसत्वंचमिश्रंनचकालविक्रमः ॥ नयत्रमायाकिमुतापरे
हरेरनुव्रतायत्रसुरासुरार्चिताः ॥ ११० ॥ श्यामावदाताःशतपत्रलोचनाःपिशंगवस्त्राःसुरुचःसुपेश
सः ॥ सर्वेचतुर्बाहवउन्मिषन्मणिप्रवेकनिष्काभरणाःसुवर्चसः ॥ ११ ॥ प्रवालवैडूर्यमृणालवर्चसां
परिस्फुरत्कुंडलमौक्तिमालिनाम्॥भ्राजिष्णुभिर्यःपरितोविराजतेलसद्विमानावलिभिर्महात्मनाम्

॥ १२ ॥ विद्योतमानःप्रमदोत्तमादिभिःसुविद्युदभ्रावलिभिर्यथानभः ॥ श्रीर्यत्ररूपिण्युरुगा
यपादयोःकरोतिमानंबहुधाविभूतिभिः ॥ १३ ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगाय
तिशक्करीषु ॥ ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमीमितउत्वः ॥१४ ॥ कामान्नरूपीचरती
तिपूर्वश्रुत्यापुरोणोक्तिभिरप्यदोषः ॥ देहःस्वरूपात्मकएवतेषांमुक्तिंगतानामपिचेयतेहि ॥१५ ॥
शिरःकराद्यैरपिमुक्तिभाजोयुक्तायतस्तेपुरुषाइदानीम् ॥ यथेतिपूर्वाअनुमाश्चजीवस्वरूपमंगादि
कमावयंति ॥ १६ ॥ नब्रह्मरूपत्वममुष्यदेहिनोमुक्तावपिस्यात्प्रमयाकथंचित् ॥ सब्रह्मणासहि
तोऽशेषभोगान्भुङ्क्तेतथोपेत्यसुखार्णवंतम् ॥ १७ ॥ यत्तत्परंज्योतिरुपेत्यजीवोनिजस्वरूप
त्वंमवाप्यकामम् ॥ भुंक्तेसदेवःपुरुषोत्तमोऽजआत्मेतिचोक्तोगुणपूर्तिहेतोः ॥ १८ ॥ सेतुः
सदेवोखिलमुक्तिभाजामुतामृतस्येष्टइहेशितायत् ॥ इत्यादिवाक्यैर्भगवद्वशःसन्भुंक्तेखिला
नमुक्तिगतोऽपिभोगान् ॥ १९ ॥ कालोप्यसौनैवयुतःपरेणजीवस्यकालोयतएषयद्वत् ॥
इत्यादिकाअप्यनुमाःप्रमाणंमुक्तौचजीवस्यपरत्वरोधे ॥ १२० ॥ कथंचयःपूर्वमसौनपश्चाद्भवे
त्सएवेत्यपियुक्तिमेति ॥ यतोनदृष्टंयदभून्नपूर्वंपश्चात्तदासेतिकुतश्चकिंचित् ॥ २१ ॥ नचैव
मुक्तेनहरेःपृथक्त्वमैक्यंतथास्यादितियुक्तिमेति ॥यतोनकुत्रापिभिदाभिदाचदृष्टाचितश्चेतनयाकु
तश्चित् ॥२२॥ इत्थंचतानिभ्रमजानियस्मान्मोक्षंसमुद्दिश्यमपिभ्रमेण ॥ विदुर्नसम्यग्यदपीहलौ
किकाःसुखंममस्याच्चसदैवजानते॥२३॥ ॥औदार्यमुच्चावचशक्तिरात्मस्वरूपदार्ढ्यंचनिजस्वभा
वः॥स्वातंत्र्यमापूर्णविशेषयोग्यताविरोधहानिश्चचतुर्थपादे॥२४॥ व्यवस्थितिस्त्वविशेषस्थितिश्च

निषेधसामान्यविधिक्रियाणाम् ॥ विभक्तताचत्वरयैवसिद्धिर्विपक्षसंप्राप्तिकृतांनिरोधाः ॥ २५॥सु
शक्यताशश्वदतिप्रसिद्धिर्विवेकविन्यासविचारसंज्ञाः॥नानाप्रवृत्तिःकृतकृत्यताचविपक्षतर्काःसम
तीतपादे ॥२६॥ महाफलत्वंप्रविविक्तताचसंधिग्रहःसाधनमासकृत्यम् ॥ विशेषकार्यैकृतसंस्थिति
श्वसुमुक्तयोनिर्णयगाःस्वपक्षे ॥ २७ ॥ व्यामिश्रिताकार्यकरत्वमथर्क्षुसिःसुदार्ढ्यंपरतंत्रताच ॥
समानधर्मःकृतशेषताचलोकोपमापूर्वमतानुसाराः ॥ २८ ॥ विशेषसाम्यश्रुतिदार्ढ्यताचस
मानलोपोमहिमाविशेषः ॥ कृतार्थताशश्वदनुप्रवृत्तिःसिद्धांतनिर्णीतिविशिष्टहेतवः ॥ २९ ॥
प्रधानवायुस्त्विहवायुनामाभूतेष्वितिप्रोक्तगतोपियुक्त्या ॥यस्माच्छुतौपवतेचेतभूरिप्रोक्तोयतोभू
तमानीचसोपि ॥ ३० ॥ महामानीत्वल्पमानीचयस्मात्तच्छब्देनाप्युच्यतेतेनसोपि॥तस्मिन्लु
यंयांतिभूतान्यशेषक्रमाविरोधेनसएवविष्णौ ॥ ३१ ॥ इंद्रादीनांतत्रलयःक्रमंतुप्रोक्तंविशेषाद
नुसृत्यनान्यत् ॥ तस्मादशेषागिरिजांप्रविश्यतयैवरुद्रंसहतेनवाणीम् ॥ ३२ ॥ तयापतिं
प्राप्यसहैवतेनलयंहरौयांतिसमस्तजीवाः ॥सोमस्तुवागीशयुतोनिरुद्धंविशत्यसौकाममसौचवारु
णीम्॥३३॥साशेषदेवंसगिरंचसैववायुंविशत्यंजइतीहनिर्णयः॥उमागिरीशावपिभारतीरावितिस्म
वाग्वेदगताब्रवीति॥३४॥अहींद्रपत्नीमहिपंविरिंचपत्नींविरिंचंचविमुक्तिकाले॥तएवयत्तत्पदमा
प्नुवंतितत्कालएतान्समुपास्यजीवाः ॥ ३५ ॥ ब्रह्मत्वकालेप्रविशंतिचैतानितिस्मवाक्याद्दशता
मुपैति ॥ सूर्योग्नियुक्तोगुरुमाप्यतेनशक्रंसहैतेनसुपर्णपत्नीम् ॥ ३६ ॥ तयासुपर्णंसहतेनवाणींब्र
ह्माणमेतद्गतएवयाति ॥ इंद्रप्रवेशस्तुयदोच्यतेऽत्रतदाह्युमेत्येवसुपर्णपत्नीम् ॥३७॥उक्तासुपर्णश्च

गिरीशनाम्नातततोविरोधश्चनकश्चनात्र ॥ भृग्वादयोदक्षमवाप्यतेनंनभाप्येंद्रमेतेनसुपर्णपत्नीं ॥३८॥
विशंतियेमनवोराजमुख्यामनुंप्रविश्यात्रगतामहेंद्रम् ॥आकाशउर्वीचगुरुंप्रविश्यतेनैवयातःपुरुहूत
देवम् ॥ ३९ ॥ सनादयोयतयःकामदेवंविशंतिशिष्टाअपिहव्यवाहम् ॥ वर्णाश्रमाचाररता
मनुष्याधर्ममनुंसोपिसमेतिकाले ॥ ४० ॥ तमेवसर्वेपितरःसुरानुगाःसर्वेकुबेरंसचसोममेव ॥
विमुक्तिकालेप्रविशंत्यभीक्ष्णंभोगांश्चतद्देहगताःप्रभुंजते ॥ ४१ ॥ आनंदसुव्यक्तिरमुत्रतेषांभ
वत्यनश्चेष्टतएवनिर्गताः ॥ क्रीडंतिभूयश्चसमाविशंतितानेवसायुज्यमिदंवदंति ॥ ४२ ॥
सायुज्यहीनास्तुलयेतुसर्वेप्रोक्तेनमार्गेणविशंतिसृष्टौ॥ बहिश्चनिर्यांतिततोन्यदापिसायुज्यभाजां
भवतिप्रवेशः ॥ ४३ ॥ उक्तंसमस्तंपरमश्रुतौहिप्रोक्तंचसर्गक्रमतोविपर्ययः ॥ मुक्तौलयेत
द्वदथोलयश्चविपर्ययेणेत्यवदद्गिरांप्रभुः ॥ ४४ ॥ लयोपतोमुक्तिरियंसुराणांभोगोविशेषेणचयं
वदिष्यति ॥ उक्तश्चबिंबप्रतिबिंबभावःपिंगश्रुतावुक्तलयानुसारतः ॥ ४५ ॥ बिंबेलयोऽयंनिय
तश्चमुक्तौचिदात्मनांतद्वशताचसर्वदा ॥ तेजोभिधातुंश्रियमाप्य विष्णुमग्रेततःपुत्रतयैववायुः
॥ ४६ ॥ आप्तःप्रसूतःपुनरेवविष्णुंप्रविश्यमुक्तःप्रलयेऽत्रतिष्ठति ॥ सर्वेपितेमुक्तगणाअमंद
सांद्रंनिजानंदमशेषतोऽपि ॥ ४७ ॥ भुंजतएवासतईशदेहेलयेऽथसर्गेबहिरेवयांति ॥ प्रयाति
धर्मंनिर्ऋतिश्चशक्रंमरुद्गणाःपारिषदास्तथैव ॥ ४८ ॥ सर्वेनिरुद्धंपृतनाधिपाद्यास्तुरश्रुतिर्हीत्थमि
यंविमुक्तिः ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेचतुर्था
ध्यायस्यद्वितीयःपादः ॥ ॥ ७ ॥ ॥ ७ ॥

श्रीरस्तु ॥ ॥ उत्क्रांतिमार्गश्चविमुक्तिगम्यंपादोदितं ॥ मुक्रमविक्रमौच ॥ सांतानिकप्राप्तिरभीष्ट
ताचसौकर्यमित्यन्यमतस्यतर्काः ॥ १॥ विशेषसंप्राप्तिरुरुत्वमाप्तिःक्रमानुरागःकथितानुवृत्तिः ॥
सिद्धांतनिर्णीतकराःप्रतीकंदेहादिकंतद्वनमेवयेनराः ॥२॥ उपासतेतेपुरतःसमामुयुर्ब्रह्माणमस्मा
न्मतिमाप्यविष्णुम् ॥ प्राप्स्यंत्यतोऽन्येऽपितमाप्यतस्माद्धरिंगतामुक्तिभाजःपरांते॥३॥इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेचतुर्थाध्यायस्यतृतीयःपादः ॥
श्रीगुरुभ्योनमः ॥ ॐ ॥ अतिक्रमोक्तिःकृतिरर्थलाभःपरागतिःपारगतिस्तदोकः॥ समस्तकार्यैव
शिताचविश्वसंभावनायुक्तयस्त्वन्यपक्षे ॥१॥सामान्यरूपंप्रतिभानमुक्तिराश्चर्यनाकृत्रिमतास्तदो
षः ॥ विशेषकॢप्तिःकृतनिश्चयश्चमाहात्म्यमित्येवसुनिर्णयार्थाः॥२॥ अनन्यभृत्यत्वमिहोदितेभ्य
स्त्वन्यस्यभृत्यत्वनिवारणाय ॥ पतिंयदेषामपिविष्णुमाहश्रुतामृतत्वस्यपतित्ववाग्घरेः ॥ ३ ॥
एतेपिचान्याधिपतित्वयुक्ताविष्णवन्यचित्त्वेनयथापुमांसः ॥ प्रसिद्धिभाजस्त्विितिचानुमैवह्यभी
ष्टसिद्ध्यैभवतीहनिश्चयात् ॥ ४ ॥ मुक्तस्वकीयावरयंतृतास्तिमुक्तावपिब्रह्मपुरःसराणाम् ॥ अने
नदेवेनतथाऽमुनाचहीष्टेपरावांक्तनलोकिनामपि ॥ ५ ॥ फलंश्रुतिर्ज्ञानतआहमुक्तावेतच्चसर्वाशु
भनाशलिंगात् ॥ लोकाधिपत्यंचविधातुरेवसर्वात्मनेत्याहतुरश्रुतिश्च ॥ ६ ॥ सर्वेबलिंदेवगणावहं
तीत्येतच्चनान्यस्यतुयुक्तिमेति ॥ लोकाइतीहापितुलोकिनांवचोलोकाइतिह्येवरवःप्रजासु ॥७॥
प्रयुज्यतेसर्वजन्यैःसदैवतन्मानिनोलोकपदेनचोक्ताः॥ तद्वास्तुमुक्ताइहलोकशब्दाअन्योन्यनाथा
इतिपैंगिनांश्रुतिः॥८॥अलोकशब्देनविमुक्तिभाजोवाच्याःपदंतादृगपीहयुक्तम्॥लोकाभिधाश्चा

पियतोविमुक्ताःप्रकाशरूपाःसततंचसर्वे ॥ ९ ॥ ब्रह्मैवलोकाधिपतिर्विमुक्तोभवेदितिप्राहतुरश्रुति
श्च ॥ नचेहविज्ञानफलंसमुक्तोलोकाधिपत्यंरविबिंबगेहरौ ॥ १० ॥ उक्तंपृथक्तच्चपुरैवयस्माद्भेदो
मुनेत्यादिचसम्यगुक्तः ॥ त्वप्रत्ययंचाप्यतिहायनैवरूपेणतेनेतिभवेदिहार्थः ॥ ११ ॥ भवत्यसा
वित्यणुशब्दमात्रंविहायवाक्यानिबहूनिदोषः॥ अतोजगद्व्यापृतिमंतएवब्रह्मादयःपूर्णगुणाःक्रमे
ण ॥ १२ ॥ अमंदमानंदमजस्रमेवभुंजंतमात्मीयमजात्समासते ॥ नमोनमोशेषविशेषपूर्णगुणै
कधाम्नेपुरुषोत्तमाय ॥ भक्तानुकंपादतिशुद्धसंविद्दात्रेनुपाधिप्रियसद्गुणात्मने ॥ १३ ॥ यस्यत्री
ण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामव
चोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयमेतदमुनाग्रंथःकृतःकेशवे ॥ १४ ॥ निःशेषदो
षरहितकल्याणाखिलसद्गुण ॥ भूतिस्वयंभुशर्वादिवंद्यंत्वांनौमिमेप्रियम् ॥ १५ ॥ ॥ इतिश्रीम
त्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्यानेश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेचतुर्थाध्यायस्य
चतुर्थःपादः ॥ ॥ ७ ॥ ॥ श्रीहयग्रीवायनमः ॥ ॥ श्रीः ॥



प्रमाणलक्षणं ५ कथालक्षणं ६ उपाधिखण्डनं ७मायावा-
दखण्डनं ८प्रपंचमिथ्यात्वखण्डनं ९ तत्त्वसंख्यानं १०
तत्त्वविवेकः ११ तत्त्वोद्योतश्च १२ कर्मनिर्णयः १३
विष्णुतत्त्वविनिर्णय. १४

श्रीवेदव्यासायनमः ॥ अथप्रमाणलक्षणम् ॥ ॥ ॐअशेषगुरुमीशेशंनारायणमनाम
यम् ॥ संप्रणम्यप्रवक्ष्यामिप्रमाणानांस्वलक्षणम् ॥ १ ॥ ॥ यथार्थंप्रमाणम् ॥ तद्द्विविधम् ॥
केवलमनुप्रमाणंच ॥ यथार्थज्ञानंकेवलम् ॥ तत्साधनमनुप्रमाणम् ॥ केवलंचतुर्विधमीशल
क्ष्मीयोग्ययोगिभेदेन ॥ पूर्वद्वयमनादिनित्यम् ॥ स्वातंत्र्यपारतंत्र्याभ्यांतद्विशेषः ॥ पूर्वंस्वपरग
ताखिलविशेषविषयम् ॥ द्वितीयमीशेऽन्येभ्योऽधिकमसार्वत्रिकमन्यत्रसर्वविषयम् ॥ स्पष्ट
त्वभेदः ॥ योगिनामृजूनामनादिनित्यम् ॥ ईशेजीवेभ्योऽधिकमन्यत्रालोचनेसर्वविषयम् ॥
क्रमेणवर्धमानम्॥आमुक्तेः॥ततोऽव्ययम्॥ततोऽर्वाक्क्रमेणह्रसितम्॥ सादिचतात्त्विकेभ्योऽन्य
त्र ॥ अयोगिज्ञानमुत्पत्तिविनाशवत् ॥ अल्पमनुप्रमाणंत्रिविधम् ॥ प्रत्यक्षमनुमानमागम
इति ॥ निर्दोषार्थेंद्रियसन्निकर्षःप्रत्यक्षम् ॥ निर्दोषोपपत्तिरनुमानम् ॥ निर्दोषःशब्दआग
मः ॥ अर्थापत्त्युपमेऽनुमाविशेषः ॥ अभावोऽनुमाप्रत्यक्षंच ॥ परामर्शापरामर्शविशेषात् ॥
संभवपरिशेषावनुमा ॥ आत्माश्रयान्योन्याश्रयचक्रकाश्रयानवस्थाकल्पनागौरवश्रुतदृष्टहानाद
योदूषणानुमा ॥ उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्चउपपत्तिविशेषाः ॥ तए
वसोपपत्तयोलिंगानि ॥ समाख्यावाक्यप्रकरणस्थानानिचलिंगविशेषाः ॥ व्याप्तिरुपपत्तिमूल
म् ॥ साप्रतिज्ञाहेतुदृष्टांतरूपा ॥ हेतुगर्भाप्रतिज्ञाकेवलाऽपि ॥ सिद्धौप्रतिज्ञायांहेतुमात्रंच ॥
दृष्टांतःसप्रतिज्ञोहेतुगर्भः ॥ उपपत्तिदोषौविरोधासंगती ॥ न्यूनाधिकेवाचनिके ॥ संवादानुक्ति
युतानिग्रहाः ॥ प्रत्यक्षंसप्तविधम् ॥ साक्षिषडिंद्रियभेदेन ॥ मानसप्रत्यक्षजास्मृतिः ॥ स्मृत्य

नुवादयोर्नाप्रामाण्यम् ॥ यथार्थत्वानुभवात् ॥ अहानेश्च ॥ विरोधोमानस्ववाक्याभ्याम् ॥ स्व
वाक्यविरोधोपसिद्धांतजातिरूपेण । जातिर्नमेयेमानापेक्षेत्यादिका ॥ मेयेमानापेक्षास्तीति
चतेनैवन्यायेनसिद्धत्वात् ॥ मानविरोधश्च ॥ छलमसंगतम् ॥ अन्यच्च ॥ गृष्टिविवक्षयागामान
येत्युक्तेपृथिवीविवक्षयागवानयनमशक्यमितिवत् ॥ त्रिविधोविरोधः ॥ प्रतिज्ञाहेतुदृष्टांतभे
देन ॥ प्रमाणविरुद्धार्थप्रतिज्ञाप्रतिज्ञाविरोधः ॥ हेतुस्वरूपासिद्धिरव्याप्तिश्चेतिहेतुविरोधः ॥ सा
ध्यस्यसाधनस्यवाऽननुगमोदृष्टांतविरोधः ॥ प्रतिज्ञायाःसमबलविरोधएवसप्रतिसाधनः ॥ सएवो
पाधिदोषोऽपि ॥ सर्वएतेदृश्यत्वानुमानेद्रष्टव्याः ॥ प्रत्यक्षागमादिभिर्जगतःसत्यत्वात् ॥ तत्पक्षे
दृश्यत्वस्यचामिथ्यात्वात् ॥ अनिर्वचनीयस्यप्रतिवादिनोसिद्धत्वात् ॥ आत्मनोपिदृश्यत्वात् ॥
शुक्तिरजतादेरनिर्वचनीयत्वाभावात्॥अनिर्वचनीयदृश्यत्वाभावात् ॥ मानससिद्धत्वादितिसंप्रति
साधनत्वाच्च ॥ जगत्सत्यत्वग्राहिप्रत्यक्षस्यवर्तमानमात्रग्राहित्वेऽनुमानागमप्रामाण्यग्राहिणोऽ
पिप्रत्यक्षत्वाविशेषादुत्तरक्षणेप्रामाण्यंनसेत्स्यतीतिभेदादिवाक्यानामिवप्रामाण्यंस्यात्॥तस्यसा
क्षिसिद्धत्वंचेज्जगत्सत्यत्वमपिसाक्षिसिद्धम् ॥ व्यभिचारश्चेदागमार्थानुमानिर्दोषत्वाध्यवसायेच
समः ॥ अतउत्तरदिवसेअभेदवाक्यस्यभेदोऽर्थःस्यात् ॥ निर्दोषानुमायाःसदोषत्वम् ॥ सदो
षानुमायानिर्दोषत्वम् ॥ इत्यव्यवस्था ॥ आश्रयसाध्यव्यधिकरणासिद्ध्योनदूषणम् ॥ अतिप्रसं
गाभावात्॥अतिप्रसंगेनहिदोषत्वादोषत्वेकल्प्ये॥व्याप्तिरेवहिप्रयोजिकाअसत्यपिव्याप्तिरस्त्येव॥
असदाश्रयस्यसाधकत्वंनेत्यपिव्याप्तिंविनाकथंनिवार्यते ॥ असदाश्रयत्वमित्यादिविशेषणत्वसं

भवेकथमव्याप्तिः॥नचात्यंताभावोऽपिसर्वधर्मरहितः॥प्रमेयत्वाद्यनुभवात्॥परिशेषार्थापत्तिप्रामा
ण्याभ्युपगमाच्च॥विमतसकर्तृकमित्यत्रसर्वज्ञत्वस्यपक्षधर्मताबलेनसिद्ध्यंगीकारात्॥परिशेषार्था
पत्तिरनुमानमित्यविशेषः॥ उपपत्तिमात्रत्वात्॥उपपत्तिश्चव्याप्त्यपेक्षयासर्वथांगीकार्येत्याग्रहमा
त्रेणभेदः ॥ उपमानस्यापिव्याप्तिरूपत्वात्॥ नहिस्वसदृशेनासदृशंकचिद्दृष्टम् ॥ योग्यानुपल
ब्धेश्चलिंगत्वम् ॥ अविशेषात्॥ उक्तदोषेष्वेवाशेषानुमानदोषाणामंतर्भावः॥ साध्याविशिष्टोऽसि
द्धः॥ सिद्धसाधकोऽसंगतः ॥ नप्रमासाधनंप्रमाणम्॥ ज्ञानव्यतिरिक्तप्रमायांप्रमाणाभावात्॥ न
चाज्ञातपरिच्छित्तिरेवप्रमेत्यत्राकिंचिन्मानम्॥याथार्थ्यमेवप्रामाण्यमित्यंगीकारात्॥ नचानुभूतिः
प्रमाणम् ॥ स्मृत्यादावव्याप्तेः॥ वेदानुमानादिप्रामाण्यप्रसिद्धेश्च ॥ स्मृतिःप्रत्यक्षमैतिह्यमनुमानं
चतुष्टयम्॥ प्रमाणमितिविज्ञेयंधर्माद्यर्थंबुभूषुभिरितिश्रुतेश्च॥ऐतिह्यमागमभेदः॥नचासम्यगनु
भवसाधनंप्रमाणम्॥ ईश्वरज्ञानादावव्याप्तेः ॥ अप्रामाण्येप्रमाणाभावाच्च ॥ प्रामाण्यज्ञा
नेच ॥ तत्राप्यंगीकारेऽनवस्थितेः ॥ स्वप्रकाशात्मांगीकारेतत्राव्याप्तेः॥स्मृतेश्च ॥ प्रामाण्यानं
गीकारेऽनुभूतंमयेत्यत्रप्रमाणाभावात्॥ लिंगत्वेनप्रामाण्येकल्पनागौरवम्॥ दृष्टहानिश्च ॥ स्मृ
तिप्रमाणद्वैविध्यमात्रकल्पनेमिथ्याज्ञानादेर्निरासादनुभवविरोधः ॥ तदनुभवाभावइत्युक्तेऽनुभ
वःस्मृतिश्चनास्तीत्युक्तेकिमुत्तरम्॥ स्वसिद्धैःसाधनंपरसिद्धैर्दूषणम् ॥ अतोनदूषणेऽपसिद्धांता
दि ॥ इष्टापत्तिःसिद्धसाधनत्वादसंगतिरेव॥ आनंदतीर्थमुनिनाब्रह्मतर्कोक्तमार्गतः॥ मानलक्ष
णमित्युक्तंसंक्षेपाद्ब्रह्मसिद्धये ॥१॥ ॥ अशेषमानमेयैकसाक्षिणेऽक्षयमूर्तये ॥ अजेशपुरुहूतेड्य
नमोनारायणायच॥२॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितंप्रमाणलक्षणंसमाप्तम्॥

श्रीहयग्रीवायनमः॥अथकथालक्षणम् ॥नृसिंहमखिलाज्ञानतिमिराशिशिरद्युतिम् ॥ संप्रणम्यप्र
वक्ष्यामिकथालक्षणमंजसा॥१॥वादोजल्पोवितंडेतित्रिविधाविदुषांकथा ॥ तत्त्वनिर्णयमुद्दिश्य
केवलंगुरुशिष्ययोः ॥ २॥ कथान्येषामपिसतांवादोवासंमितेःशुभा॥ख्यात्याद्यर्थंस्पर्धयावासतां
जल्पइतीर्यते ॥ ३ ॥ वितंडातुसतामन्यैस्तत्त्वमेषुनिगूहितम्॥स्वयंवाप्राश्निकैर्वादेचिंतयेत्तत्त्वनि
र्णयम् ॥ ४ ॥ रागद्वेषविहीनास्तुसर्वविद्याविशारदाः ॥ प्राश्निकाइतिसंप्रोक्ताविषमाएकए
ववा ॥ ५ ॥ अशेषसंशयच्छेत्तानिःसंशयउदारधीः ॥ एकश्चेत्प्राश्निकोज्ञेयःसर्वदोषविवर्जितः॥
॥६॥एकोवाबहवोवास्युर्विष्णुभक्तिपराःसदा॥विष्णुभक्तिर्हिसर्वेषांसद्गुणानांस्वलक्षणम्॥७॥पृष्टे
नागमएवादौवक्तव्यःसाध्यसिद्धये॥ नैषातर्केणापनेयामतिरित्याहहिश्रुतिः ॥८॥ अन्यार्थएवा
गमस्यवक्तव्यःप्रतिवादिना ॥ ऋग्यजुःसामाथर्वाश्चभारतंपंचरात्रकम्॥९॥मूलरामायणंचैवसंप्रो
च्यंतेसदागमाः ॥ अनुकूलायएतेषांतेचप्रोक्ताःसदागमाः ॥ १० ॥ अन्येदुरागमानामतैर्नसा
ध्यंहिसाध्यते ॥ स्वपक्षमागमश्चैववक्तव्यःप्रतिवादिना ॥ ११ ॥ तस्याप्यन्यार्थतासाध्यावादि
नास्वार्थसिद्धये ॥ अन्यार्थतानिराकार्यास्वागमस्यविनिश्चयात ॥१२॥ उपपत्त्यवकाशोऽत्रह्याग
मार्थविनिर्णये॥वाद्यागमार्थौनिर्णीतआगमार्थःपरस्यतु ॥ १३ ॥ निर्णयःसहितैःपश्चात्ततोनिः
शेषनिर्णयः ॥ प्रत्यक्षसिद्धेष्वर्थेषुप्रश्नेमामक्षजंवदेत् ॥ १४ ॥ ज्ञानंवाज्ञानसिद्धेषुनानुमाप्रथमं
वदेत॥परतुष्टिकरंवाक्यंवदेतांयदिवादिनौ ॥१५॥ सएवात्रागमोज्ञेयःपरतुष्टिर्हितत्फलम् ॥ ए
वंनिर्णयपर्यंतंवादेसुबहवोऽपिहि॥ १६ ॥ घटेयुश्चिरकालंचजल्पेयावत्परोजितः॥ तत्त्वनिर्णयवे

लोम्यंवादेसाक्षात्त्वनिर्णयः ॥ १७ ॥ संवादेश्लाध्यतैवस्याद्गुरुत्वमितरस्यच ॥ तत्त्वनिर्णयवैलो
म्येनिंद्योदंड्योऽथवाभवेत् ॥१८॥ विरोधासंगतीन्यूनतूष्णींभावादिकैर्जितः ॥ भवेज्जल्पेवितंडा
यांन्यायोजल्पवदीरितः ॥ १९ ॥ संवादेदंड्यतानस्याद्वितंडाजल्पयोरपि ॥ पराजितत्वमात्रं
स्यात्निंद्योदंड्योपिवान्यथा ॥ २० ॥ अनुवादादिराहित्यंनैवजल्पेपिदूषणम् ॥ विद्याहीनत्व
लिंगेऽपिवादिनोःस्यात्पराजयः॥२१॥तदभावान्नैवषट्कादन्योनिग्रहइष्यते ॥ अंतर्भावादिहान्ये
षांनिग्रहाणामितिस्मह ॥ २२ ॥ विद्यापरीक्षापूर्वैववृत्तिर्जल्पवितंडयोः ॥ स्खलितत्वादिमात्रेण
नतत्रापिपराजयः ॥ २३ ॥ वादजल्पवितंडानामितिशुद्धंस्वलक्षणम् ॥ आनंदतीर्थमुनिनाब
ह्मतर्कानुसारतः ॥२४॥ कथालक्षणमित्युक्तंप्रीत्यर्थंशार्ङ्गधन्वनः ॥ सदोदितामितज्ञानपूर्णवारि
तद्दत्तमः ॥ २५ ॥ नरसिंहःप्रियतमःप्रीयतांपुरुषोत्तमः॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितंकथालक्षणंसमाप्तम् ॥ ॥ श्रीवेदव्यासार्पणमस्तु ॥ ॥ ७ ॥

---

श्रीवेदव्यासायनमः ॥ अथोपाधिखण्डनम् ॥ ॥नारायणोगण्यगुणनित्यैकनिलयाकृतिः ॥अशेष
दोषरहितःप्रीयतांकमलालयः॥ १॥अज्ञाताखिलसंवेत्तु[illegible]तेनकुतश्चन॥उपाधिभेदाद्वटतइतिवेत्थ
स्वभावतः ॥२॥अज्ञानतोवाद्वैतस्यसत्यतास्वतएवचेत् ॥ अनवस्थितिरज्ञानहेतौवान्योन्यसिद्धि
ता ॥३॥चक्रकापत्तिरथवाभेदश्चोपाधितःकुतः ॥ विद्यमानस्यभेदस्यज्ञापकोनैवकारकः ॥ ४ ॥
उपाधिर्दृष्टपूर्वोहिखेऽपिदेशांतरस्यसः ॥ ज्ञापकोविद्यमानस्यमूढबुद्धिव्यपेक्षया॥ ५ ॥ नचेदुपा
धिसंबंधएकदेशेऽथसर्वगः ॥ एकदेशेनवस्थास्यात्सर्वगश्चेन्नभेदकः ॥ ६ ॥ सुखदुःखादिभोगश्च

स्वरूपैक्येनभेदतः ॥ दृश्योह्युपाधिभेदेऽपिहस्तपादादिगोयथा ॥७॥ नानादेहगभोगानुसंधानंयोगिनोयथा ॥ नचेतृद्भोगानुसंधानंतदिच्छायोगिनःकुतः ॥ ८ ॥ अनुसंधानरहितदेहबाहुल्यमन्यथा ॥ सिद्धमेवहितत्पक्षेविशेषोयोगिनःकुतः ॥९॥ सिद्धौहिकर्मभेदस्यस्यादुपाधिविभिन्नता ॥ नतसिद्धौचैवतत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥१०॥ आत्मस्वभावभेदस्यविदोषत्वेनचाखिलः ॥ प्रत्यक्षादिविरोधाच्चदुष्टःपक्षोऽयमंजसा ॥११॥ चेष्टालिंगेनसात्मत्वेपरदेहस्यसाधिते ॥ अन्यत्वंस्वात्मनस्तस्मात्सर्वैरेवानुभूयते॥१२॥अज्ञताचाल्पशक्तित्वंदुःखित्वं चाल्पकर्तृता॥सर्वज्ञतादीशगुणविरुद्धाह्यनुभूतिगाः ॥ १३ ॥ सार्वज्ञ्यादिगुणाविष्णोःश्रुतिषुप्रतिपादिताः ॥ सत्यःसोअस्यमहिमेत्यादिवाक्यान्मृषानच ॥ १४ ॥ नचवेदोक्तमिथ्यात्वेमानंतन्मानताऽपिन॥आतोज्ञासंभवादेवनाधिकार्यैक्यवादिनाम् ॥ १५ ॥ अतोनाज्ञातमितिचविषयोविषयांतरे ॥ अज्ञाभावात्फलंकस्ययोगःशशनृशृंगयोः ॥१६॥ दुर्घटत्वंभूषणंचेत्स्यादविद्यात्वमात्मनः ॥ अंधंतमोऽप्यलंकारोनित्यदुःखंशिरोमणिः ॥ १७ ॥ अतःपरोमात्रयेतिपूर्वंश्रुतिनिदर्शितः ॥ अन्यमीशमितिश्रुत्याभिन्नजीवदशांगतः ॥१८॥ भिन्नत्वेनात्मसादृश्यदोयदेतिश्रुतेःसदा ॥ मायावादतमोध्यासमितितत्त्वदृशाजगत् ॥ १९ ॥ भातंसर्वज्ञसूर्येणप्रीतयेश्रीपतेःसदा ॥ नमोमंदनिजानंदसांद्रसुंदरमूर्तये ॥ इंदिरापतयेनित्यानंदभोजनदायिने ॥ २० ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेउपाधिखंडनंसमाप्तम् ॥

श्रीलक्ष्मीनरसिंहायनमः॥अथमायावादखंडनम् ॥ ॐश्रीनृसिंहोखिलाज्ञानमतध्वांतदिवाकरः॥
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥१॥विमतमनारंभणीयम् अन्यथाप्रतिपादकत्वात्य
दित्थंतत्तथायथासंप्रतिपन्नम्॥नहिब्रह्मात्मैक्यस्ययाथार्थ्यंतत्पक्षे॥अद्वैतहानेःस्वरूपातिरेके॥अ
नतिरेकेस्वप्रकाशत्वादात्मनःसिद्धसाधनता ॥ निर्विशेषत्वादात्मनोनानधिगतोविशेषः ॥सिद्धत्वा
त्स्वरूपस्यविशेषाभावानाचज्ञानंकस्यचिदावरकम्॥ अनधिगतार्थगंतृप्रमाणमितिचतन्मतम् ॥
अज्ञानासंभवादेवतन्मतमखिलमपाकृतम् ॥ मिथ्यात्वेचैक्यस्यातत्त्वावेदकत्त्वमागमस्यस्यात् ॥
सत्यताचभेदस्य ॥ एवमेवप्रयोजनमपिनिरस्तम् ॥ स्वरूपत्वान्मोक्षस्यपूर्वमेवसिद्धत्वात् ॥ अ
ज्ञानासंभवेनचतुर्थप्रकाराभावात्पंचमप्रकारतापिनिरस्ता ॥ विषयप्रयोजनाभावादेवाधिकारी
च ॥ तदभावादेवसंबंधोऽपि ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच॥क्षरःसर्वाणिभूतानिकूटस्थोऽ
क्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः ॥ अतोऽस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः॥योमामेवम
संमूढोजानातिपुरुषोत्तमम् ॥ ससर्वविद्भजतिमांसर्वभावेनभारत ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंम
याऽनघ॥एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत ॥ इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥मन
सस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ॥ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरंकिंचि
त्साकाष्ठासापरागतिः ॥ भूम्नःक्रतुवज्ज्यास्त्वंतथाचदर्शयति ॥ इतिविष्णोःपुरुषोत्तमत्वमेवसर्व
शास्त्रार्थत्वेनभगवताश्रुत्याचाभिहितम् ॥ इतिसर्वज्ञमुनिनामायावादतमोऽखिलम् ॥ निरस्तंतत्त्व

वादेनसतांसंशयनुत्तये ॥ नास्तिनारायणसमंनभूतंनभविष्यति ॥ एतेनसत्यवाक्येनसर्वाथान् साधयाम्यहम् ॥४॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितंमायावादखंडनंसमाप्तम् ॥

---

श्रीवेदव्यासाय नमः ॥ ॥ प्रपंचमिथ्यात्वानुमानखंडनप्रारंभः॥ नत्वाविश्वोदयस्थेमलयहेतुंपतिंश्रियः ॥ कुर्मःप्रपंचमिथ्यात्वमानखंडनपंचकम् ॥ १ ॥ विमतंमिथ्यादृश्यत्वाद्यदित्थंतत्तथा यथासंप्रतिपन्नम् ॥ इत्युक्तेजगतोभावादाश्रयासिद्धःपक्षः ॥ अनिर्वचनीयासिद्धेप्रसिद्धविशेषणः ॥ सदसद्वैलक्षण्येमिथ्यात्वेसिद्धसाधनता ॥ दृश्यत्वाभावादसिद्धोहेतुः ॥ अनिर्वचनीयासिद्धेरेव ॥ अनिर्वचनीयासिद्धेरेवसपक्षाभावाद्विरुद्धः ॥ आत्मनोऽपिदृश्यत्वादनैकांतिकः ॥ जगतोऽभावेऽनुमानस्याप्यभावइतितर्केबाधितत्वेनानध्यवसितः ॥ प्रत्यक्षादिविरुद्धत्वाद्विश्वंसत्यमित्यादिवाक्यविरुद्धत्वाच्चकालात्ययापदिष्टः ॥ रजतंदृष्टमितिभ्रममात्रत्वात् ॥ विमतंसत्यंदृश्यत्वात् ॥ आत्मवदित्यपिप्रयोज्यत्वात्प्रकरणसमः ॥ विमतंसत्यंप्रमाणदृष्टत्वात्यदित्थंतत्तथायथाआत्मेतिप्रयोगात्सत्प्रतिसाधनः ॥ शुक्तिरजतस्याप्यनिर्वचनीयत्वाभावात्साध्यविकलोदृष्टांतः ॥ उक्तप्रकारेणदृश्यत्वाभावात्साधनविकलश्च ॥ प्रमाणविरुद्धत्वमुपाधिः ॥ साध्यधर्मविशिष्टःपक्षः ॥ साध्यसमानधर्मविशिष्टःसपक्षः ॥ साध्यविपरीतधर्मविशिष्टोविपक्षः॥पक्षवचनंप्रतिज्ञा ॥ लिंगंहेतुः ॥ निदर्शनंदृष्टांतः॥योदृश्यतेसदानंदनित्यव्यक्तचिदात्मना ॥ निर्दोषाखिलकल्याणगुणंवंदेरमापतिम्॥उत्पत्तिस्थितिभंगंविश्वंयस्मात्प्रपद्यते ॥

पुरुषात्सृजयतिजगदंतर्यामीस्वामीरमानाथः ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचा
र्यविरचितंप्रपंचमिथ्यात्वानुमानखंडनंसमाप्तम् ॥

श्रीहयग्रीवायनमः॥ ॥अथतत्त्वसंख्यानम्॥स्वतंत्रमस्वतंत्रंचद्विविधंतत्त्वमिष्यते ॥ स्वतंत्रोभगवान्विष्णुर्भावाभावौद्विधेतरत्॥प्राक्प्रध्वंससदात्वेनत्रिविधोभावइष्यते॥चेतनाचेतनत्वेनभावोऽपिद्विविधोमतः॥२॥दुःखस्पृष्टंतदस्पृष्टमितिद्वेधैवचेतनम्॥नित्यादुःखारमाऽन्येतुस्पृष्टदुःखाःसमस्पृष्टदुःखाविमुक्ताश्चदुःखसंस्थाइतिद्विधा ॥ दुःखसंस्थामुक्तियोग्याअयोग्याइतिचद्विधा॥ ४॥स्तशः॥३॥देवर्षिपितृपनराइतिमुक्तास्तुपंचधा॥एवंविमुक्तियोग्याश्चतमोगाःसृतिसंस्थिताः॥५॥इतिद्विधामुक्तियोग्यादैत्यरक्षःपिशाचकाः॥मर्त्याधमाश्चतुर्धैवतमोयोग्याःप्रकीर्तिताः॥६॥तेचप्रांधतमसःसृतिसंस्थाइतिद्विधा ॥ नित्यानित्यविभागेनत्रिधैवाचेतनंमतम् ॥ ७ ॥ नित्यावेदाःपुराणाद्याःकालप्रकृति[illegible]व ॥ नित्यानित्यंत्रिधाप्रोक्तमनित्यंद्विविधंमतम् ॥ ८ ॥ असंस्पृष्टंचसंस्पृष्टमसंस्पृष्टंमहानहं[illegible] ॥ बुद्धिर्मनःखानिदशमात्राभूतानिपंचच ॥ ९ ॥ संस्पृष्टमंडतद्गंचसमस्तंसंप्रकीर्तितम् ॥ सृष्टिःस्थितिःसंहृतिश्चनियमोज्ञानबोधनम् ॥१०॥ बंधोमोक्षस्सुखंदुःखमावृत्तिर्ज्योतिरेवच ॥ विष्णुनास्यसमस्तस्यसमासव्यासयोगतः ॥ ११॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितंतत्त्वसंख्यानंसमाप्तम् ॥



श्रीवेदव्यासायनमः॥ ॥अथतत्त्वविवेकः॥स्वतंत्रंपरतंत्रंचप्रमेयंद्विविधंमतम्॥स्वतंत्रोभगवान्वि
ष्णुर्निर्दोषाखिलसद्गुणः॥द्विविधंपरतंत्रंचभावोभावइतीरितः॥पूर्वापरसदात्वेनत्रिविधोभावइष्यते
॥२॥भावाभावस्वरूपत्वान्नान्योन्याभावतापृथक्॥चेतनोचेतनश्चेतिभावोऽपिद्विविधोमतः ॥३॥
नित्यमुक्तश्चसृतियुक्परतंत्रोऽपिचेतनः ॥ द्विधैवश्रीर्नित्यमुक्तासृतियुक्चद्विधामतः॥४॥मुक्तोमु
क्तइतिद्यत्रब्रह्मांताउत्तरोत्तरम्॥मुक्ताःशतगुणाःप्रोक्तारमातेभ्योऽखिलैर्गुणैः ॥ ५ ॥ नित्यंबहुगु
णोद्रिक्तातततोऽनंतगुणोहरिः ॥ अमुक्तास्त्रिविधास्तत्रनीचमध्योच्चभेदतः ॥६ ॥ मुक्तियोग्यास्त
त्रचोच्चानित्यावर्तास्तुमध्यमाः ॥ नित्यानित्यतमोयोग्याद्विधैवाचेतनंमतम्॥७॥नित्यानित्यत्वभे
देनदेशःकालश्रुतिस्तथा॥भूतेंद्रियप्राणगुणाःसूक्ष्मरूपंचनित्यकम् ॥८॥ एषांविकारोनित्यःस्या
न्नित्याएवहिचेतनाः ॥ गुणक्रियाजातिपूर्वाधर्माःसर्वेऽपिवस्तुनः ॥ ९ ॥रूपमेवद्विधातच्चयावद्व
स्तुचखंडितम् ॥ खंडितेभेदऐक्यंचयावद्वस्तुनभेदवत् ॥१०॥खंडितंरूपमेवात्रविकारोऽपिविका
रिणः ॥ कार्यकारणयोश्चैवतथैवगुणतद्वतोः ॥ ११ ॥ क्रियाक्रियावतोस्तद्वत्तथाजातिविशेष
योः ॥ विशिष्टशुद्धयोश्चैवतथैवांशांशिनोरपि ॥ १२ ॥ यएतत्परतंत्रंतुसर्वमेवहरेस्तदा ॥ वश
मित्येवजानातिसंसारान्मुच्यतेहिसः ॥ १३ ॥ इतिश्रीमदानंदतीर्थ०कृतःतत्त्वविवेकःसमाप्तः ॥

---

श्रीवेदव्यासायनमः ॥ अथतत्त्वोद्योतारंभः ॥ ॥ सर्वत्राखिलसच्छक्तिस्वतंत्रोऽशेषदर्श
नः ॥ नित्यातादृशचिच्चेत्ययंतेष्टोनोरमापतिः ॥ १ ॥ वियतोभिन्नोमुक्तत्वाद्यदित्थंतत्तथायथा

संप्रतिपन्नम्॥नचभेदेविकल्पोयुज्यते ॥ अनिर्वचनीयस्यसर्वत्राप्रसिद्धत्वादेव ॥ शशविषाणं
गोविषाणंवोच्यतइतिवत्॥नचानिर्वचनीयेकिंचिन्मानम् ॥ मिथ्याशब्दोऽनिर्वचनीयंवदतीत्य
त्रच ॥ अनुमानस्यचाप्रसिद्धविशेषणःपक्षः॥ नचधूमत्ववन्मिथ्यात्वमुभयसंप्रतिपन्नंसामान्यम
स्ति॥नचबाष्पारोपितधूमेनधूमवत्त्वंव्यभिचरति॥नचभावाभावविलक्षणंकिंचिदागमोवक्ति॥ना
सदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयदित्यत्रच॥पारिशेष्येणानिर्वचनीयत्वांगीकारे
आनीदवातंस्वधयातदेकमितितदानींपरिशिष्टत्वाद्ब्रह्मणोऽपिअनिर्वचनीयत्वंस्यात् ॥ मूर्तंसदि
तिसंप्रोक्तममूर्तमसदुच्यते॥ मूर्तामूर्तेतरद्ब्रह्मनसत्तन्नासदुच्यतेइतिपैङ्गिश्रुतिः॥ यदन्यद्वायोश्चां
तरिक्षाच्चेत्तत्सदितिमाध्यंदिनश्रुतिः॥अद्भुतत्वादनिर्वाच्यंब्रह्मचिन्त्यमेवच ॥ अचिंत्यंततएवै
तदतर्क्याज्ञेयमेवच ॥ ऋगताविितिधातोस्तुपूर्वाविगतवत्सदा ॥ स्थितेर्ब्रह्मर्तमित्युक्तमनृतंपरि
णामतः॥ प्रकृतिप्राकृतंप्रोक्तमसत्तदशुभत्वतः ॥ असतांबुद्धिगम्यत्वादसत्यमितिचोच्यते ॥
नियमेनबहिश्चित्तास्तेसंतोब्रह्मणिस्थिताः ॥ विश्वंसत्यंवशेविष्णोर्नित्यमेवप्रवाहतः ॥ नकाप्य
नीदृशंविश्वंतत्तत्कालानुसारतः ॥ असत्यमप्रतिष्ठंयेजगदाहुरनीश्वरम् ॥ तआसुराःस्वयंनष्टा
जगतःक्षयकारिणः ॥ इत्यादिव्यासस्मृतौ ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ अप
रस्परसंभूतंकिमन्यत्कामहैतुकम् ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः ॥ प्रभवंत्युग्र
कर्माणःक्षयायजगतोऽहिताः॥इत्यादिचगीतासु॥विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनंतिव्रतं
वाम् ॥ प्रधान्वस्यमहतोमहानिसत्यासत्यस्यकरणानिवोचम् ॥ सत्यःसोअस्यमहिमागृणे

शवोयज्ञेषुविप्रराज्ये ॥ कविर्मनीषीःपरिभूःस्वयंभूर्याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यइत्यादिश्रुतिभ्यश्च ॥ नचार्थापत्याऽनिर्वचनीयत्वसिद्धिः ॥ असतःप्रतीतिंविनाऽसद्वैलक्षण्यंज्ञानानुपपत्तेः ॥ नचबाध्यंजगदित्यत्रकिंचिन्मानम् ॥ बाध्यत्वमपिहितेषांमिथ्या ॥ तस्यचमिथ्यात्वेऽबाध्यत्वमेवसत्यंस्यात् ॥ सद्विलक्षणत्वंचसज्जातिविलक्षणत्वंसन्मात्रविलक्षणत्वंवा ॥ जात्यंगीकारेसद्धकुत्वम् ॥ सन्मात्रविलक्षणत्वंचेत्सिद्धसाधनता ॥ ब्रह्मवैलक्षण्यांगीकारात् ॥ नचकयापियुक्त्यामानेनवाभेदनिराकरणंभवति ॥ अंगीक्रियमाणत्वात् ॥ अनिर्वचनीयासिद्धेश्चसद्विलक्षणत्वमसद्विलक्षणत्वंचमिथ्येत्यविलक्षणत्वमेवसत्यंस्यात् ॥ एवमेवहेत्वादिष्वपिविकल्पोनिराकरणीयः ॥ दृश्यत्वाद्यनुमानेष्वपिएतएवदोषाः ॥ आत्मनोऽपिदृश्यत्वादनैकांतिकताच ॥ नचात्मनोदृक्कर्मत्वंविनातज्ज्ञानत्वम् ॥ तदज्ञाननिवृत्तिश्चतेनभवति ॥ नचतदाकरणम् ॥ अतद्विषयत्वादेव ॥ तद्विषयत्वमेवहितदाकारत्वम् ॥ नहिज्ञानज्ञेययोरेकाकारता ॥ नह्यज्ञानस्यघटाश्रयत्वंब्रह्माश्रयत्वंवास्ति॥पुंगतमेवहितमोज्ञानेननिवर्तते ॥ विषयाश्रितंचेदज्ञानंनिवर्ततेतर्ह्येकेनज्ञातस्यघटस्यान्यैरज्ञातत्वंनस्यात्अतद्विषयकज्ञानेनतदज्ञाननिवृत्तौघटज्ञानेनापिनिवर्तेत ॥ अतंविषयत्वादेवतस्यज्ञानत्वंचनस्यात् ॥ घटवत् ॥ जडत्वंचाप्रमातृत्वमेव ॥ नचप्रमातृत्वमात्मनस्तैरंगीक्रियते ॥ अतस्तदप्यनैकांतिकम् ॥ मिथ्याप्रमातृत्वंचअनिर्वचनीयनिरासादेवनिरस्तम् ॥यदिजडत्वंनामाप्रकाशकत्वंतदप्यात्मनःस्वविषयप्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकांतिकमेव ॥ स्वविषयत्वंहिकर्तृकर्मवि

रोधात्तैर्नांगीक्रियते ॥ मिथ्याभूतपरविषयत्वंचानिर्वचनीयनिरासादेवनिरस्तम् ॥ विषयवर्जि
तःप्रकाशएवनभवतिघटवत् ॥ तत्प्रमाणाभावात् ॥ देशतःकालतःपरिच्छिन्नत्वंप्रकृतिकाला
दिष्वभावाद्भागासिद्धम् ॥ वस्तुतःपरिच्छिन्नत्वमात्मनोऽपिभेदांगीकारादनैकांतिकंभव
ति ॥ प्रत्यक्षबाधितंचजगन्मिथ्यात्वम् ॥ ःसदितिप्रतीयमानत्वात् ॥ नचप्रत्यक्षसिद्धमन्ये
नकेनापिबाध्यंदृष्टम् ॥ चंद्रप्रादेशत्वादिविषयंतुदुरस्थत्वादिदोषयुक्तत्वादपटु ॥ नचजगत्प्रत्य
क्षस्यापटुत्वेकिंचिन्मानम् ॥ नचजगतोऽज्ञानजन्यत्वेकिंचिन्मानम् ॥ नचमायाविनामायादृ
श्यतेविश्वमीश्वरः ॥ सदापश्यतितेनेदंनमायेत्यवधार्यतामिति ॥ अपरोक्षदृशोमिथ्यादर्शनंनक्व
चिद्भवेत् ॥ सर्वापरोक्षविद्विष्णुर्विश्वदृकूतन्नतन्मृषेतिब्रह्मांडे ॥ ईशोऽनीशोजगन्मिथ्यानपूज्यो
गुरुरित्यपि ॥एकआत्मापरब्रह्मभावोमुक्तिरितिह्यपि ॥ एवमादिविरुद्धानिवचनान्यथयुक्तयः ॥
प्रमाणैर्बहुभिर्ज्ञेयाआभासाइतिवैदिकैः॥वेदवेदानुसारेषुविरोधेऽन्यार्थकल्पना ॥ इतराणिविरुद्धा
निप्रलंभभ्रमजान्यपीतिव्याससमृतिः ॥ नासतोदृष्टत्वात् नाभावउपलब्धेर्वैधर्म्याच्च नस्वभादि
वदित्यादिभगवद्वचनेनापिनिरस्ताः ॥ नचशून्यवादिनःसकाशात्वैलक्षण्यंमायावादिनः ॥ व्याव
हारिकसत्त्वस्यतेनाप्यंगीक्रियमाणत्वात् ॥ सत्यंतुद्विविधंप्रोक्तंसांवृतंपारमार्थिकम् ॥ सांवृतंव्या
वहार्यंस्यात्निवृत्तौपारमार्थिकम् ॥ विचार्यमाणेनोऽसत्त्वंसत्त्वंचापिप्रतीयते ॥ यस्यतत्सांवृतंज्ञे
यंव्यवहारपदंचयदित्यादिना॥नचनिर्विशेषब्रह्मवादिनःशून्यात्कश्चिद्विशेषस्तस्य॥निर्विशेषंस्वयं
भातंनिर्लेपमजरामरम् ॥शून्यंतत्त्वमविज्ञेयंमनोवाचामगोचरम्॥जाड्यसंवृत्तिदुःखांतपूर्वदोषवि

रोधियत्॥नित्यभावनयाभातंतद्भावंयोगिनंनयेत्॥भावार्थंप्रतियोगित्वंभावत्वंवानतत्त्वतः॥विश्वा
कारंचसंहृत्त्यायस्यतत्पदमक्षयमित्यादितद्वचः ॥ अनृतजडविरोधिरूपमतत्रयंमलबंधनदुःखता
विरुद्धमितिचमायावादी॥नास्यसत्त्वमसत्त्वंवानदोषोगुणएववा॥हेयोपादेयरहितंतच्छून्यंपदमक्ष
यमितिशून्यवादी॥सत्त्वादिधर्माःपरमार्थतोऽपिमायावादिनापिनांगीक्रियंते॥सर्वविशेषविनिर्मुक्त
त्वांगीकारात्॥अवाच्यंसर्वशब्दैस्तल्लक्ष्यतेचाखिलैःपदैः ॥ अज्ञेयंज्ञानलक्ष्यंचतच्छून्यंपदमक्ष य
मितिचशून्यवादी ॥ नचाखंडत्वेनकश्चिद्विशेषः ॥ यदखंडंपदंलक्ष्यंसर्वैरपिविशेषणैः॥सर्वैर्विशेष
णैर्मुक्तंतच्छून्यंपदमक्षयमितिचशून्यवादी॥एवमेवमायावादिराद्धांतः॥ नचमायावादिनोभावत्वं
नामधमः॥नचशून्यवादिनःशून्यत्वंनामधर्मः॥मय्यनंतगुणेऽनंतेगुणतोऽनंतविग्रहे ॥ यदासीत्तदए
वाद्यःस्वयंभूःसमभूदजः॥उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः॥योलोकत्रयमाविश्यबिभर्त्यव्य
यईश्वरः ॥ इतिभगवद्राद्धांतः॥परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रु
तिः॥ प्रकृष्टप्रकाशश्चंद्रइत्यादिषुप्रकृष्टत्वादिविशेषणानिसंत्येवेतिनतत्साम्यम्॥अनित्यदेशकाल
संबंधित्वस्यसत्वान्नसोऽयंदेवदत्तइत्याद्युपमाच ॥ देवदत्तादिस्वरूपमात्रस्यसिद्धत्वान्नस्वरूपमा
त्रेप्रश्नः॥नक्षत्रादिव्यतिरेकमात्रस्यापिसिद्धत्वान्नव्यतिरेकमात्रे॥ अन्यथाप्रश्नस्यैवासंभवात् ॥
अतःकैर्विशेषणैर्विशिष्टइतिप्रश्नेप्रकृष्टप्रकाशतद्देशकालादिविशिष्टएववाक्यार्थः॥अंगीक्रियमाण
त्वाद्विशिष्टादेरनिर्वचनीयत्वाभावाच्चसत्यत्वंचसिद्धम् ॥ दृष्टस्यवस्तुनोबलवद्दृष्टिंविनानान्यद्बाध
कमितिदुर्घटत्वेसुघटत्वेवानानिर्वचनीयसिद्धिः ॥ सर्ववैलक्षण्यांगीकाराद्दुर्घटमपिब्रह्मप्रमाणा

दंगीक्रियतएव ॥ जगतोभिन्नमभिन्नंभिन्नाभिन्नंवेत्यादिविकल्पस्तत्रापियुज्यते ॥ भिन्नंचेद्भे
दादिविशिष्टाच्छुद्धम् ॥ भिन्नमभिन्नंवेत्याद्यनवस्था॥अभिन्नंचेन्मिथ्यारूपेणजगताब्रह्मापिमि
थ्यैवस्यात् ॥ भिन्नाभिन्नंचेद्दोषद्वयमपि ॥ उभयविलक्षणंचेदनिर्वचनीयत्वंब्रह्मणएवापत्ति
तम् ॥ यद्येवमपिनानिर्वचनीयत्वंब्रह्मणस्तर्हिजगतोऽपिनस्यात् ॥ विश्वंसत्यमित्यादिवचनम
त्राप्युक्तम्॥नसत्तन्नासदुच्यते॥ असद्वाइदमग्रआसीत् ॥ नासदासीन्नोसदासीत्तदानीमित्या
दिब्रह्मणोपिमिथ्यात्वेप्रमाणमस्ति ॥ नहिदृष्टेर्बलवत्किंचित्प्रमाणम् ॥नहियुक्तिपराजितोऽपिक्षु
धितोनान्नमत्ति॥बलवद्दृष्टिबाधे॥नचान्नत्वेदुर्घटेतस्यानन्नत्वंभवति॥दृष्टंचबाधितदृष्टस्य॥नचा
न्नानन्नवैलक्षण्यमनुभूयते॥नचतथाव्यवहारः॥नचतत्रकिंचिन्मानम्॥अतोविशिष्टादिनिराकरण
युक्तीनामपिविशिष्टाद्यपेक्षितत्वाज्जात्युत्तरमितिनयुक्तिबाधापि॥अतोनिखिलगुणगणाढ्यमेवब्र
ह्मश्रुत्यभिप्रेतम् ॥ अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः ॥ वाचारंभणंविविधःप्रकारः ॥
नामधेयंनित्यंधार्यंनाममृत्तिकेत्यादिवैदिककमेवइत्येतद्वचनंसत्यमित्यादिश्रुत्यर्थः ॥ अनित्यत्वा
त्सांकेतिकंनामाप्रधानंनित्यत्वान्मृत्तिकादिनामैवप्रधानम् ॥प्रधानज्ञानादप्रधानंज्ञातार्थमिवभवति
एवंप्रधानस्यपरमात्मनोज्ञानादप्रधानंज्ञातमिवभवति ॥ प्राधान्यज्ञापनार्थमेवसृष्ट्यादिकथनम् ॥
यथासोम्येत्याद्यपिसादृश्यकथनम् ॥नचैकनखनिकृंतनविकारःसर्वकार्ष्णायसम् ॥ प्रधानपुरुषज्ञा
नाद्ग्रामोज्ञातइतिव्यपदेशोऽस्ति॥नहिसत्यज्ञानेनमिथ्याज्ञानंभवति॥मुक्तामुक्तयोर्भेदाभावेमुक्त
स्यसंसारःसंसारिणोवामुक्तत्वंस्यात् ॥ यद्यज्ञानकृतोभेदस्तर्हिईश्वरस्याज्ञानाभावात्संसारिणे

क्थंतेनानुभूयेत ॥ ततश्चदुःखित्वंस्यात् ॥ तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतप ॥ सुखंदुःखंभवो
भावोभयंचाभयमेवच ॥ अहिंसासमतातुष्टिस्तपोदानंयशोऽयशः ॥ भवंतिभावाभूतानामतएव
पृथग्विधाः॥यस्मात्क्षरमतीऽतोहमक्षरादपिचोत्तमः॥अतोऽस्मिल्लोकेवेदेचप्रथितःपुरुषोत्तमः॥इ
त्यादिनाईश्वरेणापिभेदस्यैवानुभूयमानत्वाच्च ॥ ततएवाभ्रांतत्वान्नमुक्तस्यापिभेदनिवृत्तिः ॥
नचोपाधिभेदमात्रेणईश्वरस्यदुःखाभावः ॥ हस्तपादाद्युपाधिभेदेपिभोक्तुरेकत्वानुभवात् ॥ उद्य
तायुधदोर्दंडाःपतिताःस्वशिरोक्षिभिः ॥ पश्यंतःपातयंतिस्मकबंधाअप्यरीन्युधीतिभारतवचना
न्नविश्लेषाद्विशेषः ॥ अतोऽनौपाधिकत्वादेवभेदस्यनमुक्तेश्वरैक्यम् ॥ इदंज्ञानमुपाश्रित्यम
मसाधर्म्यमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच ॥ यदापश्यःपश्यतेरुग्मवर्णंकर्तारमीशं
पुरुषंब्रह्मयोनिम् ॥ तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैतिइतिमुक्तभेदवचनेभ्य
श्च ॥ एवंप्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत्प्रतीयमानान्यपिवाक्यानिसादृश्याद्यर्थान्येव
योजनीयानि ॥ विरुद्धवत्प्रतीयंतेआगमायत्रवैमिथः ॥तत्रदृष्टानुसारेणतेषामर्थोऽन्ववेक्ष्यतइति
ब्राह्मवचनाच्च ॥ भेदाद्यनुभवस्यभ्रांतित्वांगीकारेत्वपलापयुक्तेर्नितरांभ्रांतित्वाद्भेदाद्यनुभवस्या
भ्रांतित्वमेवभवति ॥ परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनांतरीयकत्वात् ॥ एकजीव
वादिपक्षेतन्निष्ठानांत्वस्यनंतरमपिविश्वस्यानिवृत्तत्वाद्भेदनिष्ठएवएकोजीवइत्यापतति॥तस्यचत
त्रैवाग्रहान्नकदाचिद्भेदनिवृत्तिरेवभवति ॥ नचैकजीवाज्ञानपरिकल्पिताःसमस्ताइत्यत्रकिंचि
न्मानम् ॥ अतोमुक्तेभ्योप्यन्यएवेतिसमस्तगुणपरिपूर्णोभगवान्विष्णुरितिसिद्धम् ॥ ७ ॥ ॥

॥९॥

ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरे ॥ परोमा
त्रयातन्वाद्धधाननतेमहित्वमन्वश्नुवंति ॥ सत्यचिच्चेत्यपतयेमुक्तामुक्तोत्तमाथते ॥ नमोना
रायणायार्यवृंदवंदितपद्मय ॥ आनंदतीर्थपुंसिंहोमायावादिदितेःसुतान् ॥ विदार्ययुक्तिन
खरैरप्रतीपोऽभिभासते ॥ पलायध्वंपलायध्वंत्वरयामायिदानवाः ॥ सर्वज्ञहरिरायातितर्कांग
मदरारिधृत् ॥ द्रवतद्रवताशुमायिनःप्रविशध्वमतंद्रितागुहाः ॥ कमलारमणांबराश्रयःसमुदेत्य
खिलज्ञभास्करः ॥ नृहरिःसकलज्ञनामकःसमुपैतिहिमायिदानवान् ॥ प्रपलायनमत्रतत्क्षमं
त्वरयावोवसतिर्गुहासुच ॥ जयत्यानंदतीर्थेष्टदेवतानरकेसरी ॥ विपाटिताज्ञानतमःकपाटात्पुरुकुं
कृतः ॥ जयत्यमितपौरुषःस्वजनतेष्टचिंतामणिरजेशमुखवंदितोगुणगणार्णवःश्रीपतिः ॥ सर्व
ज्ञसन्मुनींद्रोच्चसन्मनःपंकजालयः ॥ अजितोजयतिःश्रीशोरमाबाहुलताश्रयः ॥ ॥ इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितस्तत्त्वोद्योतःसमाप्तः ॥ ८ ॥

---

ॐनमोनारायणाय ॥ नमस्तेवायो ॥ अथकर्मनिर्णयः ॥ ॥ ॐ ॥ यइज्यतेविधीशानशक्रपूर्वैः
सदामखैः ॥ रमाप्रणयिनेतस्मैसर्वयज्ञभुजेनमः ॥ महानाम्नीनामृचामुपसर्गायेउपसर्जनभूतास्ता
नुपसृजतिसंयोजयति ॥ महन्नामयास्वृक्षुविद्यतेतामहानाम्न्यः ॥ परस्यब्रह्मणोयन्नामेंद्रादिकं ॥९॥
तन्महार्थत्वान्महत्॥ महद्धितत्परंब्रह्म॥अशेषगुणपूर्तेः॥तत्रैकआहुरगुणंब्रह्मेति ॥ नतद्युक्तम् ॥
श्रुतियुक्तिविरोधात् ॥ तथाहिश्रुतिः ॥ सत्यंज्ञानमनंतंब्रह्म ॥ विज्ञानमानंदंब्रह्म ॥ यःसर्वज्ञःसर्व

विद्यस्यज्ञानमयंतपः॥ तस्मादेतद्ब्रह्मनामरूपमन्नंचजायते ॥ दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरो
ह्यजः॥अप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः॥एतावानस्यमहिमाअतोज्यायांश्चपुरुषः ॥ योनः
पिताजनितायोविधाताधामानिवेदभुवनानिविश्वा॥पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते ॥पूर्णस्य
पूर्णमादायपूर्णमेवावशिष्यते॥सर्वकर्मासर्वकामःसर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोवाक्यनादरः ॥
विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ परोमात्रयातन्वाद्दधानननेमहित्वमन्वश्नु
वंति ॥ नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमापेत्यादिका ॥ युक्तिश्च ॥ बुद्धिपूर्वसर्व
कर्तृत्वात्सर्वज्ञत्वादयोगुणायुक्ताः॥ कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभमितिचभागवते ॥ नचएको
देवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा ॥ कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनि
र्गुणश्चेत्यादिविरोधः ॥ सत्त्वादिगुणाभावोक्तेस्तत्र ॥ अन्यथैकोदेवःसर्वभूतेषुगूढइत्यादीनामपि
गुणत्वात्स्वोक्तिविरोधः ॥ नचनिर्विशेषंनामकिंचिदस्ति॥ निर्विशेषत्वोक्तेरेवव्याहतत्वात् ॥ निर्वि
शेषत्वेनविशिष्टंनन्नवेत्युक्तेयद्यविशिष्टंतर्हिनविशेषनिराकरणम्॥विशेषवत्त्वमेवभवति ॥ यदिते
नविशिष्टंसएवविशेषइतिव्याहतिः ॥ नचनिर्विशेषत्वेकिंचिन्मानम् ॥ अशेषविशेषवचनानुभवयु
क्तिविरोधश्च ॥ नचमिथ्याविशेषवत् ॥ व्याहतेः ॥ मिथ्याविशेषइत्युक्तेह्यसद्विशेषइत्येवभवति ॥
तथाचविशेषविशिष्टपक्षोक्तदोषएव ॥ नचानिर्वचनीयविशेषइतिभवति ॥ अनिर्वचनीयासि
द्धेः ॥ नहितत्रप्रत्यक्षमस्ति ॥ मिथ्याशब्दस्त्वभाववाच्येव ॥ तदन्यत्रप्रमाणाभावात् ॥ नचान्य
त्प्रमाणम् ॥ प्रतिज्ञाव्याहतेः ॥ नहिसदंतरादसतश्चान्यत्सदसद्विलक्षणंप्रसिद्धम् ॥ असन्नभवती

त्युक्तेद्वौनञौप्रकृतमर्थंसातिशयंगमयतइतिसदेवभवति ॥ असदंतरंवाविशेषविवक्षायाम् ॥ किंचै
तद्वैलक्षण्यम्॥भेदोऽभेदोभेदाभेदोवा॥नतावद्भेदः अनंगीकारात्॥ व्यावहारिकभेदश्चानिर्वाच्य
सिद्धौवक्तव्यः॥नचाव्यावहारिकंकिंचित्॥नचाशेषव्यवहारनिवृत्तौकिंचिन्मानम् ॥ नचमिथ्यात
थ्ययोःसामान्यंव्यावहारिकत्वंधूमबाष्पयोर्धूमत्ववत्॥नचाभेदोनंऽगीकारादेव॥तथैवोभयम् ॥ अ
भेदेचानिर्वाच्यब्रह्मणोस्तच्छब्दयोःपर्यायत्वम्॥नचव्यावर्त्यविशेषेणापर्यायत्वंकचित्॥ व्यावर्त्य
विशेषस्तद्व्यावृत्तेब्रह्मणिविशेषमापादयतिचेद्विशिष्टवाक्यार्थता॥ नचेन्नब्रह्मज्ञानार्थिनेपदांतरंवा
च्यम् ॥ असंगतत्वात् ॥ मिथ्याविशेषस्यचासिद्धिरुक्ता ॥ अतोऽन्योन्याश्रयतानवस्थितिश्च
क्रकंवा ॥ भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतम् ॥ किंचासद्विलक्षणमित्यत्राभावान्यविरो
धानांमध्येनञःकोर्थः ॥ यद्यभावोन ॥ असद्विलक्षणत्वंभावत्वमेवजगतःस्यात् ॥ नचसतोऽ
न्यत्वादिधर्मानंगीकाराद्ब्रह्मणश्च ॥ असतोऽनिर्वचनीयत्वांगीकाराच्चनवैलक्षण्यंततोऽनिर्वाच्य
स्य ॥ तथापिचेद्वैलक्षण्यंनानिर्वचनीयत्वंजगतः ॥ नचविरोधः ॥ विरोधिनोरन्यतरनिषेधेऽन्य
तरव्यासत्वानुभवात् ॥ अविद्यमानंनभवतीत्युक्तेविद्यमानमित्येवहिसर्वलोकानुभवः ॥ अतो
नंतगुणोभगवान्नारायणइतिसिद्धम् ॥ नचसिद्धेर्थेवाक्यस्यप्रामाण्याभावादीश्वराद्यसिद्धिः ॥
सिद्धातिरिक्तकार्याभावात् ॥ लिङाद्यर्थस्त्विष्टसाधनत्वमेव ॥ नहिकर्तव्यत्वंनामेष्टसाधनत्वाद
न्यत्किंचित् ॥ तन्मानाभावात् ॥ शब्दस्तुनतद्वक्तीत्युक्तम् ॥ लिङादेरिष्टसाधनार्थत्वेनैवकृता
र्थत्वेतदन्यकार्यकल्पनेकल्पनागौरवम् ॥ नचतत्कल्पकंकिंचित् ॥ विप्रतिपत्तौचान्यन्मानंवक्त

व्यंतद्भावे ॥ नचानुमा ॥ अप्रसिद्धविशेषणत्वात् ॥ नचार्थापत्तिः ॥ अनुपपत्त्यभावात् ॥
कार्याभावादेवकार्यान्वयिनिव्युत्पत्तिरित्यादिदूरतोनिरस्तम् ॥ कार्यान्वितेव्युत्पत्तिरितिवद
नोऽकार्यान्वितेव्युत्पत्तिरित्युक्तेकिमुत्तरम् ॥ अध्याहारइत्युक्तेलोपइत्युत्तरम् ॥ अशेष
सिद्धपदानामर्थलोपाल्लिङाद्यर्थमात्रलोपएवगरीयान् ॥ हससिहसामीत्यादिसिद्धार्थएवबाला
नांव्युत्पत्तेः ॥ प्रथमप्राप्तत्वान्नतत्त्यागेकारणम् ॥ तथैवव्युत्पत्तिदर्शनाच्च ॥ अतःसिद्धा
र्थप्रामाण्यसिद्धेश्चसिद्धंमहागुणवत्त्वंविष्णोः ॥ ताश्चविदामघवन्नित्याद्याः ॥ हेमघवन्यशस्वि
न्मखपतइतिवा ॥ तंवाएतंमघवंतंसंतंमघवानित्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदे
वाःप्रत्यक्षद्विषः ॥ तेभिरिंद्रंचोदयदातवेमघम् ॥ तन्नआयातुमघाय ॥ यशोवावमघम् ॥ मघम
नुप्रापत्सि ॥ आमामेतुमघम् ॥ मघमनुप्रापत्सि ॥ धनंवावमघमित्यादिश्रुतिभ्यः ॥ गातुंत्वांस्तो
तुम् ॥ विदवेदयेतिसामान्यतोपेक्षिताशेषवेदनमुक्त्वातात्कालिकापेक्षितंप्रार्थयति ॥ गातुंविदे
ति ॥ त्वमेवानुशंसिषोदिशःमार्गान् ॥ आत्मनःस्तुतिप्रकारांस्त्वमेवोपदिशेत्यर्थः ॥ पूर्वीणांभगव
त्संप्रदायागतानांपरमविद्यानामर्थैशिक्ष॥शचीनांविद्यानांपतेवाचांपतइतिवा ॥ पुरूवसोबहुवित्त
बहुज्ञानेतिवा ॥ बहुषुवसतिबहूनामावासइतिवा॥ १॥आभिःअभिष्टिभिःएवंभूतैस्त्वत्पर्येषणैस्त्व
त्प्रार्थनैःकंचिन्मदादिकंप्रचेतयप्रबोधय ॥ प्रकृष्टचेतनसर्वज्ञपरमात्मन् ॥ द्युम्नायज्ञानाय ॥ वि
त्ताययशसेवा ॥ इषेअन्नायचनःप्रबोधय ॥ एतादृशोहिशक्रः ॥ शक्रएवैतिवा ॥ शक्तिरतिरूप
त्वाच्छक्रः ॥ २ ॥ रायेवित्ताय ॥ वाजायअन्नाय ॥ वज्रिणइंद्रंवर्तयतीतिवज्रिवः ॥ नियाम

क्त्वेनगच्छतीतिवा ॥ शविष्ठबलवत्तमसुखवत्तमेतिवा ॥ ऋंजसेप्रेरयसिसर्वान् ॥ मंहिष्ठवज्रिन्नृं
जसइत्यभ्यासस्तात्पर्यार्थः ॥ मत्स्वमदंकुरु ॥ ३॥ विदवेदयलंभयशयः ॥ सुवीर्यंच ॥ वाजानां
प्रजानांपतिर्भुवःअभवः॥प्रजावैवाजइतिश्रुतेः॥वशाँअनुयथावशम्॥वशइच्छायामितिधातोः ॥
यथावशंयथेच्छम् ॥ शूराणांसकाशाद्बलवत्तमः ॥ ४ ॥ मघोनायशस्विनांमहत्तमः ॥ चिकित्वः
ज्ञातःकर्तरितिवा ॥ नःअभितःसर्वतोनय ॥ इंद्रोविदेसमस्तंव्यजानात् ॥ तमेवस्तुषे ॥ ५ ॥
ऊतयेरक्षायैअभिप्रायसिद्धयेवा ॥ सनोद्विषःशत्रूनतिपारयतुपापानितमांसिवा ॥ क्रतुःज्ञानरू
पः ॥ छंदःइच्छारूपः ॥ छंद्यत्वाच्छादनत्वाद्वा ॥ ऋतेअशेषशास्त्रावगतम् ॥ ६ ॥ सातयेलब्ध
ये ॥ स्निधःविनाशान् ॥ ७ ॥ पूर्वस्यानादेःसतस्तेसकाशात्यत्सुम्नंसुखंतस्मिन्नआधेहि ॥ तव
पूर्तिःशस्यते ॥ ८ ॥ तन्नव्यंस्तुत्यम्॥ब्रह्मतत्सम्यग्घृदिमन्यसे ॥ जनस्योपदेशेनतत्स्वरूपेषुत्वं
चाहंचसंब्रवावहै॥गोषुज्ञानेषुगच्छतिज्ञानविषयोभवति ॥ सुशेवःसुसुखः ॥ समाधिवर्जितोऽद्वयः
॥ ९ ॥ एवाह्येवैवाहीत्यग्र्यादिदेवतानांसंवादरूपेणोक्तमर्थमतिशयेनावधारयति ॥ अभ्यासो
हितात्पर्यार्थः ॥ एवाहिएवमेवेत्यर्थः ॥ विनिश्चितेतुसंवादेविभागोरंगएवचेतिशब्दनिर्णये ॥ अतो
ग्राइइत्यादि ॥ एवमेवहिशक्रोवशाननुयथावशंस्वतंत्रोवर्ततइत्यर्थः ॥ अयपयगताविति धातोः
आयोइत्यायतिः ॥ उपोइतिवदतिशयार्थओकारः ॥ ओअतिशयइतिचसूत्रम् ॥ आयोजाना
तीत्यायोमन्यः ॥ समीपस्थमपिजानातीत्युपोमन्यः ॥ अन्येषामिंद्रियाणांपराङ्मुखत्वान्न
ह्यांतरंजानंति ॥ अयंत्वांतरमप्यापरोक्ष्येणपश्यति ॥ अयनेनप्राप्यंदूरस्थमायोइतिवा ॥

मनुअवबोधनेइतिधातोर्मन्युरितिज्ञानी ॥ बाह्यज्ञायज्ञानिनेआंतरज्ञायज्ञानिनइत्यभ्यासोहिता त्पर्यार्थः ॥ एवंविधंमद्गतंत्वामुद्दिश्यैवोपेहि ॥ विश्वधविश्वधारक ॥ समीपतोदूरतश्चत्वांम न्यमानायमह्यंमन्यवेज्ञानायमामुपेहीतिवा॥समीपेदूरतोऽभिज्ञंत्वामुद्दिश्यैवमद्गतम् ॥ एहिविष्णो नमेशक्तिस्त्वदाह्वानेहिमामुप ॥ इतिब्रह्मास्तुवद्विष्णुंतन्त्राभ्युत्थितपद्मगइतिपाद्मे ॥ स मीपेदूरतश्चैवध्यायंतंत्वांसदाविभो ॥ मामेहिज्ञानदानायेत्याहगाधिसुतोहरिमितिस्कांदे ॥ ओतमस्मिञ्जगद्यस्मादोमित्युक्तोहरिःसदा ॥ तमेवजगदाधारंयतयःपर्युपासतइतिमान्यसंहि तायाम् ॥ इंद्रोवाएताभिर्महानात्मानंनिरमिमीतेत्यस्याप्युक्तएवार्थः ॥ निर्माणंनामात्मन स्तद्व्याख्यानेनख्यापनम् ॥ नह्यन्यथातासांकरणत्वंभवति ॥ यस्तद्वेदसपितुष्पितासदितिश्रु तिः ॥ त्रीणिपदानिहितागुहासुयस्तद्वेदसपितुष्पितासत् ॥ स्त्रियःसतीस्ताँउमेपुंसआहुःप श्यदक्षण्वान्नविचेतदंधः ॥ कविर्यःपुत्रःसईमाचिकेतयस्ताविजानात्सपितुष्पितासत् ॥ इत्यादि श्रुतिभ्योविज्ञानमेवतन्निर्माणम् ॥ इंद्रएकंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुरित्यादेर्विज्ञा पनंवा ॥ प्रचेतनप्रचेतय ॥ आयाहिपिबमत्स्वक्रतुश्छंदऋतंबृहत् ॥ सुम्नआधेहिनोवसोइत्युप सर्गाः ॥ अंशाअप्यंश्यपेक्षयोपसर्गाभवंति ॥ उपसृष्टत्वादुपसर्गाः ॥ अंतर्गतंबहिर्गतंचद्विधास्या दुपसर्जनम् ॥ हस्तबद्धेतिवच्चैवपदानांचोपसर्गवदितिशब्दनिर्णये ॥ अधत्तान्यंजठरेप्रेमरिच्य तप्रचेतन ॥ दाताराधस्तुवतेकाम्यंवसुप्रचेतय ॥ अस्माकंबोधिचोदितायाहिपिबमत्स्व ॥ तं त्वापरिष्वजामहेक्रतुश्छंदऋतंबृहत् ॥ यातेरातिर्ददिर्वसुःसुम्नआधेहिनोवसोइत्युपसृजति ॥ अशे

षमहानाम्न्यर्थसंस्मरणपरिज्ञानपूर्वकमुपसर्गसंयोजनंकर्तव्यमित्येतदर्थत्वेनमहानाम्नीप्रशंसाक्रि
यते ॥ अन्यथानावन्मात्रप्रशंसामृतेअशेषमहानाम्नीप्रशंसायाव्यर्थत्वात् ॥ तृचविभागेनविदा
मघवन्नृतमूतयेनूनमितिवातिस्रोमहान्म्यः ॥ प्रथमायामहानाम्नीतद्वाच्यःपार्थिवोहरिः ॥ द्वि
तीयायाआंतरिक्ष्यस्तृतीयायाद्युगःप्रभुरित्यृक्संहितायाम् ॥ तृचास्तिस्रोमहानानाम्न्यःपंचचांप्र
थमापरा ॥ तृचाद्यचाचनिगदैस्तार्तीयासमभिर्युता ॥ इतित्रेधाविभागःस्याज्जपध्यानादिकर्म
स्विति ॥ त्रिलोकगेनहरिणानिर्मितःषोळशीक्रतुः ॥ एवंज्ञात्वाहरिंतंचकर्मकुर्वन्नजायतइति
मद्दत्ते ॥ एवाह्येवैवाहीत्यस्यार्थोप्युक्तावधारणरूपत्वात्पूर्वोक्तार्थपरिज्ञानंविनानस्मर्तुंशक्यते ॥
एवंनिर्मितेनषोळशिनाक्रद्धोभवत्येवंवित् ॥ प्रप्रवःहेऋत्विजःप्रजावावस्त्रिष्टुभमिषंत्रिष्टुभाख्यम
न्नमिंद्रःपरमेश्वरःसोमायआविवासति ॥ पुरंध्याधियाअशेषप्राणिदेहाश्रययास्वबुद्ध्याप्रप्रप्रकर्षे
णातितरांशंस्यमानात्रिष्टुप्प्रीतिंकरोति॥सोमपानार्थमित्यर्थः॥मंदद्वीरायतस्यवीरस्यपरमेश्वरस्य
मंदंप्रीतिंकरोतीतिमंदद्वीरःसोमः ॥ नत्वात्मप्रयोजनायप्रीतिंकरोतिकिंतर्हिवोमेधसातयेयज्ञसि
द्ध्यर्थम् ॥ वइतिगुरुत्वादीश्वरंप्रत्येववावहुवचनम्॥तदावोन्नंत्रिष्टुभंवोमेधसातयेभवदैवत्ययज्ञसि
द्ध्यर्थंभवान्प्रप्राविवासतीत्यर्थः ॥ १ ॥ ओदतीनांउंदनकर्त्रीणांवःअपांभवदीयानांपतिंवःपुरुषं
प्राणंनदनकर्तारंप्रतिइषुध्यसिपतिर्भवसि ॥ सृष्टौसृष्टौयोयःप्राणस्तंतंप्रतिपतिर्भवसीतिनदमिति
पुनर्वचनम् ॥ योयुवतीनांगमनशीलानामाकाशेपाप्लूयमानानामध्यानांधूमरूपेणादाह्यानांरेतो
रूपेणाजराणांवाधेनूनांजगत्पोषकाणाम् ॥ धिनुपुष्टावितिधातोः ॥ तानदेनविहरतीत्यादि

श्रुतेः ॥ पयसासेचकानांदेशाद्देशांतरगमनशीलानामघ्न्यानांहंतुमयोग्यानांधेनूनांगवांपतिंवायुं प्रतिइषुध्यसीतिवा ॥ वायुर्वावगवांपतिरितिश्रुतेः ॥ धेनुशब्दाच्च ॥ ओदतीनाभक्त्यासेचकानाम् ॥ योयुवतीनामतिशयेनात्मतत्त्वावगमकानामघ्न्यानानित्यानाधेनूनाधर्मार्थकाममोक्षपोषकाणांवाचांपतिंवायुंप्रतिपतिर्भवसीतिवा ॥ वाचंधेनुमुपासीततस्याश्चत्वारःस्तनाःस्वाहाकारोवषट्कारोहंतकारःस्वधाकारइति ॥ तस्याद्वौस्तनौदेवाउपजीवंतिस्वाहाकारंचवषट्कारंचहंतकारंमनुष्याःस्वधाकारंपितरस्तस्याःप्राणऋषभोमनोवत्सइत्यादिश्रुतिभ्यः ॥२॥ ताःपृश्नयःआपोगावोवाचोवा ॥ अस्यसूददोहसःप्राणस्यवायुस्थस्यपरमेश्वरस्यसोमंश्रीणंति ॥ अद्भिर्हिसंसृष्टोभवति ॥ सोमःपयआदिनावाशृतोभवति ॥ मंत्रैर्वागृह्यते ॥ अथसूददोहाःप्राणोवैसूददोहाइतिश्रुतिश्च ॥ शोभनमुदंकर्मज्ञानंवादोग्धीतिसूददोहाः ॥ उदेत्युच्चोभवत्यनेनपुरुषइत्युदंज्ञानादिमनोवावसोमःतद्वाचःश्रीणंतिस्वार्थैःप्रश्नयोग्यत्वात्पृश्नयोवाचः ॥ प्रशंसनरूपत्वात्प्रशंसनीयत्वाद्वा ॥ प्रशंसनीयत्वमेवअपांगवांच ॥ देवानांजन्मनियज्ञे ॥ तत्रहितेषामभिव्यक्तिः पूर्वज्ञानेवा ॥ विशःप्रजाश्चश्रीणंति ॥ मुख्यतःताएवश्रीणंतीतिचशब्दवर्जनम् ॥ दिवस्त्रिष्वारोचनेषु ॥ आदित्यचंद्रविद्युत्पर्यंतंस्थितानांदेवानांजन्मनियज्ञे ॥ यज्ञावैदेवजन्म ॥ तत्रहिदेवाःप्रादुर्भवंति ॥ आसूर्याचंद्रमसावाविद्युतंत्रैलोकानधिश्रिताइत्यादिश्रुतेः ॥ द्यौर्वावविद्युत्तत्पतिंवायुमुपगम्यतेनैवपरमुपगच्छति ॥ सैषाब्रह्मलोकेविराजतेइत्यादिश्रुतेर्द्यौरेवविद्युत् ॥ ३ ॥ अर्चत ॥ अर्चनंयज्ञादि ॥ प्रार्चनंज्ञानध्यानादि ॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञःपरंतपेतिभगवद्वचना

त् ॥ प्रिययज्ञाअर्चंत ॥ प्रियज्ञानाःप्रार्चंत ॥ पुत्रकाःअल्पज्ञानाअप्यर्चंत ॥ नबुद्धिभेदंज
नयेदज्ञानांकर्मसंगिनाम् ॥ जोषयेत्सर्वकर्माणिविद्वान्युक्तःसमाचरन्निति च ॥ उतशब्दाज्ज्ञानि
नामप्यर्चनंयुक्तम् ॥ स्वाश्रमानुसारेणेति ॥ अधातेविष्णोविदुषाचिदर्ध्यस्स्तोमोयज्ञश्चराध्यो
हविष्मतेतिश्रुतेः ॥ किंतदर्चनीयंधृष्णुधृष्टंपरंब्रह्मवासुदेवाख्यम् ॥ पुरंदेहंनार्चंत ॥ प्रत्युद्गमप्रश्र
यणाभिवादनंविधीयतेसाधुमिथःसुमध्यमे ॥ प्राज्ञैःपरस्मैपुरुषायचेतसागुहाशयायैवनदेहमानि
नइतिभागवते ॥ स्वदेहमानिहरयेप्रणमेत्केवलायवा ॥ नदेहायनतन्मानपरायचकथंचनेति
व्यासस्मृतौ ॥ पुनरर्चंतेतितात्पर्यार्थे ॥ १ ॥ गर्गरगोधापिंगादीनांघोषाअपिनादमात्रव्यं
जकत्वेनभगवद्वाचकाएवेत्याह ॥ अवस्वरातिगर्गरइत्यादिना ॥ एतत्समस्तमिंद्रायैवेत्य
र्थः ॥ ब्रह्मवेदोविशेषतइंद्रायैवोद्यतः ॥ गर्गरइतिपादभूषणमहामत्रकदधिपात्रकदधिपात्रह
स्तिहस्तानांनाम ॥ पिंगाचकोरी ॥ अवपरीत्यल्पाधिक्यादिविशेषोऽपितद्वाचकएवेतिज्ञापना
य ॥ चनिष्कददित्यनुकरणशब्दः ॥ सनिष्वणदित्यतिशयार्थे ॥ तावाएताःसर्वाऋचःसर्वे
वेदाःसर्वेघोषाएकैवव्याहृतिःप्राणएवप्राणऋचइत्येवविद्यादितिश्रुतिः ॥ दध्नोमथनशब्दश्चाप्यं
तर्नादस्वरूपतः ॥ भीषकत्वंहरेर्ब्रूयादंतर्नादोहिभीषणे ॥ गजबृंहितमप्येवंधिकारसहि
तंवदेत् ॥ स्वरितेनसमायोगाद्धिकृतौस्वरितोयतः ॥ महामंत्रंजलाद्यैश्चयुक्तमेताहृशंवदेत् ॥
पादभूषाचधिकारंतत्कृतंस्वरितंवदेत् ॥ अद्भुतत्वंहरेर्वक्तिपिंगाकंठगशब्दवत् ॥ तामेवाद्भुततां
वक्तिगृहगोधापरापिचेतिशब्दतत्त्वे ॥ २ ॥ यच्चैन्योनद्यआपतंतितद्घोषश्चेंद्रवाचकः ॥ नदी

समुद्रघोषाश्चनादत्वाच्छ्रैष्ठ्यवाचकाः ॥ नादोहिश्रैष्ठ्यवाचीस्यादेवंघोषाःपरेऽपिचेति ॥ तदर्थंच
नद्यआपतंति ॥ भूताधिभूतोंबुनिधानमध्येभूत्वाहरिःसर्वहरोऽतिधाम्ना ॥ अगाधमंभोविदधाति
भस्मयोवाडवाग्निर्नृहरिर्विचिंत्यइतिवैहायससंहितायाम् ॥ सुदुघाःसुष्ठुअपांदोहनकर्त्र्यः ॥ स्फु
रणापगमनमासांनास्तीत्यनपस्फुरः ॥ नित्यचलनस्वभावाः ॥ अपगतस्फुरणत्वेनसोमंगृभाय
त ॥ अचलत्वेनमनोवा ॥ ३ ॥ व्यतीन्विशेषेणाधिकान्देवान् ॥ अफाणयद्विस्तारयामास ॥
दाशुषेयजमानाय ॥ तत्समीपे ॥ फणविस्तारइतिधातोः ॥ सुयुक्तान्सुयोगरतान् ॥ विशेषेणा
धिकत्वेनव्यतयोदेवताःस्मृताः ॥ नित्ययोगरताश्चैवनारायणपरायणाः ॥ तएवचेंद्रियात्मानस्ता
न्विस्तारयतीश्वरः ॥ मनआदींद्रियाणांतुशक्तिविस्तारएवतु ॥ विस्तारोदेवतानांस्याद्भक्तेषुहरि
णाकृतइतिप्रकाशसंहितायाम् ॥ चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीरँवीविपदिति
श्रुतिः ॥ समेंद्रोमेधयास्पृणोतु ॥ अमृतस्यदेवधारणोभूयासम् ॥ शरीरंमेविचर्षणम् ॥ जिह्वा
मेमधुमत्तमा ॥ कर्णाभ्यांभूरिविश्रुवमितिच ॥ नदेवायष्टिमादायरक्षंतिपशुपालवत् ॥ यंतुर
क्षितुमिच्छंतिबुद्ध्यासंयोजयंतितमितिभारते ॥ तक्वोजगत्कर्ता ॥ तकनिर्माणइतिधातोः ॥ नव
र्तवेप्रसवःसर्गतकइत्यादिप्रयोगाच्च ॥ नेताचसर्वस्य ॥ तदेववपुःसः ॥ यत्तज्जगत्कर्तृनेतृरूपम् ॥
देहदेहिविभागश्चनक्वचित्परमेश्वरे ॥ गुणतद्वद्विभागोवानेहनानेतिचश्रुतेरितिपाद्मे ॥ तद्विज्ञाने
नपरिपश्यंतिधीराः ॥ आनंदरूपममृतंयद्विभाति ॥ सद्देहःसुखगंधश्चज्ञानभाःसत्पराक्रमः ॥
ज्ञानज्ञानःसुखसुखःसविष्णुःपरमोऽक्षरइतिश्रुतेश्च॥ विशुद्धविज्ञानमरीचिमालयासचित्ररत्नप्रक

रप्रकाशया ॥ प्रकाशिताशेषजगत्स्वरूपयाप्रभुःसदाह्लादतनुर्विभूषितइतिपुरुषोत्तमसंहितायाम् ॥ उपमाउपमायाम् ॥ उपमाविषयेअमुच्यतत्यक्तोऽभवत् ॥ निरुपमइत्यर्थः ॥ अल्पाक्षरेणशक्येऽपिवक्तुंबह्वक्षरंयदि ॥ उक्तस्याधिक्यमेवात्रनिषेधेऽशेषतोभवेदितिशब्दनिर्णये॥१॥ विश्वाविश्वान्द्विषोऽज्ञानपापादीनतीत्यशक्तोविष्णुःस्वभक्तानतिवहत्येवहि॥यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वाम्॥तेषामहंसमुद्धर्तामृत्युसंसारसागरात् ॥ भवामिनचिरात्पार्थमय्यावेशितचेतसामित्यादिप्रसिद्धिंउशब्देनाह ॥ द्विषोनीत्यतिशयेनात्मानंप्रत्योहनइत्यतिशब्दद्वयार्थः ॥ ओदनंउंदतेःकर्मबंधनमभिनद्भगवान् ॥ कानीनोबादरायणः ॥ परःपरमात्मा ॥ गिरैवपच्यमानंपरिपाककाले ॥ संश्लेषादोदनंकर्मपच्यमानंगिरैवहि ॥ अभिनद्भगवान्व्यासःस्वभक्तानामशेषतइतिव्याससंहितायाम् ॥२॥ अर्भकइवस्थितोनवंरथमध्यतिष्ठत् ॥ कुमारःकुत्सितमारकः ॥ अर्भकइवसूक्ष्मदेहः ॥ पूर्वंपूर्वंदेहंपरित्यज्यनवंनवंदेहमध्यतिष्ठज्जीवमादाय ॥ जीवदेहंपरित्यज्यसहजीवेनचेश्वरः ॥ जीवस्यान्यशरीरंचसमुत्पाद्यविशत्यजइतिमान्यसंहितायाम् ॥ कुमारकइवार्भकःसूक्ष्मदेहइतिवा ॥ अर्भकःसूक्ष्मदेहोपिनकुमारइतिवा ॥ सपक्ष्त्परिपक्वज्ञानादिगुणमकरोत् ॥ महिषंमहांतंब्रह्माणंमृगंमृगयंतंस्वात्मानंपित्रेस्वस्मैमात्रेलक्ष्म्यैविभुक्तुंपितृमातृविषयेपूर्णज्ञानंपुनःपूरयामासेत्यर्थः ॥ ज्ञानपूर्णंविधातारंमोक्षदानेनकेशवः ॥ स्वपुत्रंपूरयामासमहिषंमहतांमहानितिप्रवृत्ते ॥ ३ ॥ यथास्थिताःप्रज्ञाताः ॥ इतस्ततःसंयोजनंविनायथास्थितशंसनंपथिप्राप्तिः ॥ व्यासोविशेषेणापन्नः ॥ अविह्वतमसंसृष्टम् ॥ कृच्छ्रादय

थास्थितशंसननिमित्ताद्दुःखादवाग्गार्तिंगतश्रीकतामेवप्राप्नुयाम् ॥ विलोमःशत्रुजयकृत्संसर्गःपा
पनाशनः ॥ यथास्थितःश्रीकरःस्यात्स्वाध्यायःशंसनेऽपिचेतिप्रवृत्ते ॥ गतश्रियःश्रियोहानिंपा
पहानिंपरस्यच ॥ संसर्गश्छंदसांकुर्याच्छ्रियोवृद्धिंयथास्थितइतिस्वाध्यायतत्त्वे ॥ किंचित्त्वेचो
भयत्वेचसंशयेसदृशेतथा॥ इवशब्दःप्रयुज्येतन्यक्कारेऽपिचपंडितैरितिशब्दनिर्णये ॥ अतोगतश्री
त्वसंशयेपीत्यर्थः ॥ इतस्ततोविशेषेणसंहृतंसंयोजितंविहृतम् ॥ पापानांव्यतिषिक्तत्वाद्यतिषि
क्तंविनाशकम् ॥ धनस्याव्यतिषंगेणव्यतिषंगोऽविनाशकः ॥ सदृशंसदृशस्यैवयतःस्यात्प्रविनाश
कम् ॥ तथाप्यप्राप्तनाशस्यधनस्यबलवत्त्वतः ॥ शक्नुयान्नविनाशायपापस्येच्छासमेधितम् ॥
संसृष्टंस्याद्विनाशायनहीच्छाधनसंक्षयइतिस्वाध्यायतत्त्वे ॥ अव्यतिषिक्तत्वंचमोक्षेवर्तनइत्यत्रो
भयार्थइवशब्दः ॥ एवंभूतेनशंसनेनपाप्मानमपहंति ॥ शमलंरागादिकंच ॥ पापस्यपृथगुक्तेः ॥
शमलंपापमुद्दिष्टंरागद्वेषादिकंतथा ॥ अपराधश्चशमलंमलंचशमलंविदुरितिशब्दनिर्णये ॥ यए
वमुपास्तेसोऽपिपाप्मानमपहंति ॥कृच्छ्रसंसृज्यमानासुमोच्यमानंजनार्दनम् ॥ पुंसंसृष्टस्यपापस्य
निहंतारंविशेषतः ॥ तत्प्रसादेनमुक्तस्यपापासंसृष्टतामपि ॥ ध्यायन्कर्माण्यकृत्वापिमुच्यतेसर्वपा
तकैरितिप्रवृत्ते ॥ ७ ॥ नचैवमादिवाक्यानांस्वार्थेप्रामाण्याभावः ॥ सिद्धार्थेप्रामाण्यस्यसाधि
तत्वात् ॥ अविरोधाच्च ॥ नचबह्वर्थेषुतात्पर्यकल्पनेकल्पनागौरवम् ॥ वचनेनैवप्रतीयमानत्वाद
र्थस्यकल्पनाभावात् ॥ नचवाचनिकस्तात्पर्यार्थइतिविशेषः ॥तन्मानाभावात् ॥ यत्रवाचनिका
र्थादन्यस्तात्पर्यार्थःप्रतीयतेलौकिकवाक्येषुनतत्रसाक्षाद्वचनंप्रबोधकम् ॥ वचनाल्लिंगकानुमाहि

सा ॥ विरोधाद्मुख्यवृत्तिर्वा ॥ आप्तत्वनिश्चये ॥ आप्तत्वानिश्चयेप्रामाण्यमेवनभवति ॥ वेदवा
क्यस्यतुवाचनिकार्थंविनानैवान्योयुज्यते ॥ वाचनिकानांतुबहूनामप्यविरोधेस्वीकार्यता ॥ ॐ
स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीतिसूत्रम् ॥ वानात्सुतेर्दैवनाद्वासुदेवोवासाद्द्युतेश्छादना
त्क्रीडयाच ॥ बलादसुत्वाद्दातृतोवर्तनाच्चतंवासुदेवंप्रवदंतिवेदाइत्यादिसौकरायणश्रुतिः ॥ मो
क्षेऽपिसुप्तिरस्तीत्याशंकानिवृत्त्यर्थमेवान्यतरपदम् ॥ रूढियोगौविनाकश्चिन्नैवार्थोवेदगोभवेत् ॥
तत्रापियौगिकोमुख्यःसर्वत्रास्तिसवैदिके ॥ अनवस्थानिवृत्त्यर्थंयौगिकेरूढकल्पना ॥ ज्ञातेवि
शेषविज्ञानंव्यवहारोऽपिरूढितइतिब्रह्मतर्कें ॥ वाचनिकमर्थंपरित्यज्यनियोगार्थकल्पनेश्रुतहानि
रश्रुतकल्पनेतिसर्वदोषाधिकौतस्यव्यर्थमापद्येते ॥ एवंचवदतोविधिशब्दानिरर्थकाःसिद्धार्थावा
सिद्धशब्दावास्वार्थेप्रमाणभूताइत्युक्तेकिमुत्तरम् ॥ नचकारणंकिंचिद्वाचनिकानांबहूनामप्यर्थानां
त्यागे ॥ प्रतीयमानेतुविरोधेतदन्योर्थःस्वीकार्योवाचनिकएव ॥ सोऽपिवाचनिकएवेत्यपिततएव
सिद्ध्यति ॥ मुख्यार्थानांचसर्वेषांतारतम्यंचविद्यते ॥ तत्रापिपरमोमुख्योवाच्योऽशेषरवैर्हरिः ॥
तत्तन्मुख्याविरोधेनतदन्यार्थस्यसंग्रहः ॥ स्वतोमुख्यविरोधेतुत्याज्योऽन्योऽर्थोऽखिलेष्वपि ॥
इतिसर्वत्रनियमःशब्दार्थज्ञानभूमिष्वितिच ॥ नचक्रियायामेवप्रयोजनंनसिद्धइत्युक्तम् ॥
ज्ञानमात्रेऽपिमहाप्रयोजनदर्शनात्पितृजीवनादिवाक्ये ॥ आहचस्वयंभगवान् ॥ द्वाविमौपु
रुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपर
मात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि

चोत्तमः ॥ अतोऽस्मिल्लोकेवेदेचप्रथितःपुरुषोत्तमः ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥
ससर्वविद्भजतिमांसर्वभावेनभारत ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ ॥ एतद्बुद्ध्वाबुद्धिमा
न्स्यात्कृतकृत्यश्चभारतेति ॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञःपरंतपेतिच ॥ध्यानंत्वखिलकर्मभ्यो
ध्यानाच्चज्ञानमुत्तमम् ॥ नज्ञानसदृशंकिंचित्पुरुषार्थप्रसिद्धयइतिप्रवृत्ते ॥ दूरेणह्यवरंकर्मबुद्धि
योगाद्धनंजयेतिच ॥ अशेषकर्मपूगोऽपिनविष्णुध्यानलेशभाक् ॥ तच्चध्यानंहरेर्ज्ञानकोटयंशाय
नपूर्यतइतिकर्मविवेके ॥ तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतइतिचश्रुतिः ॥ न
चकर्ममात्रेपर्यवसितिर्वेदस्य ॥ सुखज्ञानस्यैवप्रयोजनत्वात् ॥ अतःसिद्धस्यैवप्रयोजनत्वंवा
च्यम् ॥ प्रशंसादीनांचतात्पर्यंवाचनिकार्थात्यागेनैवकथितंस्वयंभगवता ॥ ॐभाक्तंवानात्म
वित्त्वात्तथाहिदर्शयतीति ॥ तस्माद्विरुद्धवत्प्रतीयमानानिप्रशंसादीनिज्ञानसहकार्यपेक्षयायो
जनीयानि ॥ पुराणादीनांतुश्रुत्यादिविरोधेगौणोऽप्यर्थोयुज्यते ॥कुहकंचेंद्रजालंचविरुद्धाचरणा
निच ॥ दर्शयित्वाजनंसर्वंमोहयाशुमहेश्वरेत्यादिवाराहे ॥ ७ ॥ ब्रध्नस्यसूर्यस्यविष्टपंस्वर्गमुद्गच्छ
न्वहींद्रोहंचयत्तादिंद्रगृहंब्रध्नंविष्टपंमध्वःपीत्वातत्रसचैवहिसुखमनुभवाव ॥ सख्युरिंद्रस्यत्रिसम
स्थानेषु ॥ एकविंशतिदिव्यानिस्थानानिदिविचक्रिणः ॥ वज्रिणोवापितद्भक्तैर्भुज्यंतेतानिया
ज्ञिकैरितिप्रवृत्ते ॥ पूर्वान्सुतान्प्रातःसवनगान्सोमानपाः ॥ हरीनिंद्रियाणिवर्तयतीतिहरिवः ॥
हरिभिर्वर्ततइतिवा ॥ इदंमाध्यंदिनंसवनंकेवलंते ॥ अथोइत्यर्थांतरम् ॥ मधुमंतंसोमंजठरेआवृ
षस्वआसिंचममद्धिचसत्राअस्मत्राणेनसह ॥ पीतशब्दवत् ॥ अपूर्वपानत्वात्तदेवपानंमुख्यमि

तिपीतशब्दः ॥ इंद्रस्यकेवलत्वात्केवलंमाध्यंदिनंसवनम्॥ममद्धीनितृतीयसवनम्॥तत्राहिमदोवि
शेषतोभवतिपूर्तैः ॥ इतिसवनत्रयरूपताषोळशिनः ॥ वृषण्वतृत्ण्णःइंद्रस्यविशेषतःप्रियत्वात् ॥
एवंचतूरूपताषोळशिनः ॥ राध्नोतिऋद्धोभवति ॥ विहृतपक्षेतु ॥ पादान्व्यवधायार्धर्चशःशंसे
त् ॥ पूर्वासांपूर्वाणिपदानि ॥ गायत्र्यःपंक्तिभिःपंक्तीनांतुद्वेद्वेपदेशिष्येतेताभ्यांप्रणुयात् ॥ उष्णि
होबृहतीभिरुष्णिहांतूत्तमान्पादान्द्वौद्वौकुर्यात् ॥ चतुरक्षरमाद्यम् ॥ द्विपदाश्चतुर्धाकृत्वाप्रथमां
त्रिष्टुभोत्तराजगतीभिःउत्तमायाश्चतुर्थमक्षरमंत्यंपूर्वस्याद्यमुत्तरस्यानुष्टुभमतिच्छंदस्त्ववदध्या
त् ॥ द्वितीयतृतीययोःपादयोरवसानेउपदध्यात्॥प्रचेतनेतिपूर्वस्याम्॥प्रचेतयेत्युत्तरस्याम्॥ उत्त
रास्वितरान्पादान्षष्ठान्कृत्वाअनुष्टुप्कारंशंसेत् ॥ महानाम्नीनांपंचाक्षरानुपसर्गानुपसृजत्येकाद
शाक्षरेषुपादेषु ॥ एवाह्येवाअपाःपूर्वेषांहरिवःसुतानांएवाहींद्रंअथोइदंसवनंकेवलंते ॥ एवाहिश
क्रोममद्धिसोममधुमंतमिंद्रवशीहिशक्रःसत्रावृषंजहरआवृषस्वेति ॥ भगवद्भक्तिज्ञानवैराग्यपूर्वं
कंचकर्मकर्तव्यम् ॥ इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढाः ॥ नाकस्यपृष्ठेसुकृतेतेनु
भूत्वाइमंलोकंहीनतरंवाविशंति ॥ नैष्कर्म्यमप्यच्युतभाववर्जितंनशोभतेज्ञानमलंनिरंजनम् ॥
कुतःपुनःशश्वदभद्रमीश्वरेनचार्पितंकर्मयदप्यकारणम् ॥ यतःप्रवृत्तिर्भूतानांयेनसर्वमिदंततम् ॥
स्वकर्मणातमभ्यर्च्यसिद्धिंविंदतिमानवः ॥ त्रैविद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयं
ते ॥ तेपुण्यमासाद्यसुरेंद्रलोकमश्नंतिदिव्यान्दिविदेवभोगान् ॥ मयिसर्वाणिकर्माणिसंन्यस्या
ध्यात्मचेतसा ॥ निराशीर्निर्ममोभूत्वायुध्यस्वविगतज्वरः ॥येमेमतमिदंनित्यमनुतिष्ठंतिमानवाः॥

श्रद्धावंतोऽनसूयंतोमुच्यंतेतेऽपिकर्मभिः ॥ येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतम् ॥सर्वज्ञानविम
ढांस्तान्विद्धिनष्टानचेतसः ॥ तपस्विनोदानपरायशस्विनोमंत्रविदःसुमंगलाः ॥ क्षेमंनाविंदंतिवि
नायदर्पणंतस्मैसुभद्रश्रवसेनमोनमः ॥ एषउएवदाश्वान्यएवंवेद ॥ यदेवविद्ययाकरोतिश्रद्धयो
पनिषदातदेववीर्यवत्तरंभवति ॥ परंभावमजानंतोममभूतमहेश्वरम् ॥ मोघाशामोघकर्माणोमो
घज्ञानाविचेतसः ॥ सर्वगुह्यतमंभूयःशृणुमेपरमंवचः॥इष्टोऽसिमेदृढमितिततोवक्ष्यामितेहितम् ॥
मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु॥ मामेवैष्यसिसत्यंतेप्रतिजानेप्रियोऽसिमे ॥ विज्ञानमानं
दंब्रह्मरातिर्दातुःपरायणम् ॥ तिष्ठमानस्यतद्विदइत्यादिश्रुतिस्मृतिभ्यः ॥ नमोनारायणायाजभ
वशक्रोष्णरुङ्मुखैः ॥ सदावंदितपादायश्रीपायप्रेयसेऽधिकम् ॥ ॥ इतिश्रीमदानंदतीर्थभगव
पादाचार्यविरचितःकर्मनिर्णयःसंपूर्णः ॥ ॥ ॥ ॥ ॥

---

श्रीवेदव्यासायनमः ॥ अथविष्णुतत्त्वविनिर्णयः ॥ ॥ ॐ ॥ सदागमैकविज्ञेयंसमती
तक्षराक्षरम् ॥ नारायणंसदावंदेनिर्दोषाशेषसद्गुणम् ॥ विशेषणानियानीहकथितानिसदुक्तिभिः ॥
साधयिष्यामितान्येवक्रमात्सज्जनसंविदे ॥ ऋगाद्याभारतंचैवपंचरात्रमथाखिलम् ॥ मूलरा
मायणंचैवपुराणंचैतदात्मकम् ॥ येचानुयायिनस्त्वेषांसर्वेतेचसदागमाः ॥ दुरागमास्तदन्ये
येतैर्नज्ञेयोजनार्दनः ॥ ज्ञेयएतैस्सदायुक्तैर्भक्तिमद्भिःसुनिष्ठितैः ॥ नचकेवलतर्केणनाक्षजेननके
नचित् ॥ केवलागमविज्ञेयोभक्तैरेवनचान्यथेतिब्रह्मांडे ॥ नावेदविन्मनुतेतंबृहंतंसर्वानुभूमात्मा

नत्वसांपरायइतितैत्तिरीयश्रुतिः॥ नैषातर्केणमतिरापनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठेतिकठश्रुतिः॥ नेंद्रियाणिनानुमानंवेदाह्येवैनंवेदयंतितस्मादाहुर्वेदाइतिपिप्पलादश्रुतिः ॥ नचैतेषांवचनानामेवाप्रामाण्यम् ॥ अपौरुषेयत्वाद्वेदस्य ॥ इतिहासपुराणःपंचमोवेदानांवेदइतितद्गृहीतत्वाच्च ॥ नचापौरुषेयंवाक्यमेवनास्तीतिवाच्यम् ॥ तदभावेसर्वसमयाभिमतधर्माद्यसिद्धेः ॥ यस्यतौनाभिमतौनासौसमयी॥समयप्रयोजनाभावात् ॥ नचतेनलोकोपकारः ॥ धर्माद्यभावज्ञानेपरस्यहिंसादिनाऽपकारस्यैवप्राप्तेः॥नचोपकारेणतस्यप्रयोजनम्॥अदृष्टाभावात् ॥ अतोधर्माद्यभावंवदतास्वसमयस्यानर्थक्यमंगीकृतमेवेतिनासौसमयी ॥ नचपौरुषेयेणवाक्येनतत्सिद्धिः ॥ अज्ञानविप्रलंभयोःप्राप्तेः॥नचतदर्थत्वेनसर्वज्ञःकल्प्यत ॥ अन्यत्रादृष्टस्यसर्वज्ञत्वस्यकल्पनंतस्याविप्रलंभकत्वकल्पनंतस्यतत्कृतत्वकल्पनंचेतिकल्पनागौरवप्राप्तेः ॥ अपौरुषेयवाक्यांगीकारेनकिंचित्कल्प्यम् ॥ अपौरुषेयत्वंचस्वतएवसिद्धम्॥ वेदकर्तुरप्रसिद्धेः॥ अप्रसिद्धौचकर्तुस्तत्कल्पनेकल्पनागौरवम्॥ अकल्पनेचाकर्तृकत्वंसिद्धमेव॥नचलौकिकवाक्यवत्सकर्तृकत्वम्॥तस्याकर्तृकत्वप्रसिध्द्यभावात्॥ नचकेनचित्कृत्वावेदइत्युक्तंवेदसमम् ॥ परंपराभावात् ॥ नचस्वयंप्रतिभातवेदैर्दृष्टमवेदवाक्यंभवति ॥ परंपरासिद्धवेदवाक्यानुसारित्वात् ॥ वेदद्रष्टॄणामुक्तगुणवत्त्वाच्चतेषाम् ॥ उक्तंचब्रह्मांडे ॥ विंशल्लक्षणतोनूनस्तपस्वीबहुवेदवित् ॥ वेदइत्येवयंपश्येत्सवेदोज्ञानदर्शनादिति ॥ प्रामाण्यंचस्वतएव ॥ अन्यथानवस्थाऽनात्॥ नचोक्तयुक्त्यधीनत्वंप्रामाण्यस्य ॥ बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनां ॥ अदुष्टबुद्धीनांस्वतएवसिद्धत्वाच्चप्रामाण्यस्य ॥ नचा

कांक्षायामेवप्रमाणांतरापेक्षत्वादनवस्थाभावइतिवाच्यम् ॥ आकांक्षायाएवबुद्धिदोषात्मकत्वा
त् ॥ दुष्टबुद्धीनामेवाप्रामाण्यशंकेतिपरतोऽप्रामाण्यम्॥प्रामाण्यंचस्वतएवसिद्धम् ॥ नचोच्चार
णकालएववर्णानामुत्पत्तिरितिवाच्यम् ॥ तदेवेदंवचनमितिप्रत्यभिज्ञाविरोधात् ॥ नचसादृश्या
त्प्रत्यभिज्ञाभ्रांतिरितिवाच्यम् ॥ सोयंदेवदत्तइत्यादेरपितथात्वप्राप्तेः ॥ सर्वंक्षणिकत्वंवदताबौ
द्धेनसेयंदिगित्यादिप्रत्यभिज्ञायाभ्रांतित्वंनवाच्यम् ॥ पंचस्कंधेभ्योन्यत्वात् ॥ नचदिशएवभ्रां
तिकल्पिताः ॥ विज्ञानशून्ययोरपिसाम्यात् ॥ नचादित्योदयादिनैवदिक्कल्पना ॥ अंधकारेपि
दिङ्मात्रप्रतीतेः॥कादाचित्कभ्रांतिरेवादित्योदयादिदर्शनान्निवार्यते ॥ साचविज्ञानशून्ययोरपि
भवतीतितेषांमतम् ॥ वादिविप्रतिपत्तेः ॥ अतोदिशःस्थिराएवेतिसिध्यतिशून्यवदेव ॥ अतस्त
द्वद्वेदस्यापिस्थैर्यंसिद्धम् ॥ तदेवेदंवाक्यमितिप्रत्यभिज्ञानात् ॥ नचानुमानादीनामागमंविनाप्रा
माण्यंधर्मादिषु ॥ तदगोचरत्वात् ॥ अतोऽपौरुषेयवाक्यैनैवधर्मादिसिद्धेःसर्ववादिनामपितदंगी
कार्यम् ॥ तत्प्रामाण्यंचस्वतएवसिद्धम् ॥ अप्रामाण्यस्यचपरतस्त्वनंगीकारेदुष्टेंद्रियादेरप्य
प्रामाण्यहेतुत्वंनस्यात् ॥ तदनंगीकारेचानुभवविरोधः ॥ अतःप्रामाण्यंस्वतःपरतोऽप्रामा
ण्यमितिसिद्धम् ॥ वाचाविरूपनित्यया ॥ नित्ययानित्ययास्तौमिब्रह्मतत्परमंपदमिति
श्रुतिर्वाचनित्याअनित्यावावस्मृतयोयाश्चान्यावाचइतिपैंगीश्रुतिः ॥ विज्ञेयंपरमंब्रह्मज्ञापिका
परमाश्रुतिः ॥ अनादिनित्यासातच्चविनातांनसगम्यतइतिकात्यायनश्रुति ॥ सहस्रधामहिमान
सहस्रंयावद्ब्रह्मविष्ठितंतावतीवाक् ॥ कश्छंदसांयोगमावेदधीरःकोधिष्ण्यांप्रतिवाचंपपादेत्या

दिच ॥ नित्यावेदाःसमस्ताश्चशाश्वताविष्णुबुद्धिगाः ॥ सर्गेसर्गेऽमुनैवेतउद्गीर्यंतेतथैवच ॥
तत्क्रमेणैवतैर्वर्णैस्तैःस्वरैरेवनान्यथा ॥ अतःश्रुतित्वमेतासांश्रुताएवयतोऽखिलैः ॥ जन्मांतरे
श्रुतास्तास्तुवासुदेवप्रसादतः ॥ मुनीनांप्रतिभास्यंतिभागेनैवनसर्वशः ॥ यतस्ताहरिणादृष्टा
श्रुताएवापरैर्जनैः॥श्रुतयोदृष्टयश्चेतितेनोच्यंतेपुरातनैः ॥ तदुत्पत्तिवचश्चैवभवेद्व्यक्तिमपेक्ष्यतु ॥
चेतनस्यजनिर्यद्वदुच्यतेसर्वलौकिकैः ॥ पुराणानितदर्थानिसर्गेसर्गेऽन्यथैवतु ॥ क्रियंतेऽत
स्त्वनित्यानितदर्थाःपूर्वसर्गवत् ॥ वेदानांसृष्टिवाक्यानिभवेयुर्व्यक्त्यपेक्षया ॥ अवांतरा
भिमानानांदेवानांवाऽप्यपेक्षया ॥ नानित्यत्वात्कुतस्तेषामनित्यत्वंस्थिरात्मनामितिब्रह्मांडे ॥
नचानित्यत्वेश्रुतिर्वेदइत्यादिविशेषशब्दउपपद्यते ॥ वेदास्तेनित्यविन्नत्वाच्छ्रुतयश्चाखिलैःश्रु
तेः ॥ आम्नायोऽनन्यथापाठादीशबुद्धिस्थितास्सदेतिमहावाराहे ॥नचनित्यत्वंविनावेदानांदर्शन
व्यवहारोयुज्यते ॥ नचवर्णपदादीनामनित्यत्वंवक्तुंयुक्तम्॥ सर्वज्ञत्वादीश्वरस्यतद्बुद्धौसर्वदाप्रती
यमानत्वात् ॥ नचघटादिवत्संस्कारमात्रत्वंवक्तुंयुक्तम् ॥ प्रत्यभिज्ञाविरोधस्योक्तत्वात् ॥ पुराणा
नामप्यन्यथाशब्दरचनमेवानित्यत्वम्॥अतआकाशगुणेशब्देव्यज्यमानावर्णादयस्तत्क्रमात्मको
वेदश्चनित्यएवेतिसिद्धम्॥नचकेवलसिद्धेर्थेव्युत्पत्त्यभावादप्रामाण्यम् ॥ सिद्धान्वितएवव्युत्पत्ति
गृहीतेः ॥ इयंमाताऽयंपितेत्यादावंगुलिप्रसारणादिपूर्वकनिर्देशेनैवहितज्जानाति ॥ कार्यान्वितए
वव्युत्पत्तिरितिवदतःकार्यस्यकार्यान्वयाभावात्कल्पनागौरवम् ॥ इयंमाताऽयंपितासुरूपोसीत्या
दौसिद्धमात्रज्ञापनेनपर्यवसितत्वाद्वाक्यस्य ॥ तस्यतत्रप्रामाण्यानुभवाच्च ॥ नचकुत्रचित्सिद्ध

ज्ञापनादन्यद्वाक्यस्यप्रयोजनंदृष्टम्॥ज्ञात्वैवहीष्टसाधनतांप्रवर्ततेनिवर्ततेचविपर्ययेण ॥ अतःसि
द्धएवसर्ववाक्यानांप्रामाण्यंसिद्धम्॥प्रसिद्धंचव्याकरणनिरुक्तादीनांसिद्धमात्रेप्रामाण्यंसर्ववादि
नाम्॥तदनंगीकारेचसर्वशाब्दव्यवहारासिद्धिः॥उक्तंचनारदीये ॥ सर्वज्ञंसर्वकर्तारंनारायणमनाम
यम् ॥ सर्वोत्तमंज्ञापयंतिमहातात्पर्यमत्रहि ॥ सर्वेषामपिवेदानामितिहासपुराणयोः ॥ प्रमाणा
नांचसर्वेषांतदर्थंचान्यदुच्यतइति ॥ नचजीवेश्वराभेदएवतात्पर्यमागमस्य ॥ तत्रप्रमाणाभावा
त् ॥ नचजीवेश्वरभेदःसिद्धइत्यनुवादकत्वंभेदवाक्यानाम् ॥आगमंविनेश्वरस्यैवासिद्धेः ॥ नचा
नुमानात्तत्सिद्धिः ॥ विपर्ययेणाप्यनुमातुंशक्यत्वात् ॥ विमतंसकर्तृकंकार्यत्वाद्घटवदित्युक्तेवि
मतंविकर्तृकमस्मत्संमतकर्तृरहितत्वादात्मवदित्यनुमानविरोधात् ॥ अकार्यत्वमुपाधिरित्युक्तेश
रीरिजन्यत्वमितरत्राप्युपाधिरित्युत्तरम् ॥ प्रत्यक्षानुमानसिद्धत्वेचभेदस्यतद्विरोधादेवाप्रामाण्य
मभेदागमस्य ॥ तेनाभेदागमस्यप्रामाण्याभावेनानुवादकत्वंभेदवाक्यानाम्॥ नहिबलवतोनुवा
दकत्वं ॥ दार्ढ्यहेतुत्वात् ॥ प्रत्यक्षादेरागमस्यप्राबल्येपिनोपजीव्यप्रमाणविरोधेप्रामाण्यम् ॥
विषयाभावेस्वस्यैवाप्रामाण्यप्राप्तेः ॥ तेनैवह्यनुमानादिनागमस्यविषयःसिद्ध्यतितत्पक्षेऽपि ॥
अनुमानेनह्यनुवादित्वपक्षईश्वरोबोद्धव्यःप्रत्यक्षेणचागमः ॥ अतस्तयोर्विरोधेप्रामाण्यंनस्या
त् ॥ अनुमानसिद्धेश्वराच्चभेदोऽनुभवतएवसिद्धोजीवस्य ॥ असर्वकर्तृत्वेनानुभवात् ॥ न
चानुभवविरोधेआगमप्रामाण्यम् ॥ आगमप्रमाण्यानुभवस्याप्यप्रामाण्यप्राप्तेः ॥ बहुप्रमा
णसंवादश्चदार्ढ्यहेतुरेव ॥ बहूनांवचनेनस्यैवदर्शनेदार्ढ्यस्यैवदृष्टेः ॥ सर्वाविवादस्थलएवक

थंचिदनुवादकत्वम् ॥ नचात्रसर्वाविवादः ॥ एकत्ववादिनामेवविवाददर्शनात् ॥ बहुप्रमाण
विरोधेचैकस्याप्रामाण्यंदृष्टंशुक्तिरजतादौ ॥ नचदोषजन्यत्वादेवदुर्बलत्वमितिविरोधः ॥
बहुप्रमाणविरुद्धानांदोषजन्यत्वनियमात् ॥ दोषजन्यत्वंचबलवत्प्रमाणविरोधादेवज्ञायते ॥
अदुष्टमिंद्रियंत्वक्षंतर्कोदुष्टस्तथानुमा ॥ आगमोऽदुष्टवाक्यंचस्वदृक्कानुभवःस्मृतः ॥ बलवत्प्र
माणतश्चैवज्ञेयादोषानचान्यथा ॥ द्विविधंबलवत्त्वंचबहुत्वाचस्वभावतः ॥ तयोःस्वभावोबलवा
नुपजीव्यादिकश्चसः ॥ याथार्थ्यमेवप्रामाण्यंतन्मुख्यंज्ञानशब्दयोः ॥ ज्ञानंचद्विविधंबाह्यंतथा
नुभवरूपकम् ॥ बौल्येवानुभवस्तत्रानिर्दोषंत्वक्षजादिकम् ॥ अनुप्रमाणतांयातितथाक्षादित्रयं
ततः ॥ प्राबल्यमागमस्यैवजात्यातेषुत्रिषुस्मृतम् ॥ उपजीव्यविरोधेतुनप्रामाण्यममुष्यच ॥ या
माहुरनुमांकेचित्त्रियाद्यवयवात्मिकाम् ॥ साऽयथानोपपत्त्याहिविनासापिप्रमाणताम् ॥ यात्यतोयु
क्तिरेवैकाप्रमाणमनुमात्मकम् ॥ युक्तिःप्रतिज्ञारूपाचहेतुदृष्टांतरूपिका ॥ तथोपनयरूपाचपरानि
गमनात्मिका ॥ पृथक्पृथक्प्रमाणत्वंयातियुक्तितयैवतु ॥ प्रतिज्ञाहेतुगर्भैवपृथक्प्रामाण्यमेष्य
ति ॥ सिद्धत्वेनप्रतिज्ञायाहेतुर्मानंपृथग्भवेत् ॥ प्रतिज्ञावयवत्वात्तुस्वातंत्र्येणैवमानताम् ॥ दृष्टां
तोयात्युपनयोव्याप्तिमाश्रित्यकेवलम् ॥ व्याप्तिस्तुकेवलापिस्यात्प्रमाणंनियमाश्रयात् ॥ तथानि
गमनंचोपसंहारैकस्वरूपतः ॥ प्रामाण्यंयात्यनुभवोज्ञापयत्युपपत्तितां ॥ विरोधश्चतथाधिक्यं
न्यूनतासंगतिस्तथा ॥ उपपत्तिदोषाविज्ञेयाविरोधश्चस्वतोन्यतः ॥ जनकस्यात्पयोजातिःस्वस्य
वान्यस्यवाभवेत् ॥ जनकंप्रमाणमुद्दिष्टंस्वस्यार्थस्यप्रकाशनात् ॥ निग्रहाएतएवस्युःसंवादानु

क्तिसंयुताः ॥ अर्थतःप्राप्तिरेवार्थापत्तिरित्यभिधीयते ॥ दृष्ट्वासदृशमेवान्यंपूर्वदृष्टेतुवस्तुनि ॥
एतत्सदृशताज्ञानमुपमानंप्रकीर्तितम्॥ अभावस्यपरिज्ञानंद्विविधंसमुदाहृतम्॥ एकंतत्रानुभव
तोयोग्यस्यानुपलब्धितः ॥ द्वितीयमपिविज्ञेयंसुखाद्येचघटादिके ॥ एकंप्रत्यक्षरूपंस्याद्वितीय
मनुमात्मकम् ॥ क्वचिद्घटाद्यभावोपिप्रत्यक्षेणावगम्यते॥ झटित्येवपरिज्ञानान्नलिंगोद्भवतामता॥
अर्थापत्तिश्चोपमाचह्यनुमाभेदएवतु ॥ आगमोद्विविधोज्ञेयोनित्योऽनित्यस्तथैवच ॥ प्रत्यक्षंत्रि
विधंज्ञेयमैश्वरंयोगिकंतथा ॥ अयौगिकंचेतितथासर्वमक्षात्मकंमतम् ॥ अक्षाणिचस्वरूपाणिनि
त्यज्ञानात्मकानिचविष्णोःश्रियस्तथैवोक्तान्यन्येषांद्विविधानितु ॥ स्वरूपाणिचभिन्नानिभिन्ना
नित्रिविधानिच ॥ दैवासुराणिमध्यानीत्येतत्प्रत्यक्षमीरितम् ॥ विषयान्प्रतिस्थितंह्यक्षंप्रत्यक्षमि
तिकीर्तितम् ॥ अक्षयंपुरुषस्याक्षंस्वरूपेमुख्यमेवतु॥उपचारस्तदन्यत्रसृष्टावुपचयोयतः ॥ उपप
त्तिस्वरूपत्वादनुमासंभवादिकम्॥प्रत्यक्षागममाहात्म्यादनुमानंप्रमाणताम् ॥ याति नैवान्यथातस्य
नियतत्वंक्वचिद्भवेदित्यादिब्रह्मतर्के॥ अत्रचोपजीव्यत्वेनप्रमाणप्राबल्याद्भेदएवतात्पर्यंयुक्तम् ॥
कथंचानुवादकत्वंभेदस्यप्रमाणेनासिद्धौ ॥ सिद्धौचकथमभेदवाक्यस्याबाधः ॥नचाप्रमाणसिद्धे
नानुवादकत्वंप्रमाणस्यभवति॥ दुर्बलत्वेचभेदप्रमाणस्याभासत्वान्नभेदवाक्यानामनुवादित्वम्॥
अतश्चभेदवाक्यानामेवप्राबल्यम्॥सर्वप्रमाणविरुद्धवचनानामेवप्राबल्यांगीकारेइदंवाअग्रेनैवकिं
चनासीदसतःसदजायतेत्यादीनामेवाविचारेणप्रतीयमानस्यार्थस्यसर्वप्रमाणविरुद्धत्वात्तत्रसर्वा
गमानांमहातात्पर्यंप्रसज्येत॥नचतत्रयुक्तिविरोधइतिवाच्यम् ॥तस्मिन्पक्षेयुक्तिविरुद्धत्वेनाननुवा

दित्वमितिगुणएवस्यात् ॥ युक्तिसिद्धत्वेह्यनुवादित्वंस्यात् ॥ अतःप्रमाणसिद्धत्वेतदपलापायुक्ते
रप्रमाणसिद्धत्वेचभेदप्रमाणस्यानुवादित्वाभावाच्चनभेदवाक्यानांदौर्बल्यम् ॥ नचप्रमाणबहुत्वे
दौर्बल्यम् ॥ दार्ढ्यमेवहिबहुवाक्यसंवादेदृष्टम्॥तथासत्यभ्यासादेरप्यप्रामाण्यहेतुत्वंस्यात्॥अ
भ्यासस्यचतात्पर्यलिंगत्वंसर्वेषांसिद्धम् ॥तदनंगीकारेतत्पक्षेपिनवकृत्वस्तत्त्वमसीत्यभ्यासस्यानु
वादकत्वेनाप्रामाण्यंस्यात्॥प्रथमवाक्येनैवयस्यासिद्धंतदर्थमपरमित्युक्तेप्रत्यक्षादिनाभेदोयेनानि
श्चितस्तदर्थंवाक्यमित्युत्तरम् ॥ तस्माद्बहुप्रमाणसंवादित्वेप्राबल्यमेव ॥अतःसर्वप्रमाणविरुद्धत्वा
न्नाभेदेतात्पर्यंवाक्यस्य ॥ किंतुविष्णोस्सर्वोत्तमत्वएवमहातात्पर्यंसर्वागमानाम् ॥तथाचोक्तंभग
वता ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यते॥ उत्तमःपु
रुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ यस्मात्क्षरमतीतोऽह
मक्षरादपिचोत्तमः ॥ अतोऽस्मिल्लोकेवेदेचप्रथितःपुरुषोत्तमः ॥ योमामेवमसंमूढोजानातिपु
रुषोत्तमम् ॥ ससर्वविद्भजतिमांसर्वभावेनभारत ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ ॥ एतद्बु
द्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेति ॥ सर्वोत्कर्षेदेवदेवस्यविष्णोर्महातात्पर्यंनैवचान्यत्रसत्यम् ॥
अवांतरंतत्परत्वंतदन्यत्सर्वागमानांपुरुषार्थस्ततोऽतइतिपैंगिश्रुतिः ॥ मुख्यंचसर्ववेदानांतात्पर्यं
श्रीपतेःपरम् ॥ उत्कर्षेतुतदन्यत्रतात्पर्यंस्यादवांतरमितिमहावाराहे ॥ युक्तंचविष्णोःसर्वोत्त
मत्वएवमहातात्पर्यंसर्वागमानाम् ॥ मोक्षोहिसर्वपुरुषार्थोत्तमः ॥ धर्मार्थकामाःसर्वेऽपिननित्या
मोक्षएवहि ॥ नित्यस्तस्मात्तदर्थाययतेतमतिमान्नरइतिभाल्लवेयश्रुतिः ॥ अनित्यत्वात्सदः

खत्वान्नधर्माद्याः परंसुखम् ॥ मोक्षएवपरानंदः संसारेपरिवर्ततामितिभारते ॥ मोक्षश्चविष्णुप्रसा
देनविनानलभ्यते ॥ यस्यप्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यतेनापरेण ॥ नारायणोसौऽपरमो
विचिंत्योमुमुक्षुभिः कर्मपाशादमुष्मादितिनारायणश्रुतिः ॥ नायमात्माप्रवचनेनलभ्योनमेधयान
बहुनाश्रुतेन ॥ यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वामितिकठश्रुतिः ॥ तेषामहंस
मुद्धर्तामृत्युसंसारसागरात् ॥ भवामिनचिरात्पार्थमय्यावेशितचेतसामितिभगवद्वचनम् ॥ उ
त्पत्तिस्थितिसंहारानियतिर्ज्ञानमावृतिः ॥ बंधमोक्षौचपुरुषाद्यस्मात्सहरिरेकराडितिस्कांदे ॥
अज्ञानांज्ञानदोविष्णुर्ज्ञानिनांमोक्षदश्चसः ॥ आनंददश्चमुक्तानांसएवैकोजनार्दनइतिच ॥
बंधकोभवपाशेनभवपाशाच्चमोचकः ॥ कैवल्यदः परंब्रह्मविष्णुरेवनसंशयइतिच ॥ प्रीतिश्च
गुणोत्कर्षज्ञानादेवविशेषतोदृष्टा ॥ नाभेदज्ञानात् ॥ अभेदज्ञानादप्रीतिरेवोत्तमानांभवति ॥
घातयंतिहिराजानोराजाहमितिवदंतम् ॥ ददतिचसर्वमभिप्रेतंगुणोत्कर्षंवदतः ॥ नतादृ
शीप्रीतिरीड्यस्यविष्णोर्गुणोत्कर्षज्ञानरियादृशीस्यात् ॥ तत्प्रीणनान्मोक्षमाप्नोतिसर्वस्ततोवे
दास्तत्परास्सर्वएवेतिसौपर्णश्रुतिः ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्वविद्भज
तिमांसर्वभावेनभारतेतिगुणोत्कर्षज्ञानादेवपरमाप्रीतिर्भगवतास्वयमेवाभिहिता ॥ अतोविष्णोर्गु
णोत्कर्षएवसर्वश्रुतिस्मृतीनांमहातात्पर्यम् ॥ नचाभेदेतात्पर्यमित्यत्रकिंचिन्मानम् ॥ नचविशेष
णविशेष्यतयाभेदसिद्धिः ॥ विशेषणविशेष्यभावश्चभेदापेक्षः धर्मिप्रतियोग्यपेक्षयाभेदसिद्धिः ॥
भेदापेक्षंचधर्मिप्रयोगित्वमित्यन्योन्याश्रयतयाभेदस्यायुक्तिः ॥ पदार्थस्वरूपत्वाद्भेदस्य ॥ नचध

मिंप्रतियोग्यपेक्षयाभेदस्यास्वरूपत्वम् ॥ ऐक्यवत्स्वरूपस्यैवतथात्वात् ॥ स्वरूपसिद्धावपितदसि
द्धिश्चजीवेश्वरैक्यंवदतःसिद्धैव ॥ भेदस्तुस्वरूपदर्शनएवसिद्धः ॥ प्रायःसर्वतोविलक्षणंहिपदार्थ
स्वरूपंदृश्यते ॥ अस्यभेदइतितुपदार्थस्यस्वरूपमितिवत् ॥ यदिनस्वरूपंभेदस्तदापदार्थेदृष्टेप्रायः
सर्वतोवैलक्षण्यंतस्यनज्ञायेत ॥ अज्ञातेचवैलक्षण्येआत्मनिघटइत्यपिसंशयःस्यात् ॥ नहिकश्चि
त्तथासंशयंकरोति ॥ ज्ञात्वैवप्रायःसर्वतोवैलक्षण्यंकस्मिंश्चिदेवसदृशेसंशयंकरोति ॥ न
ह्यात्मन्यहंदेवदत्तोनवेतिकस्यचित्संशयोभवति ॥ सामान्यतःसर्ववैलक्षण्येज्ञातएवघटत्वादि
ज्ञानम् ॥ अतोनान्योन्याश्रयता ॥ नचयुगपज्ज्ञानानुत्पत्तिर्दोषः ॥ यथायुगपदेवदीपसहस्रद
र्शनेसामान्यतःसर्वंज्ञायंतएवतथास्यात् ॥ एकस्मिन्नेववस्तुनिविशेषस्तैरप्यंगीकृतएव ॥ नेति
नेतीत्यत्रसर्ववैलक्षण्यांगीकारात् ॥ विशेषानंगीकारेचपुनरुक्तेः ॥ नचघटाद्वैलक्षण्यमेवपटाद्वै
लक्षण्यम् ॥ अनुभवविरोधात् ॥ तस्माद्भेददर्शनंयुक्तमेव ॥ यच्चप्रमाणदृष्टानामपिपदार्थानांमि
थ्यात्वकल्पनंतच्चप्रमाणविरुद्धत्वादेवप्रकाशतस्करत्वम् ॥ नहिप्रमाणदृष्टस्यतर्कबाध्यत्वम् ॥ प्रत्य
क्षादिविरुद्धानांतर्काभासत्वनियमात् ॥ शुक्त्यादेरजतत्वादिप्रतीतेरपिबलवत्प्रत्यक्षविरुद्धत्वादे
वभ्रमत्वंनतर्कमात्रात् ॥ तर्कमात्रतःप्रत्यक्षबाधनेभूतचतुष्टयस्यावादेःपृथिवीत्वादृष्टेःपृथिव्याअ
पिपृथिवीत्वंनस्यात् ॥ अतोनतर्कमात्रएवदृष्टस्यभ्रांतित्वंकल्प्यम् ॥ अतःसर्वभेदनिरासकतर्कस्य
सर्वश्रुतिस्मृतिप्रत्यक्षानुमानविरुद्धत्वान्नितरामाभासत्वम् ॥ नचपरमार्थतोभेदाभावोव्यावहारि
कःसोस्तीतिवाच्यम् ॥ सदसद्वैलक्षण्येप्रमाणाभावात् ॥ असतःख्यात्ययोगादितिवदतःख्यातिरभू

न्नवा ॥ यदिनाभून्नतत्ख्यातिनिराकरणं ॥ यद्यभूत्तथापि ॥ नचासतोवैलक्षण्यंतत्प्रतीतिंविना
ज्ञायते ॥ नचशुक्तेरजतत्वंसदसद्विलक्षणम् ॥ असदेवरजतंप्रत्यभादित्यनुभवात्॥नचप्रतीतत्वा
दसत्त्वाभावः ॥ असतःसत्त्वप्रतीतिःसतोसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेवभ्रांतित्वात् ॥ नचासतो
भ्रांतावपिप्रतीतिर्नास्तीतिवाच्यम् ॥ अनिर्वचनीयपरमार्थत्वस्यासतएवदृष्टत्वंगीकारात् ॥ नच
तदप्यनिर्वाच्यम्॥अनवस्थितेः॥प्रथमानिर्वचनीयासिद्ध्यासर्वानिर्वचनीयासिद्धिरितिमूलक्षतिः॥
अनिर्वचनीयत्वेरजतस्यानिर्वचनीयमिदंरजतमितिबाधकज्ञानमुत्पद्येत ॥ मिथ्याशब्दस्त्वभाव
वाची ॥ नचसदसद्वैलक्षण्यंनामास्तीत्यत्रकिंचिन्मानम् ॥ अनुभवविरोधश्चतत्पक्षे ॥ सदसतो
र्द्वयोरेवसर्वैरनुभूयमानत्वात् ॥ अतोऽनिर्वचनीयाभावादसतःप्रतीत्यनंगीकारात्प्रतीयमानत्वाच्चभे
दस्यसत्त्वप्रासेर्नाद्वितीयत्वंयुज्यते ॥ कथंचश्रुतिसिद्धोजीवपरमात्मभेदोनिराक्रियते ॥ मिथ्या
वादित्वेचश्रुतेःकथमैक्यस्यसत्यत्वम् ॥ कथंचैवंवादिनांवेदवादित्वम् ॥ वेदोक्तस्यमिथ्यात्वांगी
कारादेवह्यवेदवादित्वंबौद्धादीनामपि॥अतोविष्णोःसर्वोत्तमत्वएवमहातात्पर्यंसर्वागमानाम् ॥ क
थंचजीवपरमात्मैक्येसर्वश्रुतीनांतात्पर्यंयुज्यते । सर्वप्रमाणविरुद्धत्वात् ॥ तथाह्यनुभवविरोधः॥
नह्यहंसर्वज्ञःसर्वेश्वरोनिर्दुःखोनिर्दोषइतिवाकस्यचिदनुभवः॥अस्तिचतद्विपर्ययेणानुभवः॥नचमि
थ्यानुभवोयम्॥तद्विपरीतप्रमाणाभावात्॥नचाभेदेकश्चिदागमः॥संतिचभेदेसर्वागमाः॥तथाह्यत
त्त्वमसीतिनवकृत्वोपदेशःसदृष्टांतकः॥नचायमभेदोपदेशः॥सयथाशकुनिःसूत्रेप्रतिबद्धोदिशंदिशं
पतित्वान्यत्रायतनमलब्ध्वाबंधनमेवोपाश्रयते ॥सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रति

ष्ठाः॥यथासोम्यमधुमधुकृतोनिस्तिष्ठंतिनानात्ययानांवृक्षाणांरसानांसमवहारमेकतांगमयंति ॥ते
यथातत्रनविवेकंलभंतेऽमुष्याहंवृक्षस्यरसोऽस्म्यमुष्याहंवृक्षस्यरसोस्मीत्येवमेवखलुसोम्येमाःस
र्वाःप्रजाःसतिसंपद्यनविदुःसतिसंपत्स्यामहइति॥तइहव्याघ्रोवासिंहोवावृकोवावराहोवाकीटोवाप
तंगोवादंशोवामशकोवायद्यद्भवंतितत्तदाभवंति ॥ इमाःसोम्यनद्यःपुरस्तात्प्राच्यःस्यंदंतेपश्चात्प्र
तीच्यस्ताःसमुद्रात्समुद्रमेवापियंतिसमुद्रएवभवंति ॥ तायथातत्रनविदुरियमहमस्मीयमहमस्मी
ति ॥ एवमेवखलुसोम्येमाःसर्वाःप्रजाःसतआगम्यनविदुःसतआगच्छामहइति ॥ तइहव्याघ्रोवा
सिंहोवावृकोवावराहोवाकीटोवापतंगोवादंशोवामशकोवायद्यद्भवंतितत्तदाभवंति ॥ सएषजीवे
नात्मनानुप्रभूतःपेपीयमानोमोदमानस्तिष्ठति ॥ अस्ययदेकांशाखांजीवोजहात्यथसाशुष्यति ॥
न्यग्रोधफलमतआहरेतीदंभगवइतिभिंधीतिभिन्नंभगवइतिकिमत्रपश्यसीत्यण्व्यइवेमाधानाभ
गवइत्यासामंगैकांभिंधीतिभिन्नाभगवइतिकिमत्रपश्यसीतिनकिंचनभगवइति ॥ तंहोवाचयंवै
सोम्यैतमणिमानंननिभालयसेअस्यसोम्यैषोऽणिम्नाएवंमहान्यग्रोधस्तिष्ठति ॥लवणमेतदुदकेऽ
वधायाथमाप्रातरुपसीदथाइतितद्धतथाचकारतंहोवाचयद्दोषाल्लवणमेतदुदकेऽवधाअंगतदाहरे
तितद्धावमृश्यनविवेदयथाविलीनमेवांगास्यांतदाचामेतिकथमितिलवणमितिमध्याचादामेतिक
थमितिलवणमितिअंत्यादाचामेतिकथमितिलवणमितिअभिप्रास्यैतदथमोपसीदथाइतितद्धत
थाचकारतच्छश्वत्संवर्तते ॥ तंहोवाचात्रवावकिलसत्सोम्यननिभालयसेऽत्रैवकिलेति ॥ यथासो
म्यपुरुषंगंधारेभ्योऽभिनद्धाक्षमानीयतंततोऽतिजनेविसृजेत् ॥ अथयदास्यवाङ्मनसिसंपद्य

तेमनप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायांतावन्नजानाति ॥ पुरुषंसोम्योतहस्तगृहीतमा
नयंत्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मैतपतेतिसयदितस्यकर्ताभवतिततएवानृतमात्मानंकुरुते
सोनृताभिसंधोनृतेनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णातिसदह्यतेथहन्यतेअथसयदितस्याकर्ताभ
वतिततएवसत्यमात्मानंकुरुतेससत्याभिसंधःसत्येनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णातिसनदह्यते
ऽथमुच्यते ॥ एवमेवखलुसोम्याचार्यवान्पुरुषोवेदेतिस्थाननवकेऽपिभेदएवदृष्टांताभिधाना
त् ॥ नहिशकुनिसूत्रयोर्नानावृक्षरसानांनदीसमुद्रयोर्जीववृक्षयोरणिमधानयोर्लवणोदकयोर्ग
धारपुरुषयोरज्ञप्राणादिनियामकयोःस्तेनापहार्ययोश्चैक्यम् ॥ सतिसंपद्यनविदुःसतिसंपत्स्या
महइतितइहव्याघ्रोवासिंहोवेतिसतआगम्यनविदुःसतआगच्छामहइतितइहव्याघ्रोवासिंहोवेति
भेदापरिज्ञानानेनानर्थवचनाच्च ॥ नहिगृहादागतस्यगृहेप्रविष्टस्यचतदैक्यम् ॥ ताःसमु
द्रात्समुद्रएवापियंतिससमुद्रएवभवतीत्यत्रापिभेदएवोच्यते ॥ अन्यथातास्समुद्रएवभवतीति
व्यपदेशःस्यात् ॥ अतोनद्यःसमुद्रादागच्छंतितंप्रविशंतिचसमुद्रस्तुसएवनैतासांसमुद्रत्वंभवती
त्यर्थः ॥ नहिभिन्नानांनदीजलपरमाणूनांसामुद्राणुभिरैक्यंयुज्यते ॥ तथासतिमहाजनसमि
तौप्रविष्टानांद्वित्राणांतदैक्यंस्यात् ॥ नचतद्युज्यते ॥ भेदेनानुभवात् ॥ स्वंह्यपीतोभ
वतीत्यत्रापिस्वइतिपरमात्मनोऽभिधानम्॥स्वात्मनाचोत्तरयोरितिसूत्रात्॥ स्वातंत्र्यात्स्वइतिप्रो
क्तआत्मायंचाततत्वतः ॥ ब्रह्माद्यंगुणपूर्णत्वाद्भगवान्विष्णुरव्ययइतिपरमोपनिषदि ॥ अपीतइ
त्यत्रापिप्रवेशमात्रम् ॥ स्वमितिद्वितीयानिर्देशात् ॥ एकीभावविवक्षायांस्वेनेतिनिर्देशःस्यात् ॥

स्वंकुलायंयथापीतःपक्षीस्यादेवमीश्वरम् ॥ अप्येतिजीवःप्रस्वापेमुक्तौचान्योऽपिसन्सदेतिच ॥
एवमेवखलुसोम्येतन्मनोदिशंदिशंपतित्वान्यत्रायतनमलब्ध्वाप्राणमेवोपाश्रयतइत्यत्रापिमनइ
तिजीवःप्राणइतिपरमात्मा ॥ यत्रायंपुरुषःस्वपितिनामेतितयोरेवप्रस्तुतत्वात् ॥ मननान्मनउद्दि
ष्टःपुद्गलोनिरयंगिरन् ॥ कर्मानुशयनाच्चैवसंसार्यनुशयीस्मृतइतिचपरमोपनिषदि ॥ प्राणःप्र
णयनादेषसाधुत्वात्सन्हरिःस्मृतइतिच ॥ सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाइत्य
त्रापिभेदएवप्रतीयते ॥ स्रष्टृत्वादाश्रयत्वाच्चमुक्तानांचप्रतिप्रति ॥ स्थापनाच्चविभुर्विष्णुरन्यःसं
सारिणोमतइतिच ॥ अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिसएषजीवेनात्मना
नुप्रभूतःपेपीयमानोमोदमानस्तिष्ठतीत्यत्रापिजीवशब्देनपरमात्माऽभिहितः॥ जीवइतिभगवतोऽ
निरुद्धस्याख्येतिश्रुतेः ॥ विष्णुर्जीवइतिप्रोक्तःसततंप्राणधारणात् ॥ सप्रविश्यशरीरंचस्थावरं
जंगमंतथा ॥ महाभूतानिचविभुस्त्रिवृत्करणपूर्वकम् ॥ संसारिणंभ्रामयतिसदैवान्यत्वलक्षणम् ॥
तेनायंमोदतेनित्यंदृक्षावस्थागतोऽपिसन्निति च ॥ तत्तेजऐक्षतताआपऐक्षंतइमास्तिस्रोदेवता
इतिपूर्वमेवचेतनत्वसिद्धेरनेनजीवेनात्मनेतिसंसारिणःपुनःप्रवेशोनयुक्तः ॥ अतस्तत्रजीवशब्देन
परमात्मैवाभिहितः ॥ जीवेनात्मनानुप्रभूतःपेपीयमानोमोदमानस्तिष्ठतीत्यत्रापिजीवशब्दोदि
तःपरएव ॥ पेपीयमानोमोदमानस्तुसंसारी ॥ नहिचेतनादन्यस्यमोदभोगादिकंयुज्यते ॥ सुख
स्यचाप्यायतनंशरीरंदुःखस्यचाप्यायतनंशरीरम् ॥अचेतनंप्राकृतमेतदाहुर्भोक्तातयोश्चेतनकःश
रीरीतिचभारते ॥ जीवापेतंवावकिलेदंम्रियतेनजीवोम्रियतइत्यत्रापिजीवशब्दःपरे ॥ नहिसंसा

रिणोमुख्यतःप्राणधारकत्वंयुज्यते ॥ ब्रह्मणात्यक्तदेहस्तुमृतइत्युच्यतेनरइतिच ॥ यंवैसोम्यैतम
णिमानंननिभालयसेऽस्यसोम्यैषोऽणिम्नएवंमहान्यग्रोधस्तिष्ठतीत्यत्राप्यणिमशब्देनपरएवाभि
हितः ॥ सएषोणिमैतदात्म्यमिदंसर्वंतत्सत्यंसआत्मातत्त्वमसिश्वेतकेतोइत्युक्तत्वाच्च ॥ धानासुत्व
ण्व्यइवेमाधानाइतिस्त्रीलिंगप्रयोगादिवशब्दप्रयोगाच्चनाणिमत्वम् ॥ नचताननिभालयसे ॥ ऐतदा
त्म्यमित्येतदीयम् ॥ सआत्मेत्यात्मशब्दस्तुपरएव ॥ द्युभ्वाद्यायतनंस्वशब्दात् ॥ नानुमानमतच्छब्दा
त् ॥ प्राणभृच्चेत्यत्रतमेवैकंजानथआत्मानमितिस्वशब्दपर्यायात्मशब्दान्नप्रकृतिजीवावभिधीयेते
किंतुपरएवेतिभगवताव्यासेनाभिहितम् ॥ अतआत्मशब्दस्तस्मिन्नेवमुख्यः ॥ आततत्वाच्चमातृ
त्वादात्मेतिपरमोहरिः ॥ आत्माभासास्तदन्येयेनह्येतेषांतताःगुणाइतिपरमोपनिषदि ॥ तेजःपरस्यां
देवतायांतावन्नजानातीत्यत्रचयदास्यप्राणादीन्परोग्रसतितदानजानातियदाददातितदाजाना
तीतितद्वशत्वमेवोक्तम् ॥ यदाप्राणान्ददातीशस्तदाचेतनकोऽखिलम् ॥ जानातिग्रस्तकरणस्ते
नवेत्तिनकिंचनेतिच ॥ अपहार्षीत्स्तेयमकार्षीदित्यत्रचान्याभिमतस्यैववस्तुनोपहार्यत्वाद्भेदए
वायंदृष्टांतः ॥ अन्यंसंतंपरमात्मानंस्वयमितिमन्यमानस्तेनएवेति ॥ नहिस्वकीयंपरित्यजन्ते
नोभवति ॥ ऐकात्म्यंनामयदिदंकेचिद्ब्रूयुरनैपुणाः ॥ शास्त्रतत्त्वमविज्ञायतथावादबलाजनाः ॥
कामक्रोधाभिभूतत्वादहंकारवशंगताः ॥ याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः ॥ ब्रह्मस्ते
नानिरानंदाअपक्वमनसोऽशिवाः ॥ वैगुण्यमेवपश्यंतिनगुणानिनियुंजते ॥ तेषांतमश्शरीराणांतम
एवपरायणम् ॥ यतःस्वरूपतश्चान्योजातितःश्रुतितोऽर्थतः ॥ कथमस्मिसइत्येवसंबंधःस्यादसंहि

तइतिमोक्षधर्मे ॥ यथापक्षीचसूत्रंचनानावृक्षरसायथा ॥ यथानद्यःसमुद्रश्चशुद्धोदलवणेयथा ॥
यथाचोरापहार्यौचयथापुंविषयावपि ॥ तथाजीवेश्वरौभिन्नौसर्वदैवविलक्षणौ ॥ तथापिसूक्ष्मरू
पत्वान्नजीवात्परमोहरिः ॥ भेदेनमंददृष्टीनांदृश्यतेप्रेरकोपिसन् ॥ वैलक्षण्यंतयोर्ज्ञात्वामुच्यते
बध्यतेन्यथेतिचपरमोपनिषदि ॥ प्रेरकःसर्वजीवानांप्राणधीचोदिताचसः ॥ विष्णुस्संसारिणोन्यो
यस्तमविज्ञायमूढधीः॥देहेंद्रियप्राणबुद्धिनेतृत्वंमन्यतेऽऽत्मनः ॥अतःसंसारपदवींयातिजीवेशयोः
सदा॥ वैलक्षण्यंपरंज्ञात्वामुच्यतेबध्यतेन्यथेतिच ॥ सर्वान्वेदानधीत्यमहामनाअनूचानमानीस्त
ब्धएयायेत्यात्मनोन्यमनूचानत्वादिगुणप्रदंपरमविज्ञायस्तब्धस्यपराधीनत्वज्ञापनेनस्तब्धतांनिर
स्यतन्निष्ठाह्यत्रोपदिश्यते॥तद्धैकआहुरसदेवेदमग्रआसीदित्यादिवादिप्रसिद्धमपिनिराक्रियते॥
इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढा इत्यादिवच्छ्रुतितात्पर्यापरिज्ञानप्रासंच॥ दर्शि
तंचैकात्म्यंनामयदिदंकेचिद्ब्रूयुरनैपुणाइति ॥ तद्वशत्वज्ञापनार्थंचसदेवसोम्येदमग्रआसीदि
त्यादिसृष्टिकथनम् ॥ एकविज्ञानेनसर्वविज्ञानंचप्राधान्यात्किंचित्सादृशात्कारणत्वाच्च ॥ ननु
तदन्यस्यमिथ्यात्वात् ॥ नहिसत्यज्ञानेनमिथ्याज्ञानंभवति ॥ नहिशुक्तिज्ञोरजतज्ञइत्युच्य
ते ॥ विरोधात्तयोर्ज्ञानयोः ॥ नेदंरजतमित्यरजतज्ञोहिशुक्तिज्ञोभवति ॥ रजतज्ञश्चेन्न
शुक्तिज्ञः ॥ नहितज्ज्ञस्तदभावज्ञोभवति ॥ तदभावस्यतज्ज्ञानपूर्वकत्वंचान्यत्रतस्यसत्त्वा
देवदृष्टम् ॥तदनंगीकारेतदेवनयुज्यते॥ प्रधानज्ञानादप्रधानस्यज्ञातवद्व्यपदेशोस्त्येव॥ यथाप्रधा
नपुरुषाणांज्ञानाह्वाननाशनैर्ग्रामोज्ञातआहूतोनाशितइतिव्यपदेशः ॥ कारणेचपितरिज्ञातेपुत्रो

ज्ञातइति ॥ जानाम्येनमस्यपुत्रोऽयमितिव्यपदेशइति ॥ एवमत्राप्येतत्सृष्टंसर्वमित्यादि ॥ सा
दृश्याच्चैकस्त्रीज्ञानादन्यस्त्री ज्ञानमिति ॥ तदेवसादृश्यमत्रापिविवक्षितं यथासोम्यैकेनमृत्पिंडेन
सर्वंमृन्मयंविज्ञातंस्यादित्यादिना ॥ अन्यथैकशब्दःपिंडशब्दश्चव्यर्थःस्यात् ॥ मृदाविज्ञात
येत्येतावतापूर्णत्वात् ॥ नह्येकमृत्पिंडात्मकान्यमृन्मयानि ॥ सादृश्यमेवहितेषाम् ॥ यथासो
म्यैकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्यात् ॥ यथासोम्यैकेननखनिकृंतनेनसर्वंकार्ष्णायसं
विज्ञातंस्यादित्यादिकमपिव्यर्थंस्यात् ॥ नह्येकमण्यात्मकमन्यल्लोहमयम् ॥ नचैकनख
निकृंतनात्मकंसर्वंकार्ष्णायसम् ॥ वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमित्यत्रचवाचा
नाम्नामारंभणंविकारः॥अविकृतंनित्यंनामधेयंमृत्तिकेत्येवेत्येतद्वचनंसत्यमितिश्रुत्यर्थः ॥ नचवा
चारंभणशब्दोऽपिमिथ्यात्वेप्रसिद्धः॥वाचारंभणमात्रमितिचाश्रुतकल्पनम् ॥ तस्मिन्पक्षेनामधे
यशब्दइतिशब्दश्चव्यर्थःस्यात् ॥ अतोनकुत्रापिजगतोमिथ्यात्वमुच्यते ॥ कविर्मनीषीपरिभूःस्व
यंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यः ॥ यच्चिकेतसत्यमित्तन्नमोघंवसुस्पार्हमुत
जेतोतदाता ॥ विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनंतिव्रतंवाम् ॥ प्रघान्वस्यमहतोमहानिस
त्यासत्यस्यकारणानिवोचम् ॥ अनाद्यनंतंजगदेतदीदृक्प्रवर्ततेनात्रविचार्यमस्ति ॥ नचान्यथा
कापिचकस्यचेदमभूत्पुरानापितथाभविष्यत्॥असत्यमाहुर्जगदेतदज्ञाःशक्तिंहरेर्येनविदुःपरांहि॥
यःसत्यरूपंजगदेददीदृक्सृष्ट्वात्वभूत्सत्यकर्मामहात्मा ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥
अपरस्परसंभूतंकिमन्यत्कामहैतुकम् ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः ॥ प्रभवंत्युग्रक

र्मणःक्षयायजगतोऽहिताइत्यादेश्च ॥ अनित्यत्वविकारित्वपारतंत्र्यादिरूपतः ॥ स्वमादिसाम्यं
जगतोनतुबोधनिवर्त्यता ॥ सर्वज्ञस्ययतोविष्णोःसर्वदैतत्प्रतीयते ॥ बोधासहंततोनैतत्किंत्वाज्ञा
वशमस्यहीतिपरमोपनिषदि ॥ प्रज्ञाविनिर्मितंयस्मादतोमायामयंजगत् ॥ अनेनानुगतंयस्माद
नृतंतेनकथ्यते ॥ बोधानिवर्त्यमपितुनित्यमेवप्रवाहतः ॥ अइत्युक्तःपरोदेवस्तेनसत्यमिदंजगत् ॥
तदधीनस्वरूपत्वादसत्यंतेनकथ्यते ॥ सत्यस्यसत्यःसविभुरिंद्रचापस्यसूर्यवदितिच ॥ तस्योपनि
षत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमितिच॥महामायेत्यविद्येतिनियतिर्मोहिनीतिच ॥
प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यते॥प्रकृतिःप्रकृष्टकरणाद्वासनावासयेद्यतः॥अइत्युक्तोहरिस्तस्य
विद्याऽविद्येतिसंज्ञिता ॥ मायेत्युक्ताप्रकृष्टत्वात्प्रकृष्टंहिमयाभिधम्॥विष्णोःप्रज्ञप्तिरेवैकाशब्दैरेतै
रुदीर्यते ॥ प्रज्ञप्तिरूपोहिहरिःसाचस्वानंदलक्षणेतिच ॥ सर्वैर्वेदाहरेर्भेदंसर्वस्माज्ज्ञापयंतिहि ॥
भेदःस्वातंत्र्यसार्वज्ञसर्वैश्वर्यादिकश्चसः ॥ स्वरूपमेवभेदोऽयंव्यावृत्तिश्चस्वरूपता ॥सर्वव्यावृत्तये
यस्मात्स्वशब्दोऽयंप्रयुज्यते ॥ सर्वव्यावृत्ततामेवनेतिनेत्यादिकाश्रुतिः॥विष्णोरतोवदेदन्याअपि
सर्वानसंशयइतिनारायणश्रुतिः ॥ अहंब्रह्मास्मितद्योहंसोसौयोसौसोहंयोसावादित्येपुरुषःसोहम
स्मिसएवाहमस्मीत्यादित्वंतर्याम्यपेक्षया ॥ सयश्चायंपुरुषेयश्चासावादित्येसएकः ॥ अइतिब्र
ह्मतत्रागतमहमिति ॥ तस्योपनिषदहमिति ॥ अहंनामाहरिर्नित्यमहेयत्वात्प्रकीर्तितः ॥ त्वंचा
सौप्रतियोगित्वात्परोक्षत्वात्सइत्यपि ॥ सर्वांतर्यामिणिहरावस्मच्छब्दविभक्तयः ॥ युष्मच्छब्द
गताश्चैवसर्वास्तच्छब्दगाअपि ॥ सर्वशब्दगताश्चैववचनान्यखिलान्यपि ॥ स्वतंत्रत्वात्प्रवर्तंते

व्याप्तत्तेप्यखिलात्सदा ॥ तत्संबंधात्तुजीवेषुनत्संबंधादचित्स्वपि ॥ वर्ततउपचारेणतिङ्पदान्य
खिलान्यपि ॥ तस्मात्सर्वगतोविष्णुरेकोभिन्नततोबहुरितिनारायणश्रुतिः ॥ सर्वभूतेषुयेनैकंभाव
मव्ययमीक्षते ॥ अविभक्तंविभक्तेषुतज्ज्ञानंविद्धिसात्विकमितिभगवद्वचनम् ॥ नचासत्योभेदः॥
सत्यमेनमनुविश्वेमदंतिरातिंदेवस्यगृणतोमघोनः ॥ सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्ररा
ज्ये ॥ सत्यआत्मासत्योजीवःसत्यंभिदासत्यंभिदासत्यंभिदामैवारुण्योमैवारुण्योमैवारुण्यः ॥
आत्माहिपरमस्वतंत्रःसर्ववित्सर्वशक्तिःपरमसुखःपरमोजीवस्तुतद्वशोऽल्पज्ञोऽल्पशक्तिरार्तोल्पक
इत्यादिश्रुतिभ्यः ॥ नचावांतरसत्यत्वमिदम् ॥योवेदनिहितंगुहायांपरमेव्योमन् ॥ सोऽश्नुतेसर्वा
न्कामान्सहब्रह्मणाविपश्चिता ॥ एतमानंदमयमात्मानमुपसंक्रम्यइमाँल्लोकान्कामान्नीकामरू
प्यनुसंचरन् ॥ एतत्सामगायन्नास्ते ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्वरीषु ॥
ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वः ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्प
द्यते ॥ सतत्रपर्येतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वाज्ञातिभिर्वाऽज्ञातिभिर्वा ॥ यत्रत्व
स्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्तत्केनकंजिघ्रेत्तत्केनकंविनाजानीयाद्येनेदंसर्वंविजानातितंचकेन
विजानीयाद्विज्ञातारमरेकेनविजानीयात्॥यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति ॥ तदाविद्वा
न्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैति॥अमृतस्यैषसेतुः॥अक्षण्वंतःकर्णवंतःसखायोमनोज
वेष्वसमाबभूवुः॥आदघ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रे॥ईशमाश्रित्यतिष्ठंतिमुक्ताःसं
सारसागरात् ॥ यथेष्टभोगभोक्तारोब्रह्मांताउत्तरोत्तरमितिमोक्षानंतरंभेदश्रुतिभ्यः॥इदंज्ञानमुपा

श्रित्यममसाधर्म्यमागताः॥सर्गेपिनोपजायंतेप्रलयेनव्यथंतिचेतिभगवद्वचनम् ॥ॐजगद्व्यापारव
र्जम्॥ॐप्रकरणादसन्निहितत्वाच्चेत्यादिच ॥ अविनाशीवाअरेऽयमात्मानुच्छित्तिधर्मेतितद्धर्मा
णामप्यनुच्छित्तेःप्रस्तुतत्वादत्रैवमाभगवान्मोहांतमापीपिपन्नप्रेत्यसंज्ञास्तीतिसंज्ञानाशस्यदोष
त्वेनोक्तत्वात्॥यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिह्याक्षेपएव॥नहिभोगाभावोविज्ञानारम
रेकेनविजानीयादितिविज्ञातुरविज्ञानंचापेक्षितम्॥अहमित्येवयोवेद्यःसजीवइतिकीर्तितः॥ सदुः
खीससुखीचैवसपात्रंबंधमोक्षयोरितिपरमश्रुतिः॥मग्नस्यहिपरेऽज्ञानेकिंनदुःखतरंभवेदितिमोक्ष
धर्मे॥ननुतद्द्वितीयमस्तीतिच ॥ यत्तद्ब्रह्माद्वैतत्वेननपश्यतितदेवद्वितीयंनेत्याह॥यत्ततोन्यद्विभक्त
त्वेनैवपश्येदितिवाक्यशेषात् ॥ नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइतिहेतोश्च॥ कर्माणिविज्ञानमय
श्चआत्मापरेऽव्ययेसर्वएकीभवंतीत्यत्राप्येकीभावोमत्यैक्यंक्षीराब्ध्यादिस्थिततद्रूपापेक्षयास्थानै
क्यंवा ॥ कामेनमेकामआगाद्धृदयाद्धृदयंमृत्योः ॥ यदमीषामदःप्रियंतदेतूपमामभि॥ब्रह्ममत्य
नुकूलामेमतिर्मुक्तौभविष्यति ॥ अतःप्रायोऽनुकूलत्वमिदानीमपिसंस्थितम् ॥ येनाक्रमंत्यृषयो
ह्याप्तकामायत्रतत्सत्यस्यपरमंनिधानम् ॥ एतमानंदमयमात्मानमुपसंक्रामतीत्यादिश्रुतिभ्यः ॥
स्वरूपैक्याभिप्रायेकर्माणिविज्ञानमयश्चेतिनयुज्यते ॥ नहितत्पक्षेपिकर्मणांब्रह्मैक्यंमुक्तावस्ति॥
निवृत्त्यभिप्रायेचपंचदशकलानामपिसमत्वात् ॥ गताःकलाःपंचदशप्रतिष्ठादेवाश्चसर्वेप्रतिदैवता
स्वित्यन्यानांकलानांगमनमुक्त्वाकर्मणांविज्ञानात्मनश्चैकीभावकथनंव्यर्थंस्यात् ॥ विशेषाभावा
त्॥नचज्ञाननिवृत्तस्यरजतस्यशुक्त्यैकीभावव्यवहारोऽस्ति ॥परेऽव्ययइत्यधिकरणत्वकथनंचभेद

ज्ञापकम् ॥ अन्यथापरएवभवतीतिनिर्देशःस्यात् ॥ जीवस्यपरमैक्यंतुबुद्धिसारूप्यमेवतु॥एक
स्थाननिवासोवाव्यक्तिस्थानमपेक्ष्यसः ॥ नस्वरूपैकतातस्यमुक्तस्यापिविरूपतः ॥ स्वातंत्र्यपूर्ण
तेल्पत्वपारतंत्र्येविरूपतेतिपरमश्रुतिः ॥ ब्रह्मवेदब्रह्मैवभवतीत्यादिच संपूज्यब्राह्मणंभक्त्याशू
द्रोऽपिब्राह्मणोभवेदितिवत्॥बृंहितोभवतीत्यर्थः॥नहिब्राह्मणपूजकःसएवब्राह्मणोभवति ॥ ब्रह्मा
णिजीवाःसर्वेपिपरब्रह्माणिमुक्तिगाः॥प्रकृतिःपरमंब्रह्मपरमंमहदच्युतः ॥ तस्मान्नमुक्तानचसानक
चिद्विष्णुवैभवम्॥प्राप्नुवंतिसएवैकःस्वतंत्रःपूर्णषड्गुणइतिपरमश्रुतिः ॥ परोमात्रयातन्वाद्यधानन ते
महित्वमन्वश्नुवंति॥ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते॥तद्यत्स्वभावःकैवल्यंसभवान्केवलोहर
इतिच॥यथापियंतितेजांसिमहातेजसिभास्करे॥पृथक्पृथक्स्थितान्यद्धिस्वरूपेऽपिसर्वशः॥परेब्र
ह्मणिजीवाख्यब्रह्माण्यप्यपियंतिहि॥मुक्तौपृथक्स्थितान्येवतदन्येषामदर्शनम् ॥ अप्ययोयंसमु
द्दिष्टोनस्वरूपैकताक्वचिदितिनारायणश्रुतिः॥ अतःसर्वागमविरुद्धमेवजीवेश्वरैक्यम्॥तथैवसर्वयु
क्तिविरुद्धंच॥नतावदेकजीववादोयुज्यते ॥ एकाज्ञानपरिकल्पितत्वेचसर्वस्यसर्वमिदंपरिकल्पित
मितिजानतःपुनःशिष्यादिबोधनंनयुज्यते ॥ नहिस्वप्नोऽयमितिनिश्चित्यस्वाप्नपुत्रदायार्थंयतते ॥
स्वप्नेतुस्वाप्नत्वाज्ञानादेवयतते ॥ नचबहूनांदृश्यमानत्वादस्याज्ञानपरिकल्पितमिदमितिनिश्चयो
युज्यते॥स्वप्नेतुप्रबोधानंतरमेकस्यावशिष्टत्वान्निश्चयः॥नचात्रतथास्ति ॥ तस्यतस्यतथातथाप्र
तिपत्तव्यमित्यंगीकारेवस्तुनिविकल्पासंभवादकल्पितमित्येवस्यात् ॥ नचतथाप्रतिपत्तव्यमित्य
त्रप्रमाणमस्ति ॥ शिष्याज्ञानपरिकल्पितमित्यंगीकारेतस्यैवाचार्यभावेस्वयमेवकल्पितोभवती

तिसम्यग्ग्रंथाधिगमस्यैवानर्थहेतुत्वंस्यात् ॥ नचकस्यचिन्मुक्तिः ॥ ग्रंथाधिगमेतस्यैवंशिष्याज्ञा
नपरिकल्पितत्वप्राप्तेः ॥ सचैकोजीवोयदिभेदवादीभवतितस्यतत्रैवदार्ढ्यान्नकदाचिद्भेदनिवृ
त्तिरितिनकस्यापिमुक्तिःस्यात् ॥ तेनयथाकल्पितंतथैवभवतीतितेनैकजीववादिनांनित्यनिरर्थक
ल्पनेसएवस्यात् ॥ नचैकजीवाज्ञानपरिकल्पितंसमस्तमित्यत्रकिंचिन्मानम् ॥ प्रपंचोयदिविद्येत
निवर्तेतनसंशयः ॥ मायामात्रमिदंद्वैतमद्वैतंपरमार्थतइत्यस्यचायमर्थः ॥ प्रपंचोयदिविद्येतभवे
तउत्पद्येततर्हिनिवर्तेतनचनिवर्ततेतस्मादनादिरेवायम् ॥ प्रकृष्टःपंचविधोभेदःप्रपंचः ॥ नचाविद्य
मानोऽयम् ॥ मायामात्रत्वात् ॥ मायेतिभगवत्प्रज्ञासैवमानत्राणकर्त्रीयस्यतन्मायामात्रम् ॥ परमे
श्वरेणज्ञातत्वाद्रक्षितत्वाच्चनद्वैतंभ्रांतिकल्पितमित्यर्थः ॥ नहीश्वरस्यभ्रांतिः ॥ तर्ह्यद्वैतःसर्वभा
वानामितिव्यपदेशःकथमित्यतआह ॥ अद्वैतंपरमार्थतइति ॥ परमार्थापेक्षयाह्यद्वैतंसर्वस्मादुत्त
मोर्थःसएकएवेत्यर्थः ॥ अन्यथाऽद्वैतःसर्वभावानामितिव्यर्थंस्यात् ॥ सर्वभावानांमध्येतस्यैक
स्यैवाद्वैतत्वमित्युक्तेसमाधिकराहित्यमेवोक्तंस्यात् ॥ अन्येषांसमाधिकभावः ॥ विकल्पोविनि
वर्तेतकल्पितोयदिकेनचिदितिवाक्यशेषाच्चनकल्पितत्वमस्येतिज्ञायते ॥ निवर्ततइत्यंगीकारेनि
वर्तेतविद्येतेतिचप्रसंगरूपेणकथनंयदिशब्दोचनयुज्यते ॥ विद्येतेत्यस्यचोत्पत्त्यर्थानंगीकारेयद्य
दस्तितत्तन्निवर्ततइतिव्याप्त्यभावान्निवर्तेतेतिनयुज्यते ॥ अतःप्रपंचस्यानादिसत्यत्वपरमिदं
वाक्यम् ॥ अतउपदेशादयंवादोऽज्ञातेद्वैतंनविद्यतइत्याह ॥ अज्ञातएवद्वैतंनविद्यते ॥ अज्ञा
निनांपक्षएवद्वैतंनविद्यतइत्यर्थः ॥ जीवेश्वरभिदाचैवजडेश्वरभिदातथा ॥ जीवभेदोमिथश्चैवज

डजीवभिदातथा ॥ मिथश्चजडभेदोऽयंप्रपंचोभेदपंचकः ॥ सोऽयंसत्योह्यनादिश्चसादिश्चेन्ना
शमाप्नुयात् ॥ नचनाशंप्रयात्येषनचासौभ्रांतिकल्पितः ॥ कल्पितश्चेन्निवर्तेतनचासौविनिव
र्तते ॥ द्वैतंनविद्यतइतितस्मादज्ञानिनांमतम् ॥ मतंहिज्ञानिनामेतन्मितंत्रातंचविष्णुना ॥
तस्मात्सत्यमितिप्रोक्तंपरमोहरिरेवत्वितिपरमश्रुतिः ॥ मैत्रेयीशाखायांच ॥ अथज्ञानोपसर्गाइ
त्युक्त्वाअथयेचान्येमिथ्यातर्कैर्दृष्टांतैःकुहकेंद्रजालैर्वैदिकेषुपरिस्थातुमिच्छंतितैःसहनसंवसेत्प्रा
काश्याह्येतेतस्कराअस्वर्ग्याइत्याह ॥ नैरात्म्यवादकुहकैर्मिथ्यादृष्टांतहेतुभिः ॥ भ्राम्यँ
ल्लोकोनजानातिवेदविद्यांतरंतुयदिति ॥ आत्मसंबंधिकिमपिनास्तीतिवादोनैरात्म्यवादः ॥
भ्रांतिकल्पितत्वेचजगतःसत्यंजगद्द्वयमपेक्षितम् ॥ नहिसत्यशुक्तेःसत्यरजतस्यतयोःसादृश्य
स्यचाभावेभ्रांतिर्भवति ॥ स्वप्नेऽपिवासनारूपंसत्यमेवजगन्मनसिस्थितंबहिष्ठत्वेनदृश्यते ॥
देहात्मनोरप्येकदेशस्थत्वादिसादृश्यमस्त्येव ॥ शंखःपीतोनभोनीलमित्यादिष्वपिपीतादयोऽ
न्यत्रविद्यंतएव ॥ तत्सादृश्यंचद्रव्यत्वादिकंकिंचिच्छंखादीनांचास्त्येव ॥ अतोनकुत्रापिस
दृशसत्यवस्तुद्वयंविनाभ्रमः ॥ नचात्मन्यनात्मभ्रमःक्वापिदृष्टः ॥ नहिकश्चिदहमहंनभवामीति
भ्रांतोदृश्यते ॥ आत्मन्यनात्मभ्रमएवायंप्रपंचइतितैरुच्यते ॥ तंविनैवात्मन्यात्मभ्रमकल्पनेऽ
नात्मनस्सत्यत्वंस्यात् ॥ तदाचाद्वितीयत्वकल्पनेऽनात्मैवास्तिनात्मेतिभवति ॥ आत्माज्ञाना
त्मकत्वेचजगतआत्मनोभिन्नत्वेननदृश्येत ॥ नहिशुक्तेर्भेदेनरजतंदृश्यतेभ्रांतौ ॥ नचैकमेवयुग
पद्बहुधादृश्यतेभ्रांतौ ॥ नचात्मनिभेदभ्रमःक्वापिदृष्टः ॥ नचकुत्रापिमिथ्योपाधिकृतोभेदोदृष्टः ॥

नचज्ञानाज्ञानयोरपिमिथ्याकल्पितत्वंदृष्टम् ॥ तद्विषयस्यैवान्यथात्वंभ्रांतौ ॥ एवमाद्यनंतयु
क्तिविरुद्धोऽयंपक्षः ॥ ग्रंथबहुत्वंस्यादित्येवोपरम्यते ॥ नचसत्यत्वांगीकारेकश्चिद्दोषः ॥ बहुजीव
वादिपक्षेऽपिभेदस्यमिथ्यात्वांगीकारेएतेदोषाभवंत्येव ॥ मिथ्योपाधिकृतंहितेषामपिबहुत्वम् ॥
नचमिथ्योपाधिकृतोभेदःक्वापिदृष्टः ॥ आत्मन्यनात्मकल्पनारूपत्वान्मिथ्योपाधिरेवनयुज्यते ॥
मायामयीसृष्टिरपितत्सदृशस्यान्यस्यविद्यमानत्वएवदृष्टा ॥ द्रव्यत्वादिसादृश्ययुतंकिंचिदधि
ष्ठानमाश्रित्यैवच ॥ अधिष्ठानंचसदृशंतथ्यवस्तुद्वयंविना ॥ नभ्रांतिर्भवतिक्वापिस्वप्नमायादिके
ष्वपि ॥ मानस्यांवासनायांतुबहिर्वस्तुत्वकल्पनम् ॥ स्वामोभ्रमश्चमायायांकर्तृदेहादिवस्तुषु ॥
चतुरंगबलत्वादिकल्पनंभ्रमइष्यते ॥ नभ्रांतिकल्पितंविश्वमतोविष्णुबलाश्रयमितिब्रह्मवैवर्ते ॥
नचमायाविनामायादृश्यतेविश्वमीश्वरः ॥ सदापश्यतितेनेदंनमायेत्यवधार्यतामितिच ॥ अपरो
क्षदृशोमिथ्यादर्शनंनक्वचिद्भवेत् ॥ सर्वापरोक्षविद्विष्णुर्विश्वदृक्तन्नतन्मृषेतिच ॥ यदिचै
कमेवब्रह्मोपाधिभेदात्संसरतिमुच्यतेचतदासंसारिणांसर्वदाविद्यमानत्वात्सर्वदासंसार्येवब्रह्म ॥
अतस्तद्भावोऽपिनमुक्तिः ॥ सर्वदोपाधिसंबंधत्वात्तस्य ॥ नचशुद्धस्यनोपाधिसंबंधइतिवा
च्यम् ॥ उपाधिसंबंधस्योपाधिसंबंधकल्पनेऽनवस्थाप्रसंगात् ॥ नचतेनैवसंबंधेनसंबंधस्य ॥
आत्माश्रयप्रसंगात् ॥ इतश्चमिथ्योपाधिर्नयुज्यते ॥ अज्ञानसिद्धौमिथ्योपाधिसिद्धिः ॥
अज्ञानंविनामिथ्यात्वासिद्धेः ॥ नचमिथ्योपाधिंविनाऽज्ञानसिद्धिः ॥ मिथ्योपाधिभि
न्नस्यैवाज्ञत्वात् ॥ शुद्धस्यैवाज्ञत्वेमुक्तस्याप्यज्ञत्वप्रसक्तेः ॥ स्वाभाविकत्वात्सत्यत्वात्स

द्वितीयत्वप्रसक्तेश्च ॥ स्वाभाविकस्यचनिवृत्त्यंगीकारादनिवृत्तिप्रसक्तेश्च ॥ सत्यस्यचानि
वृत्तिरितिहितत्पक्षः ॥ अतश्चान्योन्याश्रयता ॥ अज्ञानसिद्धौमिथ्योपाधिसिद्धिः मिथ्योपा
धिसिद्धौजीवसिद्धिः जीवसिद्धौतदाश्रयाज्ञानसिद्धिरितिचक्रकंवा॥ नचशुद्धमेवभ्रांत्याऽज्ञमि
तियुक्तम् ॥ अज्ञानसिद्धौभ्रमसिद्धिः तत्सिद्धावज्ञानसिद्धिरित्यन्योन्याश्रयत्वात् ॥ अनागता
अतीताश्चयावंतःसहिताःक्षणाः ॥ अतीतानागताश्चैवयावंतःपरमाणवः ॥ ततोऽप्यनंतगुणिता
जीवानांराशयःपृथगितिवत्सश्रुतेनेंसंसारिणांपरिसमाप्तिरस्मत्पक्षे ॥ परमाणुप्रदेशेऽप्यनंताःप्रा
णिराशयः ॥ सूक्ष्मत्वादीशशक्त्यैवस्थूलाअपिहिसंस्थिताः ॥ सहस्रयोजनस्थांप्रभावाद्विश्वक
र्मणः ॥ अनंताराशयोऽनंताःप्रजानामधिसंस्थिताइतिस्कांदे ॥ नचमिथ्यावस्तुनोदुर्घटत्वमेवभू
षणम् ॥ दृष्टस्यवस्तुनोमिथ्यात्वकल्पनस्यदृष्टिसकाशाद्बलवत्प्रमाणयुक्त्यपेक्षत्वात् ॥ तदभावे
सत्यत्वंदृष्ट्यैवसिद्ध्यति ॥ नह्यन्नादिकंभोग्यंदृष्ट्वाभोक्तुंसत्यत्वेप्रमाणांतरमपेक्षते ॥ किंतुनेदम
न्नमितिकेनचिदुक्तेकथमिदमन्नत्वेनदृश्यमानमन्नंनभवतीतिप्रमाणांतरमपेक्षते ॥ नचप्रत्यक्षदृ
ष्टस्यततोबलवत्प्रत्यक्षमागमंविनानुमानादिनैवबाधोदृष्टः॥दूरस्थदृक्षह्रस्वत्वादौप्रत्यक्षापटुत्वस्य
निश्चितत्वाद्युक्त्यातत्रदीर्घत्वनिश्चयः ॥प्रत्यक्षस्यहिदूरेमंदग्राहित्वंपरिमाणादावन्यथात्वंचततोब
लवत्प्रत्यक्षेणैवनिश्चितम् ॥नचप्रत्यक्षस्यमिथ्यात्वंकेनापिप्रमाणेननिश्चितम्॥विशेषतश्चज्ञानाज्ञा
नसुखदुःखात्मभेदादिविषयस्यानुभवस्यनमिथ्यात्वंदृष्टम् ॥अतश्चसंसारस्यसत्यत्वात्सत्यस्यचा
निवृत्त्यंगीकारान्नमोक्षःस्यात्॥अनुभवसिद्धस्यबलवदनुभवंविनायुक्तितएवमिथ्यात्वांगीकारेआ

त्मनोपिमिथ्यात्वंस्यात्॥युक्तिश्च॥सर्वस्यान्यस्यमिथ्यात्वांगीकारात् ॥द्विधाकल्पनेकल्पनागौरवमिति॥आत्माधिष्ठानभ्रमस्यैवादृष्टेस्तस्याधिष्ठानत्वमपिनयुज्यते ॥ दुर्घटत्वस्यभूषणत्वेदुर्घटमप्यात्ममिथ्यात्वंस्यादेव॥प्रतीतेरप्यविद्याकार्यत्वांगीकारात् ॥ तस्याश्चदुर्घटत्वस्यभूषणत्वात्सत्यस्यचयुक्त्यपेक्षत्वाद्घटादीनांद्रष्टृत्वमात्मनश्चजडत्वंद्रष्टुरभावेचप्रतीतिरधिष्ठानंविनैवभ्रमइत्यादिविरुद्धंसर्वमपिस्यात्॥उपाधिभेदांगीकारेहस्तपादाद्युपाधिभेदेऽपितद्गतसुखदुःखादिभोक्तुर्यथाभेदोनप्रतीयते॥एवमेवशरीरादिभेदेऽपिभोक्तुर्भेदोनदृश्येत ॥ सर्वगतसुखदुःखादिकमेकेनैवभुज्येत॥यथाचैकांगुल्याद्यपगमेऽपिनमुक्तिः एवमेकोपाध्यपगमेऽपितस्यैवानंतोपाधिसंबंधत्वान्नमुक्तिःस्यात्॥उद्यतायुधदोर्दंडाःपतितस्वशिरोक्षिभिः ॥ पश्यंतःपातयंतिस्मकबंधाअप्यरीन्युधीतिभारतवचनान्नविश्लेषाद्विशेषः॥किंचोपाधिरात्मनएकदेशंग्रसत्युतसर्वमात्मानम्॥ एकदेशांगीकारेसावयवत्वम्॥सावयवस्यचानित्यत्वंतैरंगीकृतम् ॥ सर्वग्रासेचनोपाधिर्भेदकःस्यात्॥उपाधिकृतांशकल्पनेतदुपाधिकृतत्वेआत्माश्रयत्वम् ॥ उपाध्यंतरकल्पनेऽनवस्था ॥ नचेश्वरस्यसर्वगतत्वादौपाधिकभेदोब्रह्मणाभवति ॥ नहिदेशतःकालतश्चापरिच्छिन्नयोरौपाधिकभेदोदृष्टः ॥सर्वोपाधिगतत्वाच्चैकस्यैवेश्वरस्यभेदस्यमिथ्यात्वाद्धस्तपादादिभेदेऽपिभोक्तुरेकत्ववत्सर्वसुखदुःखादिभोक्तृत्वमीश्वरस्यैवस्यात् ॥ देशतःकालतश्चापरिच्छिन्नयोरौपचारिकभेदाभावादेवदुःखिनोऽन्यच्छुद्धंब्रह्मनसिद्ध्यति ॥ अतःस्वाभाविकस्संसारइत्यनिवृत्तिरेवस्यात् ॥ किंचविशिष्टस्यशुद्धस्यवासंसारः ॥ शुद्धस्यसंसारइत्युक्तेस्वव्याहतिः ॥ विशिष्टस्येत्युक्तेविशिष्टोऽन्यःसएववा ॥ सएवचेदु

शास्त्तिर्बंधनम्॥सर्वेक्षराणामेकःसकुर्यात्सात्विकमोक्षणम्॥सर्गस्थितियतिज्योतिर्नित्यानंदप्रदोऽ
क्षरे ॥ चेष्टाप्रदश्चसर्वेषामेकएवपरोहरिः ॥ तस्यनान्योऽस्तिसर्गादिकर्तानिर्दोषकश्चसइतिपरमश्रु
तिः॥ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः॥सर्वेक्षराअक्षरातुश्रीरेकातत्परोहरिरितिस्कांदे॥यंकामये
तंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधाम् ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाउ ॥ अ
हंजनायसमदंकृणोम्यहंद्यावापृथिवीआविवेश ॥ अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वं १ त
स्समुद्रे ॥ यमंतःसमुद्रेकवयोवयंतियदक्षरेपरमेप्रजाः ॥ यतःप्रसूताजगतःप्रसूतीतोयेनजीवान्व्य
ससर्जभूम्याम् ॥ यदोषधीभिःपुरुषान्पशूंश्चविवेशभूतानिचराचराणि ॥ अतःपरंनान्यदणीयसं
हिपरात्परंयन्महतोमहांतम् ॥ यदेकमव्यक्तमनंतरूपंविश्वंपुराणंतमसःपरस्तात् ॥ तदेवर्तंतदुस
त्यमाहुस्तदेवब्रह्मपरमंकवीनाम् ॥ अस्यदेवस्यमीढुषोवयाविष्णोरेषस्यप्रभृथेहविर्भिः ॥ वि
देहिरुद्रोरुद्रियंमहित्वंयासिष्टंवर्तिरश्विनाविरावत् ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत ॥
मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ एकोनारायणआसीन्नब्रह्मानेशानोनाग्नीषोमौनेमेद्यावा
पृथिवी ॥ एकोनारायणआसीन्नब्रह्मानचशंकरः ॥ समुनिर्भूत्वासमाचिंतयत्ततएतेव्यजायंत ॥
विश्वोहिरण्यगर्भोऽग्निर्यमोवरुणरुद्रेंद्राइति ॥ वासुदेवोवाइदमग्रआसीन्नब्रह्मानचशंकरः ॥ नेंद्र
सूर्यौनचगुहोनसोमोनविनायकइत्यादिश्रुतिभ्यश्च ॥ यस्मात्परंनापरमस्तिकिंचिदित्यत्राप्यपर
मस्तीत्येवार्थः ॥ अन्यथातेनेदंपूर्णंततोयदुत्तरंतदरूपमनामयमितिवाक्यशेषविरोधात् ॥ तेनेद
मित्युक्तमेवततइतिपरामृश्यते ॥ अन्यथायस्मात्परमित्युक्तिविरोधात् ॥ नामानिसर्वाणियमावि

शंतितंवैविष्णुंपरममुदाहरंति ॥ अस्यैवसर्वनामानिव्यतिरिक्तस्यसर्वतः ॥ यःस्वतंत्रःसदैवैकः
सविष्णुःपरमोमतइत्यादिश्रुतिभ्योऽन्यनामान्यस्यैवेतिनान्येषांसर्वैश्वरत्वादिकमुच्यते ॥ सर्ववेदे
ष्वप्यस्यादोषवचनादादावभाववचनाच्चतद्वचनाच्चान्येषांसर्वेषांवेदेषुसर्वेषु ॥ तेषांसर्वनामत्वानु
क्तेश्च ॥ उत्पत्तिर्वासुदेवस्यप्रादुर्भावोनचापरः ॥ देहोत्पत्तिस्तदन्येषांब्रह्मादीनांतदीरणात् ॥
देहोऽनादिर्हरेर्नित्योब्रह्मादीनामनित्यकः ॥ मुख्योत्पत्तिस्तदन्येषांप्रादुर्भावोहरेर्जनिरितिपरम
श्रुतेश्च ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्विष्णुतत्त्वविनिर्णयेद्वितीयःपरिच्छे
दः ॥ २ ॥ ॥ ॐ ॥ वर्जितःसर्वदोषैर्योगुणसर्वस्वमूर्तिमान् ॥ स्वतंत्रोयद्वशाःसर्वेसविष्णुः
परमोमतइतिपरमोपनिषदि ॥ नित्यपूर्णाखिलगुणोनिर्दोषःसर्वदैवयः ॥ यःस्वतंत्रःपरोविष्णु
र्जन्ममृत्यादिवर्जितः ॥ नारदउवाच ॥ निर्दोषश्चेत्कथंविष्णुर्मानुषेपूदपद्यत ॥ चिंताश्रम
व्रणाज्ञानदुःखयुग्दृश्यतेकथम् ॥ एषमेसंशयोब्रह्मन्हृदिशल्यइवार्पितः ॥ अनुद्धार्योऽपरैर्म
त्यैःसूक्तिशक्त्यातमुद्धर ॥ ब्रह्मोवाच ॥ स्त्रीपुंमल्लाभियोगात्मादेहोविष्णोर्नजायते ॥ किंतुनिर्दोष
चैतन्यसुखांनित्यांस्वकांतनुम् ॥ प्रकाशयतिसैवेयंजनिर्विष्णोर्नचापरा ॥ तथाप्यसुरमोहायप
रेषांचक्कचित्क्कचित् ॥ दुःखाज्ञानश्रमादीन्सदर्शयेच्छुद्धसद्गुणः ॥ क्कव्रणादिक्कचाज्ञानंस्वातंत्र्या
न्नित्यसद्गुणे ॥ दौर्लभ्यायैवमोक्षस्यदर्शयन्परमोहरिः ॥ मिथ्यादर्शनदोषेणतेनमुक्तिंनयांतिच ॥
तमोयांतिचतेनैवतस्माद्दोषविवर्जितम् ॥ प्रादुर्भावगतंचैवजानीयाद्विष्णुमंजसेतिब्रह्मांडे ॥ गु
णक्रियादयोविष्णोःस्वरूपंनान्यदिष्यते ॥ अतोमिथोपिभेदोनतेषांकश्चित्कदाचन ॥ स्वरूपेऽ

पिविशेषोऽस्तिस्वरूपत्ववदेवतु ॥ भेदाभावेपितेनैवव्यवहारश्चसर्वतइतिपरमोपनिषदि ॥ अभिन्न
त्वमभेदश्चयथाभेदविवर्जितम् ॥ व्यवहार्यंपृथक्त्वंस्यादेवमेवगुणाहरेः ॥ अभेदाभिन्नयोर्भेदो
यदिवाभेदभिन्नयोः ॥ अनवस्थितिरेवस्यान्नविशेषणतामतिः ॥ मूलसंबंधमज्ञात्वातस्मादेक
मनंतधा ॥ व्यवहार्यंविशेषेणदुस्तर्कबलतोहरेः ॥ विशेषोऽपिस्वरूपंसस्वनिर्वाहकतास्यचेतिब्रह्म
तर्के ॥ एकमेवाद्वितीयंनेहनानास्तिकिंचन ॥ मृत्योस्समृत्युमाप्नोतियइहनानेवपश्यति ॥ य
थोदकंदुर्गेवृष्टंपर्वतेषुविधावति ॥ एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावतीत्यादिश्रुतेश्च ॥ देशः
सर्वत्रपुरुषःस्वतंत्रःकालनित्यता ॥ इत्यादिषुस्वसंबंधाद्यथैवगुणरूपिणः ॥ गुणित्वंगुणभोक्तृत्वं
स्याद्विष्णोस्तच्चसत्स्वयमितिब्रह्मतर्के ॥ विष्णुंसर्वगुणैःपूर्णंज्ञात्वासंसारवर्जितः ॥ निर्दुःखानंदभु
ङ्नित्यंतत्समीपेसमोदते ॥ मुक्तानांचाश्रयोविष्णुरधिकोऽधिपतिस्तथा ॥ तद्वशाएवतेसर्वेसर्वदै
वसईश्वरइतिपरमश्रुतिः ॥ अमृतस्यैषसेतुः ॥ सोऽश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेत्यादि
च ॥ नृपाद्याश्शतधृत्यंतामुक्तिगाउत्तरोत्तरम् ॥ गुणैःसर्वैःशतगुणामोदंतइतिहिश्रुतिरितिपा
द्मे ॥ अतोनिश्शेषदोषवर्जितःपूर्णानंदगुणोनारायणइतिसिद्धम् ॥ यस्यत्रीण्युदितानिवेद
वचनेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकं
पृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयमेतदमुनाग्रंथःकृतःकेशवे ॥ स्वतंत्रायाखिलेशायनिर्दोषगुणरू
पिणे ॥ प्रेयसेमेसुपूर्णायनमोनारायणायते ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्री
मद्विष्णुतत्त्वविनिर्णयेतृतीयःपरिच्छेदः ॥ ३ ॥ ॥ संपूर्णोयंग्रंथः ॥ ॥ ॥

॥ इति प्रमाणलक्षणादयो दश
प्रकरणग्रन्थाः ॥ १४ ॥

नमोवेदव्यासचरणेभ्यः॥अथपदपाठः॥हरिःॐ॥अग्निम्।ईळे।पुरःऽहितम्।यज्ञस्य।देवम्।ऋत्विजं
म्॥होतारम् ।रत्नऽधातमम्॥ १॥अग्निः।पूर्वेभिः।ऋषिऽभिः।ईड्यः।नूतनैः।उत॥सः।देवान्।आ।इह।
वक्षति॥२॥अग्निना।रयिम्। अश्नवत् । पोषम् । एव । दिवेऽदिवे॥ यशसम्। वीरवत्ऽतमम्॥३॥
अग्ने।यम् ।यज्ञम्।अध्वरम् । विश्वतः।परिऽभूः।असि॥सः।इत्।देवेषु।गच्छति॥४॥ अग्निः॥होता।
कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः ॥ देवः । देवेभिः । आ । गमत् ॥ ५ ॥ १॥ यत् । अंग ।
दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि ॥ तव । इत् । तत् । सत्यम् । अंगिरः॥ १॥उप । त्वा।
अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयम् ॥ नमः । भरंतः । आ । इमसि ॥ २ ॥
राजंतम् । अध्वराणाम्।गोपाम् । ऋतस्य । दीदिविम् । वर्धमानम् । स्वे । दमे ॥३॥ सः । नः ।
पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव॥ सचस्व । नः । स्वस्तये॥४॥ ॥ २ वायोइति ।
आ । याहि । दर्शत । इमे । सोमाः । अरंऽकृताः॥तेषाम् । पाहि । श्रुधि । हवम् ॥ वायोइति ।
उक्थेभिः । जरंते । त्वाम् । अच्छ । जरितारः॥सुतऽसोमाः । अहःऽविदः ॥ वायोइति । तव ।
प्रऽपृंचती । धेना । जिगाति । दाशुषे । उरूची । सोमऽपीतये ॥ इंद्रवायूइति । इमे । सुताः ।
उप । प्रयःऽभिः । आ । गतम्॥इंदवः।वाम् । उशंति । हि ॥ वायोइति । इंद्रः । च । चे
तथः । सुतानाम् । वाजिनीवसूइतिवाजिनीऽवसू । तौ । आ । यातम् । उप । द्रवत् ॥ ३ ॥
वायोइति । इंद्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् ॥ मक्षु । इत्था । धिया ।
नरा ॥ मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् ॥ धियम् । घृताचीम् । साधं

ता ॥ ऋतेनं । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा ॥ ऋतुम् । बृहंतम् । आशाथेइ
ति ॥ कवीइति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया । दक्षम् । दधातेइति । अ
पसम् ॥ ४ ॥ अश्विना । यज्वरीः । इषः । द्रवंत्पाणीइतिद्रवंत्ऽपाणी । शुभः । पती
इति ॥ पुरुऽभुजा । चनस्यतम् ॥ अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया ॥
धिष्ण्या । वनतम् । गिरः ॥ दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः ॥ आ ।
यातम् । रुद्रवर्त्तनीइतिरुद्रऽवर्त्तनी ॥ इंद्र । आ । याहि । चित्रभानोइतिचित्रऽभानो ।
सुताः । इमे । त्वाऽयवः ॥ अण्वीभिः । तना । पूतासः ॥ ० धिया । इषितः । विप्रऽजूतः ।
सुतऽवतः ॥ उप । ब्रह्माणि । वाघतः ॥ ० तूतुजानः । उप । ब्रह्माणि । हरिऽवः ॥ सुते । द
धिष्व । नः । चनः ॥ ५ ॥ ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत ॥ दाश्वां
सः । दाशुषः । सुतम् ॥ विश्वे । देवासः । अप्ऽतुरः । सुतम् । आ । गंत । तूर्णयः ॥ उस्राःऽइव ।
स्वसराणि ॥ विश्वे । देवासः । अस्रिधः । एहिऽमायासः । अद्रुहः ॥ मेधम् । जुषंत । वह्नयः ॥
पावका । नः । सरस्वती । वाजेभिः । वाजिनीऽवती ॥ यज्ञम् । वष्टु । धियाऽवसुः ॥ ४ ॥ चो
दयित्री । सूनृतानाम् । चेतंती । सुऽमतीनाम् ॥ यज्ञम् । दधे । सरस्वती ॥ महः । अ
र्णः । सरस्वती । प्र । चेतयति । केतुना ॥ धियः । विश्वाः । वि । राजति ॥ ६ ॥
सुरूपऽकृत्नुम् । ऊतये । सुदुघाऽइव । गोऽदुहे ॥ जुहूमसि । द्यविऽद्यवि ॥ १ ॥ उप । नः ।
सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब ॥ गोऽदाः । इत् । रेवतः । मदः ॥

अथ । ते । अंतमानाम् । विद्याम ॥ सुऽमतीनाम् । मा । नः । अति ॥ ख्यः । आ । गहि ॥ परा । इहि । विग्रम् । अस्तृतम् । इंद्रम् । पृच्छ । विपःऽचितम् ॥ यः । ते । सखिऽभ्यः । आ । वरम् ॥ उत । ब्रुवंतु । नः । निदः । निः । अन्यतः । चित् । आरत ॥ दधानाः । इंद्रे । इत् । दुवः ॥ ७ ॥ उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः ॥ स्याम । इत् । इंद्रस्य । शर्मणि ॥ आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् ॥ पतयत् । मंदयत्ऽसखम् ॥ अस्य । पीत्वा । शतक्रतोइतिशतऽक्रतो ॥ घनः । वृत्राणाम् । अभवः ॥ प्र । आवः । वाजेषु । वाजिनम् ॥ तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतोइतिशतऽक्रतो । धनानाम् । इंद्र । सातये ॥ यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा ॥ तस्मै । इंद्राय । गायत ॥ ८ ॥ आ । तु । आ । इत । नि । सीदत । इंद्रम् । अभि । प्र । गायत ॥ सखायः । स्तोमऽवाहसः ॥ पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् ॥ इंद्रम् । सोमे । सचा । सुते ॥ सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरंऽध्याम् ॥ गमत् । वाजेभिः । आ । सः । नः॥३॥यस्य । संऽस्थे । न । वृण्वते । हरीइति । समत्ऽसु शत्रवः ॥ ० ॥ सुतऽपाव्ने । सुताः । इमे । शुचयः । यंति । वीतये । सोमासः । दधिऽआशिरः ॥ ९ ॥ त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः ॥ इंद्र । ज्यैष्ठ्याय । सुक्रतोइतिसुऽक्रतो ॥१॥ आ । त्वा । विशंतु । आशवः । सोमासः । इंद्र । गिर्वणः । शम् ॥ ते । संतु । प्रऽचेत

से ॥ त्वाम् । स्तोमाः । अवीवृधन् । त्वाम् । उक्था । शतक्रतोइतिशतऽक्रतो । त्वाम् ॥ वर्द्धं
तु । नः।गिरः ॥ अक्षितऽऊतिः । सनेत्। इमम्।वाजम्।इंद्रः सहस्रिणम्।यस्मिन्।विश्वानि। पौंस्या
॥मा । नः । मर्ताः । अभि । द्रुहन्।तनूनाम् । इंद्र । गिर्वणः ॥ ईशानः । यवय।वधम् ॥ १० ॥
युंजंति । ब्रध्नम् । अरुषम् । चरंतम् । परि । तस्थुषः ॥ रोचंते । रोचना । दिवि ॥
युंजंति । अस्य । काम्या । हरीइति । विऽपक्षसा रथे । शोणा । धृष्णूइति । नृऽवाहसा ॥
केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् ॥ उषत्ऽभिः । अजायथाः ॥
आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे ॥ दधानाः । नाम । यज्ञियम् ॥
वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इंद्र । वह्निऽभिः ॥ अविंदः । उस्रियाः । अनु ॥
॥११॥ देवऽयंतः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिरः । महाम्। अनूषत । श्रुतम् ॥
इंद्रेण । सम् । हि । दृक्षसे । संऽजग्मानः । अबिभ्युषा ॥ मंदूइति । समानऽवर्चसा ॥ अनव
द्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति ॥ गणैः । इंद्रस्य । काम्यैः ॥ अतः । परिऽ
ज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि ॥ सम् । अस्मिन् । ऋंजते । गिरः ॥ इ
तः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि । इंद्रम् । महः । वा रजसः ॥
॥१२॥ इंद्रम् । इत् । गाथिनः । बृहत् । इंद्रम् । अर्केभिः । अर्किणः।इंद्रम् । वाणीः । अनूष
त ॥ इंद्रः । इत् । हर्योः । सचा ॥ संमिऽश्लः । आ । वचःऽयुजा । इंद्रः । वज्री । हिर
ण्ययः ॥ इंद्रः। दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् ॥ दिवि । वि । गोभिः । अद्रिम् ।

ऐरयत्॥ ३ ॥ इंद्रं । वाजेषु । नः अव । सहस्रंऽप्रधनेषु ।च ॥ उग्रः । उग्राभिः । ऊतिऽभिः ॥
इंद्रम् । वयम् । महाऽधने । इंद्रम् । अर्भे । हवामहे ॥ युजम् । वृत्रेषु । वज्रिणम् ॥ १३ ॥
सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् । अप । वृधि॥ अस्मभ्यम् । अप्रतिऽस्कुतः
॥ तुंजेऽतुंजे । ये । उतऽतरे । स्तोमाः । इंद्रस्य । वज्रिणः ॥ न । विंधे । अस्य । सुऽस्तुतिम् ॥
वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति ॥ ओजसा । ईशानः । अप्रतिऽस्कुतः । यः । एकः ।
चर्षणीनाम् । वसूनाम् । इरज्यति ॥ इंद्रः । पंच । क्षितीनाम् ॥ इंद्रम् । वः । विश्वतः । परि ।
हवामहे । जनेभ्यः ॥ अस्माकम् । अस्तु । केवलः ॥१४॥ आ । इंद्र । सानसिम् । रयिम् । स
ऽजित्वानम् । सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर । नि । येन । मुष्टिऽहत्यया । नि । वृत्रा ।
रुणधामहै ॥ त्वाऽऊतासः । नि । अर्वता ॥ इंद्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना ।
ददीमहि । जयेम । सम् । युधि । स्पृधः ॥ वयम् । शूरेभिः । अस्तृऽभिः । इंद्र । त्वया । यु
जा । वयम् । ससह्याम । पृतन्यतः ॥ महान् । इंद्रः । परः । च । नु । महिऽत्वम् । अस्तु । व
ज्रिणे ॥ द्यौः । न । प्रथिना । शवः ॥ १५ ॥ संऽओहे । वा । ये । आशत । नरः । तोकस्य ।
सनितौ ॥ विप्रासः । वा । धियाऽयवः ॥ यः । कुक्षिः । सोमऽपातमः । समुद्रःइव । पिन्वते ॥
उर्वीः । आपः । न । काकुदः ॥ एव । हि । अस्य । सूनृता॥ विऽरप्शी । गोऽमती । मही ॥
पक्वा । शाखा । न । दाशुषे ॥ एव । हि । ते । विऽभूतयः । ऊतयः । इंद्र । माऽवते । स
द्यः । चित् । संति । दाशुषे ॥० काम्या । स्तोमः । उक्थम् । च । शंस्या । इंद्राय । सोम

ऽपीतये ॥ १६ ॥ इंद्रं । आ । इहि । मत्सि । अंधसः । विश्वेभिः । सोमपर्वऽभिः ॥ महान् ।
अभिष्टिः । ओजसा॥ आ । ईम् । एनम् । सृजत । सुते । मंदिम् । इंद्राय । मंदिने ॥ चक्रिम् ।
विश्वानि । चक्रये ॥ मत्स्व । सुऽशिप्र । मंदिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु
। सवनेषु । आ ॥ असृग्रम् । इंद्र । ते । गिरः प्रति । त्वाम् । उत् । अहासत ॥ अजोषाः ।
वृषभम् । पतिम्॥सम् । चोदय। चित्रम् । अर्वाक् । राधः । इंद्र । वरेण्यम्॥असत् । इत् । ते ।
विऽभु प्रऽभु ॥ १७ ॥ अस्मान् । सु । तत्र । चोदय । इंद्र । राये । रभस्वतः ॥ तुविऽद्युम्न ।
यशस्वतः ॥ सम् । गोऽमत् । इंद्र । वाजऽवत् । अस्मेइति । पृथु । श्रवः । बृहत् ॥ विश्वऽआ
युः । धेहि । अक्षितम् ॥ अस्मेइति । धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् ॥ इंद्र ।
ताः । रथिनीः । इषः ॥ वसोः । इंद्रम् । वसुऽपतिम् । गीःऽभिः । गृणंतः । ऋग्मियम् ॥ होम ।
गंतारम् । ऊतये ॥ सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः । इंद्राय । शूष
म् । अर्चति ॥ १८ ॥ गायंति । त्वा । गायत्रिणः । अर्चंति । अर्कम् । अर्किणः । ब्रह्माणः ।
त्वा । शतक्रतोइतिशतऽक्रतो । उत् । वंशंऽइव । येमिरे ॥ यत् । सानोः । सानुम् । आ ।
अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इंद्रः । अर्थम् ॥ चेतति । यूथेन । वृष्णिः । एजति॥
युक्ष्व । हि । केशिना । हरीइति । वृषणा । कक्ष्यऽप्रा । अथ । नः । इंद्र । सोमऽपाः । गिराम् ।
उपऽश्रुतिम् चर ॥ आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव ॥
ब्रह्म । च । नः । वसोइति । सचा । इंद्र । यज्ञम् । च । वर्धय ॥ उक्थम् । इंद्राय । शं

स्यम् । वर्द्धनम् । पुरुनिःऽसिधे ॥ शक्रः । यथा । सुतेषु । नः । ररणत् । सख्येषु । च ॥ तम् ।
इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये ॥ सः । शक्रः । उत । नः । शकत् ।
इंद्रः । वसु । दयमानः ॥ १९ ॥ सुऽविवृतम् । सुनिःऽअजम् । इंद्र । त्वाऽदातम् । इत् ।
यशः ॥ गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ नहि । त्वा । रो
दसीइति । उभेइति । ऋघायमाणम् । इन्वतः । जेषः । स्वःऽवतीः । अपः । सं । गाः । अ
स्मभ्यम् । धूनुहि ॥ आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः । इं
द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अंतरम् ॥ विद्म । हि । त्वा । वृषन्ऽतमम् ।
वाजेषु । हवनऽश्रुतम् । वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥ आ । तु । नः ।
इंद्र । कौशिक । मंदसानः । सुतम् । पिब । नव्यम् । आयुः । प्र । सु । तिर । कृधि । सहस्रऽ
साम् । ऋषिम् ॥ परि । त्वा । गिर्वणः । गिरः । इमाः । भवंतु । विश्वतः । वृद्धऽआयुम् ।
अनु । वृद्धयः । जुष्टाः । भवंतु । जुष्टयः ॥ २० ॥ इंद्रम् । विश्वाः । अवीवृधन् । समुद्रऽ
व्यचसम् । गिरः । रथिऽतमम् । रथिनाम् । वाजानाम् । सत्ऽपतिम् ॥ पतिम् । सख्ये । ते ।
इंद्र । वाजिनः । मा । भेम । शवसः । पते । त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽ
जितम् ॥ पूर्वीः । इंद्रस्य । रातयः । न । वि । दस्यंति । ऊतयः । यदि । वाजस्य । गोऽम
तः । स्तोतृऽभ्यः । मंहते । मघम् ॥ पुराम् । भिंदुः । युवा । कविः । अमितऽओजाः ।
अजायत । इंद्रः । विश्वस्य । कर्म्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ त्वम् । वलस्य ।

गोऽमंतः । अपं । अवः । अद्रिवः । बिलम् । त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आ
विषुः ॥ तवं । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिंधुम् । आऽवदंन् । उपं । अ
तिष्ठंत । गिर्वणः । विदुः । ते । तस्यं । कारवंः ॥ मायाभिः । इंद्र । मायिनंम् । त्वम् । शुष्णंम् ।
अवं । अतिरः ॥ ०॥मेधिराः । तेषांम् । श्रवांसि । उत् । तिर ॥ इंद्रम् । ईशांनम् ।ओजंसा।अभि।
स्तोमाः । अनूषत । सहस्रम् ।यस्यं । रातयंः । उत । वा । संति । भूयंसीः॥ २१॥अग्निम्।दूतम्।
वृणीमहे । होतांरम् । विश्वऽवेंदसम्।अस्य।यज्ञस्यं।सुऽक्रतुंम्॥अग्निंऽअंग्निम्।हवीमऽभिः।सदा।
हवंत । विश्पतिम् । हव्यऽवाहंम् । पुरुऽप्रियम्॥अग्ने । देवान् । इह।आ । वह । जज्ञानः । वृक्तऽबं
र्हिषे । असि । होतां । नः । ईड्यंः ॥ तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि ।
दूत्यंम् । देवैः । आ । सत्सि । बर्हिषि ॥ घृतंऽआहवन । दीदिऽवः । प्रति । स्म । रिषंतः । द
ह । अग्ने । त्वम् । रक्षस्विनंः ॥ अग्निना । अग्निः । सम् । इध्यते । कविः । गृहऽपतिः । यु
वा । हव्यऽवाट् । जुहुऽआस्यः ॥ २२ ॥ कविम् । अग्निम् । उपं । स्तुहि । सत्यऽधर्माणम् ।
अध्वरे । देवम् । अमीवऽचातंनम् ॥ यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्य
ति । तस्यं । स्म । प्रऽअविता । भव ॥ यः । अग्निम् । देवऽवीतये । हविष्मान् । आऽवि
वासति । तस्मै । पावक । मृळय ॥ सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह ।
आ । वह । उपं । यज्ञम् । हविः । च । नः ॥ सः । नः । स्तवानः । आ । भर । गायत्रे
णं । नवीयसा । रयिम् । वीरऽवंतीम् । इषम् ॥ अग्ने । शुक्रेणं । शोचिषा । विश्वाभिः ।

देवहूतिऽभिः । इमम् । स्तोमम् । जुषस्व । नः ॥ २३ ॥ सुऽसमिद्धः । नः । आ । वह ।
देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च ॥ मधुऽमंतम् । तनूऽनपात् ।
यज्ञम् । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥ नराशंसम् । इह । प्रियम् । अ
स्मिन् । यज्ञे । उप । ह्वये । मधुऽजिह्वम् । हविःऽकृतम् ॥ अग्ने । सुखऽतमे । रथे । देवान् ।
ईळितः । आ । वह । असि । होता । मनुःऽहितः ॥ स्तृणीत । बर्हिः । आनुषक् । घृतऽ
पृष्ठम् । मनीषिणः । यत्र । अमृतस्य । चक्षणम् ॥ वि । श्रयंताम् । ऋतऽवृधः । द्वारः ।
देवीः । असश्चतः । अद्य । नूनम् । च । यष्टवे ॥ २४ ॥ नक्तोषसा । सुऽपेशसा । अ
स्मिन् । यज्ञे । उप । ह्वये । इदम् । नः । बर्हिः । आऽसदे ॥ ता । सुऽजिह्वौ । उप ह्वये ।
होतारा । दैव्या । कवीइति । यज्ञम् । नः । यक्षताम् । इमम् ॥ इळा । सरस्वती । मही ।
तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदंतु । अस्रिधः ॥ इह । त्वष्टारम् । अग्रियम् ।
विश्वऽरूपम् । उप । ह्वये ॥ ० अव । सृज । वनस्पते । देव । देवेभ्यः । हविः । प्र । दातुः ।
अस्तु । चेतनम् ॥ स्वाहा । यज्ञम् । कृणोतन । इंद्राय । यज्वनः । गृहे । तत्र । देवान् ।
उप । ह्वये ॥ २५ ॥ आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये । देवे
भिः । याहि । यक्षि । च ॥ आ । त्वा । कण्वाः । अहूषत । गृणंति । विप्र । ते । धियः ।
देवेभिः । अग्ने । आ । गहि ॥ इंद्रवायूइति।बृहस्पतिम् । मित्रा।अग्निम् ।पूषणम्।भगम्। आदि
त्यान् । मारुतम् । गणम् ॥ प्र । वः । भ्रियंते । इंदवः।मत्सराः । मादयिष्णवः। द्रप्साः । मध्वः ।

चमूऽसदः ॥ ईळते। त्वाम्।अवस्यवः।कण्वासः।वृक्तऽबर्हिषः।हविष्मंतः। अरंऽकृतः ॥ घृतऽपृ
ष्ठाः। मनःऽयुजः। ये। त्वा।वहंति। वह्नयः। आ। देवान्। सोमंऽपीतये ॥२६॥ तान्। यज
त्रान्। ऋतऽवृधः। अग्ने। पत्नीऽवतः।कृधि। मध्वः। सुऽजिह्व।पायय।ये। यजत्राः ये। ईड्याः।
ते। ते। पिबंतु। जिह्वया। मधोः। अग्ने। वषट्ऽकृति ॥ आकीम्। सूर्यस्य। रोचनात्। वि
श्वान्। देवान्। उषःऽबुधः। विप्रः। होता। इह। वक्षति॥ विश्वेभिः। सोम्यम्। मधु। अग्ने।
इंद्रेण। वायुना। पिब। मित्रस्य। धामंऽभिः ॥ त्वम्। होता। मनुःऽहितः। अग्ने। यज्ञेषु।
सीदसि। सः। इमम्। नः। अध्वरम्। यज।।युक्ष्व। हि। अरुषीः। रथे। हरितः। देव।रोहितः।
ताभिः।देवान्। इह। आ। वह।।२७।। इंद्र। सोमम्। पिब।ऋतुना। आ।त्वा। विशंतु। इंदवः।
मत्सरासः। तत्ऽओकसः ॥ मरुतः। पिबंत। ऋतुना। पोत्रात्। यज्ञम्। पुनीतन। यूयम्। हि।
स्थ ॥ सुऽदानवः।। अभि।यज्ञम्। गृणीहि। नः। ग्रावः। नेष्टरिति। पिब।ऋतुना। त्वम्। हि।
रत्नऽधाः। असि ॥ ० ॥ सादय। योनिषु। त्रिषु। परि। भूष। पिब। ऋतुना ॥ ब्राह्मणात्।
इंद्र। राधसः। पिब। सोमम्। ऋतून्। अनु। तव। इत्। हि। सख्यम्। अस्तृतम् ॥ युवम्।
दक्षम्। धृतऽव्रत। मित्रावरुणा। दुःऽदभम्। ऋतुना। यज्ञम्। आशाथेइति ॥ २८ ॥
द्रविणःऽदाः। द्रविणसः। ग्रावऽहस्तासः। अध्वरे। यज्ञेषु। देवम्। ईळते ॥द्रविणःऽदाः। ददा
तु। नः। वसूनि। यानि। शृण्विरे। देवेषु। ता। वनामहे ॥ द्रविणःऽदाः। पिपीषति। जुहो
त। प्र। च। तिष्ठत। नेष्ट्रात्। ऋतुऽभिः। इष्यत ॥ यत्। त्वा। तुरीयम्। ऋतुभिः। द्रवि

णःऽदः । यजामहे । अधं । स्म । नः । ददिः । भव ॥ अश्विना । पिबंतम् । मधुं । दीद्यंग्नी
इतिदीदिंऽअग्नी । शुचिऽव्रता । ऋतुना । यज्ञऽवाहसा ॥ गार्हऽपत्येन । संत्य । ऋतुना । य
ज्ञऽनीः । असि । देवान् । देवऽयते । यज ॥ २९ ॥ आ । त्वा । वहंतु । हरयः । वृषंणम् ।
सोमंऽपीतये । इंद्र । त्वा । सूरंऽचक्षसः ॥ इमाः । धानाः । घृतऽस्नुवंः । हरीइति । इह । उपं ।
वक्षतः । इंद्रं । सुखऽतंमे । रथे ॥ इंद्रम् । प्रातः।हवामहे। इंद्रम् । प्रऽयति । अध्वरे ।इंद्रं । सो
मस्य । पीतये ॥ उपं । नः । सुतम् । आ । गहि । हरिंऽभिः । इंद्र । केशिऽभिः । सुते । हि ।
त्वा । हवामहे ॥ सः । इमम् । नः । स्तोमम् । आ । गहि । उपं । इदम् । सवंनम् । सुतम् ।
गौरः । न । तृषितः । पिब ॥ ३० ॥ इमे । सोमासः । इंदवः । सुतासः । अधि । बर्हिषि ।
तान् । इंद्र । सहसे । पिब ॥ अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शंऽत
मः । अथं । सोमम् । सुतम् । पिब ॥ विश्वम् । इत् । सवंनम् । सुतम् । इंद्रः । मदा
य । गच्छति । वृत्रऽहा । सोमंऽपीतये ॥ ०॥ कामम् । आ । पृण । गोभिः । अश्वैः । शत
क्रतोइतिशतऽक्रतो । स्तवाम । त्वा । सुऽआध्यः ॥ ३१ ॥ इंद्रावरुणयोः । अहम् । सं
ऽराजोः । अवः । आ । वृणे । ता । नः । मृळातः । ईदृशे ॥ गंतारा । हि । स्थः । अ
वसे । हवम् । विप्रस्य । माऽवंतः । धर्त्तारा । चर्षणीनाम् ॥ अनुऽकामम् । तर्पये
थाम् । इंद्रावरुणा । रायः । आ । ता । वाम् । नेदिष्ठम् । ईमहे ॥ युवाकु । हि । शचीनाम् ।
युवाकु । सुऽमतीनाम् । भूयाम । वाजऽदाव्नाम् ॥ इंद्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्या

नाम् । क्रतुः । भवति । उक्थ्यः ॥ ३२ ॥ तयोः । इत् । अवसा । वयम् । सनेम । नि ।
च । धीमहि । स्यात् । उत । प्रऽरेचनम् ॥ १ ॥ इंद्रावरुणा । वाम् । अहम् । हुवे । चित्रा
य । राधसे । अस्मान् । सु । जिग्युषः । कृतम् ॥ इंद्रावरुणा । नु । नु । वाम् । सिसा
संतीषु । धीषु । आ । अस्मभ्यम् । शर्म्म । यच्छतम् ॥ प्र । वाम् । अश्नोतु । सुऽस्तु
तिः । इंद्रावरुणा । याम् । हुवे । याम् ऋधाथेइति । सधऽस्तुतिम् ॥ ३३ ॥ सोमानम् ।
स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवंतम् । यः । औशिजः ॥ यः रेवान् । यः ।
अमीवऽहा । वसुऽवित् । पुष्टिवर्द्धनः । सः । नः । सिसक्तु । यः । तुरः ॥ मा । नः ।
शंसः । अररुष । धूर्तिः । प्रणक् । मर्त्यस्य । रक्ष । नः । ब्रह्मणः । पते ॥ सः । घ ।
वीरः । न । रिष्यति । यम् । इंद्रः । ब्रह्मणः । पतिः । सोमः । हिनोति । मर्त्यम् ॥ त्वम् ।
तम् । ब्रह्मणः । पते । सोमः । इंद्रः । च । मर्त्यम् । दक्षिणा । पातु । अंहसः ॥ ३४ ॥
सदसः । पतिम् । अद्भुतम् । प्रियम् । इंद्रस्य । काम्यम् । सनिम् । मेधाम् । अयासिषम् ॥
यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपः । चितः । चन । सः । धीनाम् । योः
गम् । इन्वति ॥ आत् । ऋध्नोति । हविःकृतिम् । प्रांचम् । कृणोति । अध्वरम् । होत्रा ।
देवेषु । गच्छति ॥ नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् । दिवः । न ।
सद्मऽमखसम् ॥ ३५ ॥ प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे ।
मरुत्ऽभिः । अग्ने । आ । गहि ॥ नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः ॥

॥ ० ॥ ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः ॥ ० ॥ ये । उग्राः । अर्कं । आनृचुः । अनाधृष्टासः । ओजसा ॥ ० ॥ ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥ ५ ॥ ३६ ॥ ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते० ॥ ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम्० ॥ आ । ये । तन्वंति । रश्मिभिः । तिरः । समुद्रम् । ओजसा ॥ ० ॥ अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु ॥०॥३७॥

॥ इतिऋग्वेदप्रथमाष्टकेप्रथमोध्यायः ॥ ॥ ॥ ॐ ॥ ॥ ॐ ॥

श्रीहयग्रीवायनमः॥१॥अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नधातमः॥ये । इंद्राय।वचःऽयुजा।ततक्षुः।मनसा । हरीइति।शमीभिः।यज्ञम् । आशत॥तक्षन्।नासत्याभ्याम् । परिऽज्मानम्।सुऽखम्।रथम्।तक्षन्।धेनुम्।सबःऽदुघाम्॥युवाना । पितरा।पुनरिति।सत्यऽमंत्राः।ऋजुऽयवः।ऋभवः।विष्टी।अक्रत॥सं।वः।मदासः।अग्मत । इंद्रेण । च।मरुत्वता।आदित्येभिः।च । राजऽभिः ॥१॥ उत । त्यम् । चमसम् । नवम् । त्वष्टुः।देवस्य।निःऽकृतम् । अकर्त । चतुरः।पुनरिति॥ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते । एकंऽएकम् । सुशस्तिऽभिः ॥ अधारयंत । वह्नयः । अभजंत । सुऽकृत्यया । भागम् । देवेषु । यज्ञियम् ॥ २ ॥ इह । इंद्राग्नीइति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि । ता । सोमम् । सोमऽपातमा॥ ता। यज्ञेषु । प्र । शंसत । इंद्राग्नीइति । शुंभत । नरः । ता । गायत्रेषु । गायत ॥ ता । मित्रस्य । प्रऽशस्तये । इंद्राग्नीइति । ता । हवामहे । सोमऽपा । सोमऽपीतये ॥ उग्रा । संता ।

हवामहे । उप । इदम् । सवनम् । सुतम् । इंद्राग्नीइति । आ । इह । गच्छताम् ॥ ता । महांता ।
सदस्पतीइति । इंद्राग्नीइति । रक्षः । उब्जतम् । अप्रजाः । संतु । अत्रिणः । तेन । सत्येन ।
जागृतम् । अधि । प्रऽचेतुने । पदे । इंद्राग्नीइति । शर्म । यच्छतम् ॥ ३ ॥ प्रातःऽयुजा । वि ।
बोधय । अश्विनौ । आ । इह । गच्छताम् । अस्य । सोमस्य । पीतये ॥ या । सुऽरथा । र
थिऽतमा । उभा । देवा । दिविऽस्पृशा । अश्विना । ता । हवामहे ॥ या । वाम् । कशा ।
मधुऽमती । अश्विना । सूनृताऽवती । तया । यज्ञम् । मिमिक्षतम् ॥ नहि । वाम् । अस्ति ।
दूरके । यत्र । रथेन । गच्छथः । अश्विना । सोमिनः । गृहम् ॥ हिरण्यऽपाणिम् । ऊतये । सवि
तारम् । उप ॥ ह्वये । सः । चेत्ता । देवता । पदम् ॥४॥ अपाम् । नपातम् । अवसे । सवितारम् ।
उप । स्तुहि । तस्य । व्रतानि । उश्मसि ॥ विऽभक्तारम् । हवामहे । वसोः । चित्रस्य ॥ राध
सः । सवितारम् । नृऽचक्षसम् ॥ सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः ।
दाता । राधांसि । शुंभति ॥ अग्ने । पत्नीः । इह । आ । वह । देवानाम् । उशतीः । उप । त्वष्टा
रम् । सोमऽपीतये ॥ आ । ग्नाः । अग्ने । इह । अवसे । होत्राम् । यविष्ठ । भारतीम् । वरूत्रीम् ।
धिषणाम् । वह ॥ ५ ॥ अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः । अच्छिं
न्नऽपत्राः । सचंताम् ॥ इह । इंद्राणीम् । उप । ह्वये । वरुणानीम् । स्वस्तये । अग्नायीम् । सो ॥ ७ ॥
मऽपीतये ॥ मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः ।
भरीमऽभिः ॥ तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहंति । धीतिऽभिः । गंधर्वस्य । ध्रु

वे । पदे ॥ स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ॥६॥
अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विऽचक्रमे । पृथिव्याः । सप्त । धामऽभिः ॥
इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् । संऽऊळ्हम् । अस्य । पांसुरे ॥
त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः । अतः । धर्माणि । धारयन् ॥
विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य । युज्यः । सखा ॥ तत् । वि
ष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिविऽइव । चक्षुः । आऽततम् ॥ तत् । विप्रा
सः । विपन्यवः । जागृऽवांसः । सम् । इन्धते । विष्णोः । यत् । परमम् । पदम् । ६ ॥ ७ ॥
तीव्राः । सोमासः । आ । गहि । आशीःऽवन्तः । सुताः । इमे । वायोइति । तान् ।
प्रऽस्थितान् । पिब ॥ उभा । देवा । दिविऽस्पृशा । इन्द्रवायूइति । हवामहे ॥१०॥ इन्द्रवायूइति ।
मनःऽजुवा । विप्राः । हवन्ते । ऊतये । सहस्रऽअक्षा । धियः । पतीइति ॥ मित्रम् । वयम् । हवा
महे । वरुणम् । सोमऽपीतये । जज्ञाना । पूतऽदक्षसा ॥ ऋतेन । यौ । ऋतऽवृधौ । ऋत
स्य । ज्योतिषः । पतीइति । ता । मित्रावरुणा । हुवे ॥ ८ ॥ वरुणः । प्रऽअविता ।
भुवत् । मित्रः । विश्वाभिः । ऊतिऽभिः । करताम् । नः । सुऽराधसः ॥ मरुत्वन्तम् ।
हवामहे । इन्द्रम् । आ । सोमऽपीतये । सऽजूः । गणेन । तृम्पतु ॥ इन्द्रऽज्येष्ठाः । मरु
त्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुतम् । हवम् ॥ हत । वृत्रम् । सुऽदा
नवः । इन्द्रेण । सहसा । युजा । मा । नः । दुःऽशंसः । ईशत ॥ विश्वान् । देवान् । हवा

महे । मरुतः । सोमऽपीतये । उग्राः । हि । पृश्निऽमातरः ॥ ३ ॥ जयताऽइव । तन्यतुः । मरुताम् । एति । धृष्णुया । यत् । शुभम् । याथन । नरः ॥ हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवंतु । नः । मरुतः । मृळयंतु । नः ॥ आ । पूषन् । चित्रऽबर्हिषम् । आघृणे । धरुणम् । दिवः । आ । अज । नष्टम् । यथा । पशुम् । पूषा । राजानम् । आघृणिः । अपऽगूळ्हम् । गुहा । हितम् । अविंदत् । चित्रऽबर्हिषम् ॥ उतोइति । सः । मह्यम् । इंदुऽभिः । षट् । युक्तान् । अनुऽसेसिधत् । गोभिः । यवम् । न चर्कृषत् ॥ १० ॥ अंबयः । यंति । अध्वऽभिः । जामयः । अध्वरिऽयताम् । पृंचतीः । मधुना । पयः ॥ अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह । ताः । नः । हिन्वंतु । अध्वरम् ॥ अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबंति । नः । सिंधुऽभ्यः । कर्त्वम् । हविः ॥ अप्ऽसु । अंतः । अमृतम् । अप्ऽसु । भेषजम् ॥ अपाम् । उत । प्रऽशस्तये । देवाः । भवत । वाजिनः ॥ अप्ऽसु । मे । सोमः । अब्रवीत् । अंतः । विश्वानि । भेषजा । अग्निम् । च । विश्वऽशंभुवम् । आपः । च । विश्वऽभेषजीः ॥ ११ ॥ आपः । पृणीत । भेषजम् । वरूथम् । तन्वे । मम । ज्योक् । च । सूर्यम् । दृशे ॥ इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् । मयि । यत् । अहम् । अभिऽदुद्रोह । यत् । वा । शेपे । उत । अनृतम् ॥ आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि । पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज । वर्चसा ॥ सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा । विद्युः । मे । अस्य । देवाः । इंद्रः । विद्यात् । सह । ऋषिऽभिः ॥

॥ १२ ॥ कस्यं । नूनम् । कतमस्यं । अमृतानाम् । मनामहे । चारुं । देवस्यं । नामं । कः ।
नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥ अग्नेः । वयम् ।
प्रथमस्यं । अमृतानाम् । मनामहे । चारुं । देवस्यं । नामं । सः । नः । मह्यै । अदितये । पु
नः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥ अभि । त्वा । देव । सवितः । ईशानम् ।
वार्याणाम् । सदा । अवन् । भागम् । ईमहे ॥ यः । चित् । हि । ते । इत्था । भगः । शशमानः ।
पुरा । निदः । अद्वेषः । हस्तयोः । दधे ॥ भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव ।
अवसा । मूर्द्धानम् । रायः । आऽरभे ॥ १३ ॥ नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् ।
वयः । चन । अमीइति । पतयंतः । आपुः । न । इमाः । आपः । अनिऽमिषम् । चरंतीः ।
न । ये । वातस्य । प्रऽमिनंति । अभ्वम् ॥ अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तू
पम् । ददते । पूतऽदक्षः । नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मेइति । अंतः । निऽ
हिताः । केतवः । स्युरितिस्युः ॥ उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पंथाम् ।
अनुऽएतवै । ऊंइति । अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽवि
धः । चित् ॥ शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अ
स्तु । बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥
अमीइति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुहं । चित् । दिवा । ईयुः ।
अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चंद्रमाः । नक्तम् । एति ॥ १४ ॥ तत् । त्वा ।

यामि । ब्रह्मणा । वंदमानः । तत् । आ । शास्ते । यजमानः । हविःऽभिः । अहेळमानः ।
वरुण । इह । बोधि । उरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥ तत् । इत् । नक्तम् । तत् ।
दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे । शुनःशेपः । यम् ।
अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥ शुनःशेपः । हि । अह्वत् । गृ
भीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । वि
द्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ अव । ते । हेळः । वरुण । नमःऽभिः । अव ।
यज्ञेभिः । ईमहे । हविःऽभिः । क्षयन् । अस्मभ्यम् । असुर । प्रचेतइतिप्रऽचेतः । राजन् ।
एनांसि । शिश्रथः । कृतानि ॥ उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् ।
वि । मध्यमम् । श्रथय । अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये ।
स्याम ॥ १५ ॥ यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण । व्रतम् । मिनीमसि ।
द्यविऽद्यवि ॥ मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः । मा । हृणानस्य । मन्यवे ॥
वि । मृळीकाय । ते । मनः । रथीः । अश्वम् । न । संऽदितम् । गीःऽभिः । वरुण । सीमहि ॥
परा । हि । मे । विऽमन्यवः । पतंति । वस्यःऽइष्टये । वयः । न । वसतीः । उप ॥ कदा ।
क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे । मृळीकाय । उरुऽचक्षसम् ॥ १६ ॥ तत् ।
इत् । समानम् । आशातेइति । वेनंता । न । प्र । युच्छतः । धृतऽव्रताय । दाशुषे ॥ वेद । यः ।
वीनाम् । पदम् । अंतरिक्षेण । पतताम् । वेद । नावः । समुद्रियः ॥ वेद । मासः । धृतऽव्रतः ।

द्वादंश । प्रजाऽवंतः । वेदं । यः । उपऽजायते ॥ वेदं । वातस्य । वर्तनिम् । उरोः । कृष्वस्यं ।
बृहतः । वेदं । ये । अधिऽआसंते ॥ नि । ससाद । धृतऽव्रंतः । वरुंणः । पस्त्यांसु । आ ।
सांऽराज्याय । सुऽक्रतुः ॥ १७ ॥ अतः । विश्वांनि । अद्भुता । चिकित्वान् । अभि । पश्यति ।
कृतानि । या । च । कर्त्वा ॥ सः । नः । विश्वाहा । सुऽक्रतुः । आदित्यः । सुऽपथां । करत् ।
प्र । नः । आयूंषि । तारिषत् ॥ बिभ्रंत् । द्रापिम् । हिरण्ययम् । वरुंणः । वस्त । निःऽनिर्जम् ।
परि । स्पशः । नि । सेदिरे ॥ न । यम् । दिप्संति । दिप्सवः । न । द्रुह्वाणः । जनानाम् । न ।
देवम् । अभिऽमांतयः ॥ उत । यः । मानुंषेषु । आ । यशः । चक्रे । असांमि । आ । अस्मा
कंम् । उदरेषु । आ ॥ १८ ॥ परां । मे । यंति । धीतयः । गावः । न । गव्यूंतीः । अनुं ।
इच्छंतीः । उरुऽचक्षसम् ॥ सम् । नु । वोचावहै । पुनः । यतः । मे । मधुं । आऽभृतम् । हो
ताऽइव । क्षदंसे । प्रियम् ॥ दर्शम् । नु । विश्वऽदर्शतम् । दर्शम् । रथम् । अधि । क्षमि।एताः ।
जुषत । मे । गिरः ॥ इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय । त्वाम् । अव
स्युः । आ । चके ॥ त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि । सः ।
यामंनि । प्रति । श्रुधि ॥ उत् । उत्ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् । चृत ।
अवं । अधमानि । जीवसे ॥ १९ ॥ वसिष्व । हि । मियेध्य । वस्त्राणि । ऊर्जाम् ।
पते । ० ॥ नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मंऽभिः । अग्ने । दिवित्मंता । वचः ॥
आ । हि । स्म । सूनवे । पिता । आपिः । यजंति । आपये । सखा । सख्ये । वरेण्यः ॥ आ । नः ।

बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा । सीदंतु । मनुषः । यथा ॥ पूर्व्य । होतः । अ
स्य । नः । मंदस्व । सख्यस्य । च । इमाः । ऊंइति । सु । श्रुधि । गिरः ॥ २० ॥ ० । शश्व
ता । तना । देवंऽदेवम् । यजामहे । त्वेइति । इत् । हूयते । हविः ॥ प्रियः । नः । अस्तु ।
विश्पतिः । होता । मंद्रः । वरेण्यः । प्रियाः । सुःऽअग्नयः । वयम् ॥ सुऽअग्नयः । हि । वार्य
म् । देवासः । दधिरे । च । नः । सुऽअग्नयः । मनामहे ॥ अथ । नः । उभयेषाम् । अमृत ।
मर्त्यानाम् । मिथः । संतु । प्रऽशस्तयः ॥ विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इ
दम् । वचः । चनः । धाः । सहसः । यहोइति ॥ २१ ॥ अश्वम् । न । त्वा । वारऽवंतम् । वं
दध्यै । अग्निम् । नमःऽभिः । संऽराजंतम् । अध्वराणाम् ॥ सः । घ । नः । सूनुः । शवसा ।
पृथुऽप्रगामा । सुऽशेवः । मीढ्वान् । अस्माकम् । बभूयात् ॥ सः । नः । दूरात् । च । आसात् ।
च । नि । मर्त्यात् । अघऽयोः । पाहि । सदम् । इत् । विश्वऽआयुः ॥ इमम् । ऊंइति । सु ।
त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् । अग्ने । देवेषु । प्र । वोचः ॥ आ । नः ।
भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्ष । वस्वः । अंतमस्य ॥ २२ ॥ विऽभक्ता ।
असि । चित्रभानोइतिचित्रऽभानो । सिंधोः । ऊर्मौ । उपाके । आ । सद्यः । दाशुषे । क्षरसि ॥
यम् । अग्ने । पृतऽसु । मर्त्यम् । अवाः । वाजेषु । यम् । जुनाः । सः । यंता । शश्वतीः । इ
षः ॥ नकिः । अस्य । सहंत्य । परिऽएता । कयस्य । चित् । वाजः । अस्ति । श्रवाय्यः ॥ सः ।
वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रेभिः । अस्तु । सनिता ॥ जराऽबो ॥१०॥

ध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥ २३ ॥ सः । नः ।
महान् । अनिऽमानः । धूमऽकेतुः । पुरुऽचंद्रः । धिये । वाजाय । हिन्वतु ॥ सः । रेवान्ऽइव ।
विश्पतिः । दैव्यः । केतुः । शृणोतु । नः । उक्थैः अग्निः । बृहत्ऽभानुः ॥ नमः । महत्ऽभ्यः ।
नमः । अर्भकेभ्यः । नमः । युवऽभ्यः । नमः । आशिनेभ्यः । यजाम । देवान् । यदि । श
क्रवाम । मा । ज्यायसः । शंसम् । आ । वृक्षि । देवाः ॥२४॥ यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः ।
भवति । सोतवे । उलूखलऽसुतानाम् । अव । इत् । ऊंइति । इंद्र । जल्गुलः ॥ यत्र । द्वौऽइव ।
जघना । अधिऽसवन्या । कृता । ० ॥ यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते
। ० ॥ यत्र । मंथाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव । ० ॥ यत् । चित् । हि । त्वम् । गृहे
गृहे । उलूखलक । युज्यसे । इह । द्युमत्ऽतमम् । वद । जयताऽइव । दुंदुभिः ॥२५॥ उत । स्म ।
ते । वनस्पते । वातः । वि । वाति । अग्रम् । इत् । अथोइति । इंद्राय । पातवे । सुनु । सोमम् । उलू
खल ॥ आयजीइत्याऽयजी । वाजऽसातमा । ता । हि । उच्चा । विऽजर्भृतः । हरीइवेतिहरीऽइव । अंधां
सि । बप्सता ॥ ता । नः । अद्य । वनस्पतीइति । ऋष्वौ । ऋष्वेभिः । सोतृऽभिः । इंद्राय । मधुऽमत् ।
सुतम् ॥ उत् । शिष्टम् । चम्वोः । भर । सोमम् । पवित्रे । आ । सृज । नि । धेहि । गोः । अधि ।
त्वचि ॥ २६ ॥ ० ॥ सत्य । सोमऽपाः । अनाशस्ताःऽइव । स्मसि ॥ ० । शंसय । गोषु । अ
श्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ । शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना । ० ॥ नि ।
स्वापय । मिथुऽदृशा । सस्ताम् । अबुध्यमानेइति । ० ॥ ससंतु । त्याः । अरातयः । बोधं

तु । शूर । रातयः ।०॥ सम्।इंद्र । गर्दभम् । मृण । नुवंतम् । पापया । अमुया ।०॥पतांति।कुंडृणा
च्या । दूरम् । वातः । वनात् । अधि ।०॥ सर्वम्।परिऽक्रोशम् । जहि । जंभय।कृकदाश्वम् ।०
॥ २७ ॥ आ । वः । इंद्रम् । क्रिविम् । यथा । वाजऽयंतः । शतक्रतुम् । मंहिष्ठम्।सिंचे । इंदुऽ
ऽभिः ॥ शतम् । वा । यः । शुचीनाम् । सहस्रम् । वा । संऽआशिराम् । आ । इत् । ऊंइति ।
निम्नम् । न । रीयते ॥ सम् ॥ यत् । मदाय । शुष्मिणे । एना । हि । अस्य । उदरे । समुद्रः ।
न । व्यचः । दधे ॥ अयम् । ऊंइति । ते । सम् । अतसि । कपोतःऽइव । गर्भऽधिम् । वचः ।
तत् । चित् । नः । ओहसे ॥ स्तोत्रम् । राधानाम् ॥ पते । गिर्वाहः ॥ वीर । यस्य । ते । विऽ
भूतिः । अस्तु । सूनृता ॥ २८ ॥ ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतो
इतिशतऽक्रतो । सम् । अन्येषु । ब्रवावहै ॥ योगेऽयोगे । तवःऽतरम् । वाजेवाजे । हवामहे ।
सखायः । इंद्रम् । ऊतये ॥ आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः।ऊतिभिः । वाजे
भिः । उप । नः । हवम् ॥ अनु । प्रत्नस्य । ओकसः । हुवे।तुविऽप्रतिम्।नरम्।यम् । ते । पूर्वम् ।
पिता । हुवे ॥ तम् । त्वा । वयम् । विश्वऽवार । आ । शास्महे । पुरुऽहूत । सखे । वसोइति।
जरितृऽभ्यः ॥ २९ ॥ अस्माकम् । शिप्रिणीनाम् । सोमऽपाः । सोमऽपाव्नाम् । सखे । वज्रि
न् । सखीनाम् ॥ तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु । यथा । ते ।
उश्मसि । इष्टये ॥ रेवतीः । नः । सधऽमादे । इंद्रे । संतु । तुविऽवाजाः । क्षुऽमंतः । याभिः ।
मदेम ॥ आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णोइति । इयानः । ऋ।

णोः । अक्षम्।न । चक्र्योः ॥ आ । यत् । दुवः । शतक्रतोइतिशतऽक्रतो । आ । कामम् । ज
रितॄणाम् । ऋणोः । अक्षम् । न । शचीभिः ॥ ३० ॥ शश्वत् । इंद्रः । पोप्रुथत्ऽभिः । जि
गाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि । सः । नः । हिरण्यऽरथम् । दंसनाऽवान् ।
सः । नः । सनिता । सनये । सः । नः । अदात् ॥ आ । अश्विनौ । अश्वऽवत्या । इ
षा । यातम् । शवीरया । गोमत् । दस्रा । हिरण्यऽवत् ॥ समानऽयोजनः । हि । वाम् ।
रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ॥ नि । अघ्न्यस्य । मूर्द्धनि । चक्र
म् । रथस्य । येमथुः । परि । द्याम् । अन्यत् । ईयते ॥ कः । ते । उषः । कधऽप्रिये । भुजे ।
मर्तः । अमर्त्ये । कम् । नक्षसे । विभाऽवरि ॥ वयम् । हि । ते । अमन्महि । आ । अंतात् ।
आ । पराकात् । अश्वे । न । चित्रे । अरुषि ॥ त्वम् । त्येभिः । आ । गहि । वाजेभिः । दु
हितः । दिवः । अस्मेइति । रयिम् । नि । धारय ॥ ३१ ॥ त्वम् । अग्ने । प्रथमः । अंगिराः ।
ऋषिः । देवः । देवानाम् । अभवः । शिवः । सखा । तव । व्रते । कवयः । विद्मनाऽअपसः ।
अजायंत । मरुतः । भ्राजत्ऽऋष्टयः ॥ ० । अंगिरःऽतमः । कविः । देवानाम् । परि । भूष
सि । व्रतम् । विऽभुः । विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् ।
आयवे ॥ ० । मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते । अरेजेताम् । रोदसीइ
ति । होतृऽवूर्ये । असघ्नोः । भारम् । अयजः । महः । वसोइति ॥ त्वम् । अग्ने । मनवे । द्या
म् । अवाशयः । पुरूरवसे । सुऽकृते । सुकृत्ऽतरः । श्वात्रेण । यत् । पित्रोः । मुच्यसे । परि ।

आ । त्वा । पूर्वम् । अनयन् । आ । अपरम् । पुनरिति ॥ त्वम् । अग्ने । वृषभः । पुष्टिऽवर्द्धं
नः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः । यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽ
॥१२॥ आयुः । अग्रे । विशः । आऽविवासति ॥ ३२ ॥ त्वम् । अग्ने । वृजिनऽवर्त्तनिम् । नरम् । स
क्मन् । पिपर्षि । विदथे । विऽचर्षणे । यः । शूरऽसाता । परिऽतक्म्ये । धने । दभ्रेभिः । चित् ।
सम्ऽऋता । हंसि । भूयसः ॥ त्वम् । तम् । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्त्तम् । दधासि ।
श्रवसे । दिवेऽदिवे । यः । ततृषाणः । उभयाय । जन्मने । मयः । कृणोषि । प्रयः । आ । च ।
सूरये । त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् । कृणुहि । स्तवानः । ऋध्या
म । कर्म्म । अपसा । नवेन । देवैः । द्यावापृथिवीइति । प्र । अवतम् । नः ॥ ० । पित्रोः ।
उपऽस्थे । आ । देवः । देवेषु । अनवद्य । जागृविः । तनूऽकृत् । बोधि । प्रऽमतिः । च । कार
वे । त्वम् । कल्याण । वसु । विश्वम् । आ । ऊपिषे ॥ त्वम् । अग्ने । प्रऽमतिः । त्वम् । पिता ।
असि । नः । त्वम् । वयःऽकृत् । तव । जामयः । वयम् । सम् । त्वा । रायः । शतिनः । सम् । सह
स्रिणः । सुऽवीरम् । यंति । व्रतऽपाम् । अदाभ्य ॥ ३३ ॥ त्वाम् । अग्ने । प्रथमम् । आ
युम् । आयवे । देवाः । अकृण्वन् । नहुषस्य । विश्पतिम् । इळाम् । अकृण्वन् । मनुषस्य ।
शासनीम् । पितुः । यत् । पुत्रः । ममकस्य । जायते ॥ ० । तव । देव । पायुऽभिः । मघोनः ।
रक्ष । तन्वः । च । वंद्य । त्राता । तोकस्य । तनये । गवाम् । असि । अनिऽमेषम् । ॥१२॥
रक्षमाणः । तव । व्रते ॥ त्वम् । अग्ने । यज्यवे । पायुः । अंतरः । अनिषंगाय । चतुःऽअक्षः ।

इध्यसे । यः । रातऽहव्यः । अवृकाय । धायसे । कीरेः । चित् । मंत्रम् । मनसा । वनोषि ।
तम् । त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः । परमम् । वनोषि । तत् ।
आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र । पाकम् । शास्सि । प्र । दिशः । वि
दुःऽतरः ॥ त्वम् । अग्ने । प्रयतऽदक्षिणम् । नरम् । वर्म्मऽइव । स्यूतम् । परि । पासि । विश्व
तः । स्वादुऽक्षद्मा । यः । वसतौ । स्योनऽकृत् । जीवऽयाजम् । यजते । सः । उपऽमा । दिवः
॥ ३४ ॥ इमाम् । अग्ने । शरणिम् । मीमृषः । नः । इमम् । अध्वानम् । यम् । आगाम । दूरा
त् । आपिः । पिता । प्रऽमतिः ॥ सोम्यानाम् । भृमिः । असि । ऋषिऽकृत् । मर्त्यानाम् ॥ म
नुष्वत् । अग्ने । अंगिरस्वत् । अंगिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे । अच्छ । या
हि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥ एतेन ।
अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि ।
अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ॥ ३५ ॥ इंद्रस्य । नु ।
वीर्याणि । प्र । वोचम् । यानि । चकार । प्रथमानि । वज्री । अहन् । अहिम् । अनु । अपः ।
ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम्॥अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा ।
अस्मै । वज्रम् । स्वर्यम् । ततक्ष । वाश्राःऽइव । धेनवः । स्यंदमानाः । अंजः । समुद्रम् । अ
व । जग्मुः । आपः ॥ वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ।
आ । सायकम् । मघऽवा । अदत्त । वज्रम् अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ यत् ।

इंद्र । अहंन् प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत् । मायाः ।
आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥ अहं
न् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इंद्रः । वज्रेण । महता । वधेन । स्कंधांसिऽइव । कुलि
शेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥ ३६ ॥ अयोद्धाऽइव । दुःऽमदः ।
आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । संऽऋतिम् ।
वधानाम् । सम् ॥ रुजानाः । पिपिषे । इंद्रऽशत्रुः ॥ अपात् । अहस्तः । अपृतन्यत् । इंद्रम् ।
आ । अस्य । वज्रम् । अधि । सानौ । जघान । वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् ।
पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ नदम् । न । भिन्नम् । अमुया । शयानम् । मनः ।
रुहाणाः । अति । यंति । आपः । याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् ।
अहिः । पत्सुतःऽशीः । बभूव ॥ नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इंद्रः । अस्याः । अव ।
वधः । जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न । धे
नुः ॥ अतिष्ठंतीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य ।
निण्यम् । वि । चरंति । आपः । दीर्घम् । तमः । आ । अशयत् । इंद्रऽशत्रुः ॥३७॥ दासऽप
त्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः । अपाम् । बिलं
म् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥ अश्व्यः । वा
रः । अभवः । तत् । इंद्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः । अजयः । गाः ।

अजंयः । शूर । सोमंम् । अवं । असृजः । सर्त्तवे । सप्त । सिंधूंन् ॥ न । अस्मै । विऽद्युत् । न।
तन्यतुः । सिसेध । न । याम् । मिहंम् । अकिरत् । ह्रादुनिम्।च । इंद्रः । च । यत् । युयुधाते
इति । अहिः । च । उत । अपरीभ्यः । मघऽवां । वि । जिग्ये ॥ अहेः । यातारंम् । कम् ।
अपश्यः । इंद्र । हृदि । यत् । ते । जघ्नुषः । भीः । अगंच्छत् । नवं । च । यत् । नवतिम् ।
च । स्रवंतीः । श्येनः । न । भीतः । अतंरः । रजांसि ॥ इंद्रः । यातः । अवंऽसितस्य । राजा ।
शमंस्य । च । शृंगिणंः । वज्रंबाहुः । सः । इत् । ऊंइति । राजा । क्षयति । चर्षणीनाम् । अ
रान् । न । नेमिः । परि । ता । बभूव ॥ ३८ ॥ इतिऋग्वेदप्रथमाष्टकेद्वितीयोऽध्यायः ॥ १ ॥ २ ॥
आ । इत । अयांम । उपं । गव्यंतः । इंद्रंम् । अस्माकंम् । सु । प्रऽमंतिम् । ववृधाति । अनामृणः ।
कुवित् । आत् । अस्य । रायः । गवांम् । केतंम् । परंम् । आऽवर्जते । नः ॥ उपं । इत् ।
अहम् । धनऽदाम् । अप्रंतिऽइतम् । जुष्टांम् । न । श्येनः । वसतिम् । पतामि । इंद्रंम् । नम
स्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृभ्यः । हव्यः । अस्ति । यामंन् ॥ नि । सर्वऽसेनः ।
इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्यं । वष्टि । चोष्कूयमाणः । इंद्र ।
भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ वधीः । हि । दस्युम् । ध
निनंम् । घनेनं । एकः । चरंन् । उपऽशाकेभिः । इंद्र । धनोः । अधि । विषुणक् । ते । वि ।
आयन् । अयंज्वानः । सनकाः । प्रऽइंतिम् । ईयुः ॥ परां । चित् । शीर्षा । ववृजुः । ते ।
इंद्र । अयंज्वानः । यज्वंऽभिः । स्पर्धमानाः । प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अ

वतान् । अधमः । रोदंस्योः ॥ १ ॥ अयुयुत्सन् । अनवद्यस्यं । सेनांम् । अयातयंत । क्षितयः ।
नवंऽग्वाः । वृषऽयुधः । न । वध्रंयः । निःऽअंष्टाः । प्रवत्ऽभिः ॥ इंद्रांत् । चितयंतः । आयन् ॥
त्वम् । एतान् । रुदतः । जक्षतः । च । अयोधयः । रजसः । इंद्र । पारे । अवं । अदहः ।
दिवः । आ । दस्युंम् । उच्चा । प्र । सुन्वतः । स्तुवतः । शंसम् । आवः ॥ चक्राणासः । परिऽन
हम् । पृथिव्याः । हिरंण्येन । मणिनां । शुंभमानाः । न । हिन्वानासः । तितिरुः । ते । इंद्रम् ।
परि । स्पशः । अदधात् । सूर्येण ॥ परि । यत् । इंद्र । रोदसीइति । उभेइति अबुंभोजीः । महिना ।
विश्वतः । सीम् । अमन्यमानान् । अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युंम् । इं
द्र ॥ न । ये । दिवः । पृथिव्याः । अंतम् । आपुः । न मायाभिः । धनऽदाम् । परिऽअभूवन् । यु
जम् । वज्रम् । वृषभः । चक्रे । इंद्रः । निः । ज्योतिषा । तमसः । गाः । अधुक्षत् ॥ २ ॥ अनुं ।
स्वधाम् । अक्षरन् । आपः । अस्य । अवर्द्धत । मध्ये । आ । नाव्यानाम् । सध्रीचीनेन । म
नसा । तम् । इंद्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥ नि । अविध्यत् । इलीबि
शस्य । दृह्ला । वि । शृंगिणम् । अभिनत् । शुष्णम् । इंद्रः । यावत् । तरः । मघऽवन् यावत् ।
ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥ अभि । सिध्मः । अजिगात् । अस्य । श
त्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इंद्रः । प्र ।
स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ आवः । कुत्सम् । इंद्र । यस्मिन् । चाकन् । प्र । आ
वः । युध्यंतम् । वृषभम् । दशंऽद्युम् । शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः ।

नृऽसह्याय । तस्थौ ॥ आवः । शर्मम् । वृषभम् । तुग्र्यांसु । क्षेत्रऽजेषे । मघऽवन् । श्विन्यम्।
गाम् । ज्योक् । चित् । अत्रं । तस्थिऽवासः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अक
रित्यंकः ॥३॥ त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः। वाम् । यामः । उत। रा
तिः । अश्विना । युवोः । हि । यंत्रम् । हिम्याऽइव । वाससः । अभिऽआयंसेन्यां । भवतम् ।
मनीषिऽभिः ॥ त्रयः । पवयः । मधुऽवाहने । रथे । सोमस्य । वेनाम् । अनुं । विश्वे । इत् । वि
दुः । त्रयः । स्कंभासः । स्कभितासः । आऽरभे । त्रिः । नक्तम् । याथः । त्रिः । ऊंइतिं । अ
श्विना । दिवा । समाने । अहंन् । त्रिः । अवद्य । गोहना । त्रिः । अद्य । यज्ञम् । मधुना ।
मिमिक्षतम् । त्रिः । वाजऽवतीः । इषः । अश्विना।युवम् । दोषाः।अस्मभ्यम् । उषसः । च । पि
न्वतम् ॥ त्रिः । वर्तिः । यातम् । त्रिः । अनुंऽव्रते । जनें।त्रिः।सुप्रऽअव्ये।त्रेधाऽ इव। शिक्षत
म् । त्रिः । नांद्यम् । वहतम्।अश्विना।युवम्।त्रिः।देवऽताता। त्रिः।पृक्षः।अस्मेइतिं।अक्षराऽइव।
पिन्वतम् ॥ त्रिः । नः । रयिम् । वहतम् । अश्विना । युवम् । त्रिः । उत । अवतम् ।
धियः । त्रिः । सौभगऽत्वम् । त्रिः । उत । श्रवांसि । नः । त्रिऽस्थम् । वाम् । सूरे । दुहि
ता । आ । रुहत् । रथम् ॥ त्रिः ०। नः । अश्विना । दिव्यानि । भेषजा । त्रिः ।
पार्थिवानि । त्रिः । ऊंइतिं । दत्तम् । अत्ऽभ्यः । ओमानम् । शंऽयोः । ममकाय । सूनवे ।
त्रिऽधातु । शर्म्म । वहतम् । शुभः । पतीइतिं ॥ ४ ॥ ० । यजता । दिवेऽदिवे । परि । त्रिऽ
धातु । पृथिवीम् । अशायतम् । तिस्रः । नासत्या।रथ्या । पराऽवतः । आत्माऽइव । वातः।

स्वसराणि । गच्छतम् ॥ त्रिः । अश्विना । सिंधुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः ।
त्रेधा।हविः । कृतम् । तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकम् । रक्षेथेइति ।
द्युऽभिः । अक्तुऽभिः । हितम् ॥ क्व । त्री । चक्रा । त्रिऽवृतः । रथस्य । क्व । त्रयः । वंधुरः ।
ये । सऽनीळाः । कदा । योगः । वाजिनः । रासभस्य । येन । यज्ञम् । नासत्या । उपऽयाथः॥
आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः ।
युवोः । हि । पूर्वम् । सविता । उषसः । रथम् । ऋताय । चित्रम् । घृतऽवंतम् । इष्यति॥आ ।
नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम् । मधुऽपेयम् । अश्विना ।
प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः भवतम् ॥
सचाऽभुवा । आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् । वहतम् । सुऽ
वीरम् । शृण्वंता । वाम् । अवसे । जोहवीमि । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ ५ ॥
ह्वयामि । । अग्निम् । प्रथमम् । स्वस्तये । ह्वयामि । मित्रावरुणौ । इह । अवसे । ह्व
यामि । रात्रीम् । जगतः । निऽवेशनीम्।ह्वयामि । देवम् । सवितारम् । ऊतये॥ आ। कृष्णेन ।
रजसा । वर्तमानः । निऽवेशयन् ।अमृतम् । मर्त्यम् । च । हिरण्ययेन । सविता । रथेन । आ।
देवः । याति । भुवनानि पश्यन् ॥ याति । देवः।प्रऽवता।याति । उत्ऽवता । याति।शुभ्राभ्याम् ।
यजतः । हरिऽभ्याम् । आ । देवः।याति।सविता।पराऽवतः।अप।विश्वा ।दुःऽइता । बाधमानः ।
अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहंतम् । आ । अस्था

त् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥ वि । जनान् । श्या
वाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः । शश्वत् । विशः । सवितुः । दैव्य
स्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था ।
एका । यमस्य । भुवने । विराषाट् । आणिम् । न । रथ्यम् । अमृता । अधि । तस्थुः । इह ।
ब्रवीतु । यः । ऊँ इति । तत् । चिकेतत् ॥ ६ ॥ वि । सुऽपर्णः । अंतरिक्षाणि । अख्यत् । ग
भीरऽवेपाः । असुरः । सुऽनीथः । क्व । इदानीम् । सूर्यः । कः । चिकेत । कतमाम् द्याम् ।
रश्मिः । अस्य । आ । ततान ॥ अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री ।
धन्व । योजना । सप्त । सिंधून् । हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् ।
रत्ना । दाशुषे । वार्याणि ॥ हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी
इति । अंतः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा ।
द्याम् । ऋणोति ॥ हिरण्यहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अ
र्वाङ् । अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥ ये ।
ते । पंथाः । सवितः । पूर्व्यासः । अरेणवः । सुऽकृताः । अंतरिक्षे । तेभिः । नः । अद्य । पथिऽ
भिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ७ ॥ प्र । वः । यह्वम् । पुरूणा
म् । विशाम् । देवऽयतीनाम् । अग्निम् । सुऽउक्तेभिः । वचःऽभिः । ईमहे । यम् । सीम् । इत् ।
अन्ये । ईळते ॥ जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मंतः । विधेम । ते । सः । त्वम् ।

नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ॥ प्र । त्वा । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् । महः । ते । सतः । वि । चरन्ति । अर्चयः । दिवि । स्पृशन्ति । भानवः ॥ देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते । विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ॥ मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि । त्वेइति । विश्वा । सम्ऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ८ ॥ त्वेइति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः । ० । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ॥ तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते । होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः । अति । स्रिधः ॥ घ्नन्तः । वृत्रम् । अतरन् । रोदसीइति । अपः । उरु । क्षयाय । चक्रिरे । भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रन्दत् । अश्वः । गोऽइष्टिषु ॥ सम् । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः । वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त । दर्शतम् ॥ यम् । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठम् । हव्यऽवाहन । यम् । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतम् । यम् । वृषा । यम् । उपऽस्तुतः ॥ ९ ॥ यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि । तस्य । प्र । इषः । दीदियुः । तम् । इमाः । ऋचः । तम् । अग्निम् । वर्धयामसि ॥ रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् । त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ ऊर्ध्वः । ऊंइति । सु । नः ।

ऊतये । तिष्ठं । देवः । न । सविता । ऊर्ध्वः । वाजस्य । सनिता । यत् । अंजिऽभिः । वाघत्ऽ
भिः । विऽह्वयां । महे ॥ ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुनां । विश्वंम् । सम् । अत्रि
णंम् । दह । कृधि । नः । ऊर्ध्वान् । चरथांय । जीवसें । विदाः । देवेषुं । नः । दुवः ॥ पाहि ।
नः । अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः । पाहि । रिषतः । उत । वा । जिघांसतः । बृहंद्भा
नोइतिबृहंत्भानो । यविष्ठ्य ॥ १० ॥ घनाऽइव । विष्वंक् । वि । जहि । अराव्णः । तपुःऽजं
भ । यः । अस्मऽध्रुक् । यः । मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा । नः । सः । रिपुः ।
ईशत ॥ अग्निः । वव्ने । सुऽवीर्य्यम् । अग्निः । कण्वाय । सौभंगम् । अग्निः । प्र । आवत् ।
मित्रा । उत । मेध्यंऽअतिथिम् । अग्निः । साता । उपऽस्तुतम् ॥ अग्निना । तुर्वशंम् । यदुंम् ।
पराऽवतः । उग्रऽदेवम् । हवामहे । अग्निः । नयत् । नवंऽवास्त्वम् । बृहत्ऽरंथम् । तुर्वीतिम् ।
दस्यवे । सहः ॥ निः । त्वाम् । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते । दीदेथ । क
ण्वे । ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति । कृष्टयः ॥ त्वेषासः । अग्नेः । अमंऽवन्तः । अ
र्चयः । भीमासः । न । प्रतिऽइतये । रक्षस्विनः । सदम् । इत् । यातुऽमावतः । ० ॥ ११ ॥
क्रीळम् । वः । शर्द्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वाः । अभि । प्र । गायत ॥
ये । पृषतीभिः । ऋष्टिऽभिः । साकम् । वाशीभिः । अंजिऽभिः । अजायन्त । स्वऽभानवः ॥
इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋंजते ॥
प्र । वः । शर्द्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे । देवत्तम् । ब्रह्म । गायत ॥ प्र । शंस ।

गोषु । अध्न्यम् । कीळम् । यत् । शर्द्धः । मारुतम् । जंभे । रसस्य । ववृधे ॥ १२ ॥ कः ।
वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः । यत् । सीम् । अंतम् । न । धूनुथ ॥
नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः । येषाम् ।
अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः । भिया । यामेषु । रेजते ॥ स्थिरम् । हि । जान
म् । एषाम् । वयः । मातुः । निःऽएतवे । यत् । सीम् । अनु । द्विता । शवः ॥ उत् । ऊंइति ।
त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ॥१३॥ त्यम् ।
चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् । प्र । च्यवयंति । यामऽभिः ॥ मरु
तः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन । गिरीन् । अचुच्यवीतन ॥ यत् । ह ।
यांति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ॥ प्र । या
त । शीभम् । आशुऽभिः । संति । कण्वेषु । वः । दुवः । तत्रोइति । सु । मादयाध्वै ॥ अस्ति ।
हि । स्म । मदाय । वः । स्मसि । स्म । वयम् । एषाम् । विश्वम् । चित् । आयुः । जीवसे
॥ १४ ॥ कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽब
र्हिषः ॥ क्व । नूनम् । कत् । वः । अर्थम् । गंत । दिवः । न । पृथिव्याः । क्व । वः । गावः ।
न । रण्यंति ॥ क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता । क्वो३इति । विश्वानि ।
सौभगा ॥ यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥

मोइति । सु । नः । पराऽपरा । निःऽर्ऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ॥ सत्य
म् । त्वेषाः । अमऽवंतः । धन्वन् । चित् । आ । रुद्रियासः । मिहम् । कृण्वंति । अवाताम् ॥ वा
श्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । अस
र्जि ॥ दिवा । चित् । तमः । कृण्वंति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउंदंति ॥
अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजंत । प्र । मानुषाः ॥ १६ ॥
मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ॥
स्थिराः वः । संतु । नेमयः । रथाः । अश्वासः । एषाम् । सुऽसंस्कृताः । अभीशवः । अच्छ ।
वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् । अग्निम् । मित्रम् । न । दर्शतम् ॥ मिमीहि ।
श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रम् । उक्थ्यम् ॥ वंदस्व । मारुतम् ।
गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मेऽइति । वृद्धाः । असन् । इह ॥ १७ ॥ प्र ।
यत् । इत्था । पराऽवतः । शोचिः । न । मानम् । अस्यथ । कस्य । क्रत्वा । मरुतः । कस्य
वर्पसा । कम् । याथ । कम् । ह । धूतयः ॥ स्थिरा । वः । संतु । आयुधा । पराऽनुदे । वीळु ।
उत । प्रतिऽस्कभे । युष्माकम् । अस्तु । तविषी । पनीयसी । मा । मर्त्यस्य । मायिनः ॥ परा ।
ह । यत् । स्थिरम् । हथ । नरः । वर्तयथ । गुरु । वि । याथन । वनिनः । पृथिव्याः । वि । आ
शाः । पर्वतानाम् ॥ नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः ।०।
तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ प्र । वेपयंति । पर्वतान् । वि । विंचंति । वन

स्पर्तीन् । प्रोइति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥ १८ ॥ उपो
इति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः । आ । वः । यामाय । पृथिवी ।
॥१८॥ चित् । अश्रोत् । अबीभयंत । मानुषाः ॥ आ । वः । मक्षु । तनाय । कम् । रुद्राः । अवः । अ०३
वृणीमहे । गंत । नूनम् । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ॥ युष्माऽइं
षितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा ।
वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ असामि । हि । प्रऽयज्यवः । कण्वम् । दद ।
प्रऽचेतसः । असामिऽभिः । मरुतः । आ । नः । ऊतिऽभिः । गंत । वृष्टिम् । न । विऽद्युतः ॥
असामि । ओजः । बिभृथ । सुऽदानवः । असामि । धूतयः । शवः । ऋषिऽद्विषे । मरुतः ।
परिऽमन्यवे । इषुम् । न । सृजत । द्विषम् ॥ १९ ॥ उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयंतः ।
त्वा । ईमहे । उप । प्र । यंतु । मरुतः । सुऽदानवः । इंद्र । प्राशूः । भव । सचा ॥ त्वाम् । इत् ।
हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते । सुऽवीर्य्यम् । मरुतः । आ । सुऽअश्व्यम् ।
दधीत । यः । वः । आऽचके ॥ प्र । एतु । ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता । अ
च्छ । वीरम् । नर्य्यम् । पंक्तिऽराधसम् । देवाः । यज्ञम् । नयंतु । नः ॥ यः । वाघते । ददाति ।
सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः । तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे ।
सुऽप्रतूर्तिम् । अनेहसम् ॥ प्र । नूनम् । ब्रह्मणः । पतिः । मंत्रम् । वदति । उक्थ्यम् । यस्मिन् । ॥१८॥
इंद्रः । वरुणः । मित्रः । अर्य्यमा । देवाः । ओकांसि । चक्रिरे ॥ २० ॥ तम् । इत् । वोचेम ।

ॐनमोनारायणाय ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्योनमः ॥ हरिः ॐ ॥ नारायणंनिखिलपू
र्णगुणार्णमुच्चसूर्यामितद्युतिमशेषनिरस्तदोषम् ॥ सर्वेश्वरंगुरुमजेशनुतंप्रणम्यवक्ष्याम्यृगर्थमतितुष्टिकरंत
दस्य ॥ ओमशेषगुणाधारइतिनारायणोऽप्यसौ ॥ पूर्णोभूतिवरोनंतसुखोयद्व्याहृतीरितः॥ गुणैस्ततःप्रसवि
तावरणीयोगुणोन्नतेः ॥ भारतीज्ञानरूपत्वाद्भर्गोध्येयोऽखिलैर्जनैः ॥ प्रेरकोऽशेषबुद्धीनांसगायत्र्यर्थईरि
तः ॥ ६ ॥ सपूर्णत्वात्पुमान्नामपौरुषेसूक्तईरितः ॥ सएवाखिलवेदार्थःसर्वशास्त्रार्थएवच ॥ सएवसर्वश
ब्दार्थइत्याहोपनिषत्परा ॥ तावाएताऋचइतिविशेषेणाप्यृगर्थताम् ॥ योदेवानामितिश्रुत्यादेवनाम्नांविशे
षतः ॥ स्पष्टत्वात्तद्गतत्वेन ॥७॥ तत्राहाग्रेऽग्निनामकम् ॥ अग्रणीत्वंयदग्नित्वमित्यग्रेनामतद्भवेत् ॥ एव

ॐनमोनारायणाय ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्योनमः ॥ हरिः ॐ ॥ अ॒
ग्निमी॑ळेपु॒रोहि॑तंय॒ज्ञस्य॑दे॒वमृ॒त्विज॑म् ॥ होता॑रंरत्न॒धात॑मम् ॥ १ ॥ अ॒ग्निःपूर्वे॑भि॒रृषि॑
भि॒रीड्यो॒नूत॑नैरु॒त ॥ सदे॒वाँएहव॑क्षति ॥ २ ॥ अ॒ग्निना॑र॒यिम॑श्नव॒त्पोष॑मे॒वदि॒वेदि॑वे ॥

मेवाहभगवान्निरुक्तिंबादरायणः ॥ यथैवाग्न्यादयःशब्दाःप्रवर्तंतेजनार्दने ॥ तथानिरुक्तिंवक्ष्यामोज्ञानि
नांज्ञानसिद्धये ॥ इतितेनाग्निशब्दोयमयएवाभिपूज्यताम् ॥ अग्र्यत्वमग्रनेतृत्वमत्तिमंगांगनेतृताम् ॥
आहतंस्तौम्यशेषस्यपूर्वमेवहितंप्रभुम् ॥ ऋत्विक्क्रियामकत्वेनयज्ञानामृत्विजंसदा ॥ द्योतनाद्द्विजयात्कां
त्यास्तुत्याव्यवहृतेरपि ॥ गत्यारत्याचदेवाख्यंहोतृसंस्थंविशेषतः ॥ अग्निसंस्थेनरूपेणयतोग्निर्होतृदेवता ॥
इंद्रियाग्निषुचार्थानांयद्धोताहोतृनामकः ॥ रतिधारकोत्तमत्वात्सरत्नधातमईरितः ॥ १ ॥ सपूर्वैर्नू
तनैरेष्यैर्विज्ञानादृषिनामकैः ॥ ईड्योदेवादिभिस्सर्वैस्सचदेवानिहानयेत् ॥ २ ॥ तेनैवरयिमाप्नोति

वित्तंविद्याधनात्मकम् ॥ दिवसेदिवसेनित्यंपुष्टिमेवनहीनताम् ॥ यशश्वपुत्रसंयुक्तंवीर्यवत्तममेववा ॥ ३ ॥ यंयज्ञंपरितोभूत्वारक्षसित्वंसदैवच ॥ विधिमार्गस्थितंदेवान्सएवामोत्यसंशयम् ॥ सोऽखिलयहणप्रज्ञःसद्गुणैःसंततोऽखिलम् ॥ यमयत्यग्यकीर्तीनामुत्तमोविबुधैःसह ॥ आगंताखिलभक्तानांपूजास्वीकारतत्परः ॥ ५ ॥ १ ॥ यजमानाययद्भद्रंकर्तुमिच्छसिसत्प्रिय ॥ त्वच्चेष्टयैवकर्माणिवर्तयित्वातदीहनम् ॥ तवैवसत्यमंगानांरसयद्वह्निगोहरिः ॥ अंगिराअंगिरःपुत्रोयतोऽग्निरभवत्कचित् ॥ ६ ॥ वस्तर्दिनमहोरात्रमभीष्टंप्राणिनांसदा ॥ अल्पाअपिवयंबुद्ध्यात्वामुच्चगुणमीश्वरम् ॥ उपयाममनःकर्मवाग्भिस्त्वन्नमसंभराः

यशसंवीरवत्तमम् ॥ ३ ॥ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि ॥ सइद्देवेषुगच्छति ॥ ४ ॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः॥देवोदेवेभिरागमत्॥५॥१॥यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि॥तवेत्तत्सत्यमंगिरः ॥६॥उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयम्॥नमोभरंतएमसि॥७॥ राजंतमध्वराणांगोपामृतस्यदीदिविम्॥वर्धमानंस्वेदमे॥८॥सनःपितेवसूनवेग्नेसूपायनोभव ॥ सचस्वानःस्वस्तये॥९॥२॥१॥वायवायाहिदर्शतेमेसोमाअरंकृताः॥तेषांपाहिश्रुधीहवम्॥१॥

॥ ७ ॥ देदीप्यमानंस्वेसद्मन्यध्वरेशंसदावृधम् ॥ यथार्थज्ञानगोपंत्वामुपेमसि ॥ ८ ॥ पितेवनः ॥ सूपाश्रयोभवत्वंचयद्वदौरससूनवे ॥ रक्षसंततसौख्यायसम्यक्सत्त्वायवासदा ॥ ९ ॥ २ ॥ १ ॥ मुनिस्तुसर्वविद्यानांभगवान्पुरुषोत्तमः ॥ विशेषतश्ववेदानांयोब्रह्माणमितिश्रुतिः ॥ ऋग्वेदादिकमस्यैवश्वसितंप्राहचापरा ॥ वाचोबभूवुरुशतीर्हयग्रीवादितिस्फुटम् ॥ वचोभागवतेप्यस्तिब्रह्मांडेऽपितथापरम् ॥ हयग्रीवादिमाविद्याःश्वसितत्वेननिःसृताः ॥ ब्रह्मणास्वीकृतास्ताश्वरुद्रशेषविपाअपि ॥ दक्षाद्याःसनकाद्याश्वश

काद्यामनवस्तथा ॥ जगृहुस्तेचविश्वस्मिंश्चकुर्य्यास्ततोऽखिलाः ॥ उक्तंपद्मपुराणेचकपिलोभगवान
जः ॥ प्रोवाचब्रह्मणेविद्याहृदिस्थोबादरायणः ॥ ॐकारपूर्विकाविद्याःप्रेरयत्यखिलेष्वपि ॥ सदैवब्रह्म
णेपूर्वमितिसात्वतसंहिता ॥ सकृन्निगदमात्रेणगृहीतंब्रह्मणाऽखिलम् ॥ अंतर्गतस्यव्यासस्यप्रसादान्नित्य
शक्तितः ॥ तेनचानंतशक्तित्वाद्युगपत्समुदीरितम् ॥ प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्यच ॥ सुपर्णो
खिलवेदानांपंचरात्रस्यनागराट् ॥ द्वितीयप्रतिपत्तृत्वान्मुनित्वेसंप्रकीर्तितौ ॥ यःपश्यतिस्वयंवाक्यंसऋ
षिस्तस्यकीर्तितः ॥ अर्वाक्तुद्वादशाद्वत्तेरधीत्याप्यृषिरेवसः ॥ यस्त्वयंप्रतिभातस्यसंशयार्थंगुरोर्वचः ॥
सुपर्णादेर्विरिंचस्यकेवलंधर्मकारणम् ॥ ऋचामृषिस्ततःशक्रोयजुषांसूर्यएवच ॥ सोमःसाम्नांतृतीया
स्तेप्रतिपत्तारईरिताः ॥ अथर्वांगिरसामग्निरेकोपिश्चाप्यथर्वणाम् ॥ इत्युक्ताःसमुदायस्यसंत्यन्येचपृथ
क्पृथक् ॥ एतज्ज्ञानाददृष्टस्यफलस्याप्तिःस्फुटंभवेत् ॥ द्रष्टॄणांतुचतुर्णांज्ञानादप्यैहिकंभवेत् ॥ तेचै
कस्यापिबहवःस्युःसूक्तस्यर्चएववा ॥ तस्यांतस्यामवस्थायांतत्तत्प्राप्तिविशेषतः ॥ तेषांवाक्यस्वरूपेण
प्रार्थनादिषुपश्यति ॥ विष्णुर्ब्रह्मासुपर्णोवातत्तद्योग्यार्थभेदतः ॥ सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणीचभार
ती ॥ द्रष्ट्र्यश्चसर्वविद्यानांव्याख्यातोब्रह्मणामरुत् ॥ स्वभर्त्रनंतरंद्रष्ट्र्यस्तेभ्यस्तन्नोदिताहिरुक् ॥ ताः
स्तुवंतिहरिंनित्यंविद्याभिस्तेचसर्वशः॥ छंदस्त्वेनमुनित्वेनतासांस्मृतिरुदीरिता ॥ स्मर्तव्यास्तेचसर्वेऽपिमुनि
त्वेनपृथक्पृथक् ॥ गायत्रीबृहतीचैवताःसर्वागरुडस्तथा ॥ ब्रह्माण्यनुष्टुब्रुद्राणीत्रिष्टुप्स्वाहेतिचोच्य ॥ २ ॥
ते ॥ गायत्रीजगतीचैववारुणीरोहिणीतथा ॥ अनुष्टुब्बृहतीचैवतारापंक्तिःशचीतथा ॥ उष्णिक्सौरी
जगत्यश्चसर्वदेवस्त्रियोमताः ॥ विराण्मित्रावरुणयोर्भार्येइतिचकीर्तिते ॥ अतिछंदांसिसर्वाणिसर्वदे

व्यःप्रकीर्तिताः ॥ विराडितिचनामासांतास्ताऊनाधिकेष्वपि ॥ निचृद्भुरिग्विराट्संज्ञाप्रस्तारेत्यादिनाम
च ॥ बह्वीनामेकमानेनत्वेकंनामचयुज्यते ॥ सर्वाभिमानिताचैवतिसृणांतुयथाक्रमम् ॥ देवतासर्व
विद्यानांस्वयंनारायणःप्रभुः ॥ ऋतेतत्रप्रसिद्धाश्चदेवताश्रीस्तथात्रच ॥ ऋतेप्रसिद्धाब्रह्मैवततस्ते नक्रमेण
च ॥ पूर्वप्रसिद्धवर्जंतुशक्रांतादेवतामताः ॥ ब्रह्मवायूगिरौवींद्रशेषरुद्राश्चतत्स्त्रियः ॥ शक्रकामौकाम
पुत्रमनुदक्षांगिरस्सुताः ॥ तद्वच्छचीरतिःसूर्यसोमधर्मादितत्स्त्रियः ॥ प्रधानमरुतोवारिपतिरग्निश्चमा
रुताः ॥ निर्ऋतिःस्त्रियश्चसूर्यादेरश्विनावितरेतथा ॥ अनंतकोटिशतकदशार्धांशतःक्रमात् ॥
ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि ॥ मुक्तावपिक्रमोह्येषदेवताउदिनाइमाः ॥ इंद्रावराविशेषे
णालिंगेनैवपृथकपृथक् ॥ देवतास्तत्रतत्रस्युरेषएवपरोविधिः ॥ वेदादिवर्णपर्यंतैर्मूर्तयःकेशवस्यतु ॥
समासव्यासयोगेनवाच्यास्तात्पर्यतःपृथक् ॥ यथायोगंयथान्यायमन्यासामपिमूर्तयः ॥ ऋक्संहि
तायांस्वाध्यायेनिरुक्तेव्यासनिर्मिते ॥ प्रवृत्तेचैतदखिलमुक्तंहिप्रभुणास्वयं ॥ सर्वेवेदाश्चनामानिताबाए
ताऋचस्तथा ॥ इंद्रंमित्रंवरुणमित्याद्यत्रचप्रमापरा ॥ देवतातारतम्यंचसर्वोत्कृष्टंचकेशवम् ॥ ज्ञात्वैवमु
च्यतेह्यस्मान्नान्यथातुकथंचन ॥ इतिपैंगिश्रुतिश्चाहदृश्यंतेऽत्रचसर्वशः॥नतेमहित्वमित्यादिनेश्वरानेवके
वलान् ॥ गुणान्विष्णोःश्रुतिर्ह्याहनैवदोषान्कथंचन ॥ जातापरिवभूवेतिमर्यादांब्रह्मणोपिहि ॥ नैवरेमेबि
भेद्ब्रह्मानासीदित्यादिकानपि ॥ दोषान्रुद्रेचतानेवनमिनंतीतिपूर्वकान्॥यंकामयेतंतमुग्रंरुद्रायधनुरित्यपि॥
अस्यदेवस्यमाशिश्नदेवाअपिगुरित्यपि॥घ्नञ्छिश्नदेवानित्याद्यादोषाबहवईरिताः ॥ ततोवितिष्ठेयोनिःसए
तावत्यहमित्यपि ॥ अन्याश्रयत्वंदेव्याश्चकथितंबहुशोऽपिहि ॥ तदाश्रयत्वमन्येषामपितत्रैवनिश्चयात्॥

॥ ३ ॥ ब्रह्मैवाग्रइतिह्युक्त्वारुद्रादीनांततोजनिः ॥ उक्काजातानिविश्वानिसपर्यभवदित्यपि ॥ यस्यच्छायामृतंमृत्युरितिचादरतोऽब्रवीत् ॥ अनंताद्वरेशानातस्याःप्राणस्ततश्चवाक्॥तस्यारुद्रउमातस्मादिंद्रस्तस्यास्ततोऽपरे ॥ सौपर्णश्रुतिरित्याहसम्राक्षितयइत्यपि ॥ वायुरस्माउपामंथद्विश्वदेवायवायवे॥ विश्वैर्देवैःसइत्याद्याःप्रमाअत्रापराअपि ॥ नारायणोऽदितिर्वायुर्वाणीरुद्रउमाविभुः ॥ इतरेचक्रमाद्धीनाःशतांशाद्वायुतोवराः॥ इतिबह्वृक्श्रुतिश्चाहशक्रात्सम्राक्षितिश्रुतिः॥अयंतएमितन्वेतिपूर्वाअन्याअपिस्फुटम् ॥ वायोराधिक्यमप्याहुरिंद्रंसोमंहुनाशनम् ॥ सूर्यंरुद्रमिमान्पंचदेवानेकोमहात्मनः ॥ सृजत्यत्तिमहान्प्राणइतिचाहतुरश्रुतिः॥ विहिंसोतोरस्त्रक्षतनेंद्रंदेवममंसत॥नयस्येंद्रइतिह्याहविष्णोरिंद्रस्यहीनताम्॥वेधाअजिन्वदित्यादिवचनंविष्णुनामतः ॥ आनंदश्रुतिरप्यस्यजीवतामेवदर्शयेत् ॥ आहसूर्यादपींद्रस्यवायोर्विष्णोरपीशताम्॥यःसूर्यंयउषसंम्रियंतेपंचदेवताः॥चक्षुषाद्यौश्चादित्यश्चचक्षोःसूर्योअजायत॥यमादित्योनवेदेतिपूर्वाश्रुतिरथापरा ॥ विष्णोर्वातोऽजनिष्टेतिवातादिंद्रस्ततोरविः॥सोमश्चेतिलयोप्येवंपूर्वंपूर्वंगुणाधिकाः ॥विष्णोःप्राणोऽजनिष्टेतिप्राणादिंद्रोरविर्विधुः॥ लयोप्येतादृशस्तेषांपूर्वःपूर्वोगुणाधिकः॥ तुरश्रुतिश्चसौपर्णीपिंगश्रुतिरपीदृशी ॥ अतःसर्वाधिकोविष्णुर्निर्णीतःश्रुतिसंचयात् ॥ अतोदोषवचोयत्रतद्वाक्यमवरंवदेत् ॥ निर्दोषतैवविष्णोस्तुक्रमान्मध्यगतेष्वपि॥त्रयोर्थाःसर्ववेदेषुदशार्थाःसर्वभारते ॥विष्णोःसहस्रनामापिनिरंतरशतार्थकम् ॥ इतिस्कांदवचोयस्मादर्थभेदव्यपेक्षया॥निर्दोषत्वंहरेर्वक्तिदोषमन्येष्वपिक्रमात्॥तारतम्यस्यविज्ञप्त्यैवचोदोषस्यचार्थवत् ॥ गुणाःश्रुताइतिह्याहगुणैकनियतिंहरौ ॥ निर्दोषगुणपूर्णश्चविष्णुरेकोनचापरः ॥ अपूर्णादोषरहितामायैकातद्वशैवच ॥ अदोषःप्रायशोब्रह्मादोषवंतःक्रमात्परे ॥ इतिमान्यश्रुतिश्चाहभेदो ॥ ३ ॥

र्थानांततोमतः ॥ रूढिमेवसमाश्रित्यविभज्यार्थान्यथाक्रमम् ॥ विदोषगुणपूर्त्यर्थंविष्णोयागार्थमानये
त् ॥ पश्चादेवयथायोगमितरेष्वपिसंनयेत् ॥ ऋग्वेदसंहितायांचप्रभुणैवंसमीरितम् ॥ पृथग्रूपाणिविष्णो
स्तुदेवतांतरगाणिच ॥ अग्न्यादिसूक्तवाच्यानिनाम्नासूक्तभिदाभवेत् ॥ नकिर्माकिःस्मसीत्यादिप्रो
क्ताधिक्यविवक्षया ॥ आधिक्येऽधिकमित्येवहरिणासूत्रमीरितम् ॥ कत्वीहत्वीतिपूर्वाश्चतृतीयोऽतिशये
यतः ॥ विश्लिष्टार्थेचविश्लिष्टमूनार्थेचोनमिष्यते ॥ व्यत्ययोऽभेदकरणस्वातंत्र्येषुसमीरितः ॥ अभेदो
हरिरूपाणांगुणानांचक्रियासुच ॥ तस्यैवावयवानांचभेदःश्रीब्रह्मपूर्वकैः ॥ मुक्तैरपिजडैर्भेदःकैमुत्यादेव
दृश्यते ॥ ऋग्वेदसंहितायांचप्रोक्तमेतत्समस्तशः ॥ अभेदःस्वगुणाद्यैश्चमुक्तानामपिसर्वशः ॥ भेदाभेद
स्त्वभेदश्चगुणैःसंसारिणामपि ॥ जडानामंशतोभेदःसमुदायेनचोभयम् ॥ मनुष्यगंधर्वपितृगणकार्मिकता
त्त्विकाः ॥ देवाःशक्रःशिवोब्रह्मामुक्तौसौख्यादिभिर्गुणैः ॥ शतायुतोत्तरानित्यमन्योन्यप्रीतिसंयुताः ॥
इतिसिद्धांतगंवाक्यंस्वयंभगवतेरितम् ॥ स्वाध्यायस्तत्त्वविज्ञानंविष्णुभक्तिर्विरागता ॥ निषिद्धकर्मसं
त्यागोविहितस्यसदाक्रिया ॥ सदाविष्णुस्मृतिश्चैवकेवलंमोक्षसाधनम् ॥ एतैर्विनानमोक्षःस्याद्धवेदैरपि
ध्रुवम् ॥ ऋषिच्छंदोदेवतानिज्ञात्वार्थंचैवभक्तितः ॥ स्वाध्यायेनैवमोक्षःस्याद्विरक्तस्यहरिस्मृतेः ॥ जप्ये
नैवतुसंसिध्येद्ब्राह्मणोनात्रसंशयः ॥ कुर्यादन्यंन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥ तस्मान्नित्यंहरिंध्यायन्कु
र्यात्स्वाध्यायमंजसा ॥ ऐहिकामुष्मिकाभोगारक्तस्यान्यस्तुमुच्यते ॥ इतिस्वाध्यायवचनंस्वयंभगवतो
दितम् ॥ स्वाध्यायात्तुप्रवचनेसहस्रगुणितंफलम्॥अर्थद्रष्टुःकोटिगुणंततोऽनंतंनियामके ॥ तर्कागमाभ्यां
नियतिंयःकरोत्यधिकंततः ॥ पूर्णवेदाखिलद्रष्टुर्ब्रह्मणःफलमुच्यते ॥ दार्ढ्यमेवानुदात्तार्थउदात्तस्योच्चता

र्थता ॥ नीचतास्वरितस्यार्थःप्रचयस्ययथास्थितिः ॥ समाहारेऽखिलाअर्थाःस्वरार्थानामियंस्थितिः॥ स्तुत्यधर्मस्यभेदेनपदाद्यादिस्वरेभिदा ॥ साधारणोविधिस्त्वेषविशेषोयत्रयत्रच ॥ क्रमादेवतदन्येषामृष्यादीनांस्वयोग्यतः ॥ विपर्ययार्थकथनेविपरीतंतथातमः ॥ यावत्प्रयोजकोज्ञानेतावत्तावच्छुभाधिकः ॥ तथैव विपरीतेऽपिस्मृतौज्ञानेचतत्समम्॥तमोनिरयमानुष्यस्वर्गमोक्षातिरेकतः॥ योग्यतातारतम्येनफलंसर्वेषुचोच्यते ॥ इतिप्रवृत्तवचनंविवेकेऽप्येतदीरितम् ॥ यादृशोयोग्यतांयायात्तज्ञेयोऽर्थस्तथास्फुटम् ॥ अनंतनियमैर्युक्ताअनंतार्थविशेषिणः ॥ वेदाइतिसमासेननियमोऽयंसमीरितः ॥ ऋक्संहितागतंवाक्यमितिचान्यन्नियामकम् ॥ तस्माद्वंद्याश्चपूज्याश्चब्रह्माद्याज्ञानयोजकाः ॥ गुरुत्वेनक्रमादेवविशेषेणैवकेशवः ॥ आरभ्यस्वगुरुंयावद्विष्णुरेवोत्तरोत्तराः ॥ क्रमान्निष्फलतान्यत्रगरुतत्त्वेसमीरिता ॥ ॥ एवंस्थितेऽग्निंगंविष्णुमग्निनामानमेवच ॥ मधुच्छंदाऋक्शतेनवाय्वादिगतमेवच ॥ साम्यादिंस्तौतिसद्भक्त्यातत्तन्नामानमेवच ॥ ॥ बलत्वादयनाच्चैववायुरित्यभिधीयते ॥ वात्यायुरितिवाज्ञानाद्धरणादाश्रयत्वतः ॥ वयबंधनइत्यस्मात्संसारादेर्व्ययादपि ॥ व्येत्यस्मिन्नितिवावायुर्वयश्श्रेष्ठत्वइत्यपि ॥ मुख्यतोवासुदेवेतेगुणाःसंत्येवसर्वशः ॥ अनिषिद्धास्तदन्येषुयथायोग्यतयामताः ॥ दर्शतस्ततदृष्टित्वात्सर्वज्ञोऽसौयतोविभुः ॥ भक्त्याद्यलंकृताःसोमामनांस्यन्येहिरण्यतः ॥ हिरण्यालंकृतायस्माद्भूयंतेवायवेसुताः ॥ तान्पाहिश्रुधिचाह्वानंस्वातंत्र्येव्यत्ययोप्ययम् ॥ मनोपिभोग्यमीशस्यप्रीतिमात्रेणकेवलम् ॥ गुणाधिक्यंयेनभवेद्वेदस्यार्थःसएवहि॥प्रयोजकत्वान्नान्यस्यफलाभावात्तदर्थता॥उपक्रमादयोयत्रतात्पर्यार्थस्सएवहि ॥१॥

स्तुवंतिशास्त्रैःस्तोतारोयथावद्यज्ञवेदिनः ॥ २ ॥ वाक्त्वत्संपर्किणीयज्ञकृतेप्रापयतीप्सितम् ॥ सोमपायातिमहतीमहार्थत्वात्त्वदर्थतः ॥ ३ ॥ इंद्रःसपरमैश्वर्यादिदमुद्दिश्यचद्रुतेः ॥ ददर्शेंदंदीप्तिमत्त्वादिंदरातीतिवाभवेत् ॥ सोमाभिमानिनोदेवावामिच्छंतिहिसोमगाः ॥ प्रियैरुपागतंतेनोपेंद्रःसंकर्षणोहरिः ॥ द्विरूपत्वाद्बहुत्वंचविशेषादेवकेवलम् ॥ एकस्यैवहरेर्नात्रभेदःशंक्यःकथंचन ॥ एकमेवाद्वितीयंतन्नेहनानास्तिकिंचन ॥ मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ॥ यथोदकंदुर्गेंवृष्टंपर्वतेषुविधावति ॥ एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ उक्त्वाधर्मान्पृथक्त्वस्यनिषेधादेवमेवहि ॥ विशेषोज्ञायतेश्रुत्याभेदाद

वायंउक्थेभिर्जरंतेत्वामच्छांजरितारः ॥ सुतसोमाअहर्विदः ॥ २ ॥ वायोतवंप्रपृंचतीधेनांजिगातिदाशुषे ॥ उरूचीसोमपीतये ॥ ३ ॥ इंद्रवायूइमेसुताउपप्रयोभिरागतम् ॥ इंदवोवामुशंतिहि ॥ ४ ॥ वायविंद्रश्चचेतथःसुतानांवाजिनीवसू ॥ तावायातमुपद्रवत् ॥ ५ ॥ ३॥ वायविंद्रश्चसुन्वतआयातमुपनिष्कृतम् ॥ मक्ष्विं१त्थाधियानरा ॥ ६ ॥ मित्रंहुवेपूतदक्षंवरुणंचरिशादसम् ॥ धियंघृताचींसाधंता ॥ ७ ॥

न्यश्चसाक्षितः ॥ ४ ॥ विजानतःसुतानन्नपतौसूर्यैसदास्थितौ ॥ द्रवद्दुतंसुतात्पर्यद्योतकोभ्यासइष्यते ॥ ॥ ५ ॥ ३ ॥ यजन्सुन्वन्कृतस्यानुसारिकमैवनिष्कृतम् ॥ तदर्थंक्षिप्रमायातंधियेत्थंभूतयाऽचलौ ॥ नरौतावविनाशित्वादुपचारःक्वचिद्भवेत् ॥ अमरत्ववचतोमोक्षोदेवतानांसुनिश्चितः ॥ ६ ॥ मित्वात्रातीतिमित्रोयंमितमह्लाकरोतिवा ॥ मितंरातीतिवानित्यंमितंरमयतीतिवा ॥ आवृणोतीतिवरुणस्तमसाऽज्ञानतोपिवा ॥ वरमुन्नयतीत्यस्माद्वरानंदत्वतोपिवा ॥ पूतादक्षाअनेनेतिपूतदक्षइतीरितः ॥ तमाह्वयामिसुखिनंश

॥ ५ ॥ मदनूरमतेयतः ॥ अनूनसुखभोक्तृत्वाद्रिशादाइतिकीर्तितः ॥ हरिर्घृतःसुशुद्धत्वाद्घृताचीचतदंचनात् ॥
स्वधीतिसाधकोविष्णुर्भक्तानांचयथार्थतः ॥ ७ ॥ नित्यवृद्धःसभगवानृतेनानुपचारतः ॥ ऋतस्पृ
ग्वेदवाच्यत्वादन्यौचेद्भगवानृतः ॥ ऋगताविस्यतःसर्ववस्तुष्वनुगतत्वतः ॥ तेनवृद्धौतत्स्पृशौचसर्व अ० १
दामित्रवारिपौ ॥ संहितायांतुदैर्घ्यादिरुक्ताधिक्येपदेन्यथा ॥ अनन्यार्थत्वविज्ञप्त्याईशाथेचमहाक्रतुम् ॥
महत्सुखंवा ॥ ८ ॥ तुविजौब्रह्मजातौतथाविधौ ॥ हरिस्तथैवभूतत्वात्स्थानंक्षयइहोच्यते ॥ कर्मापसंच
कर्तारंदक्षंकर्तारमेववा ॥ अस्मदर्थेदधातेतौनित्यंबुद्धौगतागतौ ॥ ९ ॥ ४ ॥ २ ॥ अन्नानियज्ञयोग्यानि

ऋतेनमित्रावरुणावृतावृधावृतस्पृशा ॥ क्रतुंबृहन्तमाशाथे ॥ ८ ॥ कवीनोमित्रावरुणातुवि
जाताउरुक्षया ॥ दक्षंदधातेअपसम् ॥९॥ ॥ ४ ॥२ ॥ अश्विनायज्वरीरिषोद्रवत्पाणीशुभ
स्पती ॥ पुरुभुजाचनस्यतम् ॥ १॥ अश्विनापुरुदंससानराशवीरयाधिया ॥ धिष्ण्यावनं
तंगिरः ॥ २ ॥ दस्रायुवाकवःसुतानासत्यावृक्तबर्हिषः॥आयातंरुद्रवर्तनी ॥ ३ ॥

क्षिप्रहस्तौशुभाधिपौ ॥ बहुगोपौबहुभुजौनोयोयजतमश्विनौ ॥ यज्ञेवृतान्स्वभागान्वासंयोजयतमाशु
वै ॥ आशुवानाद्भतेरश्वीक्षिप्रावगतितोथवा ॥ अश्नुतेखिलमित्येवाप्यश्वजत्वात्तथाश्विनौ ॥ १ ॥ बहु
कर्मकृतौसौख्यवीर्यात्मिक्याधियागिरः ॥ अस्मदीयाःसंभजतंधिष्ण्यौसर्वाश्रयौसदा ॥ २ ॥ भेदकौसर्व
शत्रूणांदस्रौसंबंधिनोहिवाम् ॥ सुतायुवाकवःसोमायज्वनःस्तृतबर्हिषः ॥ नासत्यौनासिकासंस्थौनैवचा ॥ ५ ॥
सद्गुणौक्वचित् ॥ रुजांद्रावणतोरुद्रौवायुस्तदनुवर्तनात् ॥ स्नेहतोनुवशत्वाद्वातन्मार्गगतितोथवा ॥ कस्मि
न्वहमितिश्रुत्यावासुदेवोश्विनावपि ॥ रुद्रवर्तनिशब्दोक्ताः ॥ ३ ॥

चित्रंभद्रंरतंचितौ ॥ चिद्रतेश्चायनीयत्वाद्ददनाद्वाचितोभिदा॥तादृशारश्मयोज्ञानमस्येतिभगवान्परः ॥चि
त्रभानुरितिप्रोक्तस्तेजोवातादृशंप्रभोः ॥ त्वदिच्छवइमेसोमाःपटीभिःसूक्ष्मतंतुभिः॥विस्तृत्यशोधिताःसूक्ष्म
प्रमाभिर्वामनांसिच॥सोमानांमनसांचैवदेवताःसोमरश्मिगाः॥सोमभृत्याःसमस्तस्यसोमएवाधिपोहरिः ॥४
अस्मद्बुद्ध्याप्रार्थितोवास्वबुद्ध्याप्रेरितोपिवा ॥ ब्राह्मणैःप्रेरितोभक्त्यावदतोहोतुरंजसा॥ब्रह्माणिसोमयुक्ता
नियजमानस्यवेच्छतः॥उपायाश्चपियःकोपिसाधकोयज्ञकृन्मतः ॥ मानसोवाचिकोवास्याद्यज्ञोहोताह्व

इंद्रायाहिचित्रभानोसुताइमेत्वायवंः ॥ अण्वींभिस्तनांपूतासंः ॥४॥ इंद्रायाहिधियेषितोविप्रं
जूतःसुतावंतः॥ उपब्रह्माणिवाघतः ॥ ५ ॥ इंद्रायाहितूतुंजानउपब्रह्माणिहरिव. ॥ सुतेदं
धिष्वनश्चनंः ॥ ६ ॥ ५ ॥ ओमासश्चर्षणीधृतोविश्वेदेवासआगंत ॥ दाश्वांसोदाशुंपः
सुतम् ॥ ७ ॥

यन्सच॥५॥वेगवांस्तूतुजानःस्यात्संसारमुपसंहरन्॥वर्ततेयेनहरिवाहरिभिर्वर्ततेथवा॥हरणाद्विषयाणांचप्रा
णाहरयईरिताः ॥ तेषुवर्ततइत्यस्मात्तान्वाथंगमयेदसौ ॥ हरिवाहरिवान्वापिविष्णुनावर्ततेथवा ॥ चनो
मनइहप्रोक्तंसुखंचक्वचिदीर्यते ॥ ६ ॥ ५ ॥ आसमंतात्स्वीकृतामाओमाइतिचशब्दिताः ॥ ॐनामाभ
गवान्विष्णुस्तेनवानिर्मिताःसुराः ॥ ओतामानेषुमावैषुप्रोताओमाइतीरिताः ॥ प्रजाश्चर्षणयःप्रोक्ताविश्वे
तेचप्रवेशनात् ॥ सर्वेवाथविशांवानाच्छब्दःकस्मैयथाभवेत् ॥ दातारोयजमानावा ॥ ७ ॥

अमुरःकर्मवेगिनः ॥ उस्रास्तुरश्मयश्चैवस्वसराणिदिनानिच ॥८॥ असंसारादस्त्रिधस्तेदेवाश्चेन्मोक्षनिश्च
यात् ॥ यथेष्टनिश्चितज्ञानाएहिमायाःसमंततः ॥ अद्रुःखत्वादद्रुहस्तेमेधंयज्ञंजुषंतुनः ॥ वह्नयोवहना
दस्य॥ ॥ ९ ॥ शोधकत्वात्तुपावका ॥ सरणात्सर्वगत्वेनसर्वज्ञोवासरोहरिः ॥ सरसःसरतित्वाद्वातद्वत्येवस
रस्वती ॥ हरौगुणाःसरश्शब्दादेवीतुहरिवाचिनी ॥ हरिप्रियत्वतोवायुःसरस्वांस्तत्प्रियाथवा ॥ गुणत्वेननत
त्वाद्वाभगवांस्तुसरस्वती ॥ स्त्रीरूपश्चैवपुंरूपोभगवान्ननपुंसकः ॥ स्त्रीपुंदोषविहीनत्वादपितच्छब्दगोचरः ॥
अन्नेनोवाजिनामीशोवाजिनीसूर्यउच्यते ॥ वाजीनश्छंदसांवापिस्वामीप्रोक्तःसवाजिनी ॥ छंदांस्यश्वाय

विश्वेदेवासोअमुरंःसुतमागंततूर्णयः ॥ उस्राइवस्वसंराणि॥८॥विश्वेदेवासोअस्रिधएहिमाया
सोअद्रुहः॥मेधंजुषंतवह्नयः ॥९॥ पावकानःसरंस्वतीवाजेंभिर्वाजिनींवती॥यज्ञंवष्टुधियावंसुः
॥ १० ॥ चोदयित्रीसूनृतानांचेतंतीसुमतीनाम् ॥ यज्ञंदंधेसरस्वती ॥ ११ ॥ महोअर्णः
सरंस्वतीप्रचेतयतिकेतुना ॥ धियोविश्वाविराजति ॥ १२ ॥ ६ ॥ २ ॥ १ ॥

तस्तस्यतेचेनाअन्यवाजिना ॥ अन्नवत्त्वाद्वाजिनीवाग्ज्ञानयुक्तत्वतोपिवा ॥ सपुत्रोवागुमातस्याःपुत्रीतद्वा
जिनीवती॥सरस्वती हरिर्वापियज्ञंवहतुनोऽशनैः ॥ अन्नदाहिसदादेवीधियासहवसेयतः ॥ धियावसुर्नित्य
बोधा ॥१०॥ सुवाचांप्रेरकासदा ॥ सुबुद्धिज्ञापिकासैवस्वातंत्र्याद्धुतयोभवेत् ॥ अनेनैवप्रकारेणसैवय
ज्ञादिधारिणी ॥ ११ ॥ महोअर्णःपरंब्रह्मतेजस्त्वाच्चमहत्त्वतः ॥ अरमानंदरूपत्वाण्णोहिनिर्दतिवाचकः॥
तज्ज्ञापयतिसादेवीज्ञानंदत्त्वामहत्तरम् ॥ अहोअर्णःस्वयंदेवःस्वमात्मानंप्रकाशयेत् ॥ विराजयतिविश्वा
श्चधियःसुज्ञानदानतः ॥ १२ ॥ ६ ॥ २ ॥ १ ॥

सूक्तंत्वनारतंप्रोक्तमनुवागेककालिका॥अन्यथात्वंचतत्रस्यादावापोद्वापतस्त्वचाम् ॥ वेदानंतत्वविज्ञप्त्यैतो
चक्रेबादरायणः॥ऋचःसऋचउद्धृत्यऋग्वेदंकृतवान्प्रभुः॥यजूंषिनिगदाश्चैवतथासामानिसामतः॥एवंपुरा
णवचनादुद्धृताहिततस्ततः ॥ ऋचःशाखात्वमापन्नाःशिष्यतच्छिष्यकैरिमाः ॥ मानस्तेनेतिपूर्वासुसूनताद
श्यतेऽर्थतः॥शुनःशेपोदिताभ्यश्चपठ्यतेऽन्यत्रकाश्चन ॥ अत्राप्यक्रमतोदृष्टिरितिनैकक्रमोभवेत्॥अनंतत्वा
त्तुवेदानांप्रायःकर्मानुसारतः ॥ संक्षेपंकृतवान्देवःशिष्याश्चतदनुज्ञया ॥ अष्टकाध्यायवर्गादिभेदंचकृतवा
न्प्रभुः ॥ स्वाध्यायविश्रमार्थायतस्मात्क्रमविपर्ययः ॥ तत्रतत्रैवांतरितादृश्यंतेचखिलाअपि ॥ यत्रार्थेन

सुरूपकृत्नुमूतयेंसुदुघामिवगोदुहे ॥ जुहूमसिद्यविद्यवि ॥ १ ॥ उपनःसवनागहिसोमस्यसो
मपाःपिब ॥ गोदाइद्रेवतोमदः ॥ २ ॥ अथातेअंतमानांविद्यामसुमतीनाम् ॥ मानोअति
ख्यआगहि ॥ ३ ॥ परेहिविग्रमस्तृतमिंद्रंपृच्छाविपश्चितम्॥ यस्तेसखिभ्यआवरम् ॥ ४ ॥
उतब्रुवंतुनोनिदोनिरन्यतश्चिदारत ॥ दधानाइंद्रइद्दुवः ॥ ५ ॥ ७ ॥

विशेषोस्तिपदांतरिततात्रच ॥ यत्राऽल्पोपिविशेषोस्तिपदंनांतरितंभवेत् ॥ ॥ विष्णुंसुरूपकर्तारम
भिप्रेतार्थसिद्धये ॥ त्राणायवाकामधेनुमिवदोहायतस्थितेः ॥ दिनेदिनेस्वाह्वयामो ॥ १ ॥ ज्ञान
दोऽस्यैवचाधिकम् ॥ ज्ञानाख्यरयियुक्तस्यहिरण्यादिमतोऽपिवा ॥ सुखकारीभवान् ॥ २ ॥ तस्माल्लभेम
सुमतीस्तव ॥ अंतेमितास्त्वद्विषयामतयोह्युत्तमोत्तमाः॥अस्मानतीत्यमापश्यकरुणार्द्रदृशासदा ॥ ३॥मन्म
नोवाथशक्रोवादूरेऽपिपरमेश्वरम्॥गच्छायाह्यमनष्टंचव्याप्तचित्त्तंयएवच ॥ सखिभ्यउत्तमोनित्यम् ॥४॥
निदस्तस्यसमीपगाः ॥ तेऽपिब्रुवंतुनोदेवंप्रापुर्येचान्यतोऽपितम् ॥ निर्गत्याज्ञानतस्तस्माद्दधानाईशएवच ॥

द्रुवःप्राणान्ब्रुवंत्वेवतेऽपिनःपरमेश्वरम् ॥ ५ ॥ ७ ॥ अरयोऽपिप्रजाअस्मान्वोचेयुःसुभगान्सदा ॥ शत्रुभे
दिंस्तवेंद्रस्यस्यामैवानुग्रहेसुखे ॥६ ॥ आशुवीर्यंतवैवाशुंसोमंक्षिप्रंमनोऽपिवा॥आरभस्वोदरेतुष्ट्याहृदिवा
यज्ञभूषणम् ॥ ईमेवपुंमदकरंमदादुत्पतनादिके ॥ हेतुंमंदत्वहेतुंचतत्सखीनांपुरोगतेः ॥ ७ ॥ एनंपी
त्वाबहुज्ञानाऽभूस्तमोभिरनावृतः ॥ प्रसादादेवमुक्तेषुतमोऽस्सतयाघनः ॥ आवृतैरेवदत्राणिस्वज्ञानान्य
न्यदंनरम् ॥ प्रावोयुद्धेषुयोद्धारंभक्तंज्ञानिनमेवच ॥ ८ ॥ योधयामोवयंतंत्वांज्ञानादिधनलब्धये ॥

उतनंःसुभगाँअरिर्वोचेयुर्दस्मकृष्टयंः ॥ स्यामेदिंद्रस्यशर्मणि ॥ ६ ॥ एमाशुमाशवेभरयज्ञ
श्रियंनृमादनम् ॥ पतयन्मंदयत्संखम् ॥ ७ ॥ अस्यपीत्वाशंतक्रतोघनोवृत्राणामभवः ॥
प्रावोवाजेषुवाजिनंम् ॥ ८ ॥ तंत्वावाजेषुवाजिनंवाजयामःशतक्रतो ॥ धनानामिंद्रसातये
॥ ९ ॥ योरायोऽवनिर्महान्त्सुंपारःसुन्वतःसखा ॥ तस्माइंद्रायगायत ॥ १० ॥ ८ ॥ ४ ॥
आत्वेतानिषीदतेंद्रमभिप्रगायत ॥ सखायःस्तोमवाहसः ॥ १ ॥ पुरूतमंपुरूणामीशानंवा
र्याणाम्॥इंद्रंसोमेसचासुते॥ २॥सघानोयोगआभुवत्सरायेसपुरंध्याम्॥गमद्वाजेभिरासनंः ॥३॥

अज्ञानाद्यस्मदरिभिः ॥ ९ ॥ योशेषद्रविणावनिः॥ सुखदःसंस्तुतेःपारस्तस्माइंद्रायगायत ॥ कंपोशेषग्रहे
क्वापिलज्जायांवापुरातने ॥ पृथक्त्वेधृष्यतायांवाहरिणक्संहितोदितः ॥ १० ॥ ८ ॥ ४ ॥ सुपूर्णानां
पूर्णतमंवरेण्यानामधीश्वरम ॥ सुतेसोमेसुखेनैवसचागायततंप्रभुम् ॥ २ ॥ मुक्तौयोगायासमंताद्भवेन्नो
घोवधारणे ॥ सएवभगवाञ्ज्ञानविज्ञायसचबुद्धिगः॥ बुद्धिःपुराश्रयत्वेनपुरंधिःपत्न्यथापिवा ॥ पत्न्यर्थं
त्वेतुतादर्थ्यंसोन्नैःसहनआव्रजेत् ॥ ३ ॥

यस्यस्थितौनत्दणुतेहर्यश्रमपिशत्रवः ॥ मनःपुरोवाविषयहरणान्मनएवच ॥ बुद्धिश्वहरिशब्दोक्तेतमआ
दीनिशत्रवः ॥ ४ ॥ सोमपेशुचयःसोमाःप्राप्यैदधिविमिश्रिताः ॥ मनांसिध्यानयुक्तानिवायांतिहरयेसदा
॥ ५ ॥ १ ॥ सदापूर्णःशुभज्ञानज्यैष्ठ्यव्यक्त्यैसुतात्मये ॥ नक्षुदादेरभिव्यक्तोभवो ॥ ६॥ गीर्भिर्वर्द्धनप्रभो॥
प्रकृष्टचेतास्त्वद्भृत्योयोऽस्मैस्युःशंकराःसुताः॥व्यंजयंत्यधिकंस्तोमाःसाम्न्युक्थान्यृक्षुचैवहि ॥महागुणैर्व्यं
जयंतुगिरोऽस्माकमपिप्रभो ॥ आकाशवृद्धिवद्वृद्धिर्विष्णोःस्यान्नैवचान्यथा ॥ नवर्धतेनोकनीयानिति

यस्यंसंस्थेनवृण्वतेहरीसमत्सुशत्रवः॥तस्माइंद्रायगायत॥४॥ सुतपाव्नेसुताइमेशुचयोयंतिवी
तये॥सोमासोदध्याशिरः॥५॥१॥त्वंसुतस्यपीतयेसद्योवृद्धोअजायथाः॥इंद्रज्यैष्ठ्यायसुक्रतो
॥६॥आत्वाविशंत्वाशवःसोमासइंद्रगिर्वणः ॥ शंतेसंतुप्रचेतसे ॥७॥ त्वांस्तोमाअवीवृधन्त्वामु
क्थाशतक्रतो॥त्वांवर्धंतुनोगिरः॥८॥अक्षितोतिःसनेदिमंवाजमिंद्रःसहस्रिणम्॥यस्मिन्विश्वा
निपौंस्या॥९॥मानोमर्ताअभिद्रुहंतनूनामिंद्रगिर्वणः॥ईशानोयवयावधम् ॥१०॥ १०॥ ५॥

श्चेनंश्रुतिर्जगौ ॥ महातात्पर्यरोधाच्चश्रुत्यर्थोनापरोभवेत् ॥ यद्यन्यापेक्षयावृद्धिरीशत्वंस्यात्कुतोस्यच ॥
अक्षितोतिरितिह्यस्मात्पूर्णाभिप्रायतोदिता ॥ ८ ॥ अनंतफलदंवाजमस्मत्तोलभतांसच ॥ ददातुवापौरु
षाणिशक्तयोयत्रचाखिलाः ॥ अतश्चानंतशक्तित्वान्नवद्ध्याद्याःकथंचन ॥ सर्वोपेतेत्येतमर्थमभिप्रेत्या
हवेदराट् ॥ ९ ॥ मामर्तानस्तनूनांतुद्रोग्धारःस्युःकथंचन ॥ ईशोऽस्यपाकुरुवधंतेननोमुक्तिदानतः ॥ मा
नुषेभ्यस्तनूनांचनैवनःस्युर्विपत्तयः ॥ कालेनदैवतःप्राप्तःस्याददेहत्वतोवधः ॥ १०॥१०॥५॥

पौंस्यानिवासुदेवस्यब्रध्नंवद्धंदिवाकरम् ॥ अरुणंचरंतंपरितोगिरीन्युंजंतिसर्वदा ॥ तैरेवान्यानिचंद्रादिरो
चनानित्रिविष्टपे ॥ रोचयंति॥१॥हरीचास्यमनोबुद्धीस्वशक्तयः ॥ युंजंत्यधिगुणत्वेनकाम्यावश्वावथापि
वा॥ विशिष्टपक्षसंयुक्ताविवक्षिप्रतरौसदा॥रथेदेहेपिवादेवाःस्वमनोबुद्धिमेवच ॥ अस्यदेहेप्रयुंजंतिसूर्यादी
न्स्थापयंतिच॥ सूर्यादिस्थापकत्वंचब्रह्मादीनांभवेत्सदा ॥ शोणौचशमणौप्रोक्तौसुखप्राप्तौयतस्सदा॥श्या
मौमूर्धनिशोणौचशक्राश्वावग्रगौस्मृतौ॥धृष्टौनृन्प्रतितंवेशंवहंतौतावुभावपि॥२॥अज्ञायकुर्वन्सज्ज्ञानंहेमा

युंजंतिब्रध्नमरुषंचरंतंपरितस्थुषः ॥ रोचंतेरोचनादिवि ॥ १ ॥ युंजंत्यस्यकाम्याहरीविपक्ष
सारथे ॥ शोणाधृष्णूनृवाहसा ॥ २ ॥ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजा
यथाः ॥ ३ ॥ आदहस्वधामनुपुनर्गर्भत्वमेरिरे ॥ दधानानामयज्ञियम् ॥ ४ ॥ वीळुचिदा
रुजत्नुभिर्गुहाचिदिंद्रवह्निभिः ॥ अविंदउस्रियाअनु ॥ ५ ॥ ११॥ देवयंतोयथामतिमच्छा
विदद्वसुंगिरः ॥ महामनूषतश्रुतम् ॥ ६ ॥ इंद्रेणसंहिदृक्षसेसंजग्मानोअबिभ्युषा ॥ मंदूस
मानवर्चसा ॥ ७ ॥

हेमायचेश्वर ॥ उषद्भिःसंप्रकाशद्भिःशक्तिभिर्व्यक्ततामगाः ॥ मर्यामरणवंतोऽपिदेवाएवम् ॥३ ॥ हरेर्वशा
त्॥तदैवसुखमन्वेवपुनर्गूढत्वमापिरे॥ स्वेच्छयैवपरेशस्यशक्त्यादेवताअपि ॥यज्ञेवाच्यंदधानाश्चनाम॥४॥
वीळुदृढंस्वपि ॥ आरुजद्भिःस्वसामर्थ्यैर्गुहायांसंस्थितोपिसन् ॥ वहद्भिरखिलंलोकंप्रकाशत्वानिलब्धवा
न् ॥ देवैर्वैतादृशैःसाकमानुकूल्येनलब्धवान् ॥ ५ ॥ ११ ॥ सम्यक्प्रद्योतयंतोऽमुंमतिरूपंयथास्थितम्॥
विदद्वित्तंमहांतंचविश्रुतंसुगिरोऽस्तुवन्॥ तस्यसंदर्शनायैवसंगतस्तेनशंकरः ॥ मखात्मापुरुहूतोवाश्रीभूमी

चसुखात्मिके ॥ ७॥ अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैःसह ॥ वायुनाचसहार्चंतिसुधीत्वात्परमेश्वरम्॥ ८ ॥ अतोहेतोरिहायाहिदिवोवासूर्यमंडलात् ॥ परिज्मन्सर्वगाऽस्माकमधिकृत्यसमर्हणम् ॥ अस्मिन्गिरःप्रामुवंतिसम्यक्परममुख्यतः ॥ युंजंतीत्यत्रबाहुल्याद्देवयंतोतइत्यपि ॥ बाहुल्याद्दृष्टितोगीर्भिर्विनार्थोनान्यइष्यते ॥ ९ ॥ इतोदिवोवापातालात्सातिंलाभस्वरूपिणम् ॥ महतोरंजकाद्विष्णोर्लोकाद्वातमधीमहे

अनवद्यैरभिद्युभिर्मखःसहस्वदर्चति ॥ गणैरिंद्रस्यकाम्यैः ॥ ८ ॥ अतःपरिज्मन्नागहिदिवोवारोचनादधि ॥ समस्मिन्नृंजतेगिरः ॥ ९ ॥ इतोवासातिमीमहेदिवोवापार्थिवादधि ॥ इंद्रंमहोवारजसः ॥ १० ॥ १२ ॥ ६ ॥ इंद्रमिद्गाथिनोबृहदिंद्रमर्केभिरर्किणः ॥ इंद्रंवाणीरनूषत ॥ १ ॥ इंद्रइद्धर्योःसचासंमिश्लआवचोयुजा ॥ इंद्रोवज्रीहिरण्ययः ॥ २ ॥ इंद्रोदीर्घायचक्षसआसूर्यंरोहयद्दिवि ॥ विगोभिरद्रिमैरयत् ॥३ ॥ इंद्रवाजेषुनोवसहस्रप्रधनेषुच॥ उग्रउग्राभिरूतिभिः॥ ४ ॥इंद्रंवयंमहाधनइंद्रमर्भेहवामहे ॥ युजंवृत्रेषुवज्रिणम् ॥ ५॥१३॥

॥१०॥१२॥६॥ तमेवगाथिनःसाम्नास्तुवंत्यृग्भिश्चबह्वृचाः ॥ बृहंतमन्यवाणीभिरपि ॥१॥ हर्योर्विमिश्रितः॥रथेऽथवामनोबुद्ध्योर्वाङ्मात्रेणैवयोगिनोः ॥ सचासुखेनवज्रीचज्ञानानंदोहिधातुतः ॥ हितश्चरमणीयश्चहिरण्ययइतीरितः ॥२॥ दीर्घकालंदर्शनायसूर्यमारोहयद्दिवि ॥ ज्ञानैरादरयोग्यंचप्राणात्मानंसमैरयत् ॥ ३ ॥ बहुभिर्युध्यमानेषुयुद्धेष्वपिसदाऽवनः ॥ दुष्टोग्रैःसदभिप्रायै ॥ ४ ॥ महदल्पधनार्थिनः ॥ हवामहेऽरिवर्जंतंतमसांप्रतियोगिनम् ॥ ५ ॥ १३ ॥

अस्मदीयंचरुंभोज्यमानंदंतमपावृणु ॥ मोक्षगंसर्वदातस्त्वमप्रतिद्वंद्वनोवृषन् ॥ ६ ॥ त्वयैवप्रेरणेजाते
तत्रतत्रयउत्तराः ॥ तेऽपिस्तोमाःसुष्टुतित्वमस्यानंत्यान्नचामुयुः ॥ ७ ॥ प्रतिवीरोवृषावंसस्तद्वंतावं
सगोविभीः ॥ यूथान्याकर्षतियथाप्रजाःप्रेरयतिप्रभुः ॥ अल्पस्यापिप्रसिद्धैर्वदृष्टांतत्वंतुयुज्यते ॥८॥
राजाभवतिवित्तानांप्रजानांचैकएवयः ॥ देवगंधर्वदैतेयपितृमानुषभेदतः ॥ प्रजानामपिपंचानांसामा

सनो॑वृषन्न॒मुं च॒रुंस॒त्रा॒दा॑व॒न्नपा॑वृधि॥अ॒स्मभ्य॒मप्र॑तिष्कुतः॥६॥तुं॒जेतुं॑जे॒यउत्त॑रे॒स्तोमा॒इंद्र॑स्य
व॒ज्रिणः॑ ॥ नवि॑धेअस्यसुष्टु॒तिम् ॥७॥ वृषा॑यू॒थेव॒वंस॑गः कृष्टीरि॑य॒र्त्यो॑जसा ॥ ईशा॑नो॒अप्र॑ति
ष्कुतः ॥ ८ ॥ यएकं॑श्चर्ष॑णी॒नांवसू॑नामि॒र॒ज्यति॑ ॥ इंद्रः॑पंच॑क्षिती॒नाम् ॥ ९ ॥ इंद्रं॑वो॒वि॒श्वत॒
स्परि॒हवा॑महे॒जने॑भ्यः ॥ अ॒स्माक॑मस्तु॒केव॑लः ॥ १० ॥ १४ ॥ ७ ॥ २ ॥ एंद्र॑सान॒सिं र॒यिं स॒
जित्वा॑नंसदा॒सह॑म् ॥ वर्षि॑ष्ठमू॒तये॑भर ॥ १ ॥ नियेन॑मुष्टिह॒त्यया॒निवृ॒त्रारु॒णधा॑महै ॥ त्वोता॑
सो॒न्यर्व॑ता ॥ २ ॥ इंद्र॒त्वोता॑स॒आव॒यंवज्रं॑घ॒नाद॑दीमहि ॥ जये॑म॒संयु॒धिस्पृधः॑ ॥ ३ ॥ व॒यं
शूरे॑भि॒रस्तृ॑भि॒रिंद्र॒त्वया॑यु॒जाव॒यम् ॥ सा॒स॒ह्याम॑पृतन्य॒तः ॥ ४ ॥

न्याच्चविशेषतः ॥ ९ ॥ सम्यग्घवामहेसर्वगतंचव्यक्तरूपतः ॥ स्थातुमेकत्रवोऽर्थायजनानोऽस्तुस
केवलः ॥ १० ॥ १४ ॥ ७ ॥ २ ॥ जयिनासहितंलाभयुक्तंवित्तंसदाबलम् ॥ वर्षिष्ठंसुमह
द्रक्षानिमित्तंनित्यदाभर ॥ १ ॥ येनारीन्मुष्टियुद्धेनतमांसिज्ञानयुद्धतः ॥ त्वत्प्रेरितानिरुंधामःकांश्चिद्वातु
रगादिभिः ॥ आवृत्त्यैवोपसर्गस्यक्रियावृत्तिर्भविष्यति ॥२॥ त्वत्प्रेरिताज्ञानरतिंदृढत्वेनाददीमहि ॥३॥
त्वयापृतन्यतःशत्रूनभिष्यामसुयोद्धृभिः ॥ ४ ॥

यस्मान्महाननादिश्चविष्णुर्जीवोऽवरस्तथा ॥ तस्यैवास्तुमहत्त्वंतन्नजीवब्रह्मतांस्मरेत् ॥ आकाशवत्पृथि
म्नासौशवःसुखबलेतथा ॥ ५ ॥ १५ ॥ अन्यसंवहनेनापियेतंप्रापाजनार्दनम् ॥ ज्ञानलाभेनतुनरस्तए
वपशवोऽपरे ॥ विप्राश्चैवधियायुक्तामूर्खाःशूद्रसमामताः ॥ ६ ॥ यःकुक्षिस्तस्यदेवस्यसमुद्रइवसोऽखि
लान् ॥ कामान्क्षरतिभक्तायमहापइवतर्पकाः ॥ काकुदस्तस्यजिह्वाःस्युर्बह्वयोबह्वमुखेषुयाः ॥ ७ ॥
एवमेवास्यवाणीचवेदेतामहतीतथा ॥ पक्वशाखेवयजतेवरदात्रीविरप्शिनः ॥ बलिष्ठस्यहिते ॥ ८ ॥ सं

महाँइंद्रःपरश्चनुर्महित्वमस्तुवज्रिणे ॥ द्यौर्नप्रथिनाशवः ॥ ५ ॥ १५ ॥ समोहेवायआशंतन
रःस्तोकस्यसनितौ ॥ विप्रासोवाधियायवः ॥ ६ ॥ यःकुक्षिःसोमपातमःसमुद्रइवपिन्वते ॥
उर्वीरापोनकाकुदः ॥ ७ ॥ एवाह्यस्यसूनृताविरप्शीगोमतीमही ॥ पक्वाशाखानदाशुषे ॥
॥ ८ ॥ एवाहितेविभूतयऊतयइंद्रमावते ॥ सद्यश्चित्संतिदाशुषे ॥ ९ ॥ एवाह्यस्यकाम्या
स्तोमउक्थंचशंस्या ॥ इंद्रायसोमपीतये ॥ १० ॥ १६ ॥ ८ ॥ इंद्रेहिमत्स्यंधसोविश्वेभिः
सोमपर्वभिः ॥ महाँअभिष्टिरोजसा ॥ १ ॥ एमेनंसृजतासुतेमंदिमिंद्रायमंदिने ॥ चक्रिंवि
श्वानिचक्रये ॥ २ ॥ मत्स्वासुशिप्रमंदिभिःस्तोमेभिर्विश्वचर्षणे ॥ सचैषुसवनेष्वा ॥ ३ ॥

तिसद्योऽपियजतेहिते ॥ मावतेज्ञानिनेनित्यमूतयश्चविभूतयः ॥ ९॥ स्तोमाउक्थानिचैवास्यनस्मैकाम्या
निसर्वदा ॥ गेयाःशंस्यानिसोमस्यपीतयेनान्यथापिबेत् ॥ १० ॥ १६ ॥ ८ ॥ सोमपाःसोमपर्वाणःसर्वं
यस्मात्तदिच्छया ॥ अभिष्टिरोजसानित्यंमदंसुखमवाप्स्यसि ॥ १ ॥ एनमासृजतेदौचविष्णुंतंमदकारि
णम् ॥ मंदिनेविष्णवेसम्यक्कर्मिणंसर्वकर्मिणे ॥ स्वानंदविश्वजीवेशमत्स्वास्मद्रक्षयासह ॥ ३ ॥

त्वन्निस्स्तुतावेदवाचस्त्वांप्रत्येवाप्यनारतम्॥उच्चैर्मुख्यतयासम्यग्विसृष्टाःस्वपतिंप्रति ॥ अजोषाःस्तुत्यरूपे
णत्वत्सेव्यास्त्वदृतेकचित्॥४॥अर्वाञ्चीचान्प्रतित्वस्मान्भद्रंराधःप्रचोदय ॥ अस्त्येवतेविशेषेणप्रकृष्टंशुभम
च्युतम् ॥ ५ ॥ १७ ॥ रभस्वतःशब्दवतःस्तोतॄनस्मान्यशस्वतः ॥ तत्रत्वयिमहारायेमहाकीर्तिंसुचोदय
॥ ६ ॥ अस्मास्वतिबृहज्ज्ञानंनित्यंसंधेहिचाक्षयम् ॥ ७ ॥ विद्यांकीर्तिंसदेहान्नंबहुलाभयुतंबृहत् ॥ प्रा

असंग्रमिंद्रतेगिरःप्रतित्वामुदहासत ॥ अजोषावृषभंपतिम् ॥ ४ ॥ संचोदयचित्रमर्वाग्राधइंद्र
वरेण्यम् ॥ असदित्तेविभुप्रभु ॥ ५ ॥ १७ ॥ अस्मान्त्सुतत्रंचोदयेंद्रंरायेरभस्वतः ॥ तुविद्युम्नयशस्वतः ॥ ६ ॥ संगोमदिंद्रवाजवदस्मेपृथुश्रवोबृहत् ॥ विश्वायुर्धेह्यक्षितम् ॥ ७ ॥
अस्मेधेहिश्रवोबृहद्द्युम्नंसहस्रसातमम् ॥ इंद्रतारथिनीरिषः ॥ ८ ॥ वसोरिंद्रंवसुपतिंगीर्भिर्गृणंतऋग्मियम् ॥ होमगंतारमूतये ॥ ९ ॥ सुतेसुतेन्योकसेबृहद्बृहतएदरिः ॥ इंद्रायशूषमर्चति ॥ १० ॥ १८ ॥ ९ ॥ गायंतित्वागायत्रिणोर्चंत्यर्कमर्किणः ॥ ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे ॥ १ ॥ यत्सानोस्सानुमारुहद्भूर्यस्पष्टकर्त्वम् ॥ तदिंद्रोअर्थंचेततियूथेनवृष्णिरेजति ॥ २ ॥

र्थनेपौनरुक्त्यंनचोदयेतिततःपुनः ॥८॥ वसोर्वसूनांचपतिंदेवदेवेश्वरंप्रभुम् ॥ ऋङ्मयमाह्वयामोऽत्रगृणंतोऽ
भीष्टसिद्धये॥९॥ अविनाश्यरिरुद्दिष्टोबृहच्छूषंसुखंप्रति ॥ सुतेसुतेसद्गृहायदेवायबृहतेऽर्चति॥१०॥१८॥
॥९ ॥गायंतिसामगास्त्वर्चिभिःशंसंत्यृग्वेदिनोऽतिकम् ॥ विरिंचास्त्वांबहुज्ञानशक्रकेतुमिवोच्छ्रितम्॥व्यजा
नन्॥१॥उच्चतोऽप्युच्चंसामर्थ्यंकरणेतव॥ ततोपिभूरियत्तेनचेतत्यर्थमतोभवान् ॥ मुक्तामुक्तसमूहेनशोभते ॥ १० ॥

गूढशक्तिमान् ॥ उच्चादुच्चंविरिंचादिगतंकर्तृत्वमेवयत् ॥ भूरिस्पष्टमभूत्तेनपरेशस्यततश्वसः ॥ चेतत्यर्था
नशेषांश्चमहायूथेनचेष्टते ॥ २ ॥ कक्ष्याभिपूरकौपुष्टयायुंक्ष्वत्वंकेशिनोहरी ॥ अथोपगम्यशृणुनोगिरोऽ
॥३॥ भिस्वरवस्तुतिम् ॥ प्रशंसांकुरुशब्दंचपुनर्हर्षान्महत्तरम् ॥ ब्रह्मयज्ञंचनोऽतस्थोवहिष्ठश्चैववर्धय ॥
॥ ४ ॥ नित्यवृद्धत्वतोविष्णोर्वर्धनंतुप्रकाशनम् ॥ बहुशत्रून्निष्पिदसौहरिर्दनुजघातकः ॥ अस्मत्सख्या

युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा ॥ अथानइंद्रसोमपागिरामुपश्रुतिंचर ॥ ३ ॥ एहिस्तो
माँअभिस्वराभिगृणीह्यारुव ॥ ब्रह्मचनोवसोसचेंद्रयज्ञंचवर्धय ॥ ४ ॥ उक्थमिंद्रायशंस्यं
वर्धनंपुरुनिष्षिधे ॥ शक्रोयथासुतेषुणोरारणत्सख्येषुच ॥ ५ ॥ तमित्सखित्वईमहेतंरायेतं
सुवीर्ये ॥ सशक्रउतनःशकदिंद्रोवसुदयमानः ॥ ६ ॥ १९ ॥ सुविवृतंसुनिरजमिंद्रत्वादात
मिद्यशः ॥ गवामपव्रजंवृधिकृणुष्वराधोअद्रिवः ॥ ७ ॥ नहित्वारोदसीउभेऋघायमाणमिन्व
तः ॥ जेषःस्वर्वतीरपःसंगाअस्मभ्यंधूनुहि ॥ ८ ॥

यशब्दंचचकारास्मासुसंस्थितः ॥ यथासुतेषुसोमेषुकरोत्यृत्विक्षुचस्थितः ॥ ५ ॥ तमेवशरणंनित्यंसखि
त्वाद्यर्थमीमहे ॥ शक्त्यानंदस्वरूपत्वाच्छक्रःसर्वत्रचाशकत् ॥ अस्माकंचसदावित्तंददद्देवप्रवर्तते ॥ ६ ॥
॥ १९ ॥ विस्पष्टंसुष्ठुकाल्यंचयशस्त्वद्दत्तमेवहि ॥ गूढंज्ञानसमूहंत्वंविवृण्वद्धिचनःकुरु ॥ अद्रिगदरणी
यत्वात्प्राणस्तद्वर्तकोद्रिवाः ॥ हरिःशक्रस्तथाद्रीणांछेदनाद्धारणादपि ॥ ७ ॥ नत्वामृघायमाणंहिवर्धमानं

तुरोदसी ॥ संग्रामुतःश्रीभूमीचसहितेवाऽप्रसादतः ॥ अपःप्रजाःसुखवतीरजयस्त्वद्वशत्वतः ॥ ज्ञानानिसं
धूनुहिचप्रापयोच्चाअपिस्वयम् ॥ ८ ॥ बहुश्रवणकर्णास्मदाह्वानंशृणुचादरात् ॥ अद्येवचगिरोधेहिमयि
॥ ११ ॥ स्तोमंचमत्कृतम् ॥ प्रियंयोगादपिकुरु ॥ ९ ॥ विद्मत्वांशक्तिमत्तमम् ॥ श्रोतारंयुत्सुचाह्वानमाह्वयामस्त अ० १
वावनम् ॥ बहुलाभोत्तममिति ॥ १० ॥ स्थानांतरगतेऋचौ ॥ दृष्टेंद्रंयज्ञगंयाभ्यांमधुच्छंदाःसमस्तु
वत् ॥ आनूनइतितेनैवनविरुद्धाशताचैता ॥ ॥ मात्राकुशैर्गृहीतत्वाज्जन्मन्यासीत्सकौशिकः ॥ गाधि

आश्रुत्कर्णश्रुधीहवंनूचिद्दधिष्वमेगिरः ॥ इंद्रस्तोममिमंममकृष्वायुजश्चिदंतरम् ॥ ९ ॥ वि
द्माहित्वावृषंतमंवाजेषुहवनश्रुतम् ॥ वृषंतमस्यहूमहऊतिंसहस्रसातमाम् ॥ १० ॥ आतूनं
इंद्रकौशिकमंदसानःसुतंपिब ॥ नव्यमायुःप्रसूतिरकृधीसहस्रसामृषिम् ॥ ११ ॥ परित्वागिर्व
णोगिरइमाभवंतुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवंतुजुष्टयः ॥ १२ ॥ २० ॥ १० ॥
इंद्रंविश्वाअवीवृधन्त्समुद्रव्यचसंगिरः ॥ रथीतमंरथीनांवाजानांसत्पतिंपतिम् ॥ १ ॥ सख्ये
तइंद्रवाजिनोमाभेमशवसस्पते ॥ त्वामभिप्रणोनुमोजेतारमपराजितम् ॥ २ ॥ पूर्वीरिंद्रस्य
रातयोनविदस्यंत्यूतयः ॥ यदीवाजस्यगोमतःस्तोतृभ्योमंहतेमघम् ॥ ३ ॥

त्वाद्धाहिरण्यांडकोशस्थत्वाद्धरिस्तथा ॥ मंदसानोनित्यसुखीस्तुत्यमायुश्चनस्तिर ॥ ऋषिंसहस्रलाभंमां
कुरुच ॥ ११ ॥ त्वाइमागिरः ॥ सर्वदापरितःसंतुमदीयाःसर्वलाभिनम् ॥ वृद्धिरूपागिरोजुष्टाःसेवारूपा
श्चसंतुनः ॥ १२ ॥ २० ॥ १० ॥ अष्टावृचःपुनस्तेनदृष्टाअन्यत्रगास्तपः ॥ कुर्वता ॥ ॥ सम्यगुद्रि ॥ ११ ॥
क्तगुणव्यक्तिस्तथाभिधः ॥ १ ॥प्रथमानिमहत्त्वेनतेदानान्यवनानिच ॥ नभियंतेननश्यंतिगोमदन्नंयश
स्तथा ॥ यदिमंहतेददातीशो ॥ ३ ॥

वलस्तिर्यग्गतिर्धियः ॥ वाचामन्यार्थबुद्धेस्तु बिलंमूलंतमोहियत् ॥ तदपाव्रतवांस्त्वंचप्रदर्श्यविनिवार्यच॥
त्वांहिदेवाभयापेताःप्रेर्यमाणास्त्वयैवच ॥ छाद्यमानंगिरादैत्यैररक्षन्निवसद्गिरा ॥ ॥ इंद्रस्यगोसवार्थेंचस
मुत्सृष्टाजगत्यपि ॥ चर्तुंगावोहृतादैत्यैःसरमारक्षिताःपुरा ॥ तस्याःस्वस्त्वमुक्त्वैवतयोच्छिष्टंचगोपयः ॥
तदर्थंपणयोनामतेदैत्याबलपूर्वकाः ॥ इंद्रेणनिहताःपश्चाज्ज्ञात्वाचसरमाकृतम् ॥ ताडयित्वापदावक्रा
त्स्वतेपयसितांभयात् ॥ शरणागतांप्रेषयित्वादूत्येनपणिनांपुनः ॥ भित्वागिरिव्रजंतंचगावोयत्रप्रतिष्ठि

पुरांभिंदुर्युवांकविरमितौजाअजायत ॥ इंद्रोविश्वस्यकर्मणोधर्तावज्रीपुरुष्टुतः ॥ ४ ॥ त्वंव
लस्यगोमतोपावरद्रिवोबिलम् ॥ त्वांदेवाअबिभ्युषस्तुज्यमानासआविषुः ॥ ५ ॥ तवाहंशूर
रातिभिःप्रत्यायंसिंधुमावदन् ॥ उपातिष्ठंतगिर्वणोविदुष्टेतस्यकारवः ॥ ६ ॥ मायाभिरिं
द्रमायिनंत्वंशुष्णमवातिरः ॥ विदुष्टेतस्यमेधिरास्तेषांश्रवांस्युत्तिर ॥ ७ ॥ इंद्रमीशानमो
जसाभिस्तोमाअनूषत ॥ सहस्रंयस्यरातयउतवासंतिभूयसीः ॥ ८ ॥ २१ ॥ ११ ॥ ३ ॥
अग्निंदूतंवृणीमहेहोतारंविश्ववेदसम् ॥ अस्ययज्ञस्यसुक्रतुम् ॥ १ ॥

ताः ॥ निःसारिताःपुनस्ताश्चगोसवेनेष्टमेवच ॥ तदादेवाअभीत्यैवपरितोजुगुपुःपतिम् ॥४॥५॥ नवदानै
रहंसिंधुंनदींप्रत्यागमंपुनः ॥ त्वामावदन्स्तुतिंपदैर्यज्ञदीक्षार्थमुद्यताः ॥ उपातिष्ठंतकर्तारोविदुस्त्वांयेगिरोदि
त ॥ ६ ॥ शक्तिभिःशक्तिमंतंत्वांशोषकंवृत्रमातिरः ॥ तमोवात्वांविदुर्मेधारतास्तेषांश्रवांसिच ॥ वि
द्याउच्चैस्तरांदेहि ॥ ७ ॥ स्तुवंतित्वांसहौजसा ॥ ८ ॥ २१ ॥ ११ ॥ ३ ॥ ॥ ऋ
क्संहितायाःस्वाध्यायात्प्रबंधाद्व्यासनिर्मितात् ॥ ब्राह्मणेभ्यस्तथामानात्प्रोक्ताःस्युर्मुनयोऽत्रये ॥

श्रुत्यभावादालिंगाच्चमुनिर्नान्यःप्रतीयते ॥ श्रुतिलिंगान्यतायावत्तावत्पूर्वाप्रमाभवेत् ॥ शतर्ग्भिरुक्त
राभिस्तुवह्निनामानमच्युतम् ॥ अस्तौन्मेधातिथिस्ताभ्यउत्तराअपितद्दृशः ॥ अन्यत्रगास्तपस्यन्सता
ददर्शकदाचन ॥ कालस्थानांतरत्वंचेत्संख्यातोभ्यधिकंभवेत् ॥ अन्यस्थानगताअन्यदृष्टाअप्यत्रगा
यदि ॥ संख्यांतर्भावमेष्यंतिताइतोऽपगतायतः ॥ ७ ॥ यज्ञभागार्थमत्रस्थोदेवैःसंप्रेषितोयतः ॥ दूतोऽ
ग्निर्वासुदेवश्वतत्तत्प्रार्थितकृद्यतः ॥ विश्ववेदाःससर्वज्ञोयज्ञज्ञोयज्ञसुक्रतुः ॥१॥ अग्निनामाजामदग्न्योभग

अ॒ग्निम॑ग्निं॒ हवी॑मभिः॒ सदा॑ हवन्त वि॒श्पति॑म् ॥ ह॒व्य॒वाहं॑ पुरुप्रि॒यम् ॥ २ ॥ अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे ॥ असि॒ होता॑ न॒ ईड्यः॑ ॥ ३ ॥ ताँ उ॑श॒तो वि बो॑धय॒ यद॑ग्ने॒ यासि॑ दू॒त्य॑म् ॥ दे॒वैरा स॑त्सि ब॒र्हिषि॑ ॥ ४ ॥ घृता॑हवन दीदिवः॒ प्रति॑ ष्म॒ रिष॑तो दह ॥ अग्ने॒ त्वं र॑क्ष॒स्विनः॑ ॥ ५ ॥ अ॒ग्निना॒ग्निः सम् इ॑ध्यते क॒विर्गृ॒हप॑ति॒र्युवा॑ ॥ ह॒व्य॒वाड्जु॒ह्वा॑स्यः ॥ ६ ॥ २२ ॥ क॒विम॒ग्निमुप॑ स्तुहि स॒त्यध॑र्माणमध्व॒रे ॥ दे॒वम॑मीव॒चात॑नम् ॥ ७ ॥ यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व सप॒र्यति॑ ॥ तस्य॑ स्म प्रावि॒ता भ॑व ॥ ८ ॥ यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति ॥ तस्मै॑ पावक मृळय ॥ ९ ॥

वान्संप्रकीर्तितः ॥ तस्यरूपबहुत्वेनवीप्साचैवोपपद्यते॥हवीमभिर्ऋग्भिराह्वानैराह्वयंतःप्रजापतिम्॥२॥ जज्ञा
नोव्यज्यमानस्तुवृक्तंप्रस्तुतमुच्यते ॥ यजमानोवृक्तबर्हिः ॥३॥बोधयेशोच्छतःसुरान् ॥ देवैःसहोपविशसि
॥ ४ ॥ यस्यतेसुघृतंहविः ॥ रिषतोनाशकान्रक्षोजनान्प्रतिदहैवच ॥ ५ ॥ यस्यास्येहूयतेसोऽग्निःपरेणेन
समिध्यते ॥ अथवाहवनीयोऽग्निर्मथितेनसमिध्यते ॥ ६ ॥ २२ ॥ सत्यधर्मासद्गुणभृद्दुःखघ्नोऽमीवचात
नः ॥ चातनंकालनंवास्यात् ॥ ७ ॥ देववीतिस्तुतद्वतिः ॥ आवासयतियस्त्वांचतंत्वंमृळयसर्वदा ॥ ९ ॥

त्वत्पूजाविषयेदेवानावहेंद्रियमानिनः ॥ १० ॥ गायत्रेणस्तूयमानोदृश्यमानेननोरयिम् ॥ पुत्रयुक्तामिषं चैववीर्ययुक्तामथावह ॥११॥ ज्वलतातेजसाविश्वदेवाह्वानैर्शृणुस्तुतिम्॥१२॥२३॥१२॥ अस्मद्धविष्मतेदेवानाहूययजचादरात् ॥१॥ तनूभ्योवाक्ततोदेवोव्यक्तस्तेनतनूनपात् ॥२॥ नरैःस्तुत्योनराशंसोवह्लेरन्याथवातनूः॥३॥मनूनांचहितत्वेनमनुर्हितइतीरितः ॥४ ॥ आनुषक्सर्वतोदेवस्थानंबर्हिःस्तृणीतच॥ शुद्धस्य

सनःपावकदीदिवोग्नेदेवाँइहावह ॥ उपयज्ञंहविश्चनः ॥ १० ॥ सनस्तवानआभरगायत्रेणन
वीयसा ॥ रयिंवीरवतीमिषम् ॥ ११ ॥ अग्नेशुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः ॥ इमं
स्तोमंजुषस्वनः ॥ १२ ॥ २३ ॥ १२ ॥ सुसमिद्धोनआवहदेवाँअग्नेहविष्मते ॥ होतःपाव
कयक्षिच ॥ १ ॥ मधुमंतंतनूनपाद्यज्ञंदेवेषुनःकवे ॥ अद्याकृणुहिवीतये ॥ २ ॥ नराशंस
मिहप्रियमस्मिन्यज्ञउपह्वये ॥ मधुजिह्वंहविष्कृतम् ॥ ३ ॥ अग्नेसुखतमेरथेदेवाँईळितआ
वह ॥ असिहोतामनुर्हितः ॥ ४ ॥ स्तृणीतबर्हिरानुषग्घृतपृष्ठंमनीषिणः ॥ यत्रामृतस्य
चक्षणम् ॥ ५ ॥ विश्रयंतामृतावृधोद्वारोदेवीरसश्चतः ॥ अद्यानूनंचयष्टवे ॥ ६ ॥ २४ ॥
नक्तोषासासुपेशसास्मिन्यज्ञउपह्वये ॥ इदंनोबर्हिरासदे ॥ ७ ॥

विष्णोर्यत्स्थानंघृतपृष्ठंहितन्मनः ॥ यत्रस्याद्दर्शनंविष्णोर्नित्यामरणधर्मिणः ॥ ५ ॥ ऋतरूपेणहरिणासमृद्धायाकृतावृधः ॥ द्वारोदेव्यःश्रियोदास्यःश्रयंतामिहनोमखे ॥ मानसेवाह्ययज्ञेवाह्यसंगत्वादसश्चतः ॥ अद्याहनितथानूनमद्यैवयजनार्थतः ॥ द्वारभूतःसभगवानपिसाक्षान्मुमुक्षतः ॥ स्त्रीरूपश्चस ॥६ ॥ २४ ॥ नक्तास्यान्नाक्तोयस्मात्ससर्वतः॥ उषाःप्रकाशरूपत्वात्सुभद्रेनेउपह्वये अस्मिन्बर्हिषिसंस्थित्यै ॥ ७ ॥

होतारौदैवगावपि ॥ मथ्यमानोपरश्चैववह्नीतद्रोर्थवाहरिः ॥ आत्मांतरात्मरूपेणद्विरूपोवाव्यवस्थितः ॥ देवेपुयजतांयज्ञमस्मदीयमिमंसदा ॥ ८ ॥ इळेड्यत्वाद्धरिःश्रीर्वाभूरूपासैवचापरा ॥ महीतुभारतीनामवाग्व्याब्रह्मणोऽपरा ॥ तद्गतस्तादृशैरूपैःपृथक्स्थोवाहरिस्तथा ॥ ९ ॥ त्वष्टातेजस्त्वतोविष्णुर्बलत्वाद्वासमीरितः ॥ विश्वरूपकरत्वाच्चविश्वरूपोऽथपूर्तितः॥१०॥वननीयपतित्वेनवनस्पतिरितीरितः ॥ ज्ञानंतुचेतनम्

तासुंजिह्वाउपंह्वयेहोतांरादैव्यांकवी ॥ यज्ञंनोयक्षतामिमम् ॥ ८ ॥ इळासरंस्वतीमहीतिस्रो
देवीर्मयोभुवंः ॥ बर्हिःसींदंत्वस्रिधंः ॥ ९ ॥ इहत्वष्टांरमग्रियंविश्वरूपमुपंह्वये ॥ अस्माकं
मस्तुकेवंलः ॥१०॥ अवंसृजावनस्पतेदेवंदेवेभ्योहविः ॥ प्रदातुरंस्तुचेतंनम् ॥ ११ ॥ स्वाहां
यज्ञंकृणोतनेंद्रांययज्वंनोगृहे ॥ तत्रंदेवाँउपंह्वये ॥ १२ ॥ २५ ॥ १३ ॥ ऐभिरग्नेदुवोगिरो
विश्वेभिःसोमंपीतये ॥ देवेभिर्याहियक्षिच ॥१॥आत्वाकण्वांअहूपतगृणंतिविप्रतेधियंः ॥२॥
देवेभिरग्नआगंहि ॥ ३ ॥ इंद्रवायूबृहस्पतिंमित्राग्निंपूषणंभगंम् ॥ आदित्यान्मारुतंगणम् ॥
प्रवोंभ्रियंतइंदंवोमत्सरामांदयिष्णवंः ॥ द्रप्सामध्वंश्चमूषदंः ॥ ४ ॥

॥ ११ ॥ स्वाहास्वभागगतिमान्स्मृतः॥अव्ययत्वादमोषश्च ॥ १२ ॥ २५ ॥ १२ ॥ कामदोहाद्धवःस्मृतः ॥१॥बृहन्पतिर्बृहत्यावावाचएवबृहस्पतिः ॥ मित्रेतिमित्रावरुणौपूषानामसपोषणात्॥पूर्णत्वाद्वाभगःप्रोक्तः पूर्णैश्वर्यादिकत्वतः॥आदिस्थत्वात्सआदित्यआददानःप्रयातिवा॥बहुरूपत्वतश्चैवमानोक्तत्वात्तुमारुतः॥३ मत्सरामदकारित्वात्ताच्छील्यादुत्तरंपदम् ॥ द्रप्सास्तेद्रवणाच्चैवचमसस्थाश्चमूषदः ॥ शिरश्चचमसंप्रोक्तमिष्टदानात्तथेंदवः ॥ ४ ॥

अवस्युर्यजमानःस्यादवनार्थप्रवृत्तितः ॥ आत्मस्थंवाबहुवचोबहवोमुनयोऽत्रवा ॥ उत्तराणांवचस्त्वे
नस्वयंवदतिचेश्वरः ॥ अरंकृतोऽतिकर्तारस्त्वलंकर्तारएववा ॥ ५ ॥ स्निग्धपृष्ठास्समारूढाहरिणा
वाविदोषिणा ॥ मनोमात्रेणयोज्याश्वत्वाद्देवांश्ववहंतिये ॥ ६ ॥ २६ ॥ तैर्देवान्यजतःस्तो
तॄनृज्ञानेनब्रह्मणैधितान् ॥ पत्नीभिर्योजयागंतुंसहमध्वश्चपायय ॥ ७ ॥ तेषष्ठ्यंतोनुदात्तःस्यादुदात्तोबहु

ईळते॒त्वाम॑व॒स्यवः॒कण्वा॑सो॒वृक्तब॑र्हिषः । ह॒विष्म॑न्तो अ॒रं॑कृतः॑ ॥ ५ ॥ घृ॒तपृ॑ष्ठा मनो॒युजो॒ येत्वा॒
वह॑न्ति॒वह्न॑यः । आदे॒वान्त्सोम॑पीतये ॥ ६ ॥ २६ ॥ तान्यज॑त्राँ ऋता॒वृधोऽग्ने॒पत्नी॑वतस्कृधि ।
मध्वः॑ सुजिह्व पायय ॥ ७ ॥ येयज॑त्रा॒यई॒ड्या॒स्तेते॑पिबन्तु जि॒ह्वया॑ । मधो॑रग्ने॒वष॑ट्कृति ॥ ८ ॥
आकीं॒सूर्य॑स्य रोच॒नाद्विश्वा॑न्दे॒वाँ उ॑ष॒र्बुधः॑ । विप्रो॒होते॒हव॑क्षति ॥ ९ ॥ विश्वे॑भिः सो॒म्यंमध्व॒ग्न
इन्द्रे॑ण वा॒युना॑ । पिबा॑ मि॒त्रस्य॒धाम॑भिः ॥ १० ॥ त्वंहोता॒मनु॑र्हितोऽग्ने॑ य॒ज्ञेषु॑ सीदसि । सेमंनो॑
अध्व॒रंय॑ज ॥ ११ ॥ यु॒क्ष्वाह्यरु॑षी॒रथे॑ ह॒रितो॑ देव रो॒हितः॑ । ताभि॑र्दे॒वाँ इ॒हाव॑ह ॥ १२ ॥ २७ ॥
॥ १४ ॥ इंद्र॒सोमं॒पिब॑ ऋ॒तुना॒त्वा॑विश॒न्त्विन्द॑वः ॥ म॒त्स॒रास॒स्तदो॑कसः ॥ १ ॥

वाचकः ॥ आवृत्तस्तुभवेदर्थस्तेपिबंतुवषट्कृतौ ॥ ८ ॥ सूर्यस्यरोचनात्स्वर्गादावक्षत्यग्निरिंदुपान् ॥ उ
षःप्रकाशनाद्बुद्धतद्विदस्तउषर्बुधः ॥ ९ ॥ देवांस्तेविष्णुधामत्वान्मित्रधामानईरिताः ॥ १० ॥ अग्निवाहा
अश्वतर्योदूर्वापद्माग्निसप्रभाः॥ लोहिताःक्वचिदश्वाश्वरोहिन्मृग्योपिकुत्रचित्॥ १२॥ २७॥ १४॥ऋतुर्मार्ग
स्तुनेतृत्वान्नेष्टाग्निर्हरिरेववा ॥ ईष्टेनकश्चिदस्येतिग्रानयश्श्वसमीरिताः ॥ गतिशीलत्वतोग्रास्ताज्ञातृनेतृत्व
तोहरिः ॥ गमनान्नयनाद्वाग्राऋतुपात्रमृतुस्तथा ॥ सोमास्तदोकसःप्रोक्ताऋतुपात्रस्थितायतः ॥ पत्नीने

तृत्वतोनेष्टानेष्टर्त्विक्संप्रकीर्तितः ॥ ज्ञापयंतिस्वलिंगानीत्यृतवःसंप्रकीर्तिताः ॥ पावनाच्चैवपोतारोमरुतः पोतृदेवताः ॥ अग्निस्तुदेवतानेष्टुस्त्वष्टेंद्रोविष्णुरेववा ॥ १ ॥ २ ॥ ३ ॥ वेद्युत्तरासदश्चैवप्राग्वंशोयोनयः स्मृताः ॥ भूषभूषयनोयज्ञम् ॥ ४ ॥ ब्राह्मणाच्छंसिपात्रतः ॥ पिबेंद्रनोराधसोऽर्थैत्वामनुत्वतुदेवताः ॥ स्तृ

मरुतःपिबंतऋतुनापोत्राद्यज्ञंपुनीतन।यूयंहिष्ठासुदानवः ॥२ ॥ अभियज्ञंगृणीहिनोग्नावोनेष्टःपिबऋतुना।त्वंहिरत्नधाअसि॥३॥अग्नेदेवाँइहावहसादयायोनिषुत्रिषु।परिभूषपिबऋतुना ॥४॥ब्राह्मणादिंद्रराधसःपिबासोमंमृतूँरनु। तवेद्धिसख्यमस्तृतम् ॥५॥ युवंदक्षंधृतव्रतमित्रावरुणदूळभम् । ऋतुनायज्ञमाशाथे ॥ ६ ॥२८॥ द्रविणोदाद्रविणसोग्रावहस्तासोअध्वरे । यज्ञेषुदेवमीळते ॥ ७ ॥ द्रविणोददातुनोवसूनियानिशृण्विरे । देवेषुतावनामहे ॥ ८ ॥ द्रविणोदाःपिपीषतिजुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥ यत्त्वातुरीयमृतुभिर्द्रविणोदोयजामहे ॥ अधस्मानोददिर्भव ॥ १० ॥ अश्विनापिबतंमधुदीद्यग्नीशुचिव्रता ॥ ऋतुनायज्ञवाहसा ॥ ११ ॥

तंछिन्नमितिप्रोक्तम्॥५॥ अस्तभ्यंदुर्दभंस्मृतम् ॥ दक्षाख्यंयजमानंचापीशाथेयज्ञमेवच ॥ सोमंपीत्वर्तुपात्रेणसहवातेनचर्तुना ॥ ६ ॥ २८ ॥ होताचहोतृकाश्चैवद्रविणोदाद्रवीणसः ॥ अग्निश्चैवाग्नयस्तेषांदेवताविष्णुमीळते ॥ ७ ॥ पातुमिच्छतिसोमंससोमास्तस्मैप्रतिष्ठिताः ॥ ऋतुपात्रैर्देवताभिःसहैवैनमभीप्सत ॥ ९ ॥ चतुर्थवारमपियत्त्वांयजामोददिर्भव ॥ १० ॥ दीद्यग्नीइतिदीप्ताग्नी ॥ ११ ॥

संत्योऽग्निःसंततत्वतः॥ विष्णुर्वर्ल्वधिपोविष्णुःकेशवादिस्वरूपतः॥ यहान्सोमस्यमिमतइतितस्यैवकथ्यते॥
गार्हपत्येनपात्रेणयजमानस्तुदेवयन्॥ देवान्यातीति ॥ १२ ॥ २१ ॥१५॥ सुदूरीकुर्वंतिविषयान्यतः॥
चक्षूंषींद्रस्यहरयस्तेनोक्ताःसूरचक्षसः ॥ १ ॥ भक्तिस्सुतानिधानानिबुद्धेर्धानाइतिह्यपि ॥ २ ॥ प्रात
रित्यादिवाक्येनसवनत्रयमीरितम् ॥ समामत्वात्सोमपीतिस्तृतीयंसवनंस्मृतम् ॥ सदा ॥ ३ ॥

गार्हपत्येनसंत्यऋतुनांयज्ञनीरसि ॥ देवांदेवयतेयज ॥ १२ ॥ २१ ॥ १५ ॥ आत्वांव
हंतुहरयोवृषणंसोमपीतये ॥ इंद्रत्वासूरचक्षसः ॥ १ ॥ इमाधानाघृतस्नुवोहरीइहोपवक्षतः॥
इंद्रंसुखतमेरथे ॥ २ ॥ इंद्रंप्रातर्हवामहइंद्रंप्रयत्यध्वरे ॥ इंद्रंसोमस्यपीतये ॥ ३ ॥ उपनः
सुतमागहिहरिभिरिंद्रकेशिभिः ॥ सुतेहित्वाहवामहे ॥ ४ ॥ सेमंनःस्तोममागह्युपेदंसवनं
सुतम् ॥ गौरोनतृषितःपिब ॥ ५ ॥ ३० ॥ इमेसोमासइंदवःसुतासोअधिबर्हिषि ॥ ताँइं
द्रसहसेपिब ॥ ६ ॥ अयंतेस्तोमोअग्रियोहृदिस्पृगस्तुशंतमः ॥ अथासोमंसुतंपिब ॥ ७ ॥
विश्वमित्सवनंसुतमिंद्रोमदायगच्छति । वृत्रहासोमपीतये ॥ ८ ॥ सेमंनःकाममापृणगो
भिरश्वैःशतक्रतो ॥ स्तवामत्वास्वाध्यः ॥ ९ ॥ ३१ ॥ १६ ॥

विष्णुविवक्षायांयजमानबलंसहः ॥ तदिष्टस्यैवदानायतद्गुणव्यक्तिरेववा ॥ पूर्णमदःपूर्णमिदंपूर्णात्पूर्ण
मुदच्यते ॥ हेयोपादेयरहितगुणपूर्णोहरिःसदा ॥ अनुग्रहव्यक्तिरेवतद्गुणानांचनान्यथा ॥ इत्यादिवेदवा
क्येभ्योनैववृद्धिर्हरेःक्वचित्॥ ६ ॥ पृणसंपूरयस्वाध्यःसुधीतयइतीरिताः ॥ ९ ॥ ३१ ॥ १६ ॥

अविकारेणसंस्थानमीदृक्त्वंनामकीर्तितम् ॥ १ ॥ मावतोज्ञानयुक्तस्यप्रजाश्चर्षणयःस्मृताः ॥ २ ॥
नेदिष्ठत्वंसमीपत्वंक्षिप्रंशरणमीमहे ॥ ३ ॥ युवयोरेववाक्यानांसुमतीनांचसर्वशः ॥ भवेमान्नप्रदातॄणां
सर्वदाविषयावयम् ॥ ४ ॥ क्रतुःप्रधानउक्थ्यश्वशस्त्रैःस्तुत्योविशेषतः ॥ ५ ॥ ३२ ॥ रक्षणेनतयोर्वि
त्तंज्ञानंवाप्राप्नुमःसदा ॥ निधीमहिचदानंचस्यादेवास्माकमर्थिने ॥ ६ ॥ ह्वयतासंहितायांतुदेवतैक्य

इंद्रावरुणयोरहंसम्राजोरवआवृणे ॥ तानोमृळातईदृशे ॥ १ ॥ गंताराहिस्थोवसेहवंविप्र
स्यमावतः ॥ धर्तारांचर्षणीनाम् ॥ २ ॥ अनुकामंतर्पयेथामिंद्रावरुणरायआ ॥ तावांनेदि
ष्ठमीमहे ॥ ३ ॥ युवाकुहिशचीनांयुवाकुसुमतीनाम् ॥ भूयामवाजदाव्नाम् ॥ ४ ॥ इंद्रःसह
स्रदाव्नांवरुणःशंस्यानाम् ॥ क्रतुर्भवत्युक्थ्यः ॥ ५ ॥ ३२ ॥ तयोरिदवसावयंसनेमनिचधी
महि ॥ स्यादुतप्ररेचनम् ॥६॥ इंद्रावरुणवामहंहुवेचित्रायराधसे । अस्मान्त्सुजिग्युषस्कृतम्
॥ ७ ॥इंद्रावरुणनूनुवांसिषासंतीषुधीष्वा ॥ अस्मभ्यंशर्मयच्छतम् ॥ ८ ॥ प्रवामश्नोतुसुष्टु
तिरिंद्रावरुणयांहुवे । यामृधाथेसधस्तुतिम् ॥ ९ ॥ ३३ ॥१७॥ ४ ॥ सोमानंस्वरणंकृणुहिब्र
ह्मणस्पते । कक्षीवंतयऔशिजः ॥ १ ॥

प्रदर्शिनी ॥ स्वरूपैक्यंहरौतत्तुमत्यैक्यंभिन्नयोरपि ॥ ७ ॥ अद्यवांनुनुमोलोपःस्वातंत्र्यार्थेहिसूत्रतः ॥
साधयंतीषुधीष्वेवशर्माऽस्मभ्यंप्रयच्छतम् ॥ ८ ॥ यथास्थितस्तुतिंयांचवर्धयेथेसदैवमे ॥ ९ ॥ ३३ ॥
॥ १७ ॥ ४ ॥ सौम्यंशब्दंकृणुत्वंनोविष्णोवायोसुवाक्पते ॥ कक्षीवंतंप्रतिहियोदत्तोयःसउशिक्सुतः ॥
विवक्षितोमुनिःसोऽपितस्माद्दर्थोऽपिमांप्रति ॥ १ ॥

वित्तवान्रोगहाज्ञानवेत्तास्माभिःसयुग्भवेत् ॥ तुरोवेगाद्धरिर्वायु ॥ २ ॥ ररुट्चातिरोषणात् ॥ तस्यधूर्तिर्वचोनास्मान्पूरयेद्रक्षनोहरे ॥ ३ ॥ घेतिहाऽवधूतिश्चैवसोमःसौम्यत्वतोहरिः ॥ उनामयाचयुक्तत्वादूमैर्युक्तत्वतोपिवा ॥ अमःसइतिवा ॥ ४ ॥ साक्षाच्छ्रीर्दक्षेणेतिदक्षिणा ॥ दक्षिणाचतुरत्वाद्वास्वयमेवजनार्दनः ॥ ५ ॥ ३४ ॥ सदसस्पतिर्हरिःसाक्षाद्वायुरग्निरथापिवा ॥ लाभज्ञानस्वरूपोऽसौशरणंतमया

योरे॒वान्योअ॑मीव॒हाव॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । सनः॑सिषक्तु॒यस्तु॒रः ॥ २ ॥ मान॒ःशंसो॒अर॑रुषो॒धूर्तिः॒ प्रण॒ङ्मर्त्य॑स्य । रक्षा॑णोब्रह्मणस्पते ॥ ३ ॥ सघा॑वी॒रोनरि॑ष्यति॒यमिं॑द्रोब्रह्म॑णस्पतिः॑ ॥ सो मो॑हि॒नोति॒मर्त्य॑म् ॥ ४ ॥ त्वंतंब्र॑ह्मणस्पते॒सोम॒इंद्र॑श्च॒मर्त्य॑म् ॥ दक्षि॑णापा॒त्वंहसः ॥ ५ ॥ ॥ ३४ ॥ सद॑स॒स्पति॒मद्भु॑तंप्रि॒यमिंद्र॑स्य॒काम्य॑म् । स॒निंमे॒धाम॑यासिषम् ॥ ६ ॥ यस्मा॑दृ॒तेन सि॒ध्यति॑य॒ज्ञोवि॑प॒श्चित॑श्च॒न । सधी॒नांयोग॑मिन्वति ॥ ७ ॥ आदृ॑ध्नोति॒ह॒विष्कृ॑तिं॒प्राञ्चं॑कृणोत्य ध्व॒रम् । होत्रा॑दे॒वेषु॑गच्छति ॥ ८ ॥ नरा॒शंसं॑सु॒धृष्ट॑म॒मप॑श्यंस॒प्रथ॑स्तमम् । दि॒वोनसद्म॑मखस म् ॥ ९ ॥ ३५ ॥ १८ ॥ प्रति॒त्यंचारु॑मध्व॒रंगो॑पी॒थाय॒प्रहू॑यसे । म॒रुद्भि॑रग्न॒आग॑हि ॥ १ ॥

सिषम् ॥ ६ ॥ धीप्रेरकःसध्येयश्चधीभिर्योगंतदाप्नुते ॥७॥ तस्माद्धविष्कृतस्त्वृद्धिंकरोतियजतोविभुः ॥ करोतिचोत्तमंयज्ञंदेवाह्वानानिगच्छति ॥ ८ ॥ नरैःस्तुत्योनराशंसोहरिर्धृष्टतमश्चसः ॥ गुणानांप्रथमाधिक्यात्सप्रथस्तमईरितः ॥ यस्यस्वर्गादपिगृहंमखःप्रियमिवेयते ॥ ९ ॥ ३५ ॥ १८ ॥ यज्ञंप्रतिप्रतित्यंतंसम्यक्शास्त्रोक्तलक्षणम् ॥ आहूयसे ॥ १ ॥

महान्नैवत्वदन्योऽस्तिक्रतुंप्रति ॥ विष्णोर्हिमुख्यतोऽर्थोऽयमग्नौकांश्चिद्दतेसुरान् ॥ २ ॥ महतोरंजकात्स्व
र्गाद्द्रोग्धारोऽखिलंविदुः ॥ ३ ॥ प्राप्ताअर्कंविशेषेणसन्निधिस्तत्रयद्धरेः ॥ ४ ॥ शुद्धाघोरबलाःक्षेत्रत्रा
तारःक्षतितोऽपिवा ॥ रम्यसत्सुखभोक्तारोमरुतोमारुतत्वतः॥एतादृशानिरूपाणिप्राणाग्निस्थानिचेशितुः ॥
पृथग्वातादृशान्येवदेवगान्यपिसर्वशः ॥ ५ ॥ ३६ ॥ स्वर्गोपरिप्रकाशेचसूर्यादावासतेसुराः ॥ नाको

नहिदेवोनमर्त्योमहस्तवक्रतुंपरः ॥ मरुद्भिरग्नआगहि ॥ २ ॥ येमहोरजसोविदुर्विश्वेदेवासो
अद्रुहः ॥ मरुद्भिरग्नआगहि ॥ ३ ॥ यउग्राअर्कमानृचुरनाधृष्टासओजसा । मरुद्भिरग्न
आगहि ॥ ४ ॥ येशुभ्राघोरवर्पसःसुक्षत्रासोरिशादसः ॥ मरुद्भिरग्नआगहि ॥ ५ ॥ ३६ ॥
येनाकस्याधिरोचनेदिविदेवासआसते । मरुद्भिरग्नआगहि ॥ ६ ॥ यईंखयंतिपर्वतान्तिरः
समुद्रमर्णवम् ॥ मरुद्भिरग्नआगहि ॥ ७ ॥ आयेतन्वंतिरश्मिभिस्तिरःसमुद्रमोजसा ॥ मरु
द्भिरग्नआगहि ॥ ८ ॥ अभित्वापूर्वपीतयेसृजामिसोम्यंमधु ॥ मरुद्भिरग्नआगहि ॥९॥३७॥
॥ १९ ॥ ॥ इतिप्रथमाष्टकेप्रथमोध्यायः ॥ १ ॥ ॥ ॥

निर्दुःखरूपत्वाद्द्यौःप्रकाशस्वरूपतः ॥ ६ ॥ प्रतोलयंतिचगिरींस्तिरस्कृत्यचसागरम् ॥ पुरुषान्प्रकृतिंवा
पिपर्ववंतोहिजन्मना ॥ पुरुषाःसुसमुद्रेकात्समुद्रःप्रकृतिर्मता ॥ प्रकृतेःपुरुषाणांचप्रेरकःसन्सदाहरे ॥ स्व
रूपैर्बहुभिर्युक्तआयाहिसमसद्गुणैः ॥ ७ ॥ ९ ॥ ३७ ॥ १९ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेश्रीमदृग्भाष्येप्रथमाष्टकेप्रथमोऽध्यायः ॥ १ ॥

श्रीमन्मध्वान्तर्गतश्रीमल्लक्ष्मीरमणाय नमः ॥ ॥हरिः ॐ ॥ ॥ सर्वजन्मकृतेविष्णुदेवायेयंस्तु
तिःकृता ॥ मुखेनविप्रैःकाण्वाद्यैःसैवयद्रतिधातमा ॥ १ ॥ वाङ्मात्रेणैवयोज्यौयेचक्रुरिंद्रायवाजि
नौ ॥ शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागंचलेभिरे ॥ भगवांश्चैतदखिलंकृतवान्नृभुषुस्थितः ॥ पृथग्वाफल
दातृत्वात् ॥ २ ॥ परितोज्मांयतश्चरन् ॥ परिज्माऽतोरथःकाम्यंसबरित्यभिधीयते ॥ बकामनइ
तिह्यस्मात् ॥ ३ ॥ सुधन्वैषांपितास्मृतः ॥ बृहस्पतेःकामधेनुमृजुभक्ताऋजूयवः ॥ अवेतनंस्वामिबला

॥ ॐ ॥ अयंदेवायजन्मनेस्तोमोविप्रेभिरासया । अकारिरत्नधातमः ॥ १ ॥ यइंद्रायवचो
युजाततक्षुर्मनसाहरी । शमीभिर्यज्ञमाशत ॥ २ ॥ तक्षन्नासत्याभ्यांपरिज्मानंसुखंरथम् ॥
तक्षंधेनुंसबर्दुघाम् ॥ ३ ॥ युवानापितरापुनःसत्यमंत्राऋजूयवः । ऋभवोविष्ट्यक्रत ॥ ४ ॥
संवोमदासोअग्मतेंद्रेणचमरुत्वता । आदित्येभिश्चराजभिः ॥ ५ ॥ १ ॥ उततंचमसंनवंत्व
ष्टुर्देवस्यनिष्कृतम् ॥ अकर्तचतुरःपुनः ॥ ६ ॥ तेनोरत्नानिधत्तनत्रिरासाप्तानिसुन्वते । एकं
मेकंसुशस्तिभिः ॥ ७ ॥

त्कर्मविष्ट्यत्रतेकृत ॥ ऋतभूमिर्ज्ञानभूमिर्भगवानृभुरीरितः ॥ येषांभूतमृतंकर्मयज्ञभागामितोऽपिते
॥ ४ ॥ सहेंद्रेणसहादित्यैःप्राप्तायुष्माकमिंद्रवः ॥ ५ ॥ १ ॥ एकंचमसंचतुरःकुरुतेत्याहतान्पुरा ॥ त्वष्टा
ग्निश्चैवदेवानांवाक्यात्तदपितैःकृतम् ॥ ह्यादिस्वोक्तंपरित्यज्यत्वष्टुःशुश्रूषणंकृतम् ॥ तंपूर्वकृतमेवैकंचम
संचतुरोऽकृत ॥ ६ ॥ सप्तसंख्यानिरत्नानित्रिकालेष्वपिधत्तन ॥ पुराणपंचरात्रेतिहासवेदान्हरिस्तथा ॥
मीमांसातर्कसहितान्पंचवेदानथापिवा ॥ सप्तच्छंदांसिवैकैकंतद्गुणैरखिलैःसह ॥ ७ ॥

सुकर्मणायज्ञभागमभजन्नप्यधारयन् ॥ वह्नयोधारकत्वेनस्थिरत्वेनयथागतिः ॥ ८ ॥ २ ॥ १ ॥ ह्वये
सोमंप्रतिचतौ ॥ १ ॥ शुंभनंभूषणंमतम् ॥ २ ॥ तौमित्रस्यप्रशास्त्यर्थौहरेः ॥ ३ ॥ ४ ॥ रक्षांसिचोब्जत
म् ॥ रक्षोरक्ष्याःप्रजायस्माद्व्योमार्गत्रयोज्झिताः ॥ पितृदेवमनुष्याणांगत्यभावादधोगतेः ॥ ५ ॥ स
त्येनगुणपूर्णेनविष्णुनातेनजागृतम् ॥ स्वगुणैरेवविष्णुस्तुप्रकृष्टेचेतनेहरौ ॥ पदेगम्यत्वतःसम्यक्तस्मिन्नेव

अधारयंतवन्हयोर्भजंतसुकृत्यया ॥ भागंदेवेषुयज्ञियम् ॥ ८ ॥ ॥ २ ॥ १ ॥ इहेंद्राग्नीउप
ह्वयेतयोरित्स्तोममुश्मसि । तासोमंसोमपातमा ॥ १ ॥ तायज्ञेषुप्रशंसतेंद्राग्नीशुंभतानरः ।
तागायत्रेषुगायत ॥ २ ॥ तामित्रस्यप्रशस्तयइंद्राग्नीताहवामहे । सोमपासोमपीतये ॥३ ॥
उग्रासंताहवामहउपेदंसवनंसुतम् ॥ इंद्राग्नीएहगच्छताम् ॥ ४ ॥ तामहांतासदस्पतीइंद्राग्नी
रक्षउब्जतम् ॥ अप्रजाःसंत्वत्रिणः ॥ ५ ॥ तेनसत्येनजागृतमधिप्रचेतुनेपदे ॥ इंद्राग्नीशर्म
यच्छतम् ॥ ६ ॥३ ॥ २ ॥ प्रातर्युजाविबोधयाश्विनावेहगच्छताम् ॥ अस्यसोमस्यपीत
ये ॥ १ ॥ यासुरथारथीतमोभादेवादिविस्पृशा ॥ अश्विनाताहवामहे ॥ २ ॥ यावांकशामधु
मत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतम् ॥ ३ ॥

स्वभावतः ॥ तथास्थितौतुजागृतमितिविष्णुर्विशेषतः ॥ उक्तः ॥ ६ ॥ ३ ॥ २ ॥ प्रातःस्तुतत्वेनप्रोक्तौ
प्रातर्युजाविति ॥ अश्विनौभगवांश्चैवप्रातर्योगेनगम्यते ॥ स्तुतिशब्दःस्तुतौयस्माद्बुध्यतेवर्तमानकः ॥
बोधयेत्यतउक्तंतत्परतोबुध्यतेकथम् ॥१ ॥ कशयास्पृष्टिमात्रेणमधुरंकुरुतोऽखिलम् ॥ अतोमिमिक्षतमि
तिस्पर्शोमेक्षणमुच्यते॥ वेदवाक्यस्तुतत्वेनकशासासूनृतावती॥तयैवघृतसोमाविस्पृशतंयाज्ञिकंवसु ॥३॥

॥४॥हितत्वाद्रमणीयत्वाद्धिरण्य ॥र्णतोपिच ॥ रूपंनारायणस्यैवपाणिशब्दोपलक्षितम्॥स्रष्टृत्वात्सवितावि
ष्णुःसज्ञातास्वपदादिकम् ॥ सएवदेवतामुख्यातद्गुणैक्येनदेवता ॥५॥४॥व्यक्तत्वात्पार्थिवेदेहेसोपांनप्राज
नार्दनः ॥ ६ ॥ सदाविभज्यदातारंवसोरुत्तमराधसः ॥ अशेषपुण्यपापादिविशेषैश्चनिदर्शकम् ॥ आह्व
यामः ॥ ७ ॥ सराधांसिशोभयत्यंजसाहरिः ॥ ८ ॥ नदीश्चभारतीचैवहोत्रामाहुतिरूपतः ॥ वरू

न॒हि॒वा॒म॒स्ति॒दू॒र॒के॒यत्रा॒रथे॑न॒गच्छ॑थः ॥ अश्वि॑ना॒सो॒मिनो॑गृ॒हम् ॥ ४ ॥ हिर॑ण्यपाणि
मू॒तये॑सवि॒तार॒मुप॑ह्वये ॥ सचेत्ता॑दे॒वता॑प॒दम् ॥ ५ ॥ ४ ॥ अ॒पांनपा॑त॒मव॑से॑सवि॒तार॒मुप॑
स्तुहि ॥ तस्य॑व्र॒तान्यु॑श्मसि ॥ ६ ॥ वि॒भ॒क्तार॑ंहवामहे॒वसो॑श्चि॒त्रस्य॒राध॑सः ॥ स॒वि॒तार॑ंनृ॒चक्ष॑
सम् ॥ ७ ॥ सखा॑य॒आनिषी॑दतसवि॒तास्तो॒म्यो॒नु॒नः ॥ दाता॒राधां॑सिशुंभति ॥ ८ ॥ अग्ने॒
पत्नी॑रि॒हाव॑हदे॒वाना॑मुश॒तीरुप॑ ॥ त्वष्टा॑रं॒सोम॑पीतये ॥ ९ ॥ आग्ना॒अग्नइ॒हाव॑से॒होत्रां॑यविष्ठ
भार॑तीम् ॥ वरू॑त्रींधि॒षणां॑वह ॥ १० ॥ ५ ॥ अ॒भिनो॑दे॒वीरव॑सा॒महः॒शर्म॑णानृ॒पत्नीः॑ ॥ अ
च्छि॑न्नपत्राः॒सचंता॒म् ॥ ११ ॥ इ॒हेन्द्रा॒णीमुप॑ह्वयेवरुणा॒नीं॑स्व॒स्तये॑ ॥ अ॒ग्नायीं॒सोम॑पीतये ॥
॥ १२ ॥ म॒ही॒द्यौः॒पृ॒थि॒वीच॑नइ॒मंय॒ज्ञंमि॑मिक्षताम् ॥ पि॒पृ॒तांनो॒भरी॑मभिः ॥ १३ ॥

त्रींवरणीयत्वात्त्राणाद्बुद्धिस्वरूपिणीम् ॥ विष्णुश्चप्राणसंबंधाद्भारतीत्येवचोदितः ॥ प्राणस्तुभरतोभारतत
त्वाद्भर्तृरूपतः ॥ होत्राहुतत्वतोविष्णुःश्रीर्वापिधिषणामता ॥१०॥ ५॥ शर्मदत्त्वैवमहतोविष्णोरक्षंतुनोऽ
भितः ॥ प्राणेनैवावसासाकंयस्मादविधवाःसदा ॥ अतोह्यच्छिन्नपत्रास्ताःसदायुक्तकर्णभूषणाः ॥ ११ ॥
भरणैर्नःपारयेतांदुःखेभ्यःश्रीश्चभूश्चते ॥ स्वयंवाभगवानन्येरोदसीलोकदेवते ॥ १२ ॥

तयोःपथस्तुविज्ञानंघृतवत्सापरोक्षकम्॥ यद्वोकदेवतापिस्याद्भारतीज्ञानदेवता॥विष्णोर्नित्यपदस्थंयज्ज्ञानं
यद्धृतवत्पयः॥लिहंतिविप्रास्तज्ज्ञानंबुद्धिभिस्तत्प्रसादतः॥गांधारयन्वर्तयेयद्गंधर्वस्तेनकेशवः॥१४॥ स्यो
नासुखकरीस्यान्नोयतोनश्यसिनोनृवत्॥ निवेशनीसाऽधारत्वाच्छर्मयच्छमहत्तरम्॥१५॥६॥ असुरेभ्यो
जगद्धृत्वायतोविष्णुस्त्रिविक्रमैः। आरभ्यपृथिवींसप्तलोकैःसाकंजगत्पतिः ॥ चक्रेसुरान्पदस्थानप्यतोदे
वाअवंतुनः॥ विशिष्टबलचेष्टत्वाद्विष्णुरित्यभिधाहरेः॥ प्राणंबलंषकारंचणकारंचाहहिश्रुतिः॥१६॥रमं

तयोरिद्घृतवत्पयोविप्रारिहंतिधीतिभिः॥ गंधर्वस्यध्रुवेपदे॥ १४॥ स्योनापृथिविभवानृक्षरा
निवेशनी॥ यच्छानःशर्मसप्रथः॥ १५॥ ६ ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे॥
पृथिव्याःसप्तधामभिः॥ १६॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूळ्हमस्यपांसुरे॥
॥ १७॥ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः॥ अतोधर्माणिधारयन्॥ १८॥ विष्णोः
कर्माणिपश्यतयतोव्रतानिपस्पशे॥ इंद्रस्ययुज्यःसखा॥ १९ ॥

तिपांसवोयत्रपांसुरंपदमीरितम्॥ समूढंतत्रविश्वंहिपांसुवज्जगतःपतेः॥ १७ ॥ वेदान्कालान्गुणाँल्लोका
न्देवमानुषदानवान्॥ चेतनाचेतनान्मिश्रांस्त्रीणिपदाविचक्रमे ॥ रक्षकत्वेनसर्वाणिस्रष्टृभर्तृत्वतस्तथा॥
मोक्षदत्वेनचविभुःस्तंभनीयोनकेनचित्॥ धारकांश्चैववाय्वादीन्धारयन्वर्ततेततः॥ १८ ॥ जानीथवि
ष्णुकर्माणिप्राणिकर्माण्यशेषतः॥ यतोजातान्यविज्ञातोभगवान्सर्वदैवच॥ स्पशाज्ज्ञातदशौयस्मादिंद्रस्य
सहितःसखा॥ प्राणस्यैवेंद्रनाम्नश्चकस्मिन्वहमितिश्रुतेः॥त्वयेदिंद्रेतिवचनात्प्राणइंद्राभिधोमतः॥१९॥

रमाब्रह्मशिवादिभ्योयद्विष्णोःपरमंपदम् ॥ रूपंपश्यंतिनिर्मुक्ताःसंसारात्सूरयःसदा ॥ चक्षुर्दिवीवव्याप्तंयद
दृश्यंफलदर्शितम् ॥ २० ॥ संदीपयंतिविज्ञानैःसंसाराद्यातजागराः ॥ विपन्यवोज्ञानितमाविष्णोर्यत्परमं
पदम् ॥ तात्पर्याधिक्यविज्ञप्त्याअर्थमेतंपुनर्जगौ ॥ २१ ॥ ७ ॥ ३ ॥ वीर्यवंतश्चयेसोमायजमानेष्टसाध

तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततम् ॥ २० ॥ तद्विप्रासोविपन्यवो
जागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदम् ॥ २१ ॥ ७ ॥ ३ ॥ तीव्राःसोमासआगह्याशीर्व
तःसुताइमे ॥ वायोतान्प्रस्थितान्पिब ॥ १ ॥ उभादेवादिविस्पृशेंद्रवायूहवामहे ॥ अ
स्यसोमस्यपीतये ॥ २ ॥ इंद्रवायूमनोजुवाविप्राहवंतऊतये ॥ सहस्राक्षाधियस्पती ॥ ३॥
मित्रंवयंहवामहेवरुणंसोमपीतये ॥ जज्ञानापूतदक्षसा ॥ ४ ॥ ऋतेनयावृतावृधावृतस्यज्यो
तिषस्पती ॥ तामित्रावरुणाहुवे ॥ ५ ॥ ८ ॥ वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः॥
करतान्नःसुराधसः ॥ ६ ॥ मरुत्वंतंहवामहइंद्रमासोमपीतये ॥ सजूर्गणेनतृंपतु ॥ ७ ॥ इंद्र
ज्येष्ठामरुद्गणादेवासःपूषरातयः ॥ विश्वेममश्रुताहवम् ॥ ८ ॥

काः ॥ पिबतान् ॥ १ ॥ सर्वदेवानांज्ञानाधिक्यौदिविस्पृशौ ॥ २ ॥ मनसःप्रेरकौचैवबहुज्ञानौधियस्पती
॥ ३ ॥ जज्ञानौव्यज्यमानौतुयजमानस्यशोधकौ ॥ ४ ॥ परेणब्रह्मणातस्मिन्वृद्धौसत्यपतीसदा ॥
सत्यंज्योतिःप्रकाशत्वात्तौमित्रावरुणाहुवे ॥ ५ ॥ ८ ॥ संसिद्धान्कुरुतांनस्तौ ॥ ६ ॥ सगणस्तृ
प्यतांहरिः ॥ ७ ॥ पूषापूर्णत्वतोविष्णुस्तन्मित्राःपूषरातयः ॥ ८ ॥

सहसाबलरूपेणशक्रेणसहिताःसुराः॥मदज्ञानंहतातीवदानशीलानशक्नुयात्॥ दुर्वाक्तद्वान्पुमान्वानो ॥९॥
भारतीपृश्निरुच्यते ॥ गोरूपाचकचित्साभूत्तत्सुताश्चाखिलाःसुराः ॥ अन्यत्रापिसुतास्तस्या ॥१०॥९॥
॥११॥ जयतामिवतद्ध्वनिः ॥ धैर्याद्यातियदाविष्णुंवायुंवायाथनोत्तमम् ॥ ११ ॥ दोषत्यागाद्गुणप्राप्तेर्हस्कारावो
युरुच्यते ॥ विद्युद्विशिष्टज्ञानत्वाद्भारतीतत्सुताहिते ॥ सर्वदेवाश्चमरुतोरक्षंत्वेतादृशोहरिः ॥ तत्तदंतर्गतत्वे

हतवृत्रंसुदानवइंद्रेणसहसायुजा ॥ मानोदुःशंसईशत ॥ ९ ॥ विश्वान्देवान्हवामहेमरुतःसो
मपीतये ॥ उग्राहिपृश्निमातरः ॥ १० ॥॥ ९ ॥ जयतामिवतन्यतुर्मरुतामेतिधृष्णुया ॥य
च्छुभंयाथनानरः ॥ ११ ॥ हस्काराद्विद्युतस्पर्यतोजाताअवंतुनः ॥ मरुतोमृळयंतुनः ॥१२॥
आपूषंचित्रबर्हिषमाघृणेधरुणंदिवः ॥ आजानष्टंयथापशुम् ॥१३॥ पूषाराजानमाघृणिरप
गूळ्हंगुहाहितम् । अविंदच्चित्रबर्हिषम् ॥१४॥ उतोसमह्यमिंदुभिःषड्युक्ताँअनुसेषिधत् । गो
भिर्यवंनचर्कृषत ॥ १५ ॥ १० ॥ अंबयोयन्त्यध्वभिर्जामयोअध्वरीयताम् । पृंचतीर्मधु
नापयः ॥ १६ ॥

न ॥ १२ ॥ पूषापूर्णत्वतश्वसः ॥ आघृणि.पूर्णरश्मित्वादाजनश्चित्रबर्हिषम् ॥ ब्रह्माणंचदिवोदेव्याभ
र्तारंवायुमाजगाम् ॥ यथागतम् ॥ १३ ॥ जगद्राजमविंदद्भगवान्सुतम् ॥ स्वकुक्षिगूढंब्रह्माणम् ॥ १४ ॥
मह्यंसोमैश्चतर्पितः ॥ साधयामासषड्युक्तानिंद्रियाणिचकारच ॥ साधनंशक्तिदानंतुगोभिर्वाभिर्यथाय ॥११॥
वम् ॥ १५ ॥ १० ॥ अंबयोमातरोह्यापःकारणत्वात्सहोदराः ॥ जगतोजामयोयस्मात्सहताभिर्विवर्ध
ते ॥ अध्वरंकुर्वतांक्षीरंसोमंचापिप्रपृंचतीः ॥ संपृक्ताः ॥ १६ ॥

याःसमीपस्थाःसूर्यस्यसहिताअपि॥ १७ ॥ ह्वयामितायाःपिबंतिगावोनःसर्वश्चाहविः ॥ कार्यंनदीभ्यः ॥१८॥ तास्वंतरदृश्यममृतंस्थितम् ॥ अपामेवप्रशंसार्थंसहायाःसंतुनःसुराः ॥१९॥तात्पर्यार्थंपुनर्वाक्यंसु खाधारोहुताशनः ॥ २०॥११ ॥ वरूथंगुप्तिरुद्दिष्टाज्योतिर्विष्णुदृशेतथा ॥ सूरिप्राप्योयतोविष्णुःसूर्यइ

अमूर्याउपसूर्येयाभिर्वासूर्यःसह । तानोहिन्वन्त्वध्वरम् ॥ १७ ॥ अपोदेवीरुपह्वयेय त्रगावःपिबंतिनः । सिंधुभ्यःकर्त्वंहविः ॥ १८ ॥ अप्स्व१न्तरमृतमप्सुभेषजमपामुतप्रश स्तये । देवाभवतवाजिनः ॥ १९ ॥ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा । अग्निंचवि श्वशंभुवमापश्चविश्वभेषजीः ॥ २० ॥११॥ आपःपृणीतभेषजंवरूथंतन्वे३ममं । ज्योक्चसू र्यंदृशे ॥ २१ ॥ इदमापःप्रवहतयत्किंचदुरितंमयि । यद्वाहमभिदुद्रोहयद्वाशेपउतानृतम ॥ २२ ॥ आपोअद्यान्वचारिषंरसेनसमगस्महि । पयस्वानग्नआगहितंमासंसृजवर्चसा ॥ २३ ॥ संमाग्नेवर्चसासृजसंप्रजयासमायुषा । विद्युर्मेअस्यदेवाइंद्रोविद्यात्सहऋषिभिः ॥ २४ ॥ १२ ॥ ६ ॥ ५ ॥ कस्यनूनंकतमस्यामृतानांमनामहेचारुदेवस्यनाम । कोनोम ह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच ॥ १ ॥

त्यभिधीयते ॥ पृणदाने ॥२१॥ खिलंपापमापःप्रवहतापिनः ॥ हिंसाजंशेफजंचैवनथैवानृतसंभवम ॥ २२ ॥रसेनसंगताश्चस्मोयस्मादनुचराहिवः ॥ २३ ॥ कुर्युर्मामविविद्वांसंमदर्थंसर्वदासुराः ॥ एनंमामि तिवार्थःस्यादनुजानंतुवोदितम् ॥ २४ ॥ १२ ॥ ४ ॥ ५ ॥ शुनःशेपोददर्शातउत्तरंपरसृकशतम् ॥ यूपा दात्मविमोक्षायस्तुवन्देवान्पृथक्पृथक्॥न्यूनंशतमिहैवान्यच्चतुर्थेपंचमेपिच॥ मंडलेब्रह्मणोक्तस्तुक्रमोत्रा

पिह्यृचांभवेत्॥कर्तुःपरानंदतनोरिदानींमनामहेचारुविष्णोःसुराणाम्॥नामेशश्चेदिंदिरायैपुनर्दाद्दृशेयंतांमात
रंतंचदेवम्॥समुक्तानाममृतानामजेशमुख्यानांचाभ्यधिकोयत्सुखादौ ॥तेनोक्तोसौकतमोखंडितत्वात्सचा
दितिर्महतीतन्महीच॥ देशानंत्यात्तन्महत्त्वंगुणैस्तुकालाच्चोक्तंतस्यचाखंडितत्वम्॥सएवमाताचपिताचदेव
स्तस्मिन्सदासंस्थितास्तत्पुनर्दात्॥ अत्तिविश्वंतेनचैवादितिस्सश्रीर्वाब्रह्माप्रोक्तएवंकएव॥गुणाश्चतस्याभ्य
धिकाःसदैवजीवेभ्यस्तत्सोपिनद्वाक्ययोग्यः ॥ ददात्वसौविष्णवेचेंदिरायैप्राप्तानस्मानपितौसर्वगत्वात् ॥
विशेषदेशप्राप्तितस्तस्यचाप्तिर्वैकुंठादिर्लोकउक्तोहरेश्च ॥१॥ तस्यैवान्यद्रूपमग्न्याख्यमुक्तंयोयज्ञेशोहूयते

अ॒ग्नेर्व॒यं प्र॑थ॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ । स नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑ च दृ॒शेयं॑
मा॒तरं॑ च ॥२॥ अ॒भि त्वा॑ देव सवित॒रीशा॑नं॒ वार्या॑णाम् ॥ सदा॑वन्भा॒गमी॑महे ॥ ३ ॥ यश्चि॒द्धि त॑
इ॒त्था भगः॑ शशमा॒नः पु॒रा नि॒दः ॥ अ॒द्वे॒षो हस्त॑योर्द॒धे ॥ ४ ॥

जामदग्न्यः॥सदेवानांप्रथमोनामतस्यस्मृतंसार्थंसर्वकामप्रदंस्यात् ॥ २ ॥ सवितेत्यपरंरूपंजगत्कारणमीशि
तुः ॥ वित्तानामीश्वरंतंतुवार्यैर्हिवरणीयतः ॥ वित्तंरक्षन्नवन्नित्यमात्मानंभागमेम्यहम् ॥ त्वामैश्वर्यादिस
मितिम् ॥ ३ ॥ योपितेपरमोभगः ॥ इत्थंभूतोविकारित्वाच्छशमानःसुखाधिकः ॥ नेदीयसोब्रह्मणोपिपू
र्वोद्वेषादिवर्जितः ॥ हस्तयोस्तंदधेदेवतवरूपमनामयम् ॥ निदोदवीयइतितुविरुद्धार्थद्वयाभिधौ ॥ दूरसा
मीप्यवचनावुभावपिमहोदधौ ॥ यदान्यस्सवितादेवस्तवस्वामीभगोहरिः ॥ अद्वेषोविष्णुरित्युक्तेस्तमहंह
स्तयोर्दधे ॥ ४ ॥ ॥ २० ॥

विष्णुभक्तस्यतेरायोमूर्धानंरायउत्तमम् ॥ तवावसारभेविद्यामुच्चैरश्नामितत्फलम् ॥ ऐश्वर्यादिगुणा यस्यभर्गोभक्तंपरात्मनः ॥ तस्यतेवित्तमश्नामितवरक्षाबलाद्धरे ॥ ५ ॥ १३ ॥ क्षतात्त्राणंतेबल संविदंचपूर्णंनापुर्मुक्तिगायेविशिष्टाः ॥ अपिस्वयंसंस्तेरुत्पतंतःपतयंतोन्यांश्लिष्यभक्तानुदाराः ॥ स दाशुभान्याचरंतोपिदेवाअब्देवताआपइतिश्रुतिर्यत् ॥ गंगाद्यावावायुदेवस्यविष्णोरुत्पत्तियेजानतेदेवसं घाः ॥ वयःसुपर्णाइतिवाप्य ॥ ६ ॥ बुध्नेप्रकाशतःसंभजतःस्वमुच्चैः ॥ स्तूपंस्थानंददतेपूतदक्षोनीचस्था

भर्गभक्तस्यतेवयमुदंशेमतवावसा । मूर्धानंरायआरभे ॥ ५ ॥ १३ ॥ नहितेक्षत्रं नसहोनमन्युंवयश्चनामीपतयंतआपुः । नेमाआपोअनिमिषंचरंतीर्नयेवातस्यप्रमिनंत्यभ्वम् ॥ ६ ॥ अबुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः । नीचीनास्थुरुपरिबुध्नएषामस्मेअं तर्निहिताःकेतवःस्युः ॥ ७ ॥ उरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाउ । अपदेपादाप्र तिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ ८ ॥

अप्यूर्ध्वगास्तेनतस्थुः ॥ नीचाश्चयेमुक्तिगामानुषाद्यास्तेषांबुध्नोनीचलोकःसुरेभ्यः ॥ नीचागुणाअप्रका शोथवैषांनीचोच्चत्वंक्रमशश्चाविरिंचात् ॥ अस्माकमंतर्निहितानिनित्यंज्ञानानिभूयासुरतोधिकानि ॥ भ वंत्यर्हाभवितुंवाभविष्याःस्युर्हिर्महेप्रार्थनैवाधिकार्थे ॥ ७ ॥ उरुराजारंजनाद्राजनाद्वासूर्यायपंथानमसौ चकार ॥ स्वाज्ञानुसारेणसदैवगत्यैपादावपादायचगंतवेकरोत् ॥ अज्ञायविज्ञानमकःसगंतुमात्मानमित्यर्थ इहांजसोक्तः ॥ बुद्धेर्धातुःशंकरस्यापिदोषान्वक्ताज्ञानाच्छिक्षकत्वाच्चविष्णुः ॥ ८ ॥

जगद्रक्षासाधनान्यप्यनंतान्यनंतधासंतिपुनस्तवेश॥अगाधरूपामहतीशुभाचमतिर्ममत्वद्विषयेसदाऽस्तु ॥ ऋतज्ञानप्रतिरूपत्वहेतोर्निर्ऋत्याख्यांदुर्मतिंदूरएव॥बाधस्वदुर्ज्ञानिजनंनिरस्यस्वर्गात्पराकृत्यचशश्वदेव॥कृतंचपापंप्रमुमुग्धिमत्त ॥ ९ ॥ ऋक्षाण्यमीनिहितानित्वयोच्चैः ॥ दृश्यानिरात्रौनदिवात्वयैवेत्यादीनिकर्माण्यनिरोधितानि॥ पश्यन्परानंदतनोस्तवैवचंद्रोनित्यंदृश्यमानस्त्वयैव॥संप्रेरितोयातिपरेचदेवाएवंत्वदाज्ञाक

शतंते॑राजन्भि॒षजः॑स॒हस्र॑मु॒र्वी ग॑भी॒रासु॑म॒तिष्टे॑अस्तु । बाध॑स्वदू॒रेनिर्ऋ॑तिंपरा॒चैःकृ॒तंचि॒देनः॒प्रमु॑मु॒ग्ध्य॒स्मत् ॥ ९ ॥ अ॒मीयऋक्षा॒निहि॑तासउ॒च्चानक्तं॒ददृ॑श्रे॒कुह॑चि॒द्दिवे॑युः । अद॑ब्धानि॒वरु॑णस्यव्र॒तानि॑वि॒चाक॑शच्च॒न्द्रमा॒नक्त॑मेति ॥ १० ॥ १४ ॥ तत्त्वा॑यामि॒ब्रह्म॑णा॒वन्द॑मा॒नस्तदाशा॒स्ते॒यज॑मानोह॒विर्भिः॑ । अहे॑ळमानोवरुणे॒हबो॒ध्युरु॑शंस॒मान॒आयुः॒प्रमो॑षीः ॥ ११ ॥ तदिन्न॒क्तंतद्दिवा॒मह्य॑माहु॒स्तद॒यंकेतो॑हृ॒दआविच॑ष्टे । शु॒नःशेपो॒यमह्व॑द्गृभी॒तःसोअ॒स्मान्राजा॒वरु॑णोमुमोक्तु ॥ १२ ॥ शु॒नःशेपो॒ह्यह्व॑द्गृभी॒तस्त्रि॒ष्वा॑दि॒त्यंद्रु॑प॒देषु॑ब॒द्धः । अवै॑नं॒राजा॒वरु॑णःससृज्याद्वि॒द्वाँअद॑ब्धो॒विमु॑मोक्तु॒पाशा॑न् ॥ १३ ॥

रणाःसदैव ॥१०॥१४॥ एवंगुणोयस्त्वमतोव्रजामिसदाशरण्यंशरणंवेदवाचा ॥ नमन्नन्योयजमानोहविर्भिस्तदाशास्तेत्वद्गतिंदेवदेव ॥ अनिंदन्नस्मान्नरमात्रबुद्ध्यासंबोधयोच्चैःस्तुतमस्मदायुः ॥ छेत्सीः ॥ ११ ॥ नक्तंदिवसेचैतदेवस्तोत्रंत्वदीयंप्राहुरार्याःसुकार्यम्॥मत्संकेतोज्ञानरूपोहृदिस्थोनारायणोवक्त्यथयंतेऽन्यरूपम् ॥ पश्यत्यपीशोयंसमह्वद्गृहीतःसनोदेवोमोचयत्वस्यदुःखात् ॥ १२ ॥ शुनःशेपोह्यह्वद्गृभीतःस्थानत्रयेविक्रयाद्यैःसुबद्धः ॥ द्रुतंप्राप्तानिद्रुपदानिविक्रयोयूपेबंधःसंज्ञपनोद्यमश्च ॥ आदित्योसावादिसंस्थःपरे

शोवारीशांतःसंस्थितःस्तूयतेऽत्र ॥ शुनःशेपोयमित्यादिकेनवारीशोपिह्यृषिणास्तूयमानः ॥ गुणास्त्रयोद्रुपेदानीतिचोक्ताद्रवत्ययंजीवसंघोहियत्र ॥ करोत्वेनमवस्रष्टंस्ततेःसप्रसन्नोस्मान्कर्मपाशान्मुमोक्तु ॥१३॥ निंदांचतेऽवाग्गतेर्हेतुभूताममवगच्छामःसेयमित्यप्ययोग्याम् ॥ नमस्कारैस्त्वद्गतैस्त्वन्मखैश्चहविर्युक्तैस्त्वत्प्रसादात्सचत्त्वम् ॥ क्षितिरस्मभ्यंप्राणरंताखिलज्ञोवियोजयास्मत्कृतान्याश्वघानि ॥ १४ ॥ पुण्यंपापंमिश्रमित्येवपाशान्यथायोग्यंश्रथयान्येपुदत्वा ॥ त्वन्निष्ठयातेनवयंत्वदीयलक्ष्म्याःपुत्राःस्याममुक्ताःस्तनेश्च ॥ एषाविष्णोःकेवलाप्येवमन्याअयोग्यायाअन्यदेवेपुसम्यक् ॥ वाक्यैर्विशिष्टैरपवादहीनैर्ज्ञेयागुणा

अवंतेहेळोवरुणनमोभिरवंयज्ञेभिरीमहेहविर्भिः । क्षयंन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ १४ ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय । अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ १५॥ १५ ॥ ५ ॥ यच्चिद्धितेविशोयथाप्रदेववरुणव्रतम्॥ मिनीमसिद्यविद्यवि ॥१ ॥मानोवधायहत्नवेजिहीळानस्यरीरधः ॥ माहृणानस्यमन्यवे॥२॥

अन्यदेवेपुचैव ॥ पतिःसोमोवरुणस्याप्यथाग्नेःपतिःसूर्यस्तावुभौतुल्यवीर्यौ ॥सूर्याचंद्रमसोःपतिरिंद्रोऽस्यरुद्रःपतिर्ब्रह्मापतिरस्यापिविष्णुः ॥ पतिर्मुक्तेर्वासुदेवोऽथदृष्टेर्ब्रह्माविद्यायाःशर्वइंद्रःक्रियायाः ॥ क्रियांशानामधिपाअन्यदेवास्तथाफलानामपिमुक्तिमार्गे ॥ यथायोग्यंस्वेंद्रियप्रेरकाश्चततःपूज्यादेवतामुक्तिकामैः ॥ इतिश्रुतेस्तारतम्यंगुणानांज्ञात्वायोज्याःश्रुतयस्तत्रतत्र ॥ १५ ॥ १५ ॥ ५ ॥ दिवसेदिवसेदेवकुर्मोयदपितेव्रतम् ॥ यथैवसुजनाः ॥१॥ मानोहंतुंसाधयन्निघ्नते ॥ जिहीळानस्यजन्धर्महरतोमाचमन्यवे॥२॥

मनस्त्वयिनिबध्नीमोगीर्भिरश्वंवियोजितम् ॥ बध्नातिसारथिर्यद्वन्मृळीकोरक्षकोधिकम् ॥ त्वन्मनो
स्मासुवागीर्भीरक्षणायविसीमहि ॥ २ ॥ पराक्पतंतिप्रज्ञामेविविधाःशुभलब्धये ॥ पक्षिणोवसती
र्यद्वद्धानत्वांप्रामुवंतिच ॥ ४ ॥ अतोखिलक्षत्रपतिमाह्वयामःकदावयम् ॥ अविनाशिनंरक्षणायमहाद
र्शनमंजसा ॥ ५ ॥ १६ ॥ तत्प्रसादाद्बलवायूसममेवावगच्छतः ॥ वेनंतौहिविजानंतौतौहिज्ञानिवरौमतौ ॥

विमृ॒ळी॒काय॑ते॒मनो॒रथी॒रश्वं॒नसंदि॑तम् ॥ गी॒र्भिर्व॑रुणसीमहि ॥ ३ ॥ परा॒हि॒मे॒विम॑न्यव॒ःपतं॑
ति॒वस्य॑इष्टये ॥ वयो॒न॑व॒स॒तीरुप॑ ॥ ४ ॥ क॒दाक्ष॒त्रश्रियं॒नर॒मावरु॑णंकरामहे ॥ मृ॒ळी॒कायो॑
रु॒चक्ष॑सम् ॥ ५ ॥ १६ ॥ तदित्स॑मा॒नमा॑शाते॒वेनं॑ता॒नप्रयु॑च्छतः ॥ धृ॒तव्र॑ताय॒दा॒शुषे॑ ॥ ६ ॥
वेदा॒योवी॒नांप॒दम॒न्तरि॑क्षेण॒पत॑ताम् ॥ वेदं॑ना॒वः॑स॒मु॒द्रियः॑ ॥ ७ ॥ वेदं॑मा॒सोधृ॒तव्र॑तो॒द्वाद॑शप्र
जाव॑तः ॥ वेदा॒यउ॑प॒जाय॑ते ॥ ८ ॥ वेद॒वात॑स्यव॒र्त॒निमु॒रोर्ऋ॒ष्वस्य॑बृह॒तः ॥ वेदा॒येअ॒ध्या
स॑ते ॥ ९ ॥ निष॑साद॒धृ॒तव्र॑तो॒वरु॑णः॒प॒स्त्या॒३स्वा ॥ साम्रा॑ज्याय॒सु॒क्रतुः॑ ॥ १० ॥ १७ ॥

यथाज्ञानंप्रयोगंचदाशुषेकुरुतोनतौ॥अश्विनौवरुणश्चेत्स्यात्॥६॥आकाशेपक्षिणांपदम्॥ वेत्त्यसौसूक्ष्मवि
ज्ञानात्तथानावोजलेऽब्धिगः॥मुक्तानांचस्थितिंवेदज्ञानस्यचगतिंपराम्॥क्षीराब्धिशयनोविष्णुः॥७॥कालं
कालोद्भवैःसह ॥ यआत्मनःसमीपेचजायतेतंचपद्मजम्॥ मुक्तंवा ॥८॥ वर्तनांवायोर्महतोऽतिप्रकाशिनः॥
बृहतोज्ञानिनश्चैवबृहतोमहतोपिवा॥अधिकानिपदान्येवदेवाअध्यासतेऽपितान् ॥९॥ साम्राज्यायसपस्त्या
सुनिषसादप्रजासुच ॥ सुज्ञान ॥ १० ॥ १७ ॥

स्तत्रसन्विश्वान्यद्भुतानिचपश्यति ॥ कर्ताचिकित्वान्सकृतकर्तव्यानिचपश्यति ॥ ११ ॥ विश्वान्यहा
निनोदेवःसुपथानिकरोत्वसौ ॥ ददात्वायूंषिनोनित्यंमुक्तौवा ॥ १२ ॥ अतिद्रुतभ्रमम् ॥ हितंचरमणीयंच
चक्रंस्वर्णंचवर्णतः ॥ अबिभ्रच्चसुनिर्णिक्तंशुद्धंवस्त्रमवस्तच ॥ अविज्ञातचरादेवाःस्पशास्तस्यनिषेदिरे ॥
परितोवरुणःपाशमबिभ्रद्द्रुतबंधनम् ॥ १३ ॥ स्तंभयंतिनयंवीरास्तंभकाअपिराक्षसाः ॥ जनानांद्रोहि
णोदैत्याःशत्रवश्चाभिमातयः ॥ १४ ॥ असमंचयशश्चक्रेयोस्माकंहृदयेषुच ॥ अमानुषेषुचान्येषुसमंता

अतो॒विश्वा॒न्यद्भु॑ता॒चिकि॑त्वाँअ॒भिप॑श्यति ॥ कृ॒तानि॒या॒च॒कर्त्वा॑ ॥ ११ ॥ सनो॑वि॒श्वाहा॑
सु॒क्रतु॑रादि॒त्यः सु॒पथा॑करत् ॥ प्रण॒आयूं॑षितारिषत् ॥ १२ ॥ बिभ्र॑द्द्रा॒पिंहि॑र॒ण्यय॑ंवरु॑णो
वस्त॒निर्णि॒जंम् ॥ परि॒स्पशो॒निषे॑दिरे ॥ १३ ॥ नयंदिप्सं॑ति॒दि॒प्सवो॒नद्रुह्वा॑णो॒जना॑नाम् ॥
नदे॒वम॒भिमा॑तयः ॥ १४ ॥ उ॒तयोमानु॑षे॒ष्वायश॑श्च॒क्रे असा॒म्या ॥ अ॒स्माक॑मु॒दरे॒ष्वा ॥ १५ ॥
॥ १८ ॥ परा॑मेयंतिधी॒तयो॒गावो॒नगव्यू॑ती॒रनु॑ ॥ इ॒च्छंती॑रु॒रु॒चक्ष॑सम् ॥ १६ ॥ संनु॒वो॑चावहै॒
पुन॒र्यतो॒मे॒मध्वा॒भृ॑तम् ॥ होते॑व॒क्षद॑से प्रि॒यम् ॥ १७ ॥ दर्शं॒नुवि॒श्वद॑र्शतं॒दर्शं॒रथ॒मधि॒क्षमि॑ ॥
ए॒ताजु॑षत॒मे॒गिरः॑ ॥ १८ ॥ इ॒मंमे॑वरुणश्रुधी॒हव॑म॒द्याच॑मृळय ॥ त्वाम॑व॒स्युरा च॑के ॥ १९ ॥

दात्मनःसदा ॥ अज्ञेष्वपिचमर्त्येषुव्यतनोदात्मनोयशः ॥ १५ ॥ १८ ॥ महाज्ञानंपरेशानमिच्छंत्योमम
धीतयः ॥ सर्वतोयांतियद्वच्चगावःश्रृंगस्चराननु ॥ १६ ॥ आपूर्णमधुमोक्षस्थंसुखंपचसिमेग्निवत् ॥ ततसं
वोचावहैभूयःप्रियस्त्वंममयत्सदा ॥ १७ ॥ अदर्शंतंचसर्वज्ञंतद्रथंचभुविस्थितम् ॥ सुगिरोमेजुषतच
॥ १८ ॥ त्वावनेप्सुरहंचके ॥ पश्येयम् ॥ १९ ॥

त्वंचविश्वस्यराजाभवसिमेधिरः ॥ मेधावान्गमः पृथिव्याश्वसकालेचप्रतिश्रुधि ॥ २० ॥ सत्वंत्रिगुणपा
शान्नोमुमुग्धिचिंछधिचांजसा ॥२१॥१९॥ ६ ॥ अथस्तौत्यग्निंगंविष्णुमग्निमप्यग्निगोचरैः ॥ वचनैः ॥
सर्वदेवानांपूजायैप्रोद्यतोभवान् ॥ वसिष्वोत्तमवस्त्राणिभूषणैरप्यलंकुरु ॥ कुर्वन्नुत्सवमत्यंतमस्मदीयंम
खंयज ॥ नित्यमेध्यहरेदेवभोग्यान्नानांसदापते ॥ ऊर्जितानांजनानांवास्वस्मिन्नोअध्वरंयज ॥ रमयत्व

त्वंविश्वस्यमेधिरदिवश्चग्मश्चराजसि ॥ सयामनिप्रतिश्रुधि ॥ २० ॥ उदुत्तमंमुमुग्धिनोवि
पाशंमध्यमंचृत ॥ अवाधमानिजीवसे ॥ २१ ॥ १९ ॥ ॥ ६ ॥ वसिष्वाहि
मियेध्यवस्त्राण्यूर्जांपते ॥ सेमंनोअध्वरंयज ॥ १ ॥ निनोहोतावरेण्यःसदायविष्ठम
न्मभिः ॥ अग्नेदिवित्मतावचः ॥ २ ॥ आहिष्मासूनवेपितापिर्यजत्यापये ॥ सखा
सख्येवरेण्यः ॥ ३ ॥ आनोबर्हीरिशादसोवरुणोमित्रोअर्यमा ॥ सीदंतुमनुषोयथा ॥
॥ ४ ॥ पूर्व्यहोतरस्यनोमंदस्वसख्यस्यच ॥ इमाउपुश्रुधीगिरः ॥ ५ ॥ २० ॥ यच्चिद्धिश
श्वतातनादेवंदेवंयजामहे ॥ त्वेइद्धूयतेहविः ॥ ६ ॥ प्रियोनोअस्तुविश्पतिर्होतामंद्रोवरेण्यः॥
प्रियाःस्वग्नयोवयम् ॥ ७ ॥ स्वग्नयोहिवार्यंदेवासोदधिरेचनः ॥ स्वग्नयोमनामहे ॥ ८ ॥

ध्वनिशुभेयेनतेनाध्वरोमखः ॥ १ ॥ वचोनोनिनयात्यंतंदिविव्याप्ततयासदा ॥ अशेषदेवगत्वेनमन्मभिर्म
तिभिःसह ॥ अवमोदशदेवेषुवह्निर्विष्णुस्तुतस्थितः ॥२ ॥ सख्येचसूनवेमह्यमायजत्येषदेवताः ॥ आपिः
प्राप्योममस्वामीभृत्यत्वान्मह्यमापये ॥ ३ ॥ ४॥ अस्यमेथैंकुरुमदंस्वातंत्र्यान्मादयस्ववा ॥५॥२०॥शश्व
द्विस्तरतःसर्वान्यदादेवान्यजामहे ॥ तदात्वय्येवहिहविर्हूयते ॥ ६ ॥ सप्रियोभव ॥ मंद्रोमदकरः ॥७॥ ८॥

स्त्रीणांपुंसांचोभयवर्गिणाम् ॥ ९ ॥ चनःसुखंधाअस्मासुवायोःपुत्रोग्निरेवचेत् ॥ भगवान्वायुनाव्यंग्यो ॥ १० ॥ २१ ॥ ७ ॥ वारवान्वडवामुखः ॥ स्वदृष्टांतोहरेर्यस्माद्विष्णुःसवडवामुखः ॥ १ ॥ सूनुःस शवसोवायोःपृथुज्ञानःसुशेवकृत् ॥ सुखकृन्नोभवेन्मीढ्वान्स्वामीनःसूनुरेववा ॥ व्यंग्यत्वाद्वायुनासार्धंसुशे वःसुसुखात्मकः ॥ २ ॥ आसात्समीपतश्चास्मानघार्थायोनिपाहिच ॥ प्रतिप्रतिसदोनित्योविश्वायु॥३॥ स्त्वमिमांस्तुतिम् ॥ सनिदानस्वरूपांचगायत्रीछंदआत्मिकाम् ॥ नव्यांसंस्तुतिपुश्रेष्ठांवददेवेषुसादरम् ॥४ ॥

अर्थानउभयेषाममृतमर्त्यानाम् ॥ मिथःसंतुप्रशंस्तयः ॥ ९ ॥ विश्वेभिरग्नेअग्निभिरिमंयज्ञ मिदंवचः ॥ चनोधाःसहसोयहो ॥ १० ॥ २१ ॥ ७ ॥ अश्वंनत्वावारवंतंवंदध्याअग्निंनमो भिः ॥ सम्राजंतमध्वराणाम् ॥ १ ॥ सघानःसूनुःशवसापृथुप्रगामासुशेवः ॥ मीढ्वाँअस्मा कंबभूयात् ॥ २ ॥ सनोदूराच्चासाच्चनिमर्त्यादघायोः ॥ पाहिसदमिद्विश्वायुः ॥ ३ ॥ इ ममूषुत्वमस्माकंसनिंगायत्रंनव्यांसम् ॥ अग्नेदेवेषुप्रवोचः ॥ ४ ॥ आनोभजपरमेष्वावाजे षुमध्यमेषु ॥ शिक्षावस्वोअंतमस्य ॥ ५ ॥ २२ ॥ विभक्तासिचित्रभानोसिंधोरूर्माउपाक आ । सद्योदाशुषेक्षरसि ॥६॥ यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः । सयंताशश्वतीरिषः ॥७॥

उत्तमाधममध्येषुभोगेष्वस्मानवामुहि ॥ रक्षकत्वेनशिक्षास्मानूज्ञानवस्त्वर्थमेवच ॥ अंतेमोक्षेमितत्वेनज्ञा नमंतममुच्यते ॥ ५ ॥ २२ ॥ क्षीराब्ध्यूर्मिसमीपस्थोमुक्तभोगविभागदः ॥ यजमानायसद्यश्चक्षरस्यखि लमीप्सितम् ॥ नित्यमुत्तमतेजस्त्वाच्चित्रभानुर्हरिःस्मृतः ॥ ६ ॥ यंमर्त्यंरक्षसिविभोयंयुत्सुप्रेरयस्यपि ॥ ज्ञानाज्ञानात्मकेष्वेवसंगतानित्यसत्सुखम् ॥ भोगान्वामुक्तिगान्नित्यानिहचेदुपचारतः ॥ ७ ॥

परिपूर्णोऽस्यनैवास्तित्वदीयस्यतुकस्यचित्॥भोगोपिबहुलोयस्माद्दित्सस्येवपुनःपुनः॥सहंत्यःसंततबलःसह
सःपुत्रएववा ॥ श्रवाय्यःश्रवणीयश्चसुप्रसिद्धतमोपिवा॥८ ॥ वाजंतारयिताऽऽनेतासोर्वद्भिर्गोसमाश्रितः ॥
त्वदीयस्तुभवेद्विप्रैर्दाताविपुलदानतः ॥ युद्धस्यतारकोन्नस्यदाताभोगस्यवाभवेत्॥इंद्रियैस्तमसायुद्धंतरुता
ज्ञानदोथवा ॥ ९ ॥ स्तुतिवोद्धायतस्तांत्वमवधारयसर्वदा ॥ नित्यज्ञानोपिदत्त्वाततत्फलंवेत्तेतिकथ्यते ॥
रुजांविद्रावकेशायप्रत्यक्षांतववास्तुतिम् ॥ १० ॥ २३ ॥नितराममितत्वेनमहान्पुरुसुखश्श्वसः ॥ धूत्करो

नकिरस्यसहंत्यपर्येताकयस्यचित् । वाजोअस्तिश्रवाय्यः ॥ ८ ॥ सवाजंविश्वचर्षणि
रर्वद्भिरस्तुतरुता । विप्रेभिरस्तुसनिता॥ ९ ॥ जराबोधतद्विविड्ढिविशेविशेयज्ञियाय । स्तो
मंरुद्रायदृशीकम् ॥ १० ॥ २३ ॥ सनोमहाँअनिमानोधूमकेतुःपुरुश्चंद्रः । धियेवाजायहि
न्वतु ॥ ११ ॥ सरेवाँइवविश्पतिर्दैव्यःकेतुःशृणोतुनः । उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥ नमो
महद्भ्योनमोअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः । यजामदेवान्यदिशक्नवाममाज्यायसः
शंसमावृक्षिदेवाः ॥ १३ ॥ २४ ॥ ८ ॥

तिगरुत्मान्यद्धरेश्वेद्धूमकेतुता ॥ ताच्छील्येमइतिह्यस्मात्सूत्राद्धूमइतीरितः ॥ ज्ञानायान्नायचसनःप्रहि
णोतुसुकर्मणाम् ॥ ११ ॥ देवानांकेतुभूतोसौवित्तवान्विश्पतिर्यथा ॥ अस्मदीयानिचोक्थानिबृहत्तेजाः
शृणोतु ॥१२ ॥ अथ ॥ नारायणब्रह्मपुरःसरास्तुदेवामहांतःशिशवःस्कंदपूर्वाः ॥ बटुस्वरूपाश्वतएवकुत्र
चिद्युवानइंद्रादयएतएव ॥ महत्त्वमेषांगुणतोपियूनामिंद्रादयोमध्यगुणायुवानः ॥ आपेक्षिकाल्पैश्वगुणै
स्तदीयैःसमीरिताआशिनाअर्भकाश्च ॥ कृतंनमःशक्तिमंतोयजामनज्यायसांस्तुतिमात्रंलुपामः ॥ एक

स्यविष्णोरपिरूपभेदाअणीयांसःसंत्यथवामहांतः ॥ युवत्वसाम्येपिमहत्त्वभेदाद्युवामहानित्यपिभेदउक्तः
॥ १३ ॥ २४ ॥ ८ ॥ विस्तीर्णाधस्तनायत्रग्रावाणोभिषवोद्धृताः ॥ धिषणाभिषुतान्सोमानवनःस्वीकृत
स्तुते ॥ गुरुस्वीकारइत्यस्माद्धानोःस्तुत्योहिजल्गुलः ॥१॥ फलकेभिषवस्यैवस्त्रियोजघनसाम्यतः॥प्रोक्ते
॥ २ ॥ उपच्यवश्चापच्यवःसंगतिभेदतः॥जिह्वाग्रावाथवाग्युक्तिरुच्यतेभिषवस्तथा॥खलश्चोरुस्तथादेहः
सोमोमनइतीरितः॥ज्ञानोत्पत्तौचफलकस्थानेओष्ठेउदीरिते॥३॥मंथरश्मीनश्वरश्मीन्यथायत्रनिबध्यते॥

यत्रग्रावापृथुबुध्नऊर्ध्वोभवतिसोतवे । उलूखलसुतानामवेद्विंद्रजल्गुलः ॥ १ ॥ यत्रद्वाविव
जघनाधिषवण्याकृता । उलूखलसुतानामवेद्विंद्रजल्गुलः ॥ २ ॥ यत्रनार्यपच्यवमुपच्यवंच
शिक्षते । उलूखलसुतानामवेद्विंद्रजल्गुलः ॥३ ॥ यत्रमंथांविबध्नतेरश्मीन्यमितवाइव । उलू
खलसुतानामवेद्विंद्रजल्गुलः ॥ ४ ॥ यच्चिद्धित्वंगृहेगृहउलूखलकयुज्यसे । इहद्युमत्तमंवद
जयतामिवदुंदुभिः ॥५॥२५॥ उतस्मतेवनस्पतेवातोविवात्यग्रमित् । अथोइंद्रायपातवेसुनु
सोममुलूखल ॥६॥ आयजीवाजसातमाताह्युच्चाविजर्भृतः ॥ हरीइवांधांसिबप्संता॥७॥

रश्मयोयत्रनाड्यश्च॥४॥यस्माद्युक्तोगृहेगृहे॥देहेदेहेथवातेनद्युमद्दुंदुभिवद्वद ॥ पृथिवीदेवतानस्यतद्गतोवा
स्वयंहरिः ॥ सोमामात्योपरोदेवोवनस्पतिरितीरितः ॥ सोमोवातद्विष्णुर्वाश्रुतःफलकदेवता ॥ वृक्षाणा
मपिसर्वेषामतो ॥ ५ ॥ २५ ॥ वृक्षाग्रएवतु ॥ वायुर्वातिवनानांवाभजनीयदिवौकसाम् ॥ पतिर्विष्णुस्तुत
स्याग्रेवायुर्देवोहिगच्छति ॥ पातवेस्वस्यसोमंवामनोवासुनुविष्णवे ॥ ६ ॥ आयज्वावन्नलब्धृणामुत्तमा
वतिभक्षकौ ॥ जहभक्षणइत्यस्माद्यथाश्वावन्नभक्षकौ ॥ सोमस्यभक्षकावत्र ॥ ७ ॥

ऋष्वावतिमहत्तरो॥महद्भिःसोतृभिःसोममिंद्रायमधुमत्सुतम् ॥ ८ ॥ सोममुत्पवनायेतंद्रोणोपरिपवित्रके॥
भरशिष्टंचमसयोर्क्रजीषंगोरधित्वचि॥भरेत्यात्मानमेवाहस्वांतर्यामिणमेववा ॥ शिरोभेदौतुचमसौद्रोणंचो
॥ २५ ॥ दरमीरितम् ॥ पवित्रंबुद्धिरेवात्रमनःशुद्धिस्तथायतः ॥ मुखचर्मैवगोचर्ममनएतेषुविण्णवि ॥ धार्यं ॥९॥ अ० २
॥२६॥१॥यत्सद्गुणाऽशस्ताइवस्मसिवयंततः ॥ शुभ्रवाङ्मनआदीनांविषयेस्मान्प्रशंसय ॥बहुवाच्यज्ञेययु

तानोअद्यवनस्पतीऋष्वावृष्वेभिःसोतृभिः ॥ इंद्रायमधुमत्सुतम् ॥ ८ ॥ उच्छिष्टंचम्वोर्भ
रसोमंपवित्रआसृज ॥ निधेहिगोरधित्वचि ॥ ९ ॥ २६ ॥ १ ॥ यच्चिद्धिसत्यसोमपाअना
शस्ताइवस्मसि ॥ आतूनइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ १ ॥ शिप्रिन्वाजानां
पतेशचीवस्तवदंसना । आतूनइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ २ ॥ निष्वापया
मिथूदृशासस्तामबुध्यमाने ॥ आतूनइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ३ ॥ ससं
तुत्याअरातयोबोधंतुशूररातयः ॥ आतूनइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ४ ॥
समिंद्रगर्दभंमृणनुवंतंपापयामुया ॥ आतूनइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥५॥

क्तान्कुत्वास्मांस्त्वंमहामख ॥ १ ॥ सुखिन्नन्नपतेवाग्ज्ञतवकर्माणिसर्वशः ॥ २ ॥ दैत्यरक्षःप्रजेमिथ्यादृ
शौशस्तांपुनर्बहु ॥ अबुध्यमानेनित्यंचयथानिष्वापयेश्वर ॥३॥ स्वपंतुनेशत्रवस्तेसर्वदाऽज्ञानमोहिताः ॥ ॥ २५ ॥
बोधंतुचैवमित्राणितवरूपंसुनिर्भयम् ॥४॥ पापयामाययामिथ्यास्तुवंतंत्वामपिप्रभो॥मायामयास्तवगुणा
नसंतिपरमार्थतः ॥ इतिनित्यंरुवंतंचमायावाद्याख्यगर्दभम्॥संचूर्णयतमस्येवक्षिस्वातत्राश्मभिःसदा ॥५॥

दूरंचपातयत्वेनान्वायुस्तास्मिंस्तमस्यधः ॥ वनंदृढमहेणैवतत्तमोवेदनोल्बणा ॥ कुंदृणाचीतिसंप्रोक्ता कुंडान्नीचत्वतोधिकम् ॥ कुंभःकुंडाभिधःकुंभीपाकान्नीचाहितद्गतिः ॥ रेफःस्वरन्यत्ययश्वतदाधिक्यार्थमीरितौ ॥ ६ ॥ सर्वंपरिक्रोशकंस्पापिनंजहिजंभय ॥ दंशयश्वादिभिर्नित्यंकृकचैर्दंशनंयथा ॥७॥ ॥ २७ ॥ १० ॥ हेवाजयंतोयुध्यंतोदेवाभोगिनएववा ॥ सोमैर्वइंद्रमासिंचेकुर्वियद्वन्नृपंकृतेः ॥ कर्तार

पतातिकुंदृणाच्यादूरंवातोवनादधि ॥ आतूनंइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ६ ॥ सर्वंपरिक्रोशंजहिजंभयाकृकदाश्वम् ॥ आतूनंइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ७ ॥ २७ ॥ १० ॥ आवइंद्रंक्रिविंयथावाजयंतःशतक्रतुम् ॥ मंहिष्ठंसिंचइंदुभिः ॥ १ ॥ शतंवायःशुचीनांसहस्रंवासमाशिराम् ॥ एदुनिम्नंनरीयते ॥ २ ॥ संयन्मदायशुष्मिणएनाह्यस्योदरे ॥ समुद्रोनव्यचोदधे ॥३ ॥ अयमुतेसमतसिकपोतइवगर्भधिम् ॥ वचस्तच्चिन्नओहसे ॥४॥ स्तोत्रंराधानांपतेगिर्वाहोवीरयस्यते ॥ विभूतिरस्तुसूनृता॥५ ॥२८॥

मीशमिववास्वदृष्टांतोहरेर्भवेत् ॥ १ ॥ शतेनवासहस्रेणसोमानामाशिरावताम् ॥ पातालइववनैवायंनिलीनोभवतिकिंचित् ॥ विलापयतितानेव ॥ २ ॥ बह्लिनेऽस्मैमदायच ॥ संदधुर्नैवविश्वानिव्यक्तीरस्योदरेकचित् ॥ समुद्रेकात्समुद्राख्याप्रकृतिश्वमहत्त्वतः ॥ ३ ॥ तवैवायंप्रपंचश्चकपोतोगर्भधियथा ॥ सम्यग्व्यामोषिविश्वंचतस्मान्नोवचओहसे ॥ ४ ॥ गिरांवाहकतेस्तोत्रमखिलंवेदवैदिकम् ॥ सूनृतावागियंमेचविभूतिरितिकल्प्यताम् ॥ अस्त्वित्येतत्प्रसादेनफलदानादुदीर्यते ॥ ५ ॥ २८ ॥

उत्तमःसन्नत्रयुद्धेज्ञानाज्ञानमयेविभो ॥ अभिप्रेतार्थसिद्ध्यर्थमस्माकंतिष्ठसर्वदा॥मस्थितस्त्वमहंचैवत्वा
मन्येषुब्रवावहै ॥ ६ ॥ तेजस्वितममिंद्रंतंयोगेयोगेह्वामहे ॥ ७॥ उक्तंचेत्सशृणोत्येवश्रुतंचेदागमिष्यति॥
बह्वर्थयुक्ताभिप्रायैरन्नैरप्युपनोहवम् ॥ ८ ॥ पुरातनस्यविष्णोस्तदोकसोर्थेह्वयेहरिम् ॥ महान्प्रतिप्रति
स्थश्चतुविप्रतिरितीरितः ॥ यंत्वांपूर्वंपिताज्ञातैवाह्वयामासविश्वकृत् ॥ त्वद्भक्तइतिवाब्रह्मा ॥ ९ ॥ तंत्वा

ऊर्ध्वस्तिष्ठानऊतयेस्मिन्वाजेशतक्रतो ॥ समन्येषुब्रवावहै ॥६॥ योगेयोगेतवस्तरंवाजेवाजे
हवामहे ॥ सखायइंद्रमूतये ॥ ७॥ आघांगमद्यदिश्रवत्सहस्रिणीभिरूतिभिः ॥ वाजेभिरुप
नोहवम् ॥ ८ ॥ अनुप्रत्नस्यौकसोहुवेतुविप्रतिंनरम् ॥ यंतेपूर्वंपिताहुवे ॥ ९ ॥ तंत्वावयंवि
श्ववाराशास्महेपुरुहूत ॥ सखेवसोजरितृभ्यः ॥ १० ॥ २९ ॥अस्माकंशिप्रिणीनांसोमपाः
सोमपाव्नाम् ॥ सखेवज्रिन्त्सखीनाम् ॥ ११ ॥ तथातदस्तुसोमपाःसखेवज्रिन्तथाकृणु ॥
यथातउश्मसीष्टये ॥ १२ ॥ रेवतीर्नःसधमादइंद्रेसंतुतुविवाजाः ॥ क्षुमंतोयाभिर्मदेम
॥ १३ ॥ आघत्वावांत्मनाप्तःस्तोतृभ्योधृष्णवियानः ॥ ऋणोरक्षंनचक्र्योः ॥ १४ ॥

माशास्महेवयम् ॥ १० ॥ २९ ॥ अस्माकंसुखिनांसोमपातॄणा ॥ ११ ॥ मस्तुतत्तथा ॥ तेसकाशाद्य
थेच्छामःप्राप्तुंदेवतथाकृणु ॥ वज्रोज्ञानंवजगताविल्यस्माद् ॥ १२॥ वित्तसंयुताः ॥ रेवतीःपशवःप्रोक्ताः
सधमादेसुखस्थितौ ॥ तुविवाजमहान्नानिक्षुमंतःस्थितिसंयुताः ॥ ज्ञानयुक्तंसुखंवास्यात्सतीशोस्माकमू
र्जितम् ॥ १३ ॥ त्वद्वांस्त्वयैवचाप्तःस्यात्स्तोतॄणामासमंततः ॥ इयानोगम्यमानस्तैरणतोश्वक्रयोर्यथा ॥
अक्षमाश्रयभावेन ॥ १४ ॥

स्तोतॄणांकाममाइहः ॥ आसमंतात्स्थितंकाममत्याधिक्येपृथक्पदम् ॥१५॥२० ॥ क्रोधाच्छ्वसद्भिःप्रथय
द्भिरात्मवीर्यंसुरैःशश्वदिंद्रोजिगाय॥धनानिनःस्वर्णरथंचदातालब्धाप्रादाल्लाभकृतेचनोखिलम्॥१६॥गोम
द्धिरण्यवच्चस्याद्यथायातंतथैवनः ॥सुखपुत्रयुजाचाश्ववत्येषाशंसुखंयतः ॥ इडैश्वर्यंतथावीरंवीर्यंखान्य
श्वनामतः ॥ गौर्वाग्घितंचरमणंपरंब्रह्मगुणोच्छ्रितम् ॥ १७ ॥ समानयोगयुक्तोयंरथोदेहस्त्वदात्मनाम् ॥

आयद्धुवंःशतक्रतवाकामंजरितॄणाम् ॥ ऋणोरक्षंनशचींभिः ॥ १५ ॥ ३० ॥ शश्वदिंद्रःपो
प्रुथद्भिर्जिगायनानंदद्भिःशाश्वसद्भिर्धनानि ॥ सनोहिरण्यरथंदंसनावान्सनःसनितासनयेस
नोदात् ॥ १६ ॥ आश्विनावश्वावत्येषायातंशवीरया ॥ गोमद्दस्राहिरण्यवत् ॥ १७ ॥ स
मानयोजनोहिवांरथोदस्रावमर्त्यः ॥ समुद्रेअश्विनेयते ॥ १८ ॥ न्यघ्न्यस्यमूर्धनिचक्रं
रथस्ययेमथुः ॥ परिद्यामन्यदीयते ॥ १९ ॥ कस्तउषःकधप्रियेभुजेमर्तोअमर्त्ये ॥ कंनं
क्षसेविभावरि ॥ २० ॥ वयंहितेअमन्मह्यान्तादापराकात् ॥ अश्वेनचित्रेअरुषि॥२१॥

चित्सुखत्वादमर्त्यश्चज्ञायतेक्षीरसागरे ॥ मोक्षस्ययावताप्राप्तिःसमानोयोगउच्यते ॥ १८ ॥ एकंचक्रंगिरे
मूर्ध्निनियतंदिविचापरम् ॥ पापंचक्रंहरिद्व्यस्यपुण्यंदिव्यस्यचोपरि ॥ १९ ॥ कोमर्त्यस्तवभोगाययतःस
र्वप्रियोभवान् ॥ किमपिप्रियमस्त्येतिपूर्णानंदात्कधप्रियः ॥ आप्तकामत्वतःकंवागच्छसिस्वार्थहेतुतः ॥ वि
शेषाद्भावतेविष्णुःकथितश्चविभावरी ॥ २० ॥ चिंतयामस्तवैकस्यविश्वमांतपराकयोः ॥ पराकःसुसु
खेवश्रीरंतःकलिरुदाहृतः ॥ नरकस्वर्गयोरेवदेव्युषाउदितायदा ॥ जात्यश्ववत्सदाभद्रेचारुणे ॥ २१ ॥

प्राणवाक्स्तुते ॥ तद्व्यंग्यत्वाद्धरिश्चैवदिवस्पुत्रउदाहृतः ॥ २२ ॥ ३१ ॥ ११ ॥ ६ ॥ अग्नींद्रादिगतंपृथ
क्स्थितमपिस्तौत्यच्युतंभक्तितःस्वर्णस्तूपइतिप्रसिद्धिमगमद्यःसंस्तुवन्सूर्यगम॥विष्णुंस्वर्णसमानचारुवपुषं
स्वर्णाभिधंशाश्वतंतंदृष्ट्वापरतोभवच्चमहितःसुज्ञानमप्याप्तवान्॥ अंगेरसोज्ञानतएवचर्षिःसखाप्रियत्वेनदि
वौकसांहरिः॥तवव्रतेनैवसविद्यकर्मिणोमहाविज्ञानामरुतोबभूविरे॥१॥व्यापीचविश्वस्यसुमेधयायुतोजडा

त्वंत्येभिरागंहिवाजेभिर्दुहितर्दिवः ॥ अस्मेरयिंनिधारय ॥ २२ ॥ ३१ ॥ ११ ॥ ६ ॥
त्वमंग्नेप्रथमोअंगिराऋषिर्देवोदेवानांमभवःशिवःसखा ॥ तवव्रतेकवयोविद्मनापसोजायंतम
रुतोभ्राजंदृष्टयः ॥ १ ॥ त्वमंग्नेप्रथमोअंगिरस्तमःकविर्देवानांपरिभूषसिव्रतम् ॥ विभुर्वि
श्वस्मैभुवनायमेधिरोद्विमाताशयुःकतिधाचिदायवे ॥ २ ॥ त्वमंग्नेप्रथमोमातरिश्वनआवि
र्भवसुक्रतूयाविवस्वते ॥अरेजेतांरोदसीहोतृवूर्येसघ्नोर्भारमयजोमहोवसो ॥३॥ त्वमंग्नेमनवेद्या
मवाशयःपुरूरवसेसुकृतेसुकृत्तरः ॥ श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरंपुनः ॥४॥

जडेवेत्तितथाब्धिशायी॥कतिप्रकारोपिसहिप्रजायैस्वामीगुरुर्नित्यसखापिताच॥२॥ त्वंविष्णोप्रथमोमात
रिश्वनआविर्बभूवास्यसुबोधवत्त्वात्॥वायुर्विवस्वान्विविधेषुवासादशोभेतांश्रीश्वभूःसर्वहोतुः॥वरत्वतस्तेरद
नाद्रोदसीतेसैकाहिदीर्णाद्विविधाबभूव॥सहंतेमुनैवकेचिद्वयसम्भुर्वायुर्विरिंचोपिमहांश्वतस्मै ॥ विश्वस्यभारं
प्रतिदिष्टवांस्त्वंवासाच्चसर्वत्रवसुर्भवानसि ॥३॥ विशिष्टबोधान्मनवेवायवेत्वंप्रादाद्विज्ञानरूपांप्रियांच ॥
यथातदीयेतितुवाशनंस्याल्लोकस्यसर्वस्यतथैवदेव ॥ पुरूरवावायुरेवोरुशब्दादन्यस्मैवासुकृतेसुकृत्तरः ॥

श्चावैवायुःश्वसनात्राणतोस्यनित्यंमुक्तःप्रकृतेःपूरुषाच्च।तेनैवत्वामानयन्पूर्वंसंतोनीतंपुनश्चाप्यपरेसुभक्त्या
॥ ४ ॥ श्रोतव्यस्त्वंयजमानेननित्यंनित्यायुरग्रेजनताप्रविष्टः ॥ ऐश्वर्याद्याःषड्गुणानित्यवत्तावषट्कार
स्यार्थइत्याहवेदः ॥ ५ ॥ ३२ ॥ सद्विद्याख्येविदथेसंप्रजातेपापाचारंपुरुषंवापिपार्षि ॥ सत्कमनुग्रहेस्वेवि
विधप्रजेशोविचर्षणिःशूरसातौचयुद्धे ॥ सातिर्लभियत्परितक्म्येधिगम्येदभाअपित्वांशरणंयदिस्म ॥ ऋ

त्वमंग्नेवृष॒भः पु॑ष्टि॒वर्ध॑नउद्यंतस्रुचेभवसिश्र॒वाय्यः॑ ॥ यआहु॑तिं॒परि॒वेदा॒वषट्कृति॒मेकायु॒रग्रे॒वि
शंआ॒विवा॑ससि ॥ ५ ॥ ३२ ॥ त्वमंग्नेवृ॒जि॒नव॑र्तनिं॒नरं॒सक्मं॑न्पिपर्षिवि॒दथे॑विचर्षणे ॥ यःशू
रसाता॒परि॑तक्म्येधनेद॒भ्रेभि॑श्चि॒त्समृ॑ता॒हंसि॒भूय॑सः ॥६॥ त्वंतम॑ग्नेअमृत॒त्वउ॑त्त॒मेमर्तं॑दधासि॒
श्रवं॑सेदि॒वेदि॑वे ॥ यस्ता॑तृषा॒णउ॒भया॑य॒जन्म॑ने॒मयः॑कृ॒णोषि॒प्रय॒आच॑सू॒रये॑ ॥७॥ त्वंनो॑अग्नेस॒
नये॒धना॑नांय॒शसं॑का॒रुंकृ॑णुहि॒स्तवा॑नः ॥ ऋ॒ध्याम॒कर्मा॒पसा॒नवे॑नदे॒वैर्द्यावापृथिवी॒प्राव॑तंनः ॥८॥

तागतास्तत्रहिभूयसोपितेहंसिशक्त्यासंख्ययावाप्रयत्नात् ॥ ६ ॥ दिनेदिनेतत्स्तुतिंश्रोतुकामस्तवस्तोतार
मम्रतत्वेदधासि ॥ प्रीत्याधिक्यात्ततृषाणोमनुष्यदेवोभयेषांसुखमातनोषि ॥ आसमंताज्ज्ञानिनेतत्रनित्यं
प्रियंमोक्षाख्यंततृषाणोविशेषात् ॥ ७ ॥ प्रज्ञाधनानांलब्धयेनःकुधित्वंयशस्विनंकारिणंज्ञानदंच ॥ क
र्तापरोक्ष्यंयावदुपासनादीन्कारुस्तेनप्रोच्यतेतत्त्वदर्शी ॥ संस्तूयमानःकर्मणानूतनेनसमृद्धिंचप्राप्नुमःप्राक्त
नस्य ॥ ८ ॥

त्वंनःपित्रोःप्रकृतेःपूरुषस्यसमीपस्थस्तन्नियंतासदैव ॥ देवेषुत्वंजागृविर्नित्यवेत्तातनूकृन्नोबोधयप्राज्ञ
वर्यः ॥ विश्वंवसुप्रार्पयसेचकारवे ॥ ९ ॥ आयुष्करोभ्रातरस्तेवयंच ॥ देहेत्वेकस्मिन्गर्भवद्वा
सतश्चभ्रातास्यजीवःपरमस्यनित्यम् ॥ १० ॥ ३३ ॥ आयोराज्ञोहृदयेप्रेरकत्वादायोरायुर्नहुषस्याधि
पश्च ॥ चक्रुर्देवादेहस्रष्टैवतस्ययन्नामांतर्यामिणोजीवगंच ॥ नामार्थभाग्वासुदेवोहिशक्त्यातेनह्यायुः

त्वंनोअग्नेपित्रोरुपस्थआदेवोदेवेष्वनवद्यजागृविः ॥ तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याण
वसुविश्वमोपिषे ॥ ९॥ त्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवजामयोवयम् ॥ संत्वारायः
शतिनःसंसहस्रिणःसुवीरंयंतिव्रतपामदाभ्य ॥ १० ॥ ३३ ॥ त्वामग्नेप्रथममायुमायवेदे
वाअकृण्वन्नहुषस्यविश्पतिम् ॥ इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममकस्यजायते
॥ ११ ॥ त्वंनोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्यतनयेगवामस्य
निमेषंरक्षमाणस्तववव्रते ॥ १२ ॥

प्रथमोऽसाविहोक्तः ॥ मनुर्नाम्नामनुषस्तस्यचेलापुत्रीनामास्याअपिविष्णोःसदैव ॥ इळेड्यत्वादुपजीव्य
त्वतश्चसएवायुरयनाज्ज्ञानतश्च॥तच्छास्यत्वाच्छासनीमानवीळातच्छासकत्वाच्छासनीवासुदेवः ॥ममत्व
कर्तुर्हिपितुःसपुत्रःस्वातंत्र्यंचममतानान्यदस्ति॥ ११॥त्वंनोमघोनोयजमानस्यतन्वस्त्वैवरक्षाशक्तिभीरक्ष
देव ॥चशब्देनज्ञानभक्त्यादिकंचसदास्माकंयजमानस्यचाद्धा॥त्रातातोकस्यपुत्रस्यचत्वंसंततित्वात्तनय
स्यास्यसूनोः॥ गवांचत्वंरक्षिताज्ञानसौख्यवाचांवाद्धैवानिमेषानुसुरांश्च॥संरक्षमाणस्त्वद्व्रतैतैःप्रवृत्तो॥ १२॥

यज्योश्वत्वंपालकोस्यंतरश्च ॥ नितरांयःसंगहीनोऽनिषंगस्तस्मैभक्त्यादीप्यसेज्ञानदृष्ट्या ॥ द्विशीर्षत्वा
च्चतुरक्षोधियज्ञोद्वेशीर्षेइतिवागुत्तरत्र ॥ योदत्तहव्यस्तेऽतिसौम्यायपीत्यैकर्तुर्मंत्रंसंभजसेहितस्य ॥१३॥
महास्तोत्रायवदतेस्पार्हमिष्टरेक्णःसुखंपरमंतद्ददासि ॥ आसमंताद्धारकस्यापिवायोःप्रज्ञानदःप्रोच्यसेत्वं
पिताच ॥ प्रशास्सित्वंपरिपक्काधिकारंप्रदेशकत्वादखिलंत्वंसुवेत्ता ॥ १४ ॥ धृतंवर्मेवपरिपासिनित्यंप्रय

त्वमंग्नेयज्यवेपायुरंतरोनिषंगायचतुरक्षइध्यसे ॥ योरातहव्योवृकायधायसेकीरेश्चिन्मंत्रंमनं
सावनोषितम् ॥ १३ ॥ त्वमंग्नउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् ॥ आध्रस्यंचि
त्प्रमंतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरः ॥ १४ ॥ त्वमंग्नेप्रयंतदक्षिणंनरंवर्मेवस्यूतं
परिपासिविश्वतः ॥ स्वादुक्षद्मायोवसतौस्योनकृज्जीवयाजंयजतेसोपमादिवः ॥ १५॥३४॥
इमामंग्नेशरणिंमीमृषोनइममध्वानंयमगामदूरात् ॥ आपिःपिताप्रमतिःसोम्यानांभृमिरस्यृषि
कृन्मर्त्यानाम् ॥ १६ ॥ मनुष्वदंग्नेअंगिरस्वदंगिरोययातिवत्सदनेपूर्ववच्छुचे ॥ अच्छंया
ह्यावंहादैव्यंजनमासांदयबर्हिषियक्षिचप्रियम् ॥ १७ ॥

त्नाद्योदक्षिणादोमखेषु॥स्वादुक्षद्मासुखगेहोगृहेचस्योनंसुखंयःपरेषांकरोति ॥ यावज्जीवंयजतेसुप्रतिज्ञोभू
त्वाचयोयजतेतस्यसैव ॥ द्युप्रातिभावेद्युपमादेहएवक्षमेतिवावसतिर्ज्ञानमार्गे ॥१५॥३४ ॥ यामेभवच्छ
रणप्राप्तिरेषामर्षस्वतामल्पइतिक्रुधोमा ॥ त्वत्प्राप्त्यर्थंदूरमार्गांचयत्तत्प्राप्यःपिताज्ञानदोदेवतानाम् ॥ त्वं
भ्रामकोमानुषाणामृषीणांकर्तातथाज्ञानदानेनदेव ॥ १६ ॥ यथामनुश्वांगिरावाययातिर्गृहेप्राप्तस्त्वांत
थामद्गृहंच ॥ अभ्यायाह्यावहदेवसंघमासादयबर्हिषियक्षिचप्रियम्॥यष्टात्वमेवाखिलजीवगोयत्॥१७॥

स्पष्टत्वंचप्रामुहिवेदवाचा ॥ शक्त्यायत्तेचकृमज्ञानतोवावस्योभद्रंप्रणयास्मान्सुमत्या ॥ भोगेतयासंस्त्व
जनित्यमेवयस्माच्छक्त्याचकृमत्वत्सुकर्म ॥ १८ ॥ ३५ ॥ १२ ॥ इंद्रस्यवावासुदेवस्यवीर्याण्याचक्षेऽ
हंयानिमुख्यानिचक्रे ॥ अहिंदैत्यंसंशयंवाजघानजलानुसारेणचखानमार्गम् ॥ ततदंविघ्नान्कर्मणांवानु
साराद्वहनात्पक्षावक्षणाद्दुर्वचांसि ॥ जीवानांचेद्वक्षणाजन्मपर्ववतांबिभेदैवसुयुक्तिभिस्ताः ॥ १ ॥ त्वष्टात्वे



एतेनांग्रेब्रह्मणावावृधस्वशक्तींवायत्तेचकृमाविदावा ॥ उतप्रणेष्यभिवस्योअस्मान्त्सन्नःसृज
सुमत्यावाजवत्या ॥ १८ ॥ ३५ ॥ १२ ॥ इंद्रस्यनुवीर्याणिप्रवोचंयानिचकारप्रथमानि
वज्री ॥ अहन्नहिमन्वपस्ततर्दप्रवक्षणाअभिनत्पर्वतानाम् ॥ १ ॥ अहन्नहिंपर्वतेशिश्रियाणंत्वष्टास्मैवज्रंस्वर्यंततक्ष ॥ वाश्राइवधेनवःस्यंदमानाअंजःसमुद्रमवजग्मुरापः ॥ वृषाय
माणोवृणीतसोमंत्रिकद्रुकेष्वपिबत्सुतस्य ॥ आसायकंमघवादत्तवज्रमहन्नेनंप्रथमजामहीनाम् ॥ २ ॥ यदिंद्राहन्प्रथमजामहीनामान्मायिनाममिनाःप्रोतमायाः ॥ आत्सूर्यंजनयन्द्यामुषासंतादीत्नाशत्रुंनकिलाविवित्से ॥ ३ ॥

तज्ज्ञानवज्रंविरिंचस्ततक्षतेनद्विषयंत्विडात्मा ॥ स्वर्यंवज्रंनिशितंशब्दजंवाशिशुवत्सागावइवैतदीरिताः ॥
अंजःसमुद्रंजग्मुरापःक्रियावासमुद्रिक्तंदेवमेनंव्रजंति ॥ २ ॥ वव्रेसोमंतृषितोयद्वदेववृषापिबत्सवनेषुत्रि
षुस्म ॥ सवनानांकद्रुकत्वंद्रुतंयत्कमत्रसोमोध्यानयोगेमनोवा ॥ सायंकरंलयकृज्ज्ञानमेवसमाददेसंशय
मीशवद्वा ॥ ३ ॥ अहन्नेनंप्रथमंमायिनांचव्यनाशयोव्याजरूपाश्चमायाः ॥ ततःसूर्यद्युदिनादेश्चकर्ता
त्वमेवतावद्वलतोनशत्रुम् ॥ लभसेमायावादिनांवाथमायाव्यनाशयःस्वजनैस्तज्जयेन ॥ ४ ॥

अहन्वृत्रंव्यंसमतोधिकंचतमोमिथ्याप्रत्ययौव्यंसनाद्वा॥ स्कंधास्तरोर्यद्वदथोविवृक्णाअहिश्ववज्रेणकुल
स्यशंकृतेः ॥ विद्यानाम्नाकुलिशोबुद्धिरेवपृथिव्याख्यासंशयस्तद्गतोयत् ॥अतःपृथिव्याउपपृग् ॥ ५ ॥
॥ ३६ ॥ यस्ययोद्धानायोद्धासौतद्वदेवेंद्रशत्रुः ॥ दर्पोद्रिक्तोह्याह्वयामासशक्रंविष्णुंवाऽज्ञानंवीरतमं
रिपूणाम् ॥ महोच्चानांबाधकंदार्ढ्यहेतोर्ऋजीषाख्यंनास्यविष्णार्वधानाम् ॥ संप्राप्तिमज्ञानमथापिवृत्रः
शक्रस्यतारीत्संपिपिषेप्रजाश्च ॥ रुजायुक्तामानुषीर्वास्ततिस्थाइंद्रःशत्रुर्यस्यसहींद्रशत्रुः ॥ पुंसोःपूर्वस्मि

अहन्वृत्रंवृत्रतरंव्यंसमिंद्रोवज्रेणमहतावधेनं ॥ स्कंधांसीवकुलिशेनाविवृक्णाहिःशयतउपपृ
क्पृथिव्याः ॥ ५ ॥३६ ॥ अयोद्धेवदुर्मदआहिजुह्वेमहावीरंतुविबाधमृजीषम् ॥नातारीदस्य
समृतिंवधानांसंरुजानांःपिपिषइंद्रशत्रुः ॥६॥ अपादहस्तोअपृतन्यादिंद्रमास्यवज्रमधिसानौ
जघान ॥ वृष्णोवधिःप्रतिमानंबुभूषन्पुरुत्रावृत्रोअशयद्व्यस्तः ॥ ७॥ नदन्नभिन्नममुयाशयानं
मनोरुहाणाअतियंत्यापः ॥ याश्चिद्वृत्रोमहिनापर्यतिष्ठत्तासामहिःपत्सुतःशीर्बभूव ॥ ८ ॥

न्स्वरितांतेसमासोबहुव्रीहिर्हीतिसूत्रंपुराणम् ॥ ६ ॥ संछिन्नपाद्वाङ्करपींद्रमेवयुयोधवज्रंव्यस्तजत्सतस्य॥
गिरेःसानुप्रतिमेकंठदेशेतर्कागमाभ्यांरहितंतमोवा॥संयुध्यमानंमानवज्रेणविष्णुर्जघानवध्रिर्वधयोग्योऽथ
नीचः ॥ ईशस्यशत्रुर्भवितुंसइच्छन्व्यस्तोशयद्बहुधेशेनतेन ॥ ७ ॥ अपारोद्धारममुयात्वमात्रासहैवश
क्रेणहतंशयानम् ॥ भिन्नंनदंयद्वदतीत्यचापोमनःपूर्वंचारुहाणाःप्रयांति ॥ वृत्रोयाःपूर्वंत्वमहिम्नापरीत्यप
रातिष्ठत्तत्सुतोहिश्वतासाम् ॥ तत्सुतश्शीःपादतोनंतरंतुशेताभवत्तद्वदेवाभिरुंधन् ॥ तमःपुत्रःसंशयोवाभिरुं
धन्शुभान्यास्तेनिहतःसोपितेन ॥ ८ ॥

नीचस्थानेबंधनंयापिचापांकरोतिदानुर्वंत्रमातादनुःसा ॥वृत्रोह्यभूद्दनुजःकश्यपाच्चपापात्मासौवैष्णवस्त्व
ष्टृजातः ॥ वृत्रःपुत्रोस्याइतिसावृत्रपुत्रावधंतस्याआहरत्पूर्वमिंद्रः ॥ प्रकृतिर्वावृत्रमातातमोहितस्याअ
भूत्तांजघानेशितावा ॥ प्रातिस्विकीप्रकृतिर्यत्तमश्वदोषाश्चान्येपुंस्त्वतोयुक्तमेतत् ॥ सुतावनार्थमुपरि
स्थाबभूवसुतस्यमातातांनिहत्यामुमेव ॥ जघानेंद्रःकारणस्यापिनाशात्कार्योत्थानंवारयामासविष्णुः ॥
स्यादेवपूर्वंकार्यनाशोह्यथापिनिःशेषनाशःकारणस्यैवनाशात् ॥ एवंभक्ताननुजयाहदेवोनारायणःपारय

नीचावयाअभवद्वृत्रपुत्रेंद्रोअस्याअवरधर्जभार ॥ उत्तरासूरधरःपुत्रआसीद्दानुःशयेसहवं
त्सानधेनुः ॥ ९ ॥ अतिष्ठंतीनामनिवेशनानांकाष्ठानांमध्येनिहितंशरीरम् ॥ वृत्रस्यनि
ण्यंविचरंत्यापोदीर्घंतमआशयदिंद्रशत्रुः॥१०॥३७॥दासपत्नीरहिगोपाअतिष्ठन्निरुद्धाआपः
पणिनेवगावः ॥ अपांबिलमपिहितंयदासीद्वृत्रंजघन्वाँअपतद्ववार॥११॥अश्व्योवारोअभव
स्तदिंद्रसृकेयत्वाप्रत्यहन्देवएकः॥अजयोगाअजयःशूरसोममवासृजःसर्तवेसप्तसिंधून्॥१२॥

नृसंस्तुतेश्च ॥ उत्तरत्वंप्रकृतेःशक्तितःस्यात् ॥ ९॥ अनंतत्वान्नैवतिष्ठंतिकाष्ठाः ॥ अतस्तासांनगृहंकिंचिद
स्तिनिण्यंसुखेनैवचरंतिचापः ॥ दीर्घंतमोवृत्रःसंज्ञंतमोवादीर्घन्मधंप्रापवृत्रःसएव ॥ १० ॥३७॥ दासस्य
विष्णोर्वरुणस्यपत्न्योनिरुद्धाआसन्नहिनायद्वदेव ॥ गावोबलेनेंद्रयज्ञेसुकृमावृत्रंहत्वातमाहिंचाशुशुक्र ॥
उद्घाटयामासबिलंतदापांशुभद्वारंभगवान्वातमोघ्नन् ॥ ११ ॥ सृकेयुद्धेप्रत्यहंस्त्वांयदिस्मदेवःप्रधानोपि
नदश्ववारः ॥ वालीवत्वंननुदेवस्तदानींप्रतिहंतातेनैवकश्चिद्धितस्मात् ॥ अजयोबलाद्गाअजयोहिरण्यंसो
मंगंतुममुचःसप्तसिंधून्॥१२॥

अशानिंयाःविद्युतंयांमिहंचनाम्नाहेतिंवेद्युपमांसुतीक्ष्णम् ॥ अशनिभेदंह्लादुनिनामधेयंत्वामुद्दिश्यैवा
किरत्सोहिरुयः ॥ त्वांप्रत्येतन्नैवसिद्धिंचकारपश्चात्कालेत्वजयस्त्वंतमेव ॥ १३ ॥ अहेर्यौद्धारं
कमपश्यइंद्रयज्जघ्नुषस्तेपिभयंजगाम ॥ ज्ञानानिमिथ्याबोधतोस्मन्मनश्चशब्दादिकादमुचःसप्तसिंधू
न् ॥ महत्तत्त्वादीन्विपरीतामतिस्तुविद्युच्छब्दास्तन्यतुर्वक्तृशक्तिः ॥ मिहेत्युक्ताह्लादुनिर्ह्रीकृतिश्चप्र
तिवक्तृणामनुकूलेरमेशे ॥ नसाधयंतिस्मतमस्समुत्थाजयत्येनंसंशयंवासुदेवः ॥ स्वभक्तार्थैतद्धृदिस्थः

नास्मैविद्युन्नतन्यतुःसिषेधनयांमिहमकिरध्रादुनिंच ॥ इंद्रश्चयद्युयुधातेअहिश्चोतापरीभ्यो
मघवाविजिग्ये ॥ १३ ॥ अहेर्यातारंकमपश्यइंद्रहृदियत्तेजघ्नुषोभीरगच्छत् ॥ नवचयन्नं
वतिंचस्रवंतीःश्येनोनभीतोअतरोरजांसि ॥ १४ ॥ इंद्रोयातोवसितस्यराजाशमस्यचशृं
गिणोवज्रबाहुः ॥ सेदुराजाक्षयतिचर्षणीनामरांननेमिःपरिताबभूव ॥ १५ ॥ ३८ ॥
॥ इतिप्रथमाष्टकेद्वितीयोऽध्यायः ॥ २ ॥

कएवत्वदन्योहेरभिगंताभवेत ॥ तवैवयस्मात्संशयंजघ्नुषस्तुत्वदीयानांभयमंजोभ्यपैति ॥ शतमेको
नमतरस्त्वंनदीनामहिंदैत्यंघ्नन्यथाकाशदेशात् ॥ भीतःश्येनोह्यतिगच्छेत्तथैवनानानदीवारकत्वात्तुतस्य॥
ईशोदेवानांतावतांतावतीश्चस्तत्यापगास्तारयामासयद्वत् ॥ भीतःश्येनस्तरतीत्यंतथैषांकृत्वोपमांतारया
मासदेवः ॥ स्वातंत्र्येभेदकरणेचोक्तएवव्यत्यासइत्यनवद्यंतदेतत् ॥ वस्वादित्यामरुतश्चाश्विनौचबृ
हस्पतिःशेषविपानिरुद्धाः ॥ ब्रह्माब्रह्माणश्चभवश्चैवरुद्राऊनंशतंदेवतासंहितोक्तम् ॥ १४ ॥ सएवेंद्रो
भगवांस्तत्प्रसादात्प्राप्तोभक्तैःपर्यवसानगंतुः ॥ मुक्तस्यराजापिशमस्यमुक्तेर्ज्ञानंश्रृंगंतद्वतश्चैवनित्यम् ॥

सएवराजाक्षयतिप्रजानांभूतान्यराणीवचपर्यभूत्सः ॥ १५ ॥ ३८ ॥ १३ ॥ इतिश्रीमदानंदतीर्थभगव
त्पादाचार्यविरचितेश्रीमदृग्भाष्येप्रथमाष्टकेद्वितीयोऽध्यायः ॥ २ ॥
ॐनमोनारायणाय ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्योनमः ॥ ॥ हरिः ॐ ॥ येसखायस्त्वरिताए
तदेवाउपायामपशुवत्तद्वशस्थाः ॥ गव्यंतउक्ताअतिनिश्चितेर्थेभूतशब्दश्चेत्याहसूत्रंपरेशः ॥ प्रकृष्टज्ञानंव
र्धयत्येवसुष्टुसनोभेद्योनाम्नृणःकापितस्य ॥ वित्तानितस्माद्वेदवाक्योत्थमेवकेतंज्ञानंपरमावर्जतेनः ॥ द
दाति ॥ १ ॥ उपैवेशमहंपतामियथाश्येनोवसतिंपूर्वभुक्ताम् ॥ इंद्रंनमस्यन्ननुकूलगीर्भिरेवयःस्तोतृभ्योह

हरिःॐ ॥ एतायामोपगव्यंतइंद्रमस्माकंसुप्रमतिंवावृधाति॥अनामृणःकुविदादस्यरायोगवां
केतंपरमावर्जतेनः ॥ १ ॥ उपेदहंधनदामप्रतीतंजुष्टांनश्येनोवसतिंपतामि ॥ इंद्रंनमस्य
न्नुपमेभिरर्कैर्यःस्तोतृभ्योहव्योअस्तियामन् ॥ २ ॥ निसर्वसेनइषुधींरसक्तसमर्योगाअजति
यस्यवष्टि ॥ चोष्कूयमाणइंद्रभूरिवामंमापणिर्भूरस्मदधिप्रवृद्ध ॥ ३ ॥ वधीर्हिदस्युंधनिनं
घनेनँएकश्चरन्नुपशाकेभिरिंद्र ॥ धनोरधिविषुणक्ते व्यायन्नयज्वानःसनकाःप्रेतिमीयुः ॥ ४॥

व्यएवास्तिकाले ॥ २ ॥ अशेषसेनापतिरेषशत्रूनशेषतोहंतुमथोत्तमांसि ॥ बध्नातितूणान्निजसज्जना
न्वासंयोजयत्यात्मनिमानबाणान् ॥ अर्योगम्योधीश्वरोगामतीर्वासंकालयत्येवचयस्यवष्टि ॥ भक्तस्यत
त्वंददमानास्यभूरिभद्रंमाभूरसुरस्त्वंकदाचित् ॥ अस्मदर्थेहिंसकत्वेननित्यंप्रवृद्ध ॥३॥वज्रेणघनेनदस्युम्॥
ज्ञानेनवाज्ञानगणंधनाढ्यमयज्युंचाप्येकएवांतरेच ॥ चरंश्छाकैःशक्तिभिःसर्वदेवनरादिलोकंयमयज्ज
घंथ ॥ अधिकृत्यत्वांधनुमत्यंतपुष्टंविष्वग्जग्मुरयजंतःसदैव ॥ मृतिंप्रापुर्दुःखबाहुल्यरूपांसनकालाभेयो
ग्यरूपाअपिस्म ॥ ४ ॥

अयज्वानोन्येवक्ष्यमाणास्तुयेतेसंत्यासुरायज्वभिःस्पर्धमानाः ॥ शिरांस्यपिस्वानिसंतत्यजुस्तेसद्भिःस्प
र्धामात्रसंपूरितार्थाः ॥ तानव्रतान्स्वर्गतःखात्पृथिव्यानिरधमस्त्वंस्थैर्येवानिंद्रियेशः ॥ ५ ॥ १ ॥
यदानवग्वाऋषयोसुरेंद्रैरुपद्रुताःशरणंवासुदेवम् ॥ प्रापुस्तमोभिस्तामसैर्वाघसंघैःसंपीडिताअयुयुत्सं
स्तदातैः ॥ सेनांचविष्णोर्निरयातयंस्तेवधायतेषांहरिभक्त्यादिकान्वा ॥ गुणान्समर्थाइवयोधाःस्वश
त्रुवधैकशीलाअपिनष्टाःप्लवद्भिः ॥ गुणैर्विष्णोःस्वैर्गुणैर्वाप्रसादादीशस्यसंकालयंतोभ्यगच्छन् ॥ ६ ॥

पराचिच्छीर्षावृवृजुस्तइंद्रायज्वानोयज्वभिःस्पर्धमानाः ॥ प्रयद्दिवोहरिवःस्थातरुग्रनिर
व्रताँअधमोरोदस्योः ॥ ५ ॥ १ ॥ अयुयुत्सन्ननवद्यस्यसेनामयातयंतक्षितयोनवं
ग्वाः ॥ वृषायुधोनवध्रयोनिरष्टाःप्रवद्भिरिंद्राच्चितयंतआयन् ॥ ६ ॥ त्वमेतान्रुदतोजक्षत
श्चायोधयोरजसइंद्रपारे ॥ अवादहोदिवआदस्युमुच्चाप्रसुन्वतस्तुवतःशंसमावः ॥ ७ ॥ च
क्राणासःपरीणहंपृथिव्याहिरण्येनमणिनाशुंभमानाः ॥ नहिन्वानासस्तितिरुस्तइंद्रंपरिस्प
शोअदधात्सूर्येण ॥ ८ ॥

रक्षोगणान्भक्षयतोमुनींश्चसंपीडितान्रुदतश्चत्वयैव ॥ अयोधयोरजसोंतेसुसत्त्ववद्भिर्यदाजगतःस्था
त्तदैव ॥ पुंदोषान्वापुणभक्षान्नृसत्त्ववृद्धौदिवोज्ञानतोवादहश्च ॥ अज्ञानदस्युंस्तुवतःसंस्तुतिंचप्रावो
रक्षो ॥ ७ ॥ बंधनंयेजनानाम् ॥ कुर्वंतिहेम्नामणिभिश्शोभमानादैत्यादयोदृढदोषाधनैर्वा ॥ तेप्रेरयंतोपि
परस्परेणनैवातरन्वासुदेवंकथंचित् ॥ सहैवसूर्येणचदेवसंघांश्चरानज्ञातानदधाद्वासुदेवः ॥ दैत्यानांवातम
सावृत्तदृष्ट्यै ॥ ८ ॥

पर्यभुङ्थाःसहयद्रोदसीच ॥ त्वमहिम्नाविश्वतःसम्यगेवत्वद्भक्तान्निधमोभक्तसंघैः ॥ ९ ॥ येदस्य
वोद्युपृथिव्योरशेषभोगेच्छवोधनदंचेश्वरंतम् ॥ जिगीषवःस्वीयमायाभिरेवनैवोदापुर्द्वयमेतत्कदाचित् ॥
युक्तंज्ञानंवज्रमेवायुधंवादस्यून्हंतुंकृतवान्देवदेवः ॥ निजेनैवज्योतिषाभक्तहृद्गतमोगूढान्यदहन्निश्चये
न ॥ ज्ञानानिविष्णुर्यत्तज्ज्ञानमुग्रम् ॥ १० ॥ २ ॥ यस्यकर्माण्यक्षरन्सौख्यमेव ॥ योवदवा
चांस्तुतिनावात्मकानांमध्येवर्धदयथाज्ञानरूपः ॥ समीचीनज्ञानतोहंस्तमीशओजिष्ठेनहतिरूपेणस

परियदिंद्ररोदसीउभेअबुभोजीर्महिनाविश्वतःसीम् ॥ अमन्यमानाँअभिमन्यमानैर्निर्ब्रह्मभि
रधमोदस्युमिंद्र ॥ ९ ॥ नयेदिवःपृथिव्याअंतमापुर्नमायाभिर्धनदांपर्यभूवन् ॥ युजंवज्रंवृ
षभश्चक्रइंद्रोनिर्ज्योतिषातमसोगाअदुक्षत् ॥ १० ॥ २ ॥ अनुस्वधामक्षरन्नापोअस्यावर्ध
तमध्यआनाव्यानाम् ॥ सध्रीचीनेनमनसातमिंद्रओजिष्ठेनहन्मनाहन्नभिद्यून् ॥ ११ ॥
न्याविध्यदिलीबिशस्यदृह्लाविशृंगिणमभिनच्छुष्णमिंद्रः ॥ यावत्तरोमघवन्यावदोजोवज्रे
णशत्रुमवधीःपृतन्युम् ॥ १२ ॥

म्यक् ॥ मोक्षप्रकाशार्थमथापिनावातरणीयानांमध्यतोपांदधंतम् ॥ अहिंवा ॥११॥ इळिनोभूस्थिताः
स्युस्तत्राविशन्नसुरोनामतस्य ॥ इळीबिशस्तस्यदृढानियानिबलादीनिन्यहनत्तानिदेवः ॥ तमसोवाशृंगि
णंशोषकंचवृषरूपंदैत्यमहन्नथोवा ॥ कामंयावच्छक्तितोविक्रमाद्वावेगेनवाशत्रुमथोपृतन्युम्॥जघंथवज्रे
णसुबोधतोवानशक्तिसामर्त्स्यमिहोदितंहरेः ॥ अनंतशक्तिर्हिहरिःसदैवकृतएवशत्रुस्तदमुष्यकोपि ॥ अतो
यथाशक्त्यभियुध्यमानंशत्रुंजघंथेतिमहानिहार्थः ॥ १२ ॥

ससर्वतःसिद्धियुतःसदैवजिगायजीवारिगणान्पुरश्च ॥ संसाररूपाअभिनद्वृषेणप्राणेनतिग्मेनविरोधिनःप्र
ति ॥ संयोजयामासवज्रेणवृत्रंज्ञानेनवाज्ञानममुष्यहत्यै ॥ मतिंचस्वामदिशत्स्वप्रजाभ्यःसशाशदानः
सुसुखीसदैव ॥ १३ ॥ कुत्संदशद्युंचमुनिंनृपंचयस्मिन्स्थितःस्वात्मरूपंसुभक्त्या ॥ अदर्शयत्स्तोषितोयः
स्वतंत्रश्वाकन्नुत्तःकर्मयतःस्वतंत्रे ॥ वृषरूपस्यास्यनृपस्ययुध्यतःशफच्युतोरेणुरुन्नक्षतद्याम् ॥ श्वेतावा
णीवायुभार्यासुतोस्याःश्वैत्रेयोयंयुध्यतोह्युदस्थात् ॥ वृषःश्वैत्रेयोधर्मएवाथकुत्सनामाध्यात्मेकुत्सितोत्सा

अभिसिध्मोअजिगादस्यशत्रून्वितिग्मेनवृषभेणापुरोभेत् ॥ संवज्रेणासृजद्वृत्रमिंद्रःप्रस्वांम
तिमंतिरच्छाशदानः ॥ १३ ॥ आवःकुत्समिंद्रयस्मिञ्चाकन्प्रावोयुध्यंतंवृषभंदशद्युम् ॥
शफच्युतोरेणुर्नक्षतद्यामुच्छ्वैत्रेयोनृषाह्यायतस्थौ ॥ १४ ॥ आवःशमंवृषभंतुग्र्यासुक्षेत्रजे
षेमघवञ्छ्वित्र्यंगाम् ॥ ज्योक्चिदत्रतस्थिवांसोअक्रञ्छत्रूयतामधरावेदनाकः॥१५॥३॥१॥
त्रिश्चिन्नोअद्याभवतंनवेदसाविभुर्वांयामउतरातिरश्विना ॥ युवोर्हियंत्रंहिम्येववाससोभ्यायं
सेन्याभवतंमनीषिभिः ॥ १ ॥

रणात्स्यात् ॥ धर्मेरेणुःस्वर्गमात्राभिगामीसाक्षाद्धर्मोमोक्षफलोपगःस्यात् ॥ १४ ॥ शमात्मकंवृषभंध
र्ममेवाप्यरक्षस्त्वंतुग्रियास्वप्यधीश ॥ तुग्रयाख्यास्यात्संततिर्दीर्घकालामुक्तिक्षेत्रंविजयायैवधर्मम् ॥
श्वेतासुतंरमणाद्रेफउक्तस्तमक्षरस्त्वंवयियेतस्थिवांसः ॥ ज्योतिश्च कंनिजरूपंविमुक्त्याज्ञानान्यरीणाम
धराणिचाकरोः ॥ १५ ॥ ३ ॥ १ ॥ आरभ्यचार्यैवदिवानिशायांतदंतरेचत्रिरपिस्मसर्वदा ॥ अस्माकमे
वभवतंयतोन्योवेत्तानताविस्युदितौनवेदसौ ॥ गौणंतदन्यत्रहरौतुमुख्यतोव्यापीतुमार्गौयुवयोस्तुदानम् ॥

अशेषदेशेषुगतेरशेषदातृत्वतश्चैवयुवोर्हियंत्रम् ॥ वासोयंत्रंयद्वदयलतःस्याद्धिम्याहिनोतेस्तंतुविक्षेपणी
हि ॥ तद्वद्बुद्धिप्रेरकाऽयलतोवामायार्थेसेनौभवतंमनीषिभिः ॥ सदैवदेवैः ॥ १ ॥ पवयश्चायुधानिसोमस्य
पानंचेतनत्वाद्विदुस्ते ॥ वज्रःखड्गःशरइत्यायुधानित्रिवेणवःस्तंभनामानएव ॥ दिवानिशायांत्रिस्त्रिरेवानु
याथःकर्मारंभार्थंलोकसिद्ध्यर्थमंजः ॥ चक्रंगदाशरइत्यायुधानिवेदास्त्रयोवासुदेवस्यचस्युः ॥ रथःस्वीयो
ज्ञानिनांवाशरीरंप्राणादयःस्तंभनान्यस्यचापि ॥ २ ॥ वैषम्यहीनेसुखभाजनेह्निविमुक्तिकालेखिलदो

त्रयः॑प॒वयो॑मधु॒वाह॑ने॒रथे॒सोम॑स्यवे॒नामनु॒विश्व॒इद्वि॑दुः ।।त्रयः॑स्कं॒भासः॑स्कभि॒तास॑आ॒रभे॒त्रिर्न॑
क्तं॒या॒थस्त्रिर्व॑श्विना॒दिवा॑।।२।। स॒मा॒नेअह॒न्त्रिर॑वद्यगोहना॒त्रिर॒द्य य॒ज्ञंमधु॑नामिमिक्षतम्।।त्रिर्वा॑
जव॑ती॒रिषो॑अश्विनायु॒वंदो॒षाअ॒स्मभ्य॑मु॒षस॑श्चपिन्वतम् ।।३।। त्रिर्व॒र्तिर्या॑तं॒त्रिरनु॑व्रतेजने॒त्रिः
सु॑प्रा॒व्ये॑त्रे॒धेव॑शिक्षतम् ।। त्रिर्ना॒न्द्यं॑वहतमश्विनायु॒वंत्रिः॒पृक्षो॑अ॒स्मेअ॒क्षरे॑वपिन्वतम् ।। ४ ।।
त्रिर्नो॑र॒यिंव॑हतमश्विनायु॒वंत्रिर्दे॒वता॑ता॒त्रिरु॒ताव॑तं॒धियः॑ ।। त्रिः॑सौभग॒त्वंत्रिरु॒तश्रवां॑सिनस्त्रि॒ष्ठं
वां॒सूरे॑दुहि॒तारु॑ह॒द्रथ॑म् ।। ५ ।।

षनाशकौ ॥ स्वभक्तानांशोधयंतंचयज्ञंत्रिरस्माकंयुद्धजिताइषश्च ॥ सुखानिवामोक्षगतानिनोलमहोरा
त्रंक्षरतंसर्वदेव ॥ ३ ॥ यद्वर्तनंसर्वलोकेषुतच्चत्रिकालगंयुवयोरेवसर्वम् ॥ भक्तेजनेसुष्ठुरक्ष्येसुभक्तेत्रिधे
वकालानुगतेसुशिक्षितम् ॥ सुखंवहेतंचयुवांतुनःसदापुष्टिंचनित्यांक्षरतंवर्णवच्च ॥ ४॥ वित्तंचनित्यंदेवत
तिंचनित्यंधियंचशुभ्रांनित्यमेवावतंनः ॥ कीर्तिसौभाग्यंरक्षतंनःसदैवकालत्रयेयुष्मदीयंरथंच ॥ पुत्री
सूर्यस्यारुहद्रक्तदेहेज्ञानोदयोवाभगवत्प्रसादात् ॥ ५ ॥

सर्वेषुकालेष्वपिभेषजानिनःसर्वलोकप्रभवानिदत्तम् ॥ अद्भ्यःसुखायैवसुखंममैवस्वल्पस्ययुष्मत्पुत्रक
स्याथदत्तम् ॥ पतीशुभस्याथसुतस्यशंयोर्मदीयस्यैवावहतंसुखंवा ॥६॥४॥ ह्वयामिदेवानग्निपूर्वानथोवा

त्रिनोंअश्विनादिव्यानिभेषजात्रिःपार्थिवानित्रिरुदत्तमद्भ्यः ॥ ओमानंशंयोर्ममकायसूनवे
त्रिधातुशर्मवहतंशुभस्पती ॥६॥४॥ त्रिनोंअश्विनायजतादिवेदिवेपरित्रिधातुपृथिवीमशाय
तम् ॥ तिस्रोनासत्यारथ्यापरावतआत्मेववातःस्वसराणिगच्छतम् ॥ ७ ॥ त्रिरश्विनासिंधु
भिःसप्तमातृभिस्त्रयआहावास्त्रेधाहविष्कृतम् ॥ तिस्रःपृथिवीरुपरिप्रवादिवोनाकंरक्षेथेद्यु
भिरक्तुभिर्हितम् ॥ ८ ॥ क१त्रीचक्रात्रिवृतोरथस्यक१त्रयोबंधुरोयेसनीळाः ॥ कदायोगो
वाजिनोरासभस्ययेनयज्ञंनासत्योपयाथः ॥ ९ ॥ आनासत्यागच्छतंहूयतेहविर्मध्वःपिबतंम
धुपेभिरासभिः ॥ युवोर्हिपूर्वंसवितोषसोरथमृतायचित्रंघृतवंतमिष्यति ॥ १० ॥ आनास
त्यात्रिभिरेकादशैरिहदेवेभिर्यातंमधुपेयमश्विना ॥ प्रायुस्तारिष्टंनीरपांसिमृक्षतंसेधतंद्वेषो
भवतंसचाभुवा ॥ ११ ॥ आनोंअश्विनात्रिवृतारथेनार्वांचंरयिंवहतंसुवीरम् ॥ शृण्वंता
वामवसेजोहवीमिवृधेचनोभवतंवाजसातौ ॥ १२॥५॥२॥ ह्वयाम्यग्निंप्रथमंस्वस्तयेह्वयामि
मित्रावरुणाविहावसे ॥ ह्वयामिरात्रींजगतोनिवेशनींह्वयामिदेवंसवितारमूतये ॥१॥ आकृष्णे
नरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् २

विष्णुतैस्तैर्नामभीरातियस्मात् ॥ रतित्वाद्वारतिदत्वात्सरात्री॥१॥कृष्णंरजःशार्वरंहृत्तमोवा ॥ देवान्नृजातान
थवाविमुक्तानन्यान्मर्त्यान्स्थितिगान्वालयेषु॥निशासुवास्वात्मनिसंनिवेशयन्प्रस्वापयन्वारविगोजनार्दनः २

आयातिनित्यंचोच्चनीचैःप्रदेशैःशुभ्राश्वयुक्तेनरथेनयाज्यः ॥ शुभ्रौचतौरमणीयौचशुभ्रौपुरोगाश्वौहरि
द्श्वोहिसूर्यः ॥ परावतोदूरतो ॥ ३ ॥ ऽभीवृतश्चरथोहिरण्यैस्तस्यशम्यायुगाणी ॥ तमःप्रकाशौयदधी
॥३४॥ नौयतस्तौदधानइत्युच्यतेवासुदेवः ॥ कृष्णंरजस्तविषीसत्त्वपूर्वागुणास्त्रयोव्युत्क्रमात् ॥ ४ ॥ तत्तुरंगाः॥ अ० ३
श्यावाःश्यामत्वान्नीलपादोजगत्तेपश्यंतिसंधिःप्रउगंरथस्य ॥ देवप्रियत्वाद्दैव्यनाम्नोहरेस्तुसमीपस्थंसर्व
गत्वाज्जगद्धि ॥ ५ ॥ तिस्रोद्यावोमात्रयंद्वाउपस्थौजडाजडेश्रीविंराषाडधीश ॥ विश्वस्यसाक्षाद्भगवा

यातिदेवःप्रवतायात्युद्वतायातिशुभ्राभ्यांयजतोहरिभ्याम् ॥ आदेवोयातिसवितापरावतो
पविश्वादुरिताबाधमानः ॥ ३ ॥ अभीवृतंकृशनैर्विश्वरूपंहिरण्यशम्यंयजतोबृहंतम् ॥
आस्थाद्रथंसविताचित्रभानुःकृष्णारजांसितविषींदधानः ॥ ४ ॥ विजनाञ्छ्यावाःशि
तिपादोअख्यन्रथंहिरण्यप्रउगंवहंतः ॥ शश्वद्विशःसवितुर्दैव्यस्योपस्थेविश्वाभुवनानित
स्थुः ॥ ५ ॥ तिस्रोद्यावःसवितुर्द्वाउपस्थाँएकायमस्यभुवनेविराषाट् ॥ आणिंनरथ्यममृता
धितस्थुरिहब्रवीतुयउतच्चिकेतत् ॥ ६ ॥ ६ ॥

न्नियंतायमोस्यसर्वंगदितंसदैव ॥ जडाजडत्वान्नान्यमुक्तंपृथग्घिसर्वस्वाम्यंवक्तुमेवोदिताश्रीः ॥ अन्यो
न्यसंबंधविवक्षयैवह्युपस्थत्वमुक्तभूतानियानि ॥ अशेषतस्तानिरथस्ययद्वदाणिंरथ्यंसंश्रितंसर्वदैव ॥ ए
वंहरिंसंश्रितान्यजजेशपूर्वाण्यपीत्येषवेदार्थसारः ॥ इहब्रवीत्वन्यथायोभिपश्येकुर्याद्वातद्योयथावच्चप ॥३४॥
श्येत् ॥ शेषंज्ञानंसब्रवीत्वस्मदर्थेचकारयोविष्णुरेतत्सवानः ॥ ६ ॥ ६ ॥

गंभीरवेगोभगवान्वासुपर्णःपरानंदादंतरिक्षाण्यपश्यत् ॥ असौरतिःशुभनीतिश्वविष्णुरित्यपश्यद्दुर्लभत्वा
त्कएव ॥ पश्यन्नवेरश्मिगणानपीहसर्वव्याप्तानपिविष्णोर्नरश्मीन् ॥ लोकःपश्येदितिकुत्रातताने त्याक्षिप्य
तेव्यक्तिमपेक्ष्यरश्मेः ॥ ७ ॥ ऊर्ध्वमध्यमधरंचेतिधन्वत्रयंतमःसुखलीनंयतस्तत् ॥ युक्तंभवेत्तद्वतैः
सर्वदेवदृढश्लेषाद्योजनंस्यात्तमोहि ॥ अष्टौदिशःप्रकृतेर्वापृथिव्यामहदाद्याःसिंधवस्तान्यपश्यत् ॥ हिर
ण्याक्षोनरसिंहात्मनासवार्याणियद्वरणीयंसुवित्तम् ॥ ८ ॥ चर्षणिभ्योयत्प्रजाभ्योविशिष्टोविचर्षणिःके

विसुपर्णोअंतरिक्षाण्यख्यद्गभीरवेपाअसुरःसुनीथः॥ क्वेदानींसूर्यःकश्चिकेतकतमांद्यांरश्मि
रस्याततान ॥ ७ ॥ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिंधून् ॥ हिरण्याक्षःसं
वितादेवआगाद्दधद्रत्नादाशुषेवार्याणि ॥८ ॥ हिरण्यपाणिःसवितविचर्षणिरुभेद्यावापृथिवी
अंतरीयते ॥ अपामीवांबाधतेवेतिसूर्यमभिकृष्णेनरजसाद्यामृणोति ॥ ९ ॥ हिरण्यहस्तो
असुरःसुनीथःसुमृळीकःस्ववांयात्वर्वाङ् ॥ अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषंगृ
णानः ॥ १० ॥ येतेपंथाःसवितःपूर्व्यासोरेणवःसुकृताअंतरिक्षे ॥ तेभिर्नोअद्यपथिभिःसुगे
भीरक्षाचनोअधिचब्रूहिदेव ॥११॥ ॥ ७ ॥ ३ ॥ ७ ॥

शवःसूर्यमेति ॥ कृणोतिसंपूरयति ॥ ९ ॥ स्ववान्सस्वतंत्रत्वात्स्वर्णपात्रंसुपूर्णम् ॥ दधानोसौस्वर्ण
वर्णश्चतेनस्वर्णपाणिःस्वर्णहस्तश्चदेवः ॥ पृथक्पृथक्पाणिपूर्वांगवित्त्यैस्वर्णवर्णःस्वर्णपाणिःसउक्तः ॥
एतैर्लिंगैर्वेत्तिसूर्यंयतश्चसूर्यादन्यःसवितावासुदेवः ॥ उक्तोगायन्याचारणैस्तत्रतत्रकप्यासपद्माक्षइति
ह्युदाख्यः ॥ १० ॥ येपंथानोदेवयानाअमुत्रसाध्यायेतेरेणवोरागतोवा ॥ रजोहानादथवातान्प्रदा

यरक्षाधिकान्ब्रूहिनोथोसमेभ्यः ॥ ११ ॥ ७ ॥ ३ ॥ ७ ॥ कण्वस्त्वध्यापयन्विष्णोरनुग्रहमथाब्रुवन् ॥
इच्छंश्चज्ञानवितर्तिदेवांस्तुष्टावभक्तितः ॥ ऋक्शतेनावशिष्टंचजप्यस्यांतेतुकालतः ॥ शृण्वंतुस्तोममि
त्यंतादद्दर्शैकाग्रमानसः ॥ ७ ॥ बह्वाधेयत्वतःपुत्रंबहूनांवोहुताशनम् ॥ बहुज्ञेयत्वतोविष्णुंवेमहेहेप्रजाःस

प्रवोयह्वंपुरूणांविशांदेवयतीनाम्॥अग्निंसूक्तेभिर्वचोभिरीमहेयंसीमिदन्यईळते॥१॥जनासो
अग्निंदधिरेसहोवृधंहविष्मंतोविधेमते॥सत्वंनोअद्यसुमनाइहाविताभवावाजेषुसंत्य॥२॥प्रत्वा
दूतंवृणीमहेहोतारंविश्ववेदसम्॥महस्तेसतोविचरंत्यर्चयोदिविस्पृशंतिभानवः॥३॥देवासस्त्वा
वरुणोमित्रोअर्यमासंदूतंप्रत्नमिंधते॥विश्वंसोअग्नेजयतित्वयाधनंयस्तेददाशमर्त्यः॥४॥मंद्रो
होतागृहपतिरग्नेदूतोविशामसि ॥ त्वेविश्वासंगतानिव्रताध्रुवायानिदेवाअकृण्वत ॥ ५ ॥
॥ ८ ॥ त्वेइदग्नेसुभगेयविष्ठ्यविश्वमाहूयतेहविः ॥ सत्वन्नोअद्यसुमनाउतापरंयक्षिदेवान्त्सु
वीर्या ॥ ६ ॥ तंघेमित्थानमस्विनउपस्वराजमासते ॥ होत्राभिरग्निंमनुषःसमिंधतेतितिर्वांसो
अतिस्रिधः ॥ ७ ॥

दा ॥ देवज्ञानाद्वायजनाद्देवयत्यःसमीळते ॥ यमन्येचजनाःसंतः ॥ १ ॥ सहसावायुनैधितम् ॥ धारयंति
जनास्तस्यकर्मकुर्मोवयंचते ॥ संत्यःसम्यक्त्वतोविष्णुर्वायोरपिविवृद्धिकृत् ॥ २ ॥ प्रततेःपुरातनत्वाद्वाप्र
त्नो ॥४ ॥ मंद्रोमहामखः ॥५॥८॥ देवान्सुवीर्यायजसि॥६॥तंहित्वामेवसर्वदा ॥ उपासतेनमस्यंतःसंतस्ती
र्णास्तुसंसृतेः ॥ स्रिधोह्यतितितिर्वांसस्तीर्णदुःखाइहैववा ॥ त्वत्प्रसादेनविद्वांसःप्राप्यब्राह्मण्यमुत्तमम् ॥७॥

तमोघ्नंतोऽतरँल्लोकानपःकर्माणिचोत्तमाः ॥ उरुब्रह्मक्षितित्वेनचक्रुस्तत्रैवसंस्थितेः ॥ वृषासभगवान्वि
ष्णुर्मुनौकण्वेभवत्स्थितः ॥ कंददश्वस्वरूपश्चज्ञानस्यान्वेषणेकृते ॥ ततःकण्वान्निस्सरंतिशुद्धावेदानुगा
गिरः ॥ द्युतिमत्त्वात्सतुद्युम्नी ॥ ८ ॥ देवेषुज्ञानवत्तमः ॥ सत्वंशोचस्वदीप्यस्वधूमःसंसारधूःकृतेः ॥
अरुषोरोषहीनत्वाद्धूमश्चेच्छुभगंधनात् ॥ ९ ॥ १० ॥ ९ ॥ यंसुतोमेसमीधेग्निंमेध्यातिथिकृतादधि ॥

घ्नंतोवृत्रमतरन्रोदसीअपउरुक्षयायचक्रिरे ॥ भुवत्कण्वेवृषाद्युम्न्याहुतःक्रंददश्वोगविष्टिषु
॥ ८ ॥ संसीदस्वमहाँअसिशोचस्वदेववीतमः ॥ विधूममग्नेअरुषंमियेध्यसृजप्रशस्तदर्श
तम् ॥९॥ यंत्वादेवासोमनवेदधुरिहयजिष्ठंहव्यवाहन ॥ यंकण्वोमेध्यातिथिर्धनस्पृतंयंवृषाय
मुपस्तुतः ॥ १० ॥ ९ ॥ यमग्निंमेध्यातिथिःकण्वईधऋतादधि ॥ तस्यप्रेषोदीदि
युस्तमिमाऋचस्तमग्निंवर्धयामसि ॥ ११ ॥ रायस्पूर्धिस्वधावोस्तिहितेग्नेदेवेष्वाप्यम् ॥ त्वं
वाजस्यश्रुत्यस्यराजसिसनोमृळमहाँअसि ॥ १२ ॥ ऊर्ध्वऊषुणऊतयेतिष्ठादेवोनसविता ॥
ऊर्ध्वोवाजस्यसनितायदंजिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥

उक्त्वासत्यांवेदवाचंदेयान्यन्नानितस्यहि ॥ तंप्रतीमाऋचःसर्वाःप्रकाशाद्वर्धयामतम्॥इंधनंतुहरेर्नान्यत्क
चिदस्तिप्रकाशनात् ॥ ११ ॥ वित्तानिपूरयास्माकंदेवेष्वप्याप्यमस्तिते ॥ यज्ञभागादिपूज्यत्वात्स्वधावः
सुखवर्धकः ॥ श्रुत्यवाजोयज्ञभागोराजाभवसितस्यहि ॥१२॥ अस्मद्रक्षाकृतेनित्यंसूद्यतोभवविष्णुवत् ॥
विष्णुश्चेत्स्वात्मदृष्टांतोनोन्नदातातथोद्यमी ॥ यस्तुवद्भिर्द्विजैर्युक्ताःस्नेहैस्त्वांविह्वयामहे ॥ १३ ॥

ज्ञानेनपाहिनितरामुग्रम्युच्चगुणोपिनः ॥ असुराअत्रयःप्रोक्तामार्गत्रयविवर्जिताः ॥ स्वर्गापवर्गमानुष्यंत्य
क्तायांतितमोहिते ॥ अदंतीत्यथरक्षांसिवात्रयोधिकभक्षणात् ॥ भोगायजीवनायापिस्वलोकचरणाय
च ॥ उत्तमान्कुरुनोनित्यंदोहनानिचलंभय ॥ देवेभ्योखिलकाम्यानिसदानोतिमहांतिच ॥ १४ ॥ अरं
छिद्रंपापयतीत्यरावापापपूरुषः ॥ धूर्त्कतेस्तस्यनोरक्षनश्यतोस्मद्वधायच ॥ यवीयस्तुस्थितत्वेनयविष्ठो
हरिरुच्यते ॥ब्रह्माद्यपेक्षयानित्यंयविष्ठतमएवयत् ॥ अग्निर्यविष्ठयइत्युक्तोयदाधिक्यार्थतोधिकम् ॥ १५ ॥

ऊर्ध्वोनःपाह्यंहसोनिकेतुनाविश्वंसमत्रिणंदह ॥ कृधीनऊर्ध्वांचरथाय जीवसेविदादेवेषुनोदुवः
॥ १४ ॥ पाहिनोअग्नेरक्षसःपाहिधूर्तेरराव्णः ॥ पाहिरीषतउतवाजिघांसतोबृहद्भानोयावि
ष्ठ्य ॥ १५ ॥ १० ॥ घनेवविष्वग्विजह्यराव्णस्तपुर्जंभयोअस्मध्रुक् ॥ योमर्त्यःशिशीते
अत्यक्तुभिर्मानःसरिपुरीशत ॥ १६ ॥ अग्निर्वव्नेसुवीर्यमग्निःकण्वायसौभगम् ॥ अग्निः
प्रावन्मित्रोतमेध्यातिथिमग्निःसाताउपस्तुतम् ॥ १७ ॥ अग्निनातुर्वशंयदुंपरावतउग्रादेवंह
वामहे ॥ अग्निर्नयन्नववास्त्वंबृहद्रथंतुर्वीतिंदस्यवेसहः ॥ १८ ॥

॥ १० ॥ वायुर्मेघानिवजहिसर्वतःपापपूरुषान् ॥ अस्मद्द्रोहीचयस्तंचतापेनैवात्तियत्ततः ॥ तपुर्जंभःशि
शीतेयस्तीक्ष्णोभवतिसर्वदा ॥ नेशोभवतुसोस्माकंदुरात्मापापपूरुषः ॥ १६ ॥ सुवीर्यंसौभगंचैवममेशःस
मभाजयत् ॥ मेध्यातिथिंसुतंचैवमित्राणिचररक्षमे ॥ उपस्तुतंचैवमुनिंसातौलाभेररक्षह ॥ १७ ॥ तुर्व
शादींस्तथाराज्ञोवयंतेनहवामहे ॥ तुरोपियद्वशोविष्णुःसचतुर्वशनामवान् ॥यदस्तिततउच्चत्वाद्यदुरुग्रोसुरा
न्प्रति ॥ तमेवतत्प्रसादेनह्वयामोनयदेवसः ॥ नववास्त्वादिकान्राज्ञोबलंदस्युविनिग्रहे ॥ १८ ॥

मनुष्यःसन्नहंत्वांतुज्योतिर्मुक्तजनायच ॥ निदधेहृदिसत्त्वंचदीप्यसेमयिसर्वदा॥ब्रह्मजोग्निर्कृताद्देवाचोऽ
भिव्यज्यतेहरिः॥उक्षितःस्वगुणैःसर्वैर्युक्तो ॥१९॥ऽमेयाश्वशक्तयः॥त्वेषाइत्युदितास्तस्यहरेरश्मयएवच ॥
भीमानप्रतिगंतुंचशक्याराक्षसपक्षिणः ॥ यातवोजंगमास्तेषांहिंसनावांस्तुराक्षसः॥ यातुमावानितिप्रोक्तो
यातनानुभवात्क्वचित् ॥ यातुरित्येवचप्रोक्तःसंतंप्रत्यनुकूलतः ॥ स्थितास्ताःशक्तयोविष्णोः ॥ २० ॥
॥ ११ ॥ ४ ॥ क्रीडाशीलंचमारुतम् ॥ शर्धःसुखबलाढ्यंवाप्यनर्वाणमनिंद्रियम् ॥ नवायोरिंद्रियाणां

नित्वामंग्नेमनुर्दधेज्योतिर्जनायशश्वंते ॥ दीदेथकण्वंऋतजांतउक्षितोयन्नंमस्यंतिकृष्टयः
॥ १९ ॥ त्वेषासोअग्नेरमंवंतोअर्चयोभीमासोनप्रतीतये ॥रक्षस्विनःसदमिद्यांतुमावंतोविश्वं
समत्रिणंदह ॥ २० ॥ ११ ॥ ४ ॥ क्रीळंवःशर्धोमारुंतमनर्वाणंरथेशुभंम् ॥ कण्वाअभिप्र
गायत ॥ १ ॥ येपृषंतीभिर्ऋष्टिभिःसाकंवाशीभिरंजिभिः ॥ अजायंतस्वभानवः ॥ २ ॥
इहेवंशृण्वएषांकशाहस्तेषुयद्वदान् ॥ नियामंञ्चित्रमृंजते ॥ ३ ॥

हिदेवाःसंत्यभिमानिनः ॥ अतोनिंद्रियतातस्यरथेदेहेशुभश्वसः ॥ कण्वास्तंगायताभीक्ष्णंविष्णुंवाताद्दृशै
र्गुणैः ॥ १ ॥ पृषत्योवाहनान्येषामन्यदायुधमुच्यते ॥ स्वप्रकाशोथवाविष्णुस्तल्लिंगैर्व्यज्यतेसह ॥ तत्त
द्देवगतस्यापिविष्णोर्लिंगंचतद्भवेत् ॥ २ ॥ यत्तेवदंतिवचनंमेघनादात्मकंहितत् ॥ इहापिश्रूयतइववर्णा
व्यक्तेरिवेतिच ॥ हस्तेष्वेषांकशाःसंतिचित्रंमार्गेधिगम्यते ॥ रेण्वादिसर्ववस्तूनांगमनान्मार्गचित्रता ॥ वि
ष्णोस्सर्वंजगच्चित्रंमार्गेसंप्रेर्यतेऽमुना ॥ ३ ॥

॥३७॥ शोधकायप्रधानायवोबलायचवायवे ॥ शुद्धायवासुप्रकाशज्ञानायातिबलायच ॥ गायतब्रह्मदेवत्तंदेवेषुततमीश्वरम् ॥ प्रीतिर्वायोर्विष्णुगानाद्देदाख्यंब्रह्मविष्णवे ॥ देवैरधीयमानत्वाद्देवत्तंब्रह्मवैष्णवम् ॥ ४॥ अहंतव्यत्वतस्त्वद्व्यंवायुंवृषभरूपिणम् ॥ क्रीडंतंवेदरूपासुगोषुतंस्तुहिमारुतम् ॥ माभिर्वेदैःस्तुतत्वेनमारुतोविष्णुरेववा ॥ भक्षणार्थंरसस्यासौवद्धेमरुतांपिता ॥ ५॥ १२ ॥ आसमंतादुत्तमःकःप्रधानोवायुरेववः ॥ विष्णोराक्षेपएवस्यात्कोनामास्तिपरस्त्विति ॥ त्वत्पर्यंतंचवर्षिष्ठःकोभवेदितिवाभवेत् ॥ आधूत

प्रवःशर्धायघृष्वयेत्वेषद्युम्नायशुष्मिणे ॥ देवत्तंब्रह्मगायत ॥ ४ ॥ प्रशंसागोष्वघ्न्यंक्रीळंयच्छर्धोमारुतम् ॥ जंभेरसस्यवावृधे ॥ ५ ॥ १२ ॥ कोवोवर्षिष्ठआनरोदिवश्चग्मश्चधूतयः॥ यत्सीमंतंनधूनुथ ॥ ६ ॥ निवोयामायमानुषोदध्रउग्रायमन्यवे ॥ जिहीतपर्वतोगिरिः ॥ ७॥ येषामज्मेषुपृथिवीजुजुर्वाँइवविश्पतिः ॥ भियायामेषुरेजते ॥ ८ ॥ स्थिरंहिजानमेषांवयोमातुर्निरेतवे ॥ यत्सीमनुद्विताशवः ॥ ९ ॥

योदिवोग्मश्चभूम्याइत्यन्वयोभवेत् ॥ तस्मादंतंप्रतीवैतज्जगत्संधूनुथाखिलम् ॥ ६ ॥ नीचैर्धृतोमानुषोवोमार्गायोग्रायमन्यवे ॥ नपूर्यंतेचकोपायस्वल्पत्वान्मानुषःक्वचित् ॥ बहुवर्षयुतोत्युच्चगिरिर्मार्गेहिवोत्यजत् ॥ मूलम् ॥ ७ ॥ येषांतथाज्मेषुमार्गेष्वितिभियाधरा ॥ कंपतेजीर्णराजेव ॥८ ॥ स्थिरंवोजननंयतः॥ ॥३७॥
जानावायोर्दिविवयोमातुःप्राप्तानिरेतवे ॥ निर्गंतुंतत्क्षणेनैवसर्वलोकाटनायहि ॥ यौवनंतेयुवानोहिनिसर्गान्मातुराजनेः ॥ मातुरेवप्रसादेनसम्यक्तद्विविधंबलम् ॥ प्रज्ञाबाहुबलंयस्मात्तस्मात् ॥ ९ ॥

द्दिशाउदापिरे॥तेगिरःसूनवोदेव्यावाश्रावचनशीलिनः ॥ अभिजन्मानुसारेणगुणान्पातुमुदापिरे ॥ १० ॥
॥ १२ ॥ पद्मांभूमिरितिश्रुत्यासुताविष्णोर्वसुंधरा ॥ तज्जत्वात्पर्वताविष्णोर्नपारःसेचनाद्धिमिद् ॥ हरिस्त
मपिमेर्वादिंमरुतश्च्यावयंतिहि ॥ अन्यप्रमप्रधृष्यत्वात् ॥ ११ ॥ बलंयदपिवोखिलम् ॥ जनांश्च्यावयितुं
स्थानाच्छक्ताःसम्यग्गिरीनपि ॥ १२ ॥ कुर्वंतिशास्त्रसंवादंमार्गेशृण्वंतिकेचन ॥ तेषांमध्येहिमरुताम्

उदुत्येसूनवोगिरःकाष्ठाअज्मेष्वत्नत ॥ वाश्राअभिज्ञुयातवे ॥ १० ॥ १३ ॥ त्यंचिद्धादी
र्घंपृथुंमिहोनपातममृध्रम् ॥ प्रच्यावयंतियामभिः ॥ ११ ॥ मरुतोयद्धवोबलंजनाँअचुच्य
वीतन ॥ गिरीँरचुच्यवीतन ॥ १२ ॥ यद्धयांतिमरुतःसंहब्रुवतेऽध्वन्ना ॥ शृणोतिकश्चिदे
षाम् ॥ १३ ॥ प्रयातशीभमाशुभिःसंतिकण्वेषुवोदुवः ॥ तत्रोषुमादयाध्वै ॥ १४ ॥ अ
स्तिहिष्मामदायवःस्मसिष्मावयमेषाम् ॥ विश्वंचिदायुर्जीवसे ॥ १५ ॥ १४ ॥ ५ ॥ कद्ध
नूनंकधप्रियःपितापुत्रंनहस्तयोः ॥ दधिध्वेवृक्तबर्हिषः ॥ १ ॥ कंनूनंकद्वोअर्थंगंतादिवोनपृ
थिव्याः ॥ क्ववोगावोनरण्यंति ॥ २ ॥

॥ १३ ॥ शीभंक्षिप्रंप्रयातनः ॥ मदंकुरुततत्रैवदोहनान्यत्रसंतिहि ॥ १४ ॥ सर्वमायुर्जीवसेस्तिप्रसादान्म
रुतांहिनः ॥ १५ ॥ १४ ॥ ५ ॥ कदानयोर्हस्तयोर्दैवाधध्वेप्रियतातवत् ॥ कदापियत्प्रियस्तातःकधप्रि
यइतीरितः ॥ स्तृतंबर्हिर्यद्विषयेतेप्रोक्तावृक्तबर्हिषः ॥ १ ॥ दिवःपृथिव्याश्वेदानींक्वगच्छथचाकिंफलम॥
नगच्छथक्वाप्येतज्ज्ञातव्यंतत्प्रसादतः ॥ आह्वयंतिक्ववागावोयथैवयवसार्थिनः ॥ फलार्थिनःस्तुवंतोवः
क्वाह्वयंतितथैवच ॥ २ ॥

स्तुत्यानिवः सुखानिच कथंज्ञेयानिनःसदा ॥ इत्यभिप्रायतःप्रश्नःकस्मिन्नोज्ञापकस्त्विति ॥ सुवितानिसु
भद्राणिसौभगंलक्षणंपरम् ॥ २ ॥ पृश्निर्वेदःप्रश्नयोग्यःपृश्निमाताहरिस्ततः ॥ ज्ञेयस्तस्यापिविज्ञातामारु
तश्चेत्सुतागिरः ॥ मानुषायदियूयंवःस्तोतादेवोभवेदपि ॥ ४ ॥ नस्यादसेव्यःस्तोतात्रयथायवसगोचरे ॥ गो
प्राप्येतुमृगोसेव्योयममार्गंनचव्रजेत्॥याञ्चारीतिविशेषोयंनिंदास्तुत्येकदेशयुक् ॥ ५ ॥ १५ ॥ मावधी

कंवःसुम्नानव्यांसिमरुतःकंसुविता ॥ कोइंविश्वानिसौभगा ॥ ३ ॥ यद्यूयंपृश्निमातरोमर्ता
सःस्यातन ॥ स्तोतावोअमृतःस्यात् ॥ ४ ॥ मावोमृगोनयवसेजरिताभूदजोष्यः ॥ पथा
यमस्यगादुप ॥ ५ ॥ १५ ॥ मोषुणःपरांपरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्टतृष्णयासह ॥६॥
सत्यंत्वेषाअमवंतोधन्वंचिदारुद्रियासः ॥ मिहंकृण्वंत्यवाताम् ॥ ७ ॥ वाश्रेवविद्युन्मिमा
तिवत्संनमातासिषक्ति ॥ यदेषांवृष्टिरसर्जि ॥ ॥ ८ ॥ दिवाचित्तमःकृण्वंतिपर्जन्येनो
दवाहेन ॥ यत्पृथिवींव्युंदंति ॥ ९ ॥ अधस्वनान्मरुतांविश्वमासद्मपार्थिवम् ॥ अरेजंतप्र
मानुषाः ॥ १० ॥ १६ ॥

न्नःकचिन्मृत्युःपरतःपरतोपिच ॥ दुर्हणादुःखदाहंत्रीयातुसंतृष्णयासह ॥ ६ ॥ अप्रमेयाय़थासत्यंध
न्वन्नपिहिसेचनम ॥ रुजांविद्रावकस्यैववायोःपुत्राहिरुद्रियाः । विनाप्यचेतनंवातंवृष्टिंकृण्वंतिहीच्छया
॥ ७ ॥ एषांसकाशाद्वृष्टिश्वविद्युद्धर्मिंप्रकाशयेत् ॥ गौर्वत्समिवभूम्यांच ॥ ८ ॥ लोकंसिंचंतिमातृवत्
॥ ९ ॥ मानुषादित्वमन्यच्चबिभेदेषांस्वनादपि ॥ गृहमानिनोगृहाद्यंवाचचालैषांस्वनादपि ॥ १०॥१६॥

अखिन्नैर्गमनैश्चैवदृढस्वीयैश्चपाणिभिः ॥ अनुयातनदीश्चित्राः ॥ ११ ॥ स्थिरास्संतिरथादयः ॥१२॥
ब्रह्मणश्चपतिंविष्णुंयथावद्व्याप्तयागिरा ॥ जरायैसंस्तुतित्वेनतृतीयाभावरूपिणी ॥ सर्वाविभक्तयश्चेत्थं
भाववाचिन्यएवच ॥ महाव्याकरणेसूत्रमितिसंस्तुतिरूपतः ॥ विदविष्णुंस्वप्रकाशमग्निवत्सूर्यवत्तथा ॥
आहचात्मानमेवात्रदार्ढ्यैस्स्वप्रतियोगिता ॥ इतिसूत्रात् ॥ १३ ॥ कीर्तिमस्यविष्णोःकुरुमुखेसदा ॥ वि
स्तारयतिपर्जन्योयद्वद्वृष्टिंतथैवच ॥ विस्तृणीहितथेशस्यतथाकीर्तिंचगत्यपि ॥ १४ ॥ पनस्युंज्ञानशी

मरुतोवीळुपाणिभिश्चित्रारोधस्वतीरनु ॥ यातेमखिद्रयामभिः ॥ ११ ॥ स्थिरावःसंतुनेमयो
रथाअश्वासएषाम् ॥ सुसंस्कृताअभीशवः ॥ १२ ॥ अच्छावदातनागिराजरायैब्रह्मणस्प
तिम् ॥ अग्निंमित्रंनदर्शतम् ॥ १३ ॥ मिमीहिश्लोकमास्येपर्जन्यइवततनः ॥ गायगायत्र
मुक्थ्यम् ॥ १४ ॥ वंदस्वमारुतंगणंत्वेषंपनस्युमर्किणम् ॥ अस्मेवृद्धाअसन्निह ॥ १५ ॥
॥१७॥६॥ प्रयदित्थापरावतःशोचिर्नमानमस्यथ ॥ कस्यक्रत्वामरुतःकस्यवर्पसाकंयाथकंह
धूतयः ॥१॥

लंचविज्ञेयंगणमर्किणम् ॥ अभवन्ज्ञापकाद्वृद्धाअस्माकंतदनुग्रहात् ॥ १५ ॥ १७॥६ ॥ परावतोहरेः
स्थानान्मानंशोचिरिवास्यथ ॥ सूर्यादयोयथाशोचिर्दूरादस्यंतिजंतुषु ॥ एवंज्ञानंसंप्रदायान्मरुतोविष्णुरे
ववा ॥ इत्थंयथासर्वंदृश्यंतत्तथाभवताकृतम् ॥ एवंयत्रक्ववाज्ञानाद्बलाद्वागच्छथक्वचित् ॥ स्वतंत्रत्वात्प
रापेक्षानहिवःक्वचिदिष्यते ॥ किंचिद्याथबलात्किंचिद्धूनुथस्वबलाद्धितत् ॥ १ ॥

शत्रूणामपनोदायसंतिवस्त्विहहेतयः ॥ स्तंभनायचशत्रूणांसुदृढान्येवताःसदा ॥ स्थिरत्वंदीर्घकालत्वं
वीळुत्वंदृढतातथा ॥ युष्माकंतविषीतेजोबलामस्त्युत्तमंसदा ॥ मायिनोनहिमर्त्यस्यबलंतेजोथवोत्त
मम् ॥ २ ॥ स्थिरंचाज्ञानपापादितद्वत्कायपराहथ ॥ गुरून्नपिनरान्नित्यंगुणैर्वर्तयथांजसा ॥ पर्व
तानांपृथिव्याश्चदिशोनित्यंवियाथन ॥ वनिनश्चतरून्सम्यग्भजनीयान्सुरान्हरिः ॥ ३ ॥ भूमौदि

स्थिरावःसंत्वायुधापराणुदेवीळूउतप्रतिष्कभे ॥ युष्माकमस्तुतविषीपनीयसीमामर्त्यस्यमा
यिनः ॥ २ ॥ पराहयत्स्थिरंहथनरोवर्तयथागुरु ॥ वियाथनवनिनःपृथिव्याव्याशाःपर्वताना
म् ॥ ३ ॥ नहिवःशत्रुर्विविदेअधिद्यविनभूम्यांरिशादसः ॥ युष्माकमस्तुतविषीतनायुजा
रुद्रासोनूचिदाधृषे ॥ ४ ॥ प्रवेपयंतिपर्वतान्विविंचंतिवनस्पतीन् ॥ प्रोआरतमरुतोदुर्मदाइ
वदेवासःसर्वयाविशा ॥ ५ ॥ १८ ॥ उपोरथेषुपृषतीरयुग्ध्वंप्रष्टिर्वहतिरोहितः ॥ आवो
यामायपृथिवीचिदश्रोदबीभयंतमानुषाः ॥ ६ ॥

विचवःशत्रुःक्वचिन्नैवहिलभ्यते ॥ रिशादसःसुसुखिनःसुखेनशमदंतियत् ॥ बलंतेजोपिवोह्यस्तित्वया
प्तानित्यतयायुजा ॥ अथाप्याधर्षणायैवनिखिलाशुभसंततेः ॥ ४ ॥ प्रवेपयंतिपर्वतान्विविंचंतिवन
स्पतीन् ॥ जनिपर्ववतोजीवान्संप्रेरयतिकेशवः॥भजनीयपतीन्ब्रह्मपूर्वांश्चफलदानतः ॥ तारतम्येनसम्यक्
चविवेचयतिसर्वदा ॥ सर्वप्रजास्वतिष्ठंतप्रामास्ताभिस्सहैवच ॥ मत्ताइवप्रेरयंतिशुभाशुभकृतोनरान्॥५॥
॥१८॥ अयुङ्ध्वंपृषतीचैवरोहितंपृष्ठतोरथे ॥ वोयामंप्रतिदाढर्यायशेषमश्रेत्पुनर्धरा॥भीतिमापुर्मानुषाश्च

क्षिप्रंवःप्रापयेसुखम् ॥ रक्षांवृणीमहेयुष्मद्वंतायापिचनोवसा ॥ भीतियुक्तायकण्वायमह्यम् ॥ ७ ॥
युष्मानभिरेवच ॥ प्रेरितोथनियंतृत्वाद्युष्माकंमानुषेणवा ॥ बाह्यदृष्ट्यात्वभूतीर्नोयेइच्छतितमोजसा ॥
बलेनचद्रावयतयुष्मदीयोतिभिस्तथा ॥ ८ ॥ ९ ॥ ओजोसमंबिभृथचमखेज्याःसभमुत्तमम् ॥
सुदानशीलाःकण्वायदत्तासममभीप्सितम् ॥ असमैर्नोप्यभिप्रायैर्गतंद्वेष्टिंनविद्युतः ॥ १० ॥ ११ ॥

आवोमक्षूतनायकंरुद्राअवोवृणीमहे ॥गंतानूनंनोवसायथापुरेत्थाकण्वायबिभ्युषे॥७॥युष्मे
षितोमरुतोमर्त्येषितआयोनोअभ्वईषते॥वितंयुयोतशवसाव्योजसावियुष्माकाभिरूतिभिः
॥८॥असामिहिप्रयज्यवःकण्वंददप्रचेतसः॥असामिभिर्मरुतआनऊतिभिर्गंतावृष्टिंनविद्युतः
॥९॥असाम्योजोबिभृथासुदानवोसामिधूतयःशवः ॥ ऋषिद्विषेमरुतःपरिमन्यवइषुंनसृजत
द्विषम् ॥१०॥११॥७ ॥ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशू
र्भवासचा ॥ १ ॥ त्वामिद्धिसहसस्पुत्रमर्त्यउपब्रूतेधनेहिते ॥ सुवीर्यंमरुतआस्वश्व्यंदधीत
योवआचके ॥ २ ॥ प्रैतुब्रह्मणस्पतिःप्रदेव्येतुसूनृता ॥ अच्छावीरंनर्यंपंक्तिराधसंदेवायज्ञं
नयंतुनः ॥ ३ ॥

॥ ७ ॥ देवयंतःपूजयंतःस्तुवंतोतिकृताशनः ॥ प्राशूः ॥ १ ॥ वायोःसुतेत्येवसहसस्पुत्रइत्यथ ॥ तद्यं
ग्यत्वाद्धरिःप्रोक्तःशक्रस्तत्सुतएवच ॥ युद्धंहितधनंप्रोक्तंनिहितंधनमेववा ॥ स्वश्व्यंतुस्विंद्रियफल
माचकेऽपश्यदित्यपि ॥ २ ॥ पतिस्तुब्रह्मणोविष्णुर्वागीशत्वात्समीरणः ॥ अग्रतोयात्वसावस्मत्कार्येष्वेवंस
रस्वती ॥ सूनृतावैष्णवीवाग्वायज्ञंवीरंनरंप्रति ॥ नयंतुदेवाःसर्वेपियत्पंचजनवर्धनः ॥ पंक्तिराधाहरिस्तेन

विदथेषु । शंऽभुवंम् । मंत्रम् । देवाः । अनेहसंम् । इमाम् । च । वाचंम् । प्रतिऽहर्य्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ कः । देवऽयंतम् । अश्नवत् । जनंम् । कः । वृक्तऽबर्हिषम् । प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अंतःऽवावत् । क्षयंम् । दधे ॥ उप । क्षत्रम् । पृंचीत । हंति । राजंभिः । भये । चित् । सुऽक्षितिम् । दधे । न । अस्य । वर्त्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥२१॥ ॥ इतिश्रीमदृक्संहितायाःपदपाठःसंपूर्णः ॥

